तद्यथा—

स सुव्रतः शोभनानि व्रतानि यस्य तीर्थंकरसमुदायस्य स तथोक्तः। क्रियात्। श्रियमनश्वरीं निर्विघ्नां लक्ष्मीम्। किंविशिष्टो, नेमिः, नीयन्ते प्राप्यन्ते सुरनरनागेन्द्राणां विभूतिं प्राणिनो धर्मपरा येनासौ नेमिः, स्वर्गफलानां विभूतीनां निःश्रेयसपर्यन्तानां दातेति भावः केषां, वो युष्माकम्। किंविशिष्टः सन्, प्रवर्त्तकः प्रणेता वोढा। कस्य, तीर्थरथस्य। यस्य घातिचतुष्टयक्षयात् क्षत्रं कैवल्यस्वभाव उद्गतं समुत्पन्नं सत्, एकमिव न व्यदीपि? अपि तु अनेकमिव शोभितम्। क्व, जगद्बोधविधौ, जगतां लोकानां बोधो हेयोपादेयफलस्तस्य विधिर्निर्माणं, तस्मिंस्तथोक्ते। किंविशिष्टे? विहायसि। विहायो विधिरूपम्। ओहाङ् गतौ। विहानं विहा। विशिष्टा गतिरनन्यसंभाविनी[1]। यस्, क्विपि रूपम्। यस् प्रयत्ने। यसनं यस्, प्रयत्नः। विहो विशिष्टगतेर्यस् प्रयत्नो यस्मिन्नसौ विहायस्तस्मिन् समवसरणप्रयत्ने, इत्यर्थः। एतेन समवसरणविहारप्रक्रमः कथितो भवतीत्यभिप्रायः काव्यटीकाकर्त्तुरल्पमतिप्राज्ञेन ॥१॥

इदानीं श्रुतस्कन्धदेवतां वनदेवताव्याजेन (साम्येन) नमस्करोति—

**सतीं श्रुतस्कन्धवने विहारिणीमनेकशाखागहने सरस्वतीम्।**
**गुरुप्रवाहेण जडानुकम्पिना स्तुवेऽभिनन्द्ये वनदेवतामिव ॥२॥**

सतीमिति। स्तुवे स्तवीमि। कां, सरस्वतीं सर्वज्ञभारतीम्[2]। किंविशिष्टां सतीं पूर्वापरप्रमाणबाधारहिताम्। पुनः विहारिणीं विहरणशीलाम्। क्व, श्रुतस्कन्धवने श्रुतस्कन्धो द्वादशाङ्गं चतुर्दशपूर्वमिति यावत्, स एव वनं तस्मिंस्तथोक्ते। पुनः कथम्भूते, अनेकशाखागहने, अनेकशाखाः, प्राभृतकादीनि यावत्। ताभिर्गहने

---

'तीर्थंकरसमुदाय' तात्पर्य है। मुनिसुव्रत तथा नेमिनाथकी स्तुति करनेसे तीर्थंकर समुदायकी स्तुति कैसे होगी? यदि यह प्रश्न है तो स्याद्वाद दृष्टिकी शरण लेनेसे यह नहीं ही टिकेगा। शब्दोंके अनेक अर्थ होते हैं। 'श्वेताश्व' कहनेसे सफेद घोड़ा, पाण्डव अर्जुन तथा कांयफल वृक्षका ज्ञान होता है इसी प्रकार सुव्रत-नेमि समस्त तीर्थंकरोंके द्योतक हैं—

अन्वय—सुव्रतः नेमिः सः तीर्थरथस्य प्रवर्तकः[3] वः अनश्वरीं श्रियं क्रियात् यस्य उद्गतं क्षत्रं विहायसि जगद्बोधविधौ एकमिव न व्यदीपि।

निरतिचार महाव्रती, स्वर्गसे लेकर मोक्षपर्यन्त स्थलोंमें ले जानेवाले तीर्थ (धर्म) रूपी मार्गके प्रवर्तक उन तीर्थंकरकी भक्तिके प्रसादसे आप लोगोंको निर्बाध महालक्ष्मीकी प्राप्ति हो, जिनका ज्ञानावरणी आदि चार घातिया कर्मोंके क्षयसे उत्पन्न कैवल्यरूपी क्षत्र चलती हुई सभा (समवशरण) में संसारको हेय-उपादेय आदिका बोध कराता हुआ एक प्रकारसे ही नहीं चमका था अपितु अनन्त रूपोंमें प्रकट हुआ था ॥१॥

अब वनदेवताके उपलक्षणसे श्रुतस्कन्धको नमस्कार करते हैं—

अन्वय—[4]जडानुकम्पिना गुरुप्रवाहेण अभिनन्द्ये अनेकशाखा[5]गहने श्रुतस्कन्धवने विहारिणीं वनदेवतामिव सतीं सरस्वतीं स्तुवे ॥२॥

कर्त्तव्य-अकर्त्तव्य विवेकहीन मूर्खोंके उद्धारक गुरुओंकी परम्परासे उत्तरोत्तर वर्द्धमान, प्राभृत आदि अनेक शाखाओं (भेदों) से गहन द्वादशांग तथा चतुर्दश पूर्व रूपी शास्त्रके वनमें विचरण करनेवाली अतएव वनदेवीके समान, पूर्वापर विरोध आदि दोषोंसे रहित होनेके कारण सती सर्वज्ञकी वाणी (दिव्य ध्वनि) की विनती करता हूँ।

वरुण देवताकी कृपासे आये महान पूरके द्वारा बढ़ाये गये शाखाओंके विस्तारके कारण अगम्य तथा वृक्षोंके पुष्ट तथा उन्नत तनोंके लिए प्रसिद्ध वनमें विचरण करनेवाली अतएव साध्वी सरस्वतीके समान वनदेवीको नमस्कार करता हूँ ॥२॥

---

१. सम्भविनी प०। २. वाणीम् द०। ३. 'जातावेकवचनम्'। ४. "डलयोरभेदः" अतएव वनदेवतापक्षे 'जलानुकम्पिना....' इत्यादि। ५. 'शाखा प्राभृतकादीनि'।

घने। पुनः कथम्भूते, अभिनन्द्ये, अभि समन्ताद्वर्धनीये। केन, कर्त्रा गुरुप्रवाहेण, गुरवो गणधरादयस्तेषां प्रवाहः परम्परा, तेन। कथम्भूतेन ? जडानुकम्पिना, जडा हेयोपादेयविकलाः[1],ताननुकम्पते, अनुकम्पाविषयीकरोतीत्येवंशीलस्तेन। कामिव वनदेवतामिव वनलक्ष्मीमिव। कथम्भूतां वनदेवताम् ? सतीं साङ्गोपाङ्गसम्पूर्णलक्षणाम्। पुनः कथम्भूताम् ? विहारिणीं[2], प्रकर्षेण विहरणशीलाम्। क ? श्रुतस्कन्धवने श्रुता विख्याताः स्कन्धाः शाखाजन्मस्थानानि [तेषां[3] वनम् तस्मिन्। कथम्भूते अनेकशाखागहने अनेकाश्च ताः शाखा विटपजन्मस्थानानि तैर्गहने] निबिडे। पुनः कथम्भूते, अभिनन्द्ये अभिवर्द्धनीये। केन, गुरुप्रवाहेण गरिष्ठपूरेण। कथम्भूतेन जडानुकम्पिना, जलानुकम्पिनेति सम्बन्धः[4] ॥२॥

**चिरन्तने वस्तुनि गच्छति स्पृहां विभाव्यमानोऽभिनवैर्नवप्रियः।**
**रसान्तरैश्चित्तहरैर्जनोऽन्धसि प्रयोगरम्यैरुपदंशकैरिव ॥३॥**

चिरन्तन इति। जनो लोको गच्छति[5]। कां, स्पृहाम्[6]। कस्मिन्, वस्तुनि पदार्थे। किंविशेषणाङ्किते ? चिरन्तने, पुरातने। कथम्भूतो जनः ? नवप्रियो नूतनाभिलाषुकः। पुनः कथम्भूतो, विभाव्यमानः, आह्लाद्यमानः। कैः ? रसान्तरैः, "*शृङ्गारहास्यकरुणारौद्रवीरभयानकाः। बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥*" [मं० अ० चि० ८५] इति रसेष्वेकैकस्य निवृत्तेरुत्तरोत्तरतया समुत्पद्यते इति कृत्वा रसान्तराणि। कथम्भूतैः ? अभिनवैः, प्रत्यग्रैः। पुनश्चित्तहरैश्चेतोरञ्जकैः। पुनः प्रयोगरम्यैः शब्दरचनारमणीयैः। इव यथार्थे। यथोपदंशकैर्व्यञ्जनैः। नवप्रियो नूतनाभिलाषी जनः। अन्धसि भक्ते। स्पृहां वाञ्छाम्। गच्छति प्राप्नोति। कथम्भूतैस्तैः ? प्रयोगरम्यैः, संस्कारविशेषोत्कर्षमनोहरैः। किंविशिष्टः सन् ? विभाव्यमानो रम्यमाणः। कैः ? रसान्तरैः—स्वाद्वम्ललवणतिक्तोषणकषायका एते यदैकस्मिन् मिश्रा जायन्ते ततो रसान्तराणि, तैः। किंविशिष्टैः ? चित्तहरैश्चित्ताह्ला[7]दिभिरिति[8] ॥३॥

**स जातिमार्गो रचना च साऽऽकृतिस्तदेव सूत्रं सकलं पुरातनम्।**
**विवर्त्तिता केवलमक्षरैः कृतिर्न कञ्चुकश्रीरिव वर्ण्यमृच्छति ॥४॥**

स इति। स जातिमार्गो जगतीपङ्क्त्यादिछन्दःपद्धतिः। चकारोऽत्रावधारणार्थो गम्यते। रचना सैव, पदन्यासः। सैव आकृतिर्गद्यपद्यादिबन्ध[9]लक्षणः संस्थानविशेषः, सा कथा, एकपुरुषाश्रितं चरित्रं सकलं समस्तम्। तदेव सूत्रम्, गद्यपद्यबन्धादिषु शास्त्रेषु सूत्र्यन्ते रच्यन्ते गुम्फ्यन्ते कथारूपतया अर्था येन तत्सूत्रमिति

---

**अन्वय—चित्तहरैः अभिनवैः रसान्तरैः प्रयोगरम्यैः उपदंशकैः विभाव्यमानः नवप्रियः जनः अन्धसि इव चिरन्तने वस्तुनि स्पृहां गच्छति ॥३॥**

**चित्तके लिए आकर्षक तथा क्रमानुसार विकसित फलतः नवीन शृङ्गार आदि रसों तथा शब्दालंकारों और अर्थालंकारोंकी सुन्दर रचनामें प्रयुक्त वर्णोंके द्वारा प्रसन्न किया गया नूतनताका उपासक मनुष्य; भातके समान, प्राचीनसे प्राचीन कथामें अनुरक्त हो जाता है।**

**मनमोहक नये नये मीठे, खट्टे, कसैले आदि छह स्वादों तथा सुन्दर उपायोंसे बनाये गये व्यञ्जनोंके परोसे जानेपर नवीनताका प्रेमी मनुष्य पुरानी कथाके समान सनातन भातको भी खानेके लिए तैयार हो जाता है ॥३॥**

**अन्वय—स जातिमार्गो रचना आकृतिश्च सैव तदेव सकलं पुरातनं सूत्रं केवलमक्षरैः[9] विवर्तिता कृतिः कञ्चुकश्रीरिव वर्ण्यं न ऋच्छति ? ॥४॥**

**उपजाति आदि ही छन्द रहते हैं, पदवाक्य विन्यास भी पूर्व परम्परागत होता है, गद्य-पद्य मय ही आकार रहता है और सबके सब वही पुराने अलंकार-नियम रहते हैं तो भी**

---

१. -य विवेक-वि–द०। २. विचरणशीलाम्–द०। ३. विशेषः–द०। ४. अत्र श्लेषोपमा–द०। ५. याति कां प०। ६. वान्छाम् प०। ७. चित्तानन्दि–प०। ८. श्लेषोपमालंकारः प०। ९. -दि बन्ध–द०,प०।

निर्वचनात् । पूर्वाचार्यप्रणीतत्वात् पुरातनं चिरन्तनम् । यद्यप्येवम्, तथापि केवलमक्षरैर्वर्णैः कृत्वा । विवर्त्तिता परावृत्ता, सती । कृतिः काव्यम् । किम् वर्णे श्लाघाम् । न ऋच्छति आप्नोति ? अपि तु प्राप्नोत्येव । केव कञ्चकुश्रीरिव कूर्पासशोभेव । यथा कञ्चुकश्रीरक्षरैरक्षेण सूच्या कृत्वा परेषां ब्राह्मणादीनां[1] वर्णानां द्रव्यं रान्ति गृह्णन्तीति निरुक्तेरक्षराः [2]द्विपकास्तैः, कर्तृभिः । केवलं परम् । विवर्त्तिता सती । किम् ? वर्णे श्लाघाम् न याति ? अपि तु यात्येव । यद्यपि स एव जातिमार्गः, अङ्गवङ्गादिदेशोद्भवजनाभिप्रायः, सैव रचना हस्तावसरे करविन्यासः (हस्तावरणाद्यनेकविन्यासः) सैवाकृतिः संस्थानं, केवलं सकलं तदेव सूत्रं जन्तुजालरूपं चिरन्तनमिति सम्बन्धः । श्लेषोपमा ॥४॥

**कवेरपार्थामधुरा न भारती कथेव कर्णान्तमुपैति भारती ।**
**तनोति सालङ्कृतिलक्ष्मणान्विता सतां मुदं दाशरथेर्यथा तनुः ॥५॥**

कवेरिति । कवेर्भारती वाणी । कर्णान्तं श्रुतिरन्ध्रं नोपैति नाश्रयति । कथंभूता सती ? अपार्थार्थशून्या । अमधुरा माधुर्यगुणोज्झिता । कस्यचित् कवेरमधुरा सती, अर्थयुक्ता कर्णान्तमुपैति, कस्यचित्कवेरर्थशून्या सती मधुरा च । अर्थमाधुर्यगुणाभ्यामुज्झिता कालत्रयेऽपि कवेर्भारती कर्णान्तं नोपैतीत्यभिप्रायः । केव, भारतीकथेव कर्णान्तं नोपैति । कर्णस्य नरेन्द्रस्य, अन्तो विनाशः, कर्णान्तस्तं कर्णान्तम् । कथम्भूता सती ? अपार्था, अर्जुनशून्या तथा अमधुरा, मधुं मधुनामानं नरेन्द्रं, रौ ददौ, हतवानित्यर्थः । स मधुरो नारायणः, [रासो दानमिति] अत्र 'दानवैदाने देङो रक्षणे स्थादो मे छेदने] इति [3]दारूपाणां चतुर्णां धातूनां रूपमेकविधिना स्यादतः कारणाच्छेदनार्थो गृहीतोऽस्ति । न विद्यते मधुरो यस्यां सा अमधुरा, नारायणरहिता । [ अमधुरा सती पार्थयुक्तत्वादपार्था सती मधुरयुक्तत्वात्तथा[4] ] पार्थमधुराभ्यां रहिता सती कर्णवधं नाश्रयतीति । स कवेर्भारती सतां परीक्षकाणां पुरुषाणां मुदं हर्षं तनोति । कथम्भूता सती ? अलंकृतिलक्ष्मणाऽन्विता अलंकृतिरलङ्कारो लक्ष्म लक्षणं व्याकरणम् । अलंकृतिश्च लक्ष्म चालंकृतिलक्ष्म । अत्र समाहारस्याश्रयणादेकत्वं तेनान्विता । यथा दाशरथे रामस्य तनुः शरीरं, सतां सत्पुरुषाणां मुदं तनोति । कथम्भूता ? सालंकृतिलक्ष्मणान्विता, साभरणेन सौमित्रिणा युक्तेति सम्बन्धः । अत्र श्लेषोपमा । अत्र कवेर्भारत्या दूषणभूषणे प्रदर्शिते ॥५॥

---

**केवल अक्षरोंके विन्यासको बदल देनेसे ही क्या कोई रचना कञ्चुकके समान शोभित नहीं होती है ? अर्थात् होती ही है ।**

**अंग-वंग आदि देशोंके ही पहिरनेवाले होते हैं, हाथके लिए बाँह आदि चिरन्तन शकल होती है तथा ताना-बाना तो पूराका पूरा पुराना ही रहता है तथापि दर्जियोंके द्वारा पलट दिये जानेपर ही क्या कोई कपड़ा नूतन काव्यके समान शोभित नहीं होता है ? अर्थात् होता ही है ॥४॥**

**अन्वय—अपार्था अमधुरा कवेः भारती भारतीकथेव कर्णान्तं नोपैति, अलंकृतिलक्ष्मणान्विता सा सतां मुदं तनोति यथा दाशरथेस्तनुः । ॥५॥**

**अर्थ शून्य तथा माधुर्य आदि गुणोंसे रहित कविकी वाणी, महाभारतकी कथाके समान श्रोताओंके कानोंतक नहीं पहुंचती है । अलंकार शास्त्र और व्याकरण-नियमों से युक्त वही कविकी वाणी दशरथ-सुतके शरीरके समान सज्जनोंको प्रमुदित कर देती है ।**

**अर्जुन विहीन तथा मधुदैत्यके संहारकर्ता ( श्रीकृष्ण ) रहित महाभारतका चरित कविवाणीके समान राजा कर्णके वध तक नहीं जा सकता है । [ विश्वकी ] शोभा (सीता) तथा लक्ष्मणसे युक्त वह दाशरथि ( श्रीराम )की छवि सहज ही भक्तोंको आह्लादित कर देती है ॥५॥**

---

**१. -नां वर्णानां–द०, प० । २. सूईके द्वारा धन कमानेवाले–अक्षर=दर्जी । ३. रा ला दाने । दानमित्यत्र डुदाञ् दाने । दाण् वैदाने । देङ् रमणे । छे [ छो ] दो मो छेदने–द० । ४. अमधुरा सती अपार्था सती अर्थात् –इति पाठो युक्तः ।**

**हृतोऽपि चित्ते प्रसभं सुभाषितैर्न साधुकारं वचसि प्रयच्छति ।**
**कुशिष्यमुत्सेकभियावजानतः पदं गुरोर्धावति दुर्जनः क सः ॥६॥**

हृत इति । क स दुर्जनः खलो यो न प्रयच्छति ? कम् ? साधुकारम् । क ? वचसि वाचि । कथम्भूतोऽपि ? हृतोऽपि, गृहीतोऽपि । कैः कृत्वा सुभाषितैः सूक्तैः । क ? चित्ते हृदये । कथम् ? प्रसभं बलात्कारेण । शिष्यं विनेयम् । उत्सेकभिया गर्वभयेन । अवजानतोऽवहेलयतोऽवज्ञाविषयीकुर्वतः । गुरोः सूरेः, पदं पदवीं क धावति ? अपि तु न । अत्र गुरुदुर्जनयोर्वैषम्यमिति भावः । विषमालङ्कारः ॥६॥

**ततोऽधिके तादृशि वा कृतश्रमः परैः कृतं निन्दतु तत्र का व्यथा ।**
**व्यलीकवैदग्ध्यहतेऽपवादिनि ज्वलत्यनाश्वानपि मन्युना तपन् ॥७॥**

तत इति । ततस्तस्मात् परकृतादधिके काव्ये । तादृशि वा परकृतकाव्यसदृशे वा । कृतश्रमो विहिताभ्यासः सन् । परैः[1] कृतं काव्यं निन्दतु दूषयतु, तत्र[2] का व्यथा पीड़ा ? अपि तु न कापि । युक्तमेतत् । परं, व्यलीकवैदग्ध्यहतेऽसत्यचातुरीजर्जरीभूते । अपवादिनि, [3]अपवदत्येवंशीलः परदोषग्राहकस्तस्मिन् । अनाश्वान् तपस्वी । मन्युना कोपेन । ज्वलति दीप्तो भवति । कथम्भूतः ? तपन्नपि तपस्यन्नपि[4] ॥७॥

**कृतावतारायतिपुण्यनायकैरजातशत्रुप्रमुखैरियं कृतिः ।**
**न वार्च्यते केन न राघवारिभिर्नरोत्तमैः कोटिशिलेव चालिता ॥८॥**

कृतेति । वा, उपमानार्थः । केनेव न वार्च्यते पूज्यते कृतिरियम् ? अपितु विश्वजनेनार्च्यत इत्ययमर्थो लभ्यते[5] । **"द्वौ नञौ प्रकृतमर्थं गमयतः" [ न्यायसं० पृ० ६० ]** इति वचनात् । यथा विश्वेनार्च्यते[6] तथा मया कविना धनञ्जयेनेति भावः । कथम्भूता ? कृतावतारा, कृतो विहितोऽवतारोऽवतरणं यस्यां सा तथोक्ता । कैः कर्तृभिः ? राघवारिभिः रामरावणादिभिः । कथम्भूतैः ? आयतिपुण्यनायकैः, आयतिरुत्तरकालस्तया प्रधानं पुण्यमायुषः[7] स्थितिं यावत्, तस्य[8] स्वामिनस्तैः । पुनः, अजातशत्रुप्रमुखैः, न जाता शत्रवः प्रमुखाः संमुखा

---

अन्वय—सुभाषितैः चित्ते प्रसभं हृतोऽपि दुर्जनः वचसि साधुकारं न प्रयच्छति । सः कुशिष्यमुत्सेकभियावजानतः गुरोः पदं क धावति ? ॥६॥

मन ही मन कवियोंकी सूक्तियोंपर पूर्णरूपसे मोहित होकर भी दुर्जन मुखसे "साधु साधु" नहीं कहता है । किन्तु; शिष्यकी सुन्दर रचनापर सर्वथा मुग्ध तथापि कुशिष्योंकी ईर्ष्या अथवा अहंकारके डरसे उपेक्षा दिखाकर वचनोंसे प्रशंसा न करनेवाले गुरुकी समानता क्या वह दुर्जन कभी कर सकता है ?॥६॥

यदि वह पुरुष दूसरोंके काव्यकी निन्दा करता है जिसने दूसरोंके सदृश अथवा दूसरोंसे बढ़कर रचनाएं की हैं तो इसमें दुखी होनेकी कोई बात नहीं है । किन्तु झूठ-मूठ ही विद्वत्ताकी डींग मारनेवाले दूसरोंके निन्दक पुरुषपर तो तपस्वी साधुका भी क्रोध भभक उठता है ॥ ७ ॥

अन्वय—यतिपुण्यनायकैः अजातशत्रुप्रमुखैः नरोत्तमैः कृतावतारा राघवारिभिः चालिता कोटिशिलेव इयं नवा कृतिः केन न अर्च्यते ॥८॥

विश्वबन्धु साधुओंके अग्रणी, श्रेष्ठ मनुष्य, पुण्यके स्वामी जिनसेन आदिके द्वारा पहिले लिखी गयी और रावणके द्वारा हिलायी गयी कोटिशिलाके समान यह नूतन रचना किसके लिए पूज्य नहीं है ?

---

१. इतरैः द०, प० । २. निन्दके द०, प० । ३. अपवदती–द०, प० । ४. अत्रार्थान्तरालंकारः द०, प० । ५. लब्धः–द०, प० । ६. अनेना–प०, द० । ७. मायति पुण्यमा–प०, द० । ८. -स्य नायकाः स्वा– प०, द० ।

येषां तैः। पुनः कथम्भूता ? चालिता, चर्चिता। कैः ? नरोत्तमैर्जिनसेनादिभिराचार्यैः[1]। केव चालिता ? कोटिशिलेव। कैः ? नरोत्तमैर्नारायणैः। अत्र लोकपूज्यत्वाद्बहुवचनम्। कथम्भूतैस्तैः ? कृतावतारायतिपुण्यनायकैर्विहितावतारदीर्घदेवप्रधानैः। पुनरजातशत्रुप्रमुखैरिति सम्बन्धः।

अथ भारतीयपक्षः—नवा नूतना सर्वदेयं कृतिरर्च्यते। केन सुखेन कृत्वा। कीदृशी ? कृतावतारा। कैः ? नरोत्तमैर्धीरोदात्तगुणास्पदैर्वीरैः। कीदृशैः ? [2]अजातशत्रुप्रमुखैर्युधिष्ठिरप्रमुखैः। पुनः कीदृशैः ? नराघवारिभिः, नरोऽर्जुनः, अघं विघ्नं वारयतीं[3]त्येवंशीलोऽघवारी, नरोऽघवारी येषां तैर्नराघवारिभिरिति कवेरभिप्रायः। अथवा नराणां मनुष्याणामघं पापं वारयन्तीत्यघवारिणस्तैस्तथोक्तैः।"**राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः। राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः॥" [ चा. नी. द. १३।८। ]** इति वचनात् कवेर्नेमिचन्द्रस्याशयः। चालिता प्रवर्त्तिता। कैः ? नरोत्तमैः समन्तभद्रादिभिः सूरिभिः। यथा नरोत्तमैः[4] कोटिशिला चालितोत्क्षिप्ता। अत्रोभयेषामाचार्यनारायणानां विशेषणानि[5] ज्ञातव्यानीति सम्बन्धः। अत्र श्लेषोपमा ॥८॥

## अथापरागोऽप्यपरागतां गतः स पश्चिमोऽपि प्रथमो विपश्चिताम्।
## अनुज्ञया वीरजिनस्य गौतमो गणाग्रणीः श्रेणिकमित्यवोचत ॥ ९ ॥

अथेति। अथशब्दो मङ्गलवाची। उक्तञ्च–"**हेतौ निदर्शने प्रश्ने स्तुतौ कण्ठसमीकृतौ। आनन्तर्येऽधिकारार्थे माङ्गल्ये चाथ इष्यते॥**" गणाग्रणीर्गौतमो गणधरः। श्रेणिकं मगधदेशस्वामिनं प्रति इति वक्ष्यमाणापेक्षया अवोचत्तावादीत्। अनुज्ञयाऽऽज्ञया। कस्य ? वीरजिनस्य,वर्द्धमानस्य [6]चतुर्विंशतितमतीर्थकरस्य। कीदृशो गौतमः ? अपरागोऽप्यपरागतां गतः अपरागतां वाच्यतां गतोऽपि कथमपरागो रजोमलरहितो भवतीति विरुद्धम्। परिह्रियते–अव्ययानामनेकार्थत्वादपिशब्दोऽत्र कारणार्थे गम्यते। अपि यस्मात्कारणात्, अपरागतां गतः–इष्टे वस्तुनि मातृमित्रकलत्रादौ प्रीतिः रागः, अपगतो रागो यस्य सः तथोक्तस्तस्य भावोऽपरागता तां प्रीतिराहित्यं गतः प्राप्तोऽत एवापराग [7]एनोमलरहित इति सुरथम्। कीदृशः पुनः ? विपश्चितां[8] विदुषां प्रथम

---

**अन्वय—कृतावतार-आयतिपुण्यनायकैः अजातशत्रुप्रमुखैः नरोत्तमैः राघवारिभिः चालिता इयं नवा कृतिः कोटिशिलेव केन न अर्च्यते।**

**अवतार कर्त्ता, भावी पीढ़ीके लिए आदर्श चरित्र, तथा जिनके सामने आनेका शत्रु साहस नहीं करते थे। ऐसे नारायण रामचन्द्र जी तथा उनके शत्रु ( रावण ) के जीवनसे प्रचलित इस नयी काव्य ( रामायण ) कथाको कोटिशिलाके समान कौन नहीं पूजेगा ? अर्थात् सभी पूजेंगे।**

**अन्वय—······नराघवारिभिः नरोत्तमैः चालिता इयं कृतिः केन वा कोटिशिलेव न अर्च्यते।**

**मनुष्य पर्यायको प्राप्त, भविष्यके लिए अनुकरणीय चरित्रवान् तथा युधिष्ठिरको ( राजा अथवा बड़ा भाई ) माननेवाले पाण्डवों तथा अर्जुन अथवा मनुष्य मात्रके पापोंके विनाशक शलाकापुरुष श्रीकृष्ण तथा नेमिचन्द्रके जीवनसे प्रारब्ध इस काव्य ( महाभारत ) कथाकी कोटिशिलाके समान कौन व्यक्ति पूजा नहीं करेगा ? ॥८॥**

**अन्वय—अपरागोऽपि अपरागतां गतः पश्चिमोऽपि विपश्चितां प्रथमः गणाग्रणी गौतमः वीरजिनस्य अनुज्ञया श्रेणिकम् इत्यवोचत।**

**अपवादभाजन होकर भी रजोमलरहित तथा अन्तमें हो कर भी पीछेके नहीं; पहिले गौतम गणधर [ विरोधाभास है, परिहार ] मित्र, कलत्रादि इष्ट जनोंकी प्रीति रहित अतएव पापमलहीन महावीरप्रभुके तुरन्त बाद हुए तथा इस युगके आचार्योंके अग्रणी**

---

१. कीदृशैः यतिपुण्यनायकैः। यतिषु व्रतिषु मध्ये पुण्याः प्रधानाः नायकाः स्वामिनस्तैः–प०, द०। २. अजातरिपुसम्मुखैः- प०, द०। ३. निराकरोती- पा०। ४. पुरुषोत्तमैः- प०। ५. पूर्वोक्तानि- प०, द०। ६. चतुर्विंश- प०, द०। ७. रजोमल-द०। ८. विद्वज्जनानाम्- प०, द०।

आद्योऽपि सन् कथं पश्चिमः पाश्चात्यः ? इति विरोधः । नैवम् , पारोक्ष्यत्वात् (परापेक्षत्वात् ) पदार्थधर्माणाम् । वीरजिनस्यापेक्षया पश्चिमो न विदुषामिति निरूप्यमाणत्वादिति सुस्थम् ॥ विरोधालङ्कारोऽत्र ॥ ९ ॥

**इहैव जम्बूतरुमालवालवत्परीयुषोच्चैर्भरतेऽब्धिनावृते ।**
**निवस्तुमिष्टास्तिमितार्यकिन्नरैर्नगर्ययोध्यासमहास्तिनाख्यया ॥१०॥**

इहेति । हे आर्य, गुणैर्गुणवद्भिरर्य्यते सेव्यत इत्यार्यो गुणगुणिसमाश्रयस्तस्य सम्बोधने हे आर्य, गुणगुणिसमाश्रय हे श्रेणिक । इहैव भरतेक्षेत्रे किं नास्त्याख्यया नाम्नायोध्या पुरी[1] ? अपि त्वस्त्येव । कथम्भूते भरते ? आवृते वेष्टिते । केन ? अब्धिना समुद्रेण । केनेव ? आल्वालत्वदालवालेनेव स्थालकेनेव । कथम्भूतेन ? परीयुषा वेष्टितवता । कम् ? जम्बूतरुम् । कथम् ? उच्चैरतिशयेन । कथम्भूता पुरी ? समहा सोत्सवा । पुनः कीदृशी ? इष्टाऽभिलषिता । कैः ? नरैः[2] । किं कर्तुम् ? निवस्तुं स्थातुम् । पुनः कीदृशी ? स्तिमिता स्थिरेति ।

अधुना भारतीयः—हे असमानुपम हे श्रेणिक ! हास्तिनाख्या नगरी पुरी । अस्ति विद्यते[3] । किन्नरैः यक्षैः अथवार्यकिन्नरैः प्रधानयक्षैः । पुनः मिता, योजनायामविष्कंभसम्मिता । पुनः अयोध्या परैर्योद्धुमशक्या । भारतवर्णनं पूर्ववज्ज्ञातव्यम् । श्लेषालङ्कारः ॥१०॥

**पुरी पयोधीन् कुलपर्वतानपि प्रसाधयन्ती करशुद्धमण्डला ।**
**बिभर्त्ति साकेतकगोत्रसूचिता सरःसु लक्ष्मीं प्रतिमा रवेरिव ॥११॥**

पुरीति । तथा सरःसु सरोवरेषु । लक्ष्मीं शोभाम् । बिभर्त्ति पुरी नगरी कीदृशी ? साकेतकगोत्रसूचिता, साकेतं कायति कथयति साकेतकं, तच्च तद्गोत्रञ्च तत्तथोक्तमयोध्या-नामेति भावः, साकेतकगोत्रेण सूचिता । अपि शब्दः समुच्चयार्थः । आत्मीयपर्यायनाम्ना प्रसिद्धेत्यर्थः । किं कुर्वाणा सती ? [4]आत्मगान् कुलपर्वतान्,

---

**श्री गौतम गणधरने महावीरप्रभुके उपदेशसे इस कथाको श्रेणिक राजाको निम्न प्रकारसे सुनाया था । ॥९॥**

**अन्वय—आर्य ! जम्बूतरुमालवालवत् उच्चैः परीयुषा अब्धिना आवृते इहैव भरते स्तिमिता, समहा किन्नरैः निवसितुमिष्टा आख्यया अयोध्या नगरी नास्ति ?**

**आर्य श्रेणिक ! जम्बू वृक्षको सर्वथा क्यारीके समान घेरे तथा स्वयं लवण समुद्रसे घिरे इस [ जम्बू द्वीपके ] भारत क्षेत्रमें अत्यन्त दृढ़, उत्सवोंसे परिपूर्ण अतएव निवासके लिए किन्नर देवोंको भी प्रिय और नामसे अयोध्या नामकी नगरी क्या नहीं है ? अर्थात् सर्वविदित है ।**

**अन्वय—हे असम !···मिता, अयोध्या, आर्यकिन्नरैः निवस्तुमिष्टा हास्तिनाख्यया नगरी अस्ति ।**

**हे निरुपम श्रेणिकराज ! जम्बू वृक्षके लिए थालेके समान तथा लवण समुद्रसे सब दिशाओंमें घिरे इस [ जम्बू द्वीपके ] भरत क्षेत्रमें योजनानुसार लम्बी-चौड़ी, शत्रुओंके आक्रमणोंसे परे अतएव आर्य लोगों तथा किन्नर आदि देवोंके रहने योग्य हस्तिनापुर नामकी नगरी है ॥ १० ॥**

**अन्वय—करशुद्धमण्डलापयोधीन् कुलपर्वतानपि प्रसाधयन्ती सा-केतकगोत्रसूचिता पुरी सरःसु रवेः प्रतिमा इव लक्ष्मीं बिभर्त्ति ।**

**व्यवस्थित राजस्व-व्यवस्थाके कारण चोरादिहीन फलतः समुद्रों तथा सीमा पर्वतों तकके लिए अलंकारभूत और साकेत नामसे भी विख्यात वह अयोध्यापुरी तालावमें प्रतिबिम्बित सूर्यकी प्रतिमाके समान सम्पत्तिका भण्डार थी । क्योंकि सूर्यमण्डल भी किरणोंसे**

---

१. -ध्या नगरी पु–द० । २. -रैर्जनैः द० । ३. -ते कीदृशी इष्टा । किङ्कर्तुं निवसितुम् द०, प० । ४. आत्मगान् कुर्वती–प० । आत्मसात्कुर्वती–द० ।

पयोधीन् समुद्रान् प्रसाधयन्ती । अपिशब्दस्यायमर्थो न केवलं पयोधीन् कुलपर्वतांश्च । कीदृशी पुनः ? करशुद्धमण्डला, कराय ( करेण ) सिद्धाय ( येन ) शुद्धं चरटमत्तजनादिरहितं मण्डलं देशो यस्याः सा तथोक्ता । इवोपमार्थः । यथा रवेरादित्यस्य प्रतिमा बिम्बं सरःसु लक्ष्मीं बिभर्त्ति । कीदृशी ? केतकगोत्रसूचिता, केतकानां गोत्रं सन्तानं केतकगोत्रं, सूचीनां भावः सूचिता, सूचिता प्रादुर्भावः, केतकगोत्रस्य सूचिता यस्याः सकाशाद्भवति सा तथेति[1] ।

भारतीयः—हस्तिनापुरी करशुद्धमण्डला भूत्वा पयोधीन् कुलपर्वतानपि प्रसाधयन्ती सती सरःसु लक्ष्मीं बिभर्त्ति । साकेतकगोत्रसूचिता साकेतकानां राजपुत्रविशेषाणां यद्गोत्रं[2] तस्मै सूचिता सुष्टूचिता योग्या सा तथोक्ता । यथा रवेः प्रतिमा सरःसु लक्ष्मीं बिभर्त्ति । शेषं समम् ॥११॥

**विसारिभिः स्नानकषायभूषितैर्बिभीषितेव प्रियगात्रमङ्गना ।**
**शुचौ समालिङ्गति यत्र सारवे ह्रदे तरन्ती कलहंससंकुले ॥१२॥**

विसारिभिरिति । यत्र यस्यां नगर्याम् । शुचौ ग्रीष्मे सति । कलहंससंकुले ह्रदे तरन्ती प्लवमाना सती अङ्गना कामिनी प्रियगात्रं समालिङ्गत्याश्लिष्यति । कीदृशे ? सारवे, सरय्वा नद्या अयं सारवः तस्मिन् "देविकायां सरय्वाञ्च भवे दाविकसारवौ" इत्यमरः । केवोत्प्रेक्षिता । बिभीषितेव भयं नीतेव । कैः ? विसारिभिर्मत्स्यैः । कथम्भूतैः ? स्नानकषायभूषितैः । स्नानार्थं कषायाः कुङ्कुमादयः स्नानकषायास्तैर्भूषिता लिप्तास्तैः ।

भारतीये सारवे सस्वने । उत्प्रेक्षा ॥१२॥

**अरान् घटीयन्त्रगतान् गतश्रमः पयःकणैरग्रपदेन पीडयन् ।**
**स यत्र कच्छी सतनुः सुरालयं प्रयुज्य निःश्रेणिमिवारुरुक्षति ॥१३॥**

अरानिति । यत्र यस्यां स कच्छी मालाकारः । सतनुः सशरीरः । सुरालयं स्वर्गम् । आरुरुक्षतीवारोढुमिच्छतीव । किं कृत्वा ? पूर्वं प्रयुज्य सम्बद्ध्य । काम् ? निश्रेणिम् । किं कुर्वाणः सन् ? पीडयन् कदर्थयन् । कान् ? अरान् काष्ठकीलकान् । कथम्भूतान् ? घटीयन्त्रगतान् जलपात्राश्रितान् । केन कृत्वा ? अग्रपदेन चरणाग्रेण[3] । कथम्भूतः ? गतश्रमो विगतक्लमः । कैः ? पयःकणैरुदबिन्दुभिरिति[4] ॥१३॥

**उदर्कसंक्लेशभरं स्वयं वहत् परस्य सन्तापहरं फलप्रदम् ।**
**युतं विजात्यापि विलङ्घ्य सज्जनं विभाति यत्रोपवनं समन्ततः ॥१४॥**

जगमग होता है, समुद्रों और पर्वतोंको आलोकित करता है तथा कमल-परिवारके लिए हितू होता है।

राज्य भरमें उचित राजस्वके लिए ख्यात अतएव समुद्रों और कुलाचलोंको भी शोभाको बढ़ानेवाली तथा साकेत वंशके राजपुत्रोंके लिए सर्वथा उपयुक्त वह हस्तिनापुरी सूर्य-बिम्बके समान तालाबों और लक्ष्मीसे पूर्ण थी।

ग्रीष्म ऋतुमें जहां पर सुन्दर हंसोंसे पूर्ण सरयू नदीके घाटोंपर तैरती हुई युवती, स्नानके समय लगाये गये लेप आदिसे रंगी मछलियोंसे डरकर अपने पतिके शरीरसे चिपट जाती है।

हस्तिनापुरमें सुन्दर हंसोंसे व्याप्त अतएव ( सारवे ) कोलाहलपूर्ण स्वच्छ तालाबमें तैरती हुई अंगना·········है ॥ १२ ॥

जिन नगरियोंमें माली अपने पैरसे रेहंटके गजोंको दबाता था तथापि पानीकी फुहारसे उसकी थकान दूर हो जाती थी। वह ऐसा लगता था मानो सीढ़ी बिना लगाये ही अपने भौतिक शरीरके साथ स्वर्गमें चढ़नेका प्रयत्न कर रहा है। ॥१३॥

जिन नगरोंमें शिरपर चमकते सूर्यके आतपको स्वयं सहकर भी दूसरोंको गर्मीसे

१. किं कुर्वाणा सती प्रसाधयन्ती प्रच्छादयन्ती । कान् पयोधीन् कुलपर्वतांश्च । कथम्भूता भूत्वा करशुद्धमण्डला । करैः किरणैः शुद्धं मण्डलं यस्याः सा प०, द० । २. –त्रम् अन्वयः त–प०, द० । ३. अग्रचरणेन प०, द० । ४. अत्रोत्प्रेक्षा प०, द० ।

उदर्केति । समन्ततः सामस्त्येन । यत्र यस्याम् । सज्जनं सत्पुरुषम् । विलङ्घ्यातिक्रम्य । उपवनमुद्यानम् । विजात्या युतमपि विशिष्टया जात्या युतमपि । विभातीति विरुद्धम् । परिहृयते —

वीनां पक्षिणां जातिस्तया युक्तम् । कीदृशम् ? उदर्कसङ्क्लेशभरम्, ऊर्ध्वं गतोऽर्कः ऊर्ध्वं स्थितो रविरुदर्कस्तस्माद्यः संक्लेशभरः सन्तापभारस्तम् । वहत् धरत् । कथम् ? स्वयमात्मना । परस्य जनस्य सन्तापहरं सन्तापं[1] हरतीति तत्तथाभूतम् । कीदृशं पुनः ? फलप्रदं फलं प्रददातीति तत्तथा । अर्थत्रशाद्विभक्तिविपरिणामो दरीदृश्यते । सज्जनोऽप्येवं शोभतेतराम् । कीदृशोऽपि ? युतोऽपि । कया ? विजात्या, विशिष्टा मातृपक्षलाञ्छनरहिता जातिस्तया । उक्तञ्च—**"मातुः पक्षो भवेज्जातिः पितुः पक्षो भवेत्कुलम्"** [ म. पु. प. ३९–८५ ] इति । उदर्कसंक्लेशभरम्, उदर्कः फलमुत्तरं तस्मिन् संक्लेशभरस्तं वहन् बिभ्रत्[2] । परस्य सन्तापहरः फलप्रदश्च विरोधाभासः ॥१४॥

**दशां दधानाः खलु गन्धधारिणीं महाद्रुमस्कन्धनिबद्धकन्धराः ।**
**स्वबन्धवैरोद्धटयेव सिन्धुराः शिरांसि यस्यां धुनतेऽरुणेक्षणाः ॥१५॥**

दशामिति । यस्यां नगर्याम् । अरुणेक्षणाः लोहितलोचनाः । सिन्धुरा गजाः । शिरांसि शीर्षाणि धुनते कम्पयन्ते । कयेवोत्प्रेक्षिताः । स्वबन्धवैरोद्धट्या इव स्वबन्धवैरमुद्घाटयितुमिव । कीदृशाः ? गन्धधारिणीमेतन्नाम्नीं दशां मदावस्थां खलु निश्चयेन दधाना दधतः । पुनः कथम्भूताः ? महाद्रुमस्कन्धनिबद्धकन्धराः, महाद्रुमा उच्चवृक्षाः, स्कन्धाः शाखोत्पत्तिस्थानानि, महाद्रुमाणां स्कन्धाः महाद्रुमस्कन्धास्तेषु निबद्धा नियन्त्रिताः कन्धरा ग्रीवा येषां ते । उक्तञ्च—**"सञ्जाततिलका पूर्वा, द्वितीयार्द्रकपोलिका । तृतीयार्द्धनिबद्धा तु चतुर्थी गन्धधारिणी ॥१॥ पञ्चमी क्रोधिनी ज्ञेया षष्ठी चैव प्रवर्त्तिका । सम्भि(प्रभि)न्नकपोलाऽथ सप्तमी सार्वकालिका"** ॥२॥ उत्प्रेक्षालंकारः ॥१५॥

**कुशासनोदीरितचेतसश्चला मनोजवा मेघपथेतिवर्त्तिनः ।**
**प्रसह्य नीता गुरुभिर्महापथं नरोऽतिदाम्यन्त्यपि यत्र वाजिनः ॥१६॥**

कुशासनेति । यत्र यस्यां नगर्यां नरः नराः, अतिदाम्यन्ति सुशिक्षिता भवन्ति । कीदृशाः, गुरुभिः सूरिभिः, उपाध्यायैः कर्तृभिः महापथं सन्मार्गं प्रसह्य [3]बलान्नीताः प्रापिताः । कथम्भूताः ? अतिवर्त्तिनः ।

---

बचानेवाला, फलोंका दाता तथा कोने कोनेमें विशेष प्रकारकी वृक्ष-श्रेणियोंसे पूर्ण उपवन सज्जनोंसे भी बढ़कर शोभित होता है ।

पूर्वोपार्जित कर्मोंके दुःखद परिणामोंको स्वयं सहकर भी दूसरोंको शान्ति-मार्गके उपदेष्टा, पुण्यके प्रेरक तथा सर्वथा पवित्र मातृकुलसे सम्बद्ध सज्जन भी उपवनोंको पछाड़कर उन नगरियोंकी शोभा बढ़ाते थे । ॥१४॥

जिस अयोध्या अथवा हस्तिना नगरीमें गन्धधारिणी ( जिसमें हाथीके माथेसे मदजलकी धार लग जाती है ) अवस्थाको प्राप्त अतएव बड़े-बड़े वृक्षोंके तनोंसे गलेमें भी बंधे, उन्मादसूचक लाल-लाल नेत्रोंवाले बड़े-बड़े हाथी अपने बन्धनका विरोध करनेके लिए ही माथा धुनते थे ॥१५॥

अन्वय—यत्र कुशासनोदीरितचेतसः चलाः मनोजवामे अघपथेतिवर्तिनः नराः गुरुभिः प्रसह्य महापथं नीता अतिदाम्यन्ति ॥१६॥

जिन नगरोंमें कुशिक्षित दुष्ट लोगोंकी प्रेरणासे भ्रान्त चित्त, नीति मार्गसे भ्रष्ट कामदेव मय विपरीत मार्गपर चले जानेके कारण शिष्टताकी सीमाओंके परे गये लोग भी गुरुओंकी सबल प्रेरणासे साधुमार्गमें लाये जानेपर अत्यन्त संयमी हो जाते हैं ।

---

१. –पं संस्तक्लेशं ह- प०, द० । २. धरन्- प०, द० । ३. हठात् प०, द० ।

अतिवर्त्तमानाः। क्व ? अघपथे पापमार्गे। कथम्भूते ? मनोजवामे कन्दर्पानुकूले। कीदृशाः ? **"तमः खलु चलं नीलम्"** इति वचनात्। चलाः तमस्विनः। कीदृशाः पुनः। कुशासनोदीरितचेतसः कुशासनं दुःशिक्षा विद्यते येषां ते कुशासनाः कुशिक्षादायिनः पुरुषाः तैरुदीरितं ( उदीर्णम् ) उच्छ्रलितञ्चेतो हृदयं येषां ते तथोक्ताः। तथा वाजिनः तुरङ्गमा अप्येवं गुरुभिरश्ववारैर्महापथं बाह्यालीं प्रसह्य हठात् नीताः। दाम्यन्ति सुशिक्षिता जायन्ते। कीदृशाः। मेघपथे नभसि अतिवर्त्तिनः, उल्लवनशीलाः। पुनः मनोजवाः मनोवेगिनः पुनः चलाः चञ्चलाः पुनः कुशासनोदीरितचेतसः कुशा वल्गा आसनं स्थानविशेषः। कुशा च आसनञ्च कुशासने ताभ्यां कृत्वा उदीरितं दत्तं चेतो यैस्ते वल्गास्थानकदत्तचित्ता इति श्लेषालङ्कारः ॥१६॥

**प्रभाविरामस्य सपत्नसन्ततेः शरासनाभ्यासपदं किरीटिनः।**
**बहिर्यतोऽद्यापि निचाय्य दूरगं मदं विमुञ्चन्ति शरं न धन्विनः ॥१७॥**

प्रभेति—यतो यस्या नगर्या अयोध्याया बहिर्बाह्यप्रदेशे अद्यापि साम्प्रतमपि किरीटिनो मुकुटवतो रामस्य शरासनाभ्यासपदं चापगुणनिकास्थानं दूरगं विप्रकृष्टं निचाय्यालोक्य मदं गर्वं विमुञ्चन्ति अपाकुर्वन्ति धन्विनो धनुर्धराः न शरं बाणं कथम्भूतम् ? प्रभावि प्रभवनशीलं कस्याः, सपत्नसन्ततेः सपत्नाः शत्रवस्तेषां सन्ततेः सन्तानस्येति सम्बन्धः ॥

भारतीयः[1]—किरीटिनोऽर्जुनस्य शरासनाभ्यासपदमित्यन्वयः। कथम्भूतस्य किरीटिनः, सपत्नसन्ततेः प्रभाविरामस्य प्रभाया विरामो यस्मात् तस्य शेषं पूर्ववत् ॥१७॥

**प्रपासभासार्थनटाश्रमव्रजैर्जनाकुलैर्भान्ति भृशं बहिर्भुवः।**
**प्रजाः कुतश्चित् परदेशभङ्गतो विलोलितायां शरणं गता इव ॥१८॥**

प्रपेति—बहिर्भुवः बहिर्भूमयो भृशमत्यर्थं भान्ति विभासन्तेतरां कैः ? प्रपासभासार्थनटाश्रमव्रजैः प्रपा पानीयशालाः सभानि योगिनां ( धर्माधर्म )विचारस्थानानि सार्थाः वणिग्जनानां समूहाः नटाः बहुरूपिणः।

**अन्वय—**...कुशा-आसनोदीरितचेतसः चलाः मनोजवाः मेघपथेऽतिवर्तिनः वाजिनः...।

**जहांपर चाबुक तथा सवारीके संकेतको समझनेके लिए बाध्य अत्यन्त चंचल, मनके समान तेज और आकाशमें उछलनेवाले घोड़े भी लम्बे-चौड़े रास्तोंपर ले जाकर साईसोंके द्वारा सुशिक्षित बनाये जाते हैं ॥१६॥**

**अन्वय—**अद्यापि यतो बहिः किरीटिनः रामस्य शरासनाभ्यासपदं दूरगं निचाय्य धन्विनः मदं विमुञ्चन्ति, सपत्नसन्ततेः प्रभावि शरं न ॥१७॥

**आज भी जिस अयोध्याके बाहर मुकुटधारी रामके धनुषविद्याके सीखनेके स्थानको दूरसे ही देखकर धनुषधारी लोग अहंकारको छोड़ देते हैं, शत्रुओंपर आतंक जमानेवाले बाणको नहीं चलाते हैं।**

**अन्वय—**अद्यापि यतो बहिः सपत्नसंततेः प्रभाविरामस्य किरीटिनः दूरगं शरासनाभ्यासपदं निचाय्य धन्विन मदं विमुञ्चन्ति, शरं न ॥१७॥

**आज भी जिस हस्तिनापुरीके बाहरके मैदानमें शत्रु-समूहके प्रतापके अन्तक अर्जुनके धनुषविद्या सीखनेके दूर तक विस्तृत स्थानको देखकर धनुषधारी योद्धा मदको छोड़ देते हैं। तीरको नहीं छूते हैं ॥ १७ ॥**

**जिस अयोध्या अथवा हस्तिनापुरीके बाहरके भाग पौसरा, कर्तव्य-अकर्त्तव्य विचारक धर्मसभा, व्यापारियोंके झुण्ड, नटों, साधुओंके आश्रमों और पशु-समूहसे परिपूर्ण होनेके**

1. नीयः—यस्य बहिरद्यापि अधुनापि किरीटिनोऽर्जुनस्य शरासनाभ्यासपदं दूरगमतिदूरं निचाय्य निरीक्ष्य मदमवलेपं विमुञ्चन्ति परित्यजन्ति धन्विनश्चापधराः न शरं बाणं कथम्भूतस्य प्रभाविरामस्य प्रभाया विरामो यस्मात्स तस्य कस्याः ? सपत्नसन्ततेररिकुलस्येति सम्बन्धः। श्लेषालंकारः—प०, द०।

आश्रमास्तपस्विनां मठाः व्रजाः गोकुलानि द्वन्द्वसमासापेक्षया तैस्तथोक्तैः। कथम्भूतैः जनाकुलैः (लोकसङ्कीर्णैः) का इव उत्प्रेक्षिताः। कुतश्चिद्धेतोः परदेशभङ्गतः शत्रुमण्डलनाशात् विलोलिताः कदर्थिताः प्रजाः कारुकादयः[1] यां नगरीं शरणं गता इवेति[2] ॥१८॥

**असूयया<sup></sup>ऽऽगम्य निशाम्य यां पुरो विलज्जयाम्भःपरिणामिनीं दशाम्।**
**गता इवाभान्ति कुलाद्रिपेशलाश्चरण्युलोलाः परिखाम्बुवीचयः ॥१९॥**

असूययेति—परिखाम्बुवीचयः खातिकाजलकल्लोला। आभान्ति भासन्ते। कीदृशाः कुलाद्रिपेशलाः कुलाचलसदृशाः। पुनः। चरण्युलोलाः, अनिलचञ्चलाः असूयया परगुणानामसहनमसूया ईर्ष्या तया आगम्य प्राप्य[3] निशाम्य यां नगरीं विलोक्य पुरोऽन्या नगर्यो विलज्जया त्रपया कृत्वाम्भःपरिणामिनीमम्भसोऽम्बुनः परिणामः पर्यायोऽस्यास्तीति सा तां तथोक्ताम् "जलपरिणमनशीलां दशामवस्थाङ्गता इवोत्प्रेक्षिताः" ॥१९॥

**इतस्ततोऽभ्रंलिहभृङ्गकोटयो विभान्ति यस्यां पुरि वप्रभूमयः।**
**गजेन्द्रदन्ताहतिगाढगह्वरैर्गवाक्षजालैरिव हर्म्यपङ्क्तयः ॥२०॥**

इतस्तत[6] इति—यस्यां पुरि वप्रभूमयः गिरितटावनयः परिखाभित्तयो वा अभ्रंलिहभृङ्गकोटयो गगनतलस्पर्शिशिखराग्राः विभान्ति। कैः कृत्वा? गजेन्द्रदन्ताहतिगाढगह्वरैः दन्तीन्द्रदन्तदत्तप्रहारगाढछिद्रैः। इव यथा आकाशतलस्पर्शिशिखरा[7] हर्म्यपङ्क्तयो गृहश्रेणयः गवाक्षजालैर्वातायनकदम्बकैः कृत्वेति श्लेषोपमा ॥२०॥

**समुच्छ्रिते यत्परिधौ हिरण्मये प्रहाविवागाधतले तमोरिपुः।**
**भवत्यनूचान इवोग्रचर्यया स दृष्टनष्टोऽहनि मध्यमे चरन् ॥२१॥**

समुच्छ्रित इति—हिरण्मये काञ्चनमये समुच्छ्रिते उन्नते यत्परिधौ यस्याः प्राकारे उग्रचर्यया तीव्रगत्या चरन् प्रवर्त्तमानः स तमोरिपुर्दिनकरो मध्यमेऽहनि मध्याह्ने दृष्टनष्टः पूर्वं दृष्टः पश्चान्नष्टो तिरोहितो भवति अगाधतलेऽतलस्पर्शे प्रहाविव कूपे यथा अनूचानस्तपस्वी चरन् उग्रचर्यया तीव्रव्रताचरणेन दृष्टनष्टो भवतीत्युपमा[8] ॥२१॥

**सपुष्पशय्याजगतीलतागृहाः सहेमसोपानपथा सनिर्झराः।**
**स्फुटन्तटा यत्र सुरोपसेव्यतां व्रजन्ति मेरोरिव कृत्रिमाद्रयः ॥२२॥**

---

**कारण ऐसे लगते थे मानो किसी विदेशके विनाशके कारण दुःखी जनता इस नगरकी शरणमें आ गयी है ॥१८॥**

**कुलाचलोंके समान उन्नत तथा वायुके वेगसे अत्यन्त चपल खाईकी लहरें ईर्ष्यापूर्वक नगरकी तरफ आती थीं तथा इसे सामने देखकर लज्जित होकर 'पानी पानी' हो जाती थीं ॥१९॥**

**जिस नगरमें गगनचुम्बी शिखरोंसे युक्त पर्वतोंके ढालोंकी भूमि मदोन्मत्त हाथियोंके दन्तप्रहारके द्वारा किये गये गहरे गड्ढोंके कारण ऐसी लगती थी मानो खिड़कियोंसे व्याप्त मकानोंकी श्रेणी ही हो ॥२०॥**

**सोनेसे बने तथा अत्यन्त उन्नत जिस नगरके प्राकारके ऊपरसे तीव्रगतिसे जाता हुआ अन्धकारविनाशक सूर्य मध्याह्नके समय भी थोड़ी देरतक दिखकर छिप जाता है। तो अत्यन्त गहरे कुँएके भीतर घोर तपस्यामें लीन कभी एकाध क्षणके लिए बाहर आनेवाले साधुके समान शोभित होता है ॥२१॥**

---

**१. -यः जना यां प०, द०। २. उत्प्रेक्षा प०, द०। ३. आगत्य प०, द०। ४. -लरूपप- प०, द०। ५. उत्प्रेक्षालंकारः प०, द०। ६. इतस्ततः प्रदेशेषु द०। ७. चुम्बि- प०। ८. उपमालंकारः प०, द०।**

सेति—यत्र यस्यां नगर्यां कृत्रिमाद्रयः क्रीडाचलाः सुरोपसेव्यतां मदिरानुशीलित्वं व्रजन्ति यान्ति । कथम्भूताः सन्तः ? सपुष्पशय्याजगतीलतागृहाः पुष्पशय्याः कुसुमशयनानि जगत्यो वेदिकाः लतागृहा वल्लीमन्दिराणि तैः सह वर्त्तमानाः । पुनः सहेमसोपानपथाः हेमसोपानपथैः कनकपादस्थानीयमार्गैः सह वर्त्तमानाः । पुनः सनिर्झराः निर्झरैः जलप्रस्रवणैः सह वर्त्तमानाः स्फुटं निश्चयेन इव यथा मेरोः मन्दरस्य तटाः सानवः सुरोपसेव्यतां देवाश्रयणीयतां व्रजन्ति । विशेषणानि प्राग्वत् ॥२२॥

**अनेकमन्तर्वणवारितातपं तपेऽपि यन्त्रोद्धृतवारिपूरितम् ।**
**शिखावलान्यत्र वहत्प्रणालिकं करोति धारागृहमब्दशङ्किनः ॥२३॥**

अनेकेति—यत्र यस्यां नगर्यां [1]वहत्प्रणालिकं धारागृहङ्कर्तृ तपेऽपि ग्रीष्मेऽपि अब्दशङ्किनः जलधरवितर्किणः शिखावलान् मयूरान् करोति विदधाति । कीदृशम्—अनेकं विविधप्रकारं कीदृशं पुनरन्तर्वणवारितातपं वनमध्यनिराकृतोष्मं (तोष्माणम्) पुनः [2]यन्त्रोद्धृतवारिपूरितं सुगमं भ्रान्तिमानलङ्कारः ॥२३॥

**विशालकूटाः सुखवासहेतवः समुन्नता यत्र सुधालयालयः ।**
**ज्वलन्ति जालोद्गतधूमयष्टयः पुरस्य धूमोद्गमकुण्डिका इव ॥२४॥**

विशालेति—यत्र यस्यां समुन्नताः, उच्चाः सुधालयालयः [3]चूर्णमन्दिरश्रेणयः ज्वलन्ति भान्ति । कथम्भूताः ? विशालकूटाः विस्तीर्णशिखराः जालोद्गतधूमयष्टयः वातायननिर्गतधूमसङ्घर्षः यष्टिमङ्कुर्यादि-शब्दानां प्रशंसावाचिनामभिधाने दृष्टत्वात् यष्टिप्रयोगः । पुनः सुखवासहेतवः सुखस्थितिकारणानि पुरस्य नगरस्य धूमोद्गमकुण्डिका इवोत्प्रेक्षिताः । धूमार्थमुद्गमः प्रादुर्भावो यासां ताः[4] धूमोद्गमाश्च ताः कुण्डिकाश्चेति कर्मधारयः । सुखवासहेतवः सुखपरिमलनिमित्तानि जालोद्गतधूमयष्टयः [5]गवाक्षोद्गतधूमयष्टयः[6] ॥२४॥

**सुवर्णमय्यः शुचिरत्नपीठिका हरिन्मणीनां फलकैः कृतस्थलाः ।**
**कलापिनां यत्र निवासयष्टयः स्फुरन्ति मायूरपताकिका इव ॥२५॥**

सुवर्णेति—यत्र यस्यां नगर्यां सुवर्णमय्यो हाटकाकाराः[7] कलापिनां मयूराणां निवासयष्टयो गृहवरण्डिकाः स्फुरन्ति भान्तीति । अथवा कं सुखं लपन्ति वदन्त्येवंशीलाः कलापिनो मृदुभाषिणः सत्पुरुषाः तेषां निवा-

---

जिन नगरोंमें पुष्प-शय्यासे ढकी वेदियोंसे युक्त कुञ्जोंसे परिपूर्ण, सोनेकी सीढ़ियोंसे बने मार्गसहित तथा झरनोंसे व्याप्त क्रीड़ापर्वत मदिरा-पान ( सुरा-उपसेवन )के कार्यमें आकर स्पष्ट रूपसे सुमेरुपर्वतके ढालोंकी समता करते थे क्योंकि मेरुके तटोंपर भी देवता ( सुर ) क्रीड़ा करते हैं ॥२२॥

जहांपर मध्यमें खड़े अनेक वनोंके द्वारा गर्मीको दूर किये जानेके कारण, यंत्रसे निकाले गये पानीसे प्लावित तथा बड़ी-बड़ी नालियोंसे युक्त धारागृह ( जलकल ) ग्रीष्म कालमें भी मोरोंको मेघोंका सन्देह करा देता था ॥२३॥

जिस अयोध्या अथवा हस्तिनापुरीमें आनन्दसे रहने योग्य, खूब ऊंचे ऊंचे, उन्नत शिखरोंसे सुन्दर तथा वातायनोंसे सुगन्धित धुआं निकालते हुए चूनेसे बने विशाल भवन इन नगरोंकी धुआं देनेवाली अंगीठीके समान जगमग हो रहे थे। धूमकुण्डी भी ऊंची, बड़े शिखरयुक्त ढक्कनसे ढँकी, सुखद गंधका उद्गम, सुधा स्वाहादिकी लयसे पूर्ण तथा जालीसे धुआं निकालती रहती है ॥२४॥

जहांपर सोनेसे बने, निर्दोष रत्नोंकी पीठिकापर रखे तथा हरित मणियोंसे बनी भूमियुक्त मोरोंके बैठनेके डंडे मोरध्वजके समान लहलहाते थे।

---

१. स्रवज्जलप्रवाहिकं—द० । २. यन्त्राकृष्टपयःपूर्णं—द० । ३. —र्णशुभ्रमं—द०, प० । ४. कथम्भूता विशालकूटा विशालकण्ठाः सु—द०, प० । ५. —क्षरन्धोद्गीर्ण- धू—द०, प० । ६. अत्रोत्प्रेक्षा—द०, प० । ७. कनकविकाराः—द०, प० ।

**प्रवालमुक्ताफलशङ्खशुक्तिभिर्विनीलकर्केतनवज्रगारुडैः ।**
**यदापणा भान्ति चतुःपयोधयः कुतोऽपि शुष्का इव रत्नशेषतः ॥३२॥**

प्रवालेति—प्रवालमुक्ताफलशङ्खशुक्तिभिः प्रवालानि विद्रुमाणि मुक्ताफलानि[1] शङ्खाः कम्बवः शुक्तयः मुक्तास्फोटाः द्वन्द्वसमाहारापेक्षया ताभिः विनीलकर्केतनवज्रगारुडैः विनीलाः मेचकाः[2] कर्केतना लोहितमणयः वज्राः हीरकाः गारुडाः तार्क्ष्योद्गारमणयः एतेषां द्वन्द्वः तैः तथाभूतैः ! यस्या आपणाः हट्टाः यदापणा भान्ति क इवोत्प्रेक्षिताः चतुःपयोधय इव रत्नशेषतः शुष्काः कुतोऽपि कस्मात्कारणादपि[3] ॥३२॥

**पट्यः पटक्षौमदुकूलकम्बलं मधूनि वर्माणि च रत्नकाञ्चनम् ।**
**क्रयाय कर्पूरमयांसि चक्रिणो यदापणानन्तरितं समस्त्यपि ॥३३॥**

पट्यः इति—पट्यः सीवितवस्त्रद्वयलक्षणाः पटक्षौमदुकूलकम्बलं पट्यः परिधानवस्त्राणि क्षौमाणि वस्त्रविशेषाः दूकूलानि पत्रोर्णानि कम्बला उर्णमयाः समाहारापेक्षयैकत्वम् । मधूनि क्षौद्राणि वर्माणि तनुत्राणि रत्नकाञ्चनं रत्नानि पद्मरागादीनि काञ्चनानि हिरण्यानि अत्र समाहारः । कर्पूरं घनसारं जात्यपेक्षयैकत्वम् अयांसि लौहानि चक्रिणो रथाः, इत्येवं सर्वं यदापणानन्तरितं यस्या हट्टानवच्छिन्नं समस्त्यपि क्रयाय द्रव्य-विनिमयायेति ॥३३॥

**रसेषु हेमे कुसुमेषु कुङ्कुमे घनेषु वज्रे जलजेषु मौक्तिके ।**
**समस्तपण्ये सुलभे सुदुर्लभं यदीयवेश्याजनपण्यमुज्ज्वलम् ॥३४॥**

रसेष्विति—रसेषु धातुबद्ध[4]द्रव्येषु हेमेषु[5] हेमे सुवर्णे सुलभे कुसुमेषु प्रसूनेषु कुङ्कुमे घुसृणे सुलभे सति घनेषु ( दृढेषु ) वज्रे हीरकेषु सुलभे जलजेषु वारिविकारेषु मौक्तिके शुक्तिजे सुलभे । एवं समस्तपण्ये सुलभे सति केवलं यदीयवेश्याजनपण्यमुज्ज्वलं रमणीयं सुदुर्लभमिति । अत्र[6] वाग्मनार्थोऽभिधीयते—अत्यन्तसुलभेषु हिरण्य-हीरकादिषु व्ययीक्रियमाणेष्वपि[7] खलु यन्नगरीनिवासिनां वेश्याजनैः सह भोक्तुकामानां मदनगायन्मनसां यूनां प्रचुरतया कन्दर्पमाद्यन्मनसां लावण्ययौवनमनो[8]हरत्वादिगुणवतां वेश्याजनानामल्पतयैकैक ( को ) वेश्याजनमे-(ए)कैकस्य यूनः सम्भोक्तुं न सम्पूर्यते इति कृत्वा दुर्लभं तदन्यासां वेश्यानां सुलभत्वाच्च अत्र समुच्चया-लङ्कारः ॥३४॥

---

**मूंगा, मोती, शंख, सीप, गहरे नीले कर्केतन, लाल, हीरा, गरुडमणि आदिसे भरे बाजार ऐसे सुशोभित होते हैं मानो किसी कारणसे चारों समुद्र सूख गये हैं और केवल उनके रत्न ही शेष रह गये हैं ॥३२॥**

**जिस नगरके बाजारोंमें, धोती आदि परिधान, सिले कपड़े, और ( रेशमी वस्त्र ) दुकूल, कम्बल, मधु, कवच, विविध रत्न, सोना, चाँदी, कपूर, लोहेकी वस्तुएँ भरी पड़ी थीं ॥३३॥**

**जिस नगरके बाजारोंमें धातुओंमें सोना, फूलोंमें पराग, घन पदार्थोंमें वज्र, जलोत्पन्न वस्तुओंमें मोती आदि समस्त क्रय योग्य पदार्थ सुलभ थे। यदि कोई पण्य अति दुर्लभ था तो वह था वेश्यारूपी स्पष्ट पदार्थ ॥३४॥**

---

१. -नि मौक्तिकानि शं–द०, प० । २. -काः कर्केतनालो–द०, प० । ३. अत्रोत्प्रेक्षा–द०, प० । ४. धातुद्रव्येषु–द० । ५. हेमेषु इति नास्ति–द०, प० । ६. अत्रावसानार्थो विधीयते–द० । ७. -पि व्ययं प्राप्तेषु स–प० । ८. मनोहरणीयतादि–द०, प० ।

**कृतार्थसारान् व्यवहारघोषिणो न सत्पदव्याकरणेन मानितान् ।**
**गुरूनयदीयान्विपणीन्समाश्रितास्तृषान्यदीयान् जिहतेऽन्यवस्तुनः ॥३५॥**

कृतेति—यदीयान् यस्या इमे यदीयाः तान् (गुरून् उपाध्यायान् समाश्रिताः संश्रिताः सन्तः शिष्याः अन्यदीयान्[1] गुरून्) अन्यवस्तुनः तृषा अभिलाषेण न जिहते न यान्ति । कथंभूतान् कृतार्थसारान् विहितार्थनिश्चयान् व्यवहारघोषिणः व्यवह्रियते प्रवर्त्यते वस्तुजातम् येनासौ व्यवहारो लौकिकाचारस्तं घुष्यन्ति वदन्तीत्येवंशीलास्ते तथोक्तास्तान् पुनः मानितान् सत्कृतान् । केन कृत्वा ? सत्पदव्याकरणेन सन्ति पूर्वापरप्रमाणबाधादूरीकृतानि पदानि येषां तानि तर्कसिद्धान्तकाव्यादीनि शास्त्राणि व्याक्रियन्ते व्याह्रियन्ते शब्दा येन तद्व्याकरणं[2] च तथोक्तम् । अत्र समाहारः तेन चकारः समुच्चयार्थः । तेनायमर्थो लभ्यते—

न केवलं गुरून्; विपणींश्च संश्रिताः सन्तः ग्राहका अन्यदीयान् (विपणीन्) अन्यवस्तुनः तृषा वाञ्छया न जिहते । कथम्भूतान् ? कृतार्थसारान् कृतद्रव्यसारकान् व्यवहारघोषिणः क्रयविक्रयभाषिणः पुनः कथम्भूतान् ? मानितान् अधिष्ठितान् कया सत्पदव्या समीचीनमार्गेण करणेन च द्रव्याध्यक्ष-धर्माधर्मविचारस्थानेनेति[3] ॥३५॥

**परं वचित्वा पुरि देवदारु तत्र दारु यस्यामुपयाति विक्रयम् ।**
**गृहाणि तार्णानि भवन्ति पक्षिणां कुरंगजातिर्न [नटेषु] सद्मसु ॥३६॥**

परमिति—पुरि यस्यां नगर्यां परं केवलं देवदारु सरलद्रुमकाष्ठं वचित्वा विहाय तत्प्रसिद्धं दारु खदिरादिविक्रयं[4] नोपयाति । तार्णानि तृणविकारास्तार्णानि गृहाणि मन्दिराणि पक्षिणां चटकादीनां[5] भवन्ति न जनानां, कुरङ्गजातिः कुत्सितनृत्यस्थानजातिर्न नटेषु नर्त्तकेषु विद्यते अपि तु सद्मसु गृहेषु कुरङ्गजातिः क्रीडामृगविशेषः । परिसंख्यालङ्कारः ॥३६॥

**भटा जुहूराणरथद्विपं नृपाः श्रयन्ति घातं चतुरङ्गपद्धतौ ।**
**परांशुकाक्षेपणमङ्गनारतौ विधौ कलङ्कोऽप्यहिषु द्विजिह्वता ॥३७॥**

भटा इति—यस्यां नगर्यां चतुरङ्गपद्धतौ द्यूतविशेषे केवलं भटा वीराः जुहूराणरथद्विपं जुहूराणा वाजिनः[6] रथाः लोहबद्धाः शकटाः द्विपा दन्तिनः [7]समाहारापेक्षयैकवचनम् । नृपा नरेन्द्राश्च घातं वधं श्रयन्ति भजन्ते । अङ्गनारतौ तरुणीसम्भोगे परांशुकाक्षेपणं परेभ्यः सम्भोगचतुरेभ्यो रमणेभ्योंशुकस्य वस्त्रस्याक्षेपणमाकर्षणं न तु

---

जिस पुरके सारभूत अर्थके शिक्षक, लोकाचारके स्पष्ट उपदेशक तथा पूर्वापर विरोध रहित व्याकरण काव्य न्याय आदिके ज्ञानके लिए मान्य गुरुओंके सहवासमें आनेके बाद शिष्य लोग किसी ज्ञानकी अभिलाषासे दूसरे नगरोंके अध्यापकोंके पास नहीं जाते हैं ।

जिस नगरके सारभूत वस्तुओंके संग्राहक, व्यापारकी भाषामें निपुण, शिष्ट मार्गके अनुगमन तथा आचरणके कारण राजमें प्रतिष्ठित व्यापारियोंके पास जाकर ग्राहक किसी वस्तुके क्रयकी इच्छासे दूसरे नगरको नहीं जाते हैं ॥३५॥

जिस नगरमें केवल देवदारुकी लकड़ीको छोड़कर कोई दूसरी पलाश आदिकी लकड़ी नहीं बिकती थी । घासके घोंसले केवल पक्षियोंके होते थे (मनुष्यों के झोंपड़े नहीं होते थे) नटोंमें ही केवल दूषित रुचि होती थी अथवा मकानोंमें पालतू हिरण होते थे । मनुष्योंमें दूषित रुचिका आविर्भाव नहीं होता था ॥३६॥

जहांपर केवल चतुरंग युद्धके अवसरपर ही राजा लोग पदाति, योद्धा, अश्व, रथी तथा हस्तीका वध करते थे । अथवा शतरंजके खेलमें ही घोड़े, हाथी, रथ आदिका सहारा लिया जाता था तथा राजा ही प्राण-वधका दण्ड देते थे । स्त्रियोंसे रमणके समय ही

---

१. अन्यासां नगरीणामिमे अन्यदीयास्तान् द०, प० । २. -णं शब्दशास्त्रं सत्पदानि च व्याकरणं च–द० । ३. -ति श्लेषालंकारः–द०, प० । ४. -यं परावर्तं नो–द०, प० । ५. -नां विहङ्गमानां द०, प० । ६. तुरङ्गमाः–द०,प० । ७. समाहारपक्षोऽत्र तत्र नु–द० ।

तस्करादिभ्यः, विधौ चन्द्रे कलङ्कोऽपि लाञ्छनमपि अहिषु द्विजिह्वेषु सर्पेषु द्विजिह्वता द्विरसनता अस्ति नान्यत्र नान्येषु जनेषु इति[1] ॥३७॥

**जडेषु बाह्येष्वपि जीवलोकतो दृशामपथ्येषु पदानतेष्वपि ।**

**हतावकुर्वत्सु जनस्य वेदनां नखच्छिदां यत्र न यन्ति[2] जन्तवः ॥३८॥**

जडेष्विति–यत्र यस्यां नगर्यां जडेषु अचेतनेषु कीदृशेषु जीवलोकतो बाह्येषु जीवावष्टब्धशरीरभागाद्बहिर्भूतेषु दृशां लोचनानामपथ्येषु आन्ध्यकारिषु पुनः पदानतेष्वपि चरणनतेष्वपि हतावपि ताडनायामपि सत्यां जनस्य लोकस्य वेदनां कदर्थनामकुर्वत्सु अविदधत्सु इत्थम्भूतेषु अङ्गुल्यवयवविशेषेषु सत्सु नखाः कररुहा[3] एव छिदां खण्डनां यन्ति यान्ति । न तु जन्तवः । भवाम्भोधौ स्वस्वकर्मणा प्रेरिता जायन्ते प्रादुर्भवन्तीति जन्तवः । प्राणिनः केषु सत्सु जीवलोकतः बाह्येषु ब्राह्मणक्षत्रियवैश्यादिभ्यो बहिष्कृतेषु चाण्डालादिषु कथम्भूतेषु ? जडेष्वज्ञेषु दृशामपथ्येषु सम्यग्दर्शनादीनां विरोधिषु हतावपि ताडनायां सत्यामपि पदानतेषु पदलग्नेषु जनस्य वेदनां पीडामकुर्वत्सु सत्स्विति[5] शेषः ॥३८॥

**अनन्यसाधारणरूपकान्तिषु स्मरोऽन्धकारातिविघातहेतुषु ।**

**धनुः समारोप्य गृहीतरोपणः पुरि भ्रमन् यत्र करोत्युपप्लवम् ॥३९॥**

अनन्येति–पुरि यत्र नगर्यां स्मरो मारो भ्रमन् पर्यटन् करोति विदधाति । कम् ? उपप्लवमुपद्रवं कथम्भूतः ? गृहीतरोपणः अङ्गीकृतबाणः । किं कृत्वा ? समारोप्य अधिज्यं–कृत्वा किम् ? धनुश्चापम् । केषु सत्सु ? अन्धकारातिविघातहेतुषु सत्सु । अन्धकारः अनुत्साहादिलक्षणः तस्यातिशयेन विघातो विध्वंसः तस्य हेतवः कारणानि चन्द्रादयस्तेषु सत्सु कथम्भूतेषु ? अनन्यसाधारणरूपकान्तिषु न विद्यन्ते अन्येषु साधारणरूपकान्तिगुणा[6] येषां ते तथोक्तास्तेषु तथाहि "अनन्यसम्भवकान्तिगुणश्चन्द्रे[7] अनन्यसम्भवोऽसाधारणगुणो मदिरासु तेभ्यः कामोद्दीपनम् । उक्तञ्च–

**"आस्तां परेषां नरकीटकानां तपःस्थितानामपि ही मुनीनाम् ।**
**चन्द्रासवाभ्यां रमणीजनेभ्यः प्रोद्दीपनं केशवनन्दनस्य ॥१॥"**

अथवा–अनन्यसाधारण(णाः) रूपकान्ति(न्तयो) गुणा यासां तासु कामिनीषु विषये कथम्भूतासु अन्धकारातिविघातहेतुषु अन्धकस्य अरातिः, ईश्वरः तस्य विघातस्तपश्चरणादेश्च्यवनं तस्य हेतव इति मतं काव्यटीकाकर्तुरिति सम्बन्धः ॥३९॥

---

**दूसरेके वस्त्रका अपहरण होता था (चोर आदि वस्त्रामोचन नहीं करते थे)। चन्द्रमामें ही कलंक था ( चरित्र निर्मल था ) तथा सांपोंके ही दो जीभें थी (लोगोंमें पैशुन्य या असत्य नहीं था) ॥३७॥**

**जहां जीवसे व्याप्त शरीरके बाहर बढ़े अतएव अचेतन, आंखोंको अप्रिय, पैरोंमें पड़े, निन्द्य तथा मनुष्यके अपघात तथा वेदनाको करनेवाले केवल नख ही काटे जाते हैं। किन्तु सम्यक् दर्शनसे विमुख, दासवृत्तिको प्राप्त, सब प्रकार दण्डनीय, लोकोंके कष्टदाता ब्राह्मण वैश्य क्षत्रियोंसे पृथक् मूर्ख लोगोंका भी वध नहीं किया जाता है ॥३८॥**

**जिस पुरीमें लोकोत्तर रूप और कान्तिसे युक्त अन्धकारके सर्वथा विनाशके कारण चन्द्रमाका उदय होनेपर बाणहस्त कामदेव धनुषको चढ़ाकर घूमता हुआ उपद्रव करता है।**

**अन्वय–"अन्धक-अराति विघातहेतुषु······"**

**संसारमें अन्यत्र दुर्लभ रमणीयता तथा तेजके भण्डार अन्धक दैत्यके शत्रु महादेव जीकी तपस्याके छेदका कारण कामदेव धनुषपर बाण चढ़ाकर घूमता हुआ कामोपद्रव करता है ॥३९॥**

---

१. परिसंख्यालंकारः -द०,प० । २. यान्ति -द० । ३. चरणरुहा -द०, प० । ४. वैश्यमार्गादि –द० । ५. -ति परिसंख्यालंकारः -द०, प० । ६. कान्तयो गु–द० । ७. सम्भवि–द० । ८. -न्द्रे अनन्य सम्भवि रूपं कामिनीषु अ–द० ।

**धनुर्गुणग्राहिषु नम्रवृत्तिषु प्रशुद्धवंशेषु परस्य पीडकम् ।**
**ऋजुप्रकारेषु कृतायतिष्वसौ भिनत्ति यस्यां हृदयानि मार्गणः ॥४०॥**

धनुरिति—यस्यां नगर्यां गुणग्राहिषु गुणो मौर्वी[1] तं गृह्णन्तीत्येवंशीलाः तेषु नम्रवृत्तिषु नम्रा नमनशीला वृत्तिर्येषां तेषु प्रशुद्धवंशेषु प्रशुद्धो गुणै रञ्जितो[2] वंशो वेणुर्येषां तेषु पदार्थेषु मध्ये धनुरेव पीडकं कस्य ? परस्यान्यस्य हृदयानि भिनत्ति । पक्षे—गुणग्राहिषु गुणः शास्त्रचातुरीलक्षणः तस्य ग्राहिषु[3] नमनस्वभावेषु[4] (प्र) शुद्धवंशेषु [5]शुद्धान्वयेषु जनेषु मध्ये इति शेषः । ऋजुप्रकारेषु सरलवृत्तिषु कृतायतिषु विहितदैर्घ्येषु पदार्थेषु मध्ये[6] भिनत्ति असौ मार्गणो वाण एव परं नान्यो जनः प्राञ्जलवृत्तिषु कृतोत्तरकालेषु इत्थंभूतेषु मध्य इति सम्बन्धः ॥४०॥

**विलोलनेत्रेषु कुशाग्रवृत्तिषु प्रगीतरक्तेषु मृगेषु चापलम् ।**
**न यत्र तीक्ष्णाः परदारवृत्तयः परे कृपाणात्कलहप्रवेशिनः ॥४१॥**

विलोलेति—यत्र यस्यां नगर्यां विलोलनेत्रेषु चञ्चललोचनेषु कुशाग्रवृत्तिषु[7] दर्भाग्रप्रतिषु[8] प्रगीतरक्तेषु प्रगीतं नामोत्कटगानं(तत्र)सक्तेषु मृगेषु हरिणेषु चापलं चञ्चलत्वं नेतरेषु जनेषु कथम्भूतेषु सत्सु चपलनयनेषु कुशाग्रबुद्धिषु तीक्ष्णधिषणेषु प्रगीतरक्तेषु (प्रकृष्ट) गीततत्परेषु तीक्ष्णास्तीव्राः परदारवृत्तयः परेषां दारो विदारणं तस्मिन् वृत्तिर्येषां ते । कलहप्रवेशिनः कलहं शोकं[10] प्रविशन्तीत्येवंशीला इत्थंभूताः कृपाणात्परेऽन्ये जनाः न सन्ति जना अपि कथम्भूताः तीक्ष्णहिंस्राः तथा परदारवृत्तयः परदारेषु वृत्तिर्येषां ते अन्यस्त्रीसंगसक्ताः तथा कलहप्रवेशिनः[11] कलहप्रिया[12] इति ॥४१॥

**प्रकोपनिर्मीलितरक्तलोचनं तलप्रहाराहतकीर्णशेखरम् ।**
**रतेषु दष्टाधरमाहृतांशुकं परं न यस्यां कदनं कचाकचि ॥४२॥**

प्रकोपेति—यत्र यस्यां नगर्यां प्रकोपेन निर्मीलितानि विस्फुरितानि रक्तलोचनानि लोहितनेत्राणि[13] यत्र तत् । तलप्रहारेण पूर्वमाहताः पश्चात्कीर्णाः शेखराः केशबन्धनानि यत्र तत् । दष्टा [14]अधरा यत्र तत् । [15]आहृतानि अंशुकानि[16] यत्र ( तत् ) [17]कचैः कचैः प्रवृत्तं युद्धं कचाकचि इत्थम्भूतं कदनं ( युद्धं ) रतेषु परं केवलं वर्त्तते नान्यत्रेति ॥४२॥

---

प्रत्यञ्चा युक्त, पर्याप्त नमनशील तथा उत्तम बांससे बना धनुष ही दूसरोंको पीड़ा देता था [गुणोंको सीखनेमें चतुर, विनम्र प्रकृति तथा शुद्ध उत्तम कुलमें उत्पन्न कोई भी व्यक्ति दूसरेको कष्ट नहीं देता था] । सरल वृत्ति तथा भविष्यमें होनहार पुरुषोंमें [अत्यन्त सीधा तथा तीक्ष्ण और खूब लम्बा] वाण ही दूसरोंके हृदयोंको भेदता था ॥४०॥

जहां चञ्चल नेत्र, कुशकी कोंपल खाकर जीवित तथा गानेपर मूर्च्छित हिरणोंमें ही चपलता थी [कटाक्षमय नेत्रधारी अत्यन्त तीक्ष्णबुद्धि तथा संगीतादिके प्रेमी मनुष्योंका चरित्र अस्थिर नहीं था]। दूसरोंको काटना, संघर्षमें पड़नेकी प्रकृति तथा तीखापन तलवारके सिवा [परस्त्री सेवन, झगड़ा करना तथा उग्रता] किसी भी मनुष्यमें नहीं थी ॥४१॥

जिस हस्तिनापुरीमें अत्यन्त उद्दीप्त रागसे निमीलित और लाल नेत्र, अञ्जलिसे खींच कर बिखेरी गयी जूटकी माला, ओष्ठ दंशन तथा परस्परका वस्त्र तथा केश खींचना केवल सुरत लीलामें होता था [क्रोधसे अन्ध तथा रक्त नेत्र, ताल ठोककर वार करना और मुकुट

---

१. प्रत्यञ्चा–द०, प० । २. रचितः -द०, -रञ्जितः–प० । ३. -स्य ग्राहोऽङ्गीकारोऽस्ति येषां तेषु न -द०,प० । ४. -षु नम्रा मार्दवा वृत्तिः प्रवर्तनं येषां तेषु न–द०,प० । ५. -षु प्रशुद्धं वंशमन्वयो येषां तेषु ज –द०, प० । ६. दृष्टो हृदयानि स्वान्तानि भि–द०, प० । ७. बुद्धिषु–द०, प० । ८. बुद्धिषु –द०, प० । ९. मतिषु–द०, प० । १०. कोशं–द०, प० । ११. -नः कटकप्रवेशिनः क –द० । १२. कलिप्रियाः–द०, प० । १३. नयनानि प० । १४. -रा दन्तच्छदा य–द०, प० । १५. -नि अपाकृतानि अं–द० । १६. -नि वसनानि य–द०, -प० । १७. कचेषु कचेषु गृहीत्वा प्रवृत्तमिति विग्रहो न्याय्यः ।

**जघन्यवृत्तिं पुरि यत्र काञ्चयः स्पृशन्ति कर्णेजपतां च कर्णिकाः ।**
**परस्य वा कण्ठकचग्रहोत्सवं व्रजन्ति मुक्तावलयो न योषितः ॥४३॥**

जघन्येति—यत्र यस्यां नगर्यां जघन्यवृत्तिं काञ्चयः कटिसूत्राणि स्पृशन्ति[1] नान्ये जनाः अधमवृत्तिं, कर्णिकाः [2]कर्णभूषणानि [3]कर्णेजपतां कर्णसामीप्यं (समाश्रयन्ति) नान्ये जनाः पैशुन्यम् । च समुच्चयार्थः । परस्य चान्यस्य कण्ठकचग्रहोत्सवं ग्रीवाकेशग्रहणं[4] मुक्तावल्यो ( मौक्तिकहाराः ) व्रजन्ति (यान्ति) न योषितो रमण्य इति । ॥४३॥

**मदच्युता नीरदनादबृंहिता भवन्ति यस्यामवदानवृत्तयः ।**
**अनुत्कटा नित्यविहस्तसंश्रया महारथा न द्विरदाः कदाचन ॥४४॥**

मदेति—यस्यां नगर्यां महारथा भवन्ति जायन्ते । कीदृशाः [5]मदच्युताः जात्यादिगर्वरहिताः न तु द्विरदा निर्मदाः अहर्निशं मूत्रक्षरणलक्षणमदोज्झिता न सन्ति नीरदनादबृंहिताः मेघनादगर्जिताः[6] महारथाः सन्ति न पुनः द्विरदाः[7] दन्तनादबृंहितेभ्यो निष्क्रान्ताः अवदानं त्यागशौर्याभ्यां प्रसिद्धिः तस्मिन् वृत्तिर्वर्त्तनं येषां ते महारथाः सन्ति द्विरदास्तु न । द्विरदपक्षे दानवृत्तिः कटोद्भेदानान्तरीया अवगता दानवृत्तिर्येषां ते महारथाः अनुत्कटा अतीव्राः द्विरदास्तु तद्भिन्नाः कटा येषां ते उत्कटा न उत्कटा अनुत्कटा न तथाभूताः महारथास्तु नित्यं विहस्तानां निराश्रयाणां संश्रया आश्रयणीयाः द्विरदास्तु अनवरतविशिष्टकरसमाश्रयाः[8] ॥४४॥

**च्युताधिकारा इव चिन्तयाकुला विनोदविन्दोः श्रमगा मृगा इव ।**
**भुवं लिखन्तः कनकातुरा इव श्रयन्ति यस्यां कवयः परां व्यथाम् ॥४५॥**

गिरा देना, आवेशमें ओंठ चबाना, कपड़े फाड़ देना तथा बाल पकड़ कर दे मारना, आदि क्रियाओंसे युक्त लड़ाई नहीं होती थी] ॥४२॥

जिस राजधानीमें करधनी ही जंघाओंके निकट रहती है [किसी स्त्रीका जघन्य (हीन) आचरण नहीं है], केवल कानके भूषण ही कानमें कुछ कहतेसे लगते हैं [कोई नागरिका चुगली नहीं खाती है], केवल मुक्ताहार ही दूसरेके गले या बालोंमें लटकते हैं [कोई कुल-वधू परपुरुषके आलिंगनको नहीं करती हैं] ॥४३॥

जिन पुरियोंके महारथी योद्धा ही आठ प्रकारके मदोंसे परे थे, मेघकी गर्जनाके समान गम्भीर ध्वनियुक्त थे, त्याग और पराक्रम ही जिनका स्वभाव था, अत्यन्त शान्त थे तथा निराश्रय लोगोंको शरण देते थे । किन्तु वहांके हाथी कदापि मद जल हीन दन्तकेलि एवं चीत्कार विमुख, गण्डस्थल भेद रहित अर्थात् विनम्र तथा सदैव सूंड़को स्थिर रखने-वाले नहीं थे ॥४४॥

---

१. -न्ति समाश्रयन्ति—द०, प० । २. ताटङ्कभूषणानि प०, द० । ३. कर्णे जपतीति कर्णेजपस्तस्य भावः कर्णेजपता तां—द०, प० । ४. शिरोरुहादानोत्सवम्—द०, प० । ५. -ता मदा जातिकुलैश्वर्य-रूपनिधानज्ञानतपःशिल्पलक्षणाः तेभ्यश्च्युताः जा—द०, प० । ६. वर्धिताः—द०, प० । ७. -दाः रदा दन्ता नादा ध्वनयो बृंहितानि चीत्कृतानि च तेभ्यो निष्क्रा—प०, द० । ८. -श्रयाः ।

जले जने नक्रमहानियोजनं धनुर्भृतां ज्यानिहतिर्न सम्पदाम् ।
रणे यतौ चापगुणेन संग्रहो विशालतां यत्र न सा विशालता ॥४५॥

जल इति—जले वारिणि नक्रमहानियोजनं जलचरव्यापारः । जनेन वृद्धपरिपाटीहानिसंयोगः । वर्णाश्रमधर्मव्यतिक्रमो न खल्वस्तीत्यर्थः । धनुर्भृतां धनुर्धराणां ज्यानिहतिः ज्याया निहतिः ज्या-निहतिः प्रत्यञ्चाविस्फारः ज्याहानौ । ज्यानं ज्यानिः अत्र औणादिकः प्रत्ययः । ज्यानेर्हानिर्हतिर्विघातो ज्यानिहतिः हानेर्हतिरित्यर्थः । न सम्पदाम् विभूतीनाम् । रणे संग्रामे चापगुणेन संग्रहः शरासनजीवा-स्वीकारः । अपगुणे निर्गुणे यतौ मुनौ च नास्त्यङ्गीकारः यत्र यस्यां नगर्यां सा विशालता विस्तीर्णता नास्ति विशालता विगतप्राकारता, प्राकारान्विततया दीर्घत्वमस्तीति भावः ॥४५॥

च्युतेति—यस्यां नगर्यां पराम् अनिर्वचनीयां व्यथां मानसिकं दुःखं कवयः कवयितारः[1] श्रयन्ति भजन्ति नान्ये जनाः कथम्भूताः सन्तः च्युताधिकारा इव चिन्तयाकुलाः गतनियोगा इव चिन्तनेन व्यग्राः विनोदविन्दोः श्रमगाः श्रमं [2]गच्छन्तीति श्रमगाः किमर्थं विनोदविन्दोः कुतूहललवाय अत्र षष्ठी निमित्तार्थे क इव मृगा इव हरिणा यथा श्रमगाः विनोदबिन्दोः उदकस्य बिन्दुः उदबिन्दुः जललवः तस्मात् उदबिन्दोर्विना कीदृशा पुनः भुवं भूमिं लिखन्तो विदारयन्तः कनकातुरा[3] इव यथेत्यत्रोपमा ॥४५॥

**रथाङ्गनामा विरही क्षपाकरः स पक्षहीनो मुखरश्च कोकिलः ।**
**कृतोर्ध्वनाशः करभो नखक्षतं क्षतं न यस्यामपरं कुतश्चन ॥४६॥**

रथाङ्गेति—यस्यां नगर्यामत्र चकारग्रहणेन नियमार्थो गम्यते। तेनायमर्थः रथाङ्गनामा चक्रवाक एव विरही वियोगी न कोऽप्यन्यः एवं सर्वत्र नियम्यते स क्षपाकरः चन्द्रः एव पक्षहीनः पक्षशून्यः नान्यः पक्षहीनः सन्ततिवर्जितः । कोकिलः ( परपुष्ट ) एव मुखरो वाचालो नान्यः । करभः उष्ट्र एव कृतोर्ध्वनाशः विहितोर्ध्वप्राण[4]नाशः नान्यः । नखक्षतम् एव क्षतं कररुहविदारणं[5] नान्यत्र कुतश्चनेति परिसंख्यालङ्कारः ॥४६॥

**कुकाव्यबन्धे यतिवृत्तभङ्गयोः स्थितिः समासादिषु लोपविग्रहम् ।**
**सरस्सु रोधः पुरि यत्र पत्रिषु प्रयुज्यते पक्षतिरक्षरे लयः ॥४७॥**

---

पथभ्रष्ट व्यक्तिके समान चिन्ता ( कल्पना ) में लीन, हिरणके सदृश पानीकी बूंदहीन मृगमरीचिका ( आंशिक चमत्कारके लिए ) के पीछे समस्त कष्ट उठानेवाले, सोनेको खोजने वालोंके समान पृथ्वीको खोदते ( पृथ्वीपर यों ही कुछ लिखते ) केवल कवि लोग ही जिस नगरीमें अनिर्वचनीय ( लोकोत्तर ) पीड़ा ( मानसिक अनुभूति )को प्राप्त होते हैं ॥४५॥

जिस नगरमें चक्रवाक पक्षी ही विरही था, कोई नायिका विरहिणी न थी। निशाकर चन्द्रमा ही एक पक्षमें घटता था कोई दूसरा मित्रपक्षरहित न था। केवल कोयल ही खूब बोलता था कोई नागरिक वाचाल न था, केवल ऊंटकी ही नाक ऊपरको थी। किसीकी उन्नतिका विनाश न था तथा सुरतमें नखक्षत ही प्रहार थे और किसी प्रकारका शारीरिक दण्ड न था ॥४६॥

---

अनिष्टयोगः प्रियविप्रयोगता प्रजाविलोपः पुररोधनं परैः ।
विलापितान्यायरवः पराभवः कथागमेष्वेव न यत्र जातुचित् ॥४६॥

अनिष्टेति । यत्र पुर्यां न जातुचित् कदाचिदेवैते प्रकाराः न सन्ति कथागमेष्वेव श्रूयमाणत्वात्तेषाम् । तथा हि अनिष्टयोगः अनिष्टं दुःखम् दुःखकारणं च । तस्य योगः सम्बन्धः । तद्योगः । प्रियविप्रयोगता प्रियं सुखं सुखकरणं च । तस्य विप्रयोगता विप्रलम्भः स तथोक्तः । प्रजाविलोपः प्रजानाम् विलोपः अष्टादश प्रकृतीनां उच्छेदः सः तथोक्तः प्रजाविलोपः । परैः शत्रुभिः पुररोधनं नगरवेष्टनम् विलापिताः गुणग्रहणमिश्ररोदनम् । अन्यायरवः अनीतिशब्दः पराभवः अभिभव इति कोषः ॥४६॥ च्युता -प०, द० ।

जिस नगरमें विशाल जलचर-प्राणियोंकी स्थिति पानीमें ही थी लोगोंके द्वारा [पूर्व परिपाटीका उल्लंघन नहीं होता था], धनुषधारी योद्धा ही प्रत्यञ्चाको फटकारते थे, वृद्धावस्थामें लोगोंकी सम्पत्ति नहीं घटती थी, धनुष और प्रत्यञ्चाको युद्धमें ही लोग उठाते थे अवगुणी साधुको नहीं मानते थे और अत्यन्त विस्तृत होकर भी वह नगरी परकोटा रहित न थी ॥४५॥

जहांपर अप्रिय वस्तुओंका समागम, तथा प्रिय वस्तुओंका वियोग, जनता अथवा सन्तानका अपहरण, शत्रुओंके द्वारा नगरका घेरा, इष्ट वियोगमें रुदन, अन्यायका समर्थन तथा तिरस्कार पुराणोंके प्रवचनमें ही सुन पड़ते थे। साक्षात् कभी नहीं होते थे ॥४६॥

१. कवितारः -प० । २. च्छन्ति यान्ति -प०,द० । ३. राः सुवर्णाकुला इव-द० । ४. र्ध्वप्राणः नान्यः -द० । ५. -णं नापरम् ना–द० ।

कुकाव्येति—यत्र पुरि नगर्यां कुकाव्यबन्धे कुत्सितकाव्ये यतिर्विच्छेदसंज्ञिका वृत्तं नाम एकाक्षरमारभ्य एकपञ्चविंशति यावदभिधीयते यतिश्च वृत्तं च ते तयोक्ते तयोः ( भङ्गौ[१], तयोः यतिवृत्तभङ्गयोः ) स्थितिरवस्थानं नान्ययोः[२], यतिर्लिङ्गी तस्य यत् वृत्तं ब्रह्मचर्यरूपं तस्य भङ्गस्वभावयोः[३] स्थितिः समासादिषु व्याकरणसम्बन्धित्वेन विद्वज्जनप्रसिद्धेषु लोपविग्रहं विभक्त्यादेः उच्छेदस्वभावो लोपः विग्रहः पदसङ्कलनं समाहारापेक्षयैकत्वं नान्यत्र लोपः शासनप्रोञ्छनलक्षणो विग्रहो नरेन्द्रयोर्वैरं नान्यत्र। सरस्सु सरोवरेषु रोधस्तटं नान्यः कश्चिदावरणलक्षणो रोधः पत्रिषु विहङ्गमेषु पक्षतिः[४] पक्षमूलं नान्यत्र। अपक्षतिः अवाप्योरलोपः[५]। अक्षरे वर्णे लयः ( श्लेषः ) नान्यत्र जने ॥४७॥

**असत्यसन्धाः परलोकवञ्चकाः कृतोपचाराः कृतकेन कर्मणा।**
**मुहूर्त्तरक्तास्तरला बहुच्छलाः परे न यस्यां पुरि पण्यदारतः ॥४८॥**

असत्येति—यस्यां पुरि ( नगर्यां ) पण्यदारतो वेश्याजनेभ्यः परेऽन्ये जनाः नेत्थंभूताः। असत्ये (अनृते) सन्धाः प्रतिज्ञा येषां ते परलोकोऽन्यो रागी जनः पारत्रिको वातस्य वञ्चकाः प्रतारकाः कृतोपचाराः विहितपरिचर्याः (केन) कृतकेन कृत्रिमेण कर्मणा (कुटिलवृत्तिगर्भपरया क्रियया मुहूर्तरक्ताः क्षणमासक्ताः तरलाश्चञ्चलाः बहुच्छलाः प्रचुरमिषा इति शेषः। परिसङ्ख्याऽलङ्कारः) ॥४८॥

**गतारिपुत्रा सगुणा यशोऽधिका समानवापीवरनिम्ननाभिका।**
**कथं कुलस्त्रीव सती सदानवा पुरी किल स्यादिति यत्र विस्मयः ॥४९॥**

गतेति—इति वक्ष्यमाणापेक्षया यत्र यस्यां नगर्यां विस्मयो वर्त्तते किल लोकोक्तावरुचौ वा गता नष्टो कुलस्त्री कुलवधूरिव कथं स्याद्भवेत् पुरी नगरी अपितु न, कथम्भूता सती कुलवधूः अरिपुत्रासगुणा अरिपुभ्या बन्धुभ्यः त्रासो भयमेव गुणो यस्याः सा सदा सर्वदा अयशोऽधिका निन्दाबहुला 'असमानवा न जातिकुलाभ्यां समानस्तुल्यो वो वल्लभो यस्याः सा पीवरनिम्ननाभिका पीवरा घना निम्ना गम्भीरा नाभिस्तुन्दिर्यस्याः सा तथोक्ता सदा सर्वदा नवा प्राप्तयौवनभरेति वाथवा सदा सर्वदा कुलस्त्रीव कथन्न स्यादपि तु भवेदेव कथम्भूता

---

जिस नगरमें कुकवियोंकी रचनाओंमें ही विराम तथा छन्दके भंग होते थे साधुओं (यति) तथा सदाचार (वृत्त)के पतित होनेका अवसर नहीं आता था। व्याकरणके समासोंमें ही विभक्ति आदिका लोप तथा अर्थ सूचक पदोंपर व्याख्यान होता था जनतामें अपहरण (लोप) तथा झगड़ा (विग्रह) न थे, तालाबोंके ही बांध होते थे नागरिकोंको कारावास (लोप) नहीं होता था, पक्षियोंमें ही पंखोंका प्रयोग था जनताकी अकारण हानि-(पक्षतिः) नहीं होती थी और गतिके वर्णोंमें ही लय थी, जनताका विनाश नहीं था ॥४७॥

वेश्याओंके अतिरिक्त इस पुरीमें कोई दूसरा ऐसा न था जिसकी प्रतिज्ञा झूंठी हुई हो, दूसरोंको ठगा हो, बनावटी कापटिक रूपसे सेवा-सत्कार किया हो, केवल क्षण भर ही प्रीति निभाती हो, चपलताका प्रदर्शन किया हो अथवा खूब वञ्चना की हो ॥४८॥

अन्वय—गता रिपुत्रासगुणा, अयशोऽधिका, असमा, नवा, पीवरनिम्ननाभिका सदानवा इयं नगरी सती कुलस्त्रीव कथं स्यादिति विस्मयः।

ह्रासोन्मुख, शत्रुओंके भयसे व्याप्त, अधिकतम कुख्यात, विसंस्थुल, कल ही बसी, किनारोंपर ऊंची तथा विशाल और मध्यमें नीची दानवोंसे व्याप्त यह नगरी, शत्रुवत् पुत्रोंको त्रिकालमें भी न जननेवाली, शीलादि गुणोंसे विभूषित, विशाल कीर्तिकी स्वामिनी, समान और शुद्ध मातृपितृ कुलवती, सर्वाङ्ग शोभा विभूषित गहरी नाभिवती पतिव्रता अतएव सदा दर्शनीय कुलवधूके समान कैसे होगी यही आश्चर्य है? परिहार—

---

१. तयोर्भङ्गः यतिभङ्गो वृत्तभङ्गश्च तस्य स्थितिरिति युक्तः। २. नान्यत्रेति युक्तं प्रतिभाति। ३. भङ्गस्य स्थितिरित्येव वक्तव्यम्। तत्र यतिवृत्तभङ्गो नास्तीत्यर्थः। ४. अपगता क्षतिः -द०, प०। ५. अत्रापिशब्दाभावादकारलोपश्चिन्त्यः। ६. न समानो मानवो वल्लभो यस्याः सा–द०।

सती पतिव्रता पुनः गतारिपुत्रा गता विनष्टा अरिवत् पुत्रा यस्याः सा यस्या अरिवत् पुत्रा नोत्पन्ना पुनः सगुणा सशीलौदार्यादिका पुनः यशोधिका कीर्तिबहुला पुनः समाऽव्यभिचारिणी पितृमातृकुलेन तुल्या अथवा मया लक्ष्म्या सह वर्त्तमाना समा पीवरनिम्ननाभिका अपि समन्तात् ईः लक्ष्मी, शोभा तया वरा मनोज्ञा निम्ना नाभिर्यस्याः सा अपि शब्दस्याकारस्यापादरादिना लोपोऽत्रेति सम्बन्धः। (पुरी) नगरी कथम्भूता गतारिपुत्रा-सगुणा गता नष्टा आ समन्तात् रिपवः त्रासगुणेन यस्याः सा यशोऽधिका सर्वदिक्प्रसिद्धा पुनः समानवापी वरनिम्ननाभिकाः स्वच्छगम्भीरमध्यजला यस्यां सा पुनः–वरं निर्मलं निम्नम् अतलस्पर्शि नाभौ मध्ये कं जलं यासां तास्तथोक्ताः समानाः समचतुरस्रा वाप्यो दीर्घिका वरनिम्ननाभिका कीदृक् सदानवा दानवैः दैत्यैः सह वर्त्तमाना दानवैः कृतोपद्रवत्वात् तत्रत्यानां जनानां सती समीचीना सुखहेतुः कथं स्यादिति विरुद्धं नैवं सदा सर्वकाले नवा नूतना पश्यतामनव[1]रतमपूर्वेवाऽऽभातीति भावः। अत्र श्लेषोपमा विरोधश्च ॥४९॥

**को वा कविः पुरमिमां परमार्थवृत्त्या शक्नोति वर्णयितुमत्र विनिर्णयेन।**
**नित्यं विधिः सततसन्निहितो विभूतिमन्यादृशं सृजति यत्र धनंजयाय ॥५०॥**

क इति–यत्र नगर्यां नित्यं सर्वकालं सततसन्निहितः अत्यन्तनिकटवर्ती विधिश्चतुर्मुखो विभूतिं सम्पदमन्यादृशमपूर्वं धनं विनिर्णयेन विहितप्रतिज्ञाततया सृजति विदधाति कस्मै जयाय रामाय। अत एवात्र जगत्यां कः कविः कवयिता[2] वेति प्रकारान्तरे दैत्यगुरुर्वा पुरीं नगरीमिमां वर्णयितुमुपश्लोकयितुं शक्नोति समर्थो भवति अपि तु न भवति कया परमार्थवृत्त्या तत्त्वत इति।

भारतीयपक्षे–धनञ्जयाय अर्जुनाय आक्षेपालङ्कारः ॥५०॥

**इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डित[3]स्य षट्तर्कचक्रवर्तिनः श्रीमद्विनय-चन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भव-चारुचातुरीचन्द्रिकाचकोरेण[4] विरचितायां द्विसन्धानकवेर्धनञ्जयस्य राघवपाण्डवीयापरनाम्नः काव्यस्य कौमुदी-नामदधानायां टीकायामयोध्या-हास्तिनपुर्व्यार्वणनो नाम प्रथमः[5]सर्गः ॥१॥**

---

**अन्वय—गतारिपुत्रासगुणा, यशोऽधिका, समानवापीवरनिम्ननाभिका सदा नवा इयं सती नगरी कथं कुलस्त्री इव न स्यात्।**

**शत्रुओंके भयसे परे, अयोध्यतादि गुणवती, विशाल कीर्तिके कारण सर्वविदित, चौकोर सुन्दर गम्भीर जलपूर्ण बावड़ियोंसे पूर्ण, दर्शकोंके लिए सर्वदा नूतन यह प्रशस्त नगरी कुलवधूके समान क्यों न होगी अपितु होगी ही ॥४९॥**

**कौन ऐसा कवि है जो प्रतिज्ञा पूर्वक इस नगरका वास्तविक वर्णन कर सके, जहांपर सर्वदा उपस्थित भाग्य ही रामचन्द्रजी (जयाय)के लिए प्रतिदिन अन्यत्र अनुपलब्ध सम्पत्ति और धनकी सृष्टि करता है अथवा अर्जुनके ( धनंजयके ) लिए लोकोत्तर वैभवकी सृष्टि करता है ॥५०॥**

**निरवद्यविद्याभूषणभूषित पण्डितसमाजसे शोभित, षड्दर्शनचक्रवर्ती, श्रीविनयचन्द्र गुरुके शिष्य, समस्त कलाओंमें निपुणता रूपी चन्द्रिकाके चकोर, देवनन्दि द्वारा विरचित, राघवपाण्डवीय नामसे ख्यात धनञ्जयकविके-द्विसंधान महाकाव्यकी कौमुदी टीकामें अयोध्या-हास्तिनपुर वर्णन नामक प्रथम सर्ग समाप्त।**

---

**१. -रतं नराणां सपूर्वाऽप्यपूर्वेव–द०, प०। २. कविता–द०, प०। ३. लोडितस्य -प०। ४. रेण नेमिचन्द्रेण वि -प०, प०। ५. र्गः समाप्तिमगमत् -द०।**

# द्वितीयः सर्गः

**अथाभवत्स दशरथोग्रविक्रमः स्मरत् दिवानिशमृषिधर्मसंयमान् ।**
**पुरः श्रियः शशिरुचिपाण्डुराननं विकाशयन्नधिपतिरिद्धशासनः ॥१॥**

अथेति–अथशब्द[1] आनन्तर्ये स लोकप्रसिद्धो दशरथोऽधिपतिः स्वामी अभवत् । कीदृश अग्रविक्रमः[2] इद्धशासनः इद्धं दीप्तमुत्कर्षं प्राप्तं शासनमाज्ञा यस्य स दिवानिशम् ऋषिधर्मसंयमान् ऋषिभिः प्रणीतो यो धर्मो नीतिशास्त्रं तस्मिन्निरूपिता ये संयमा निरवद्याचरणानि तान् स्मरन् चिन्तयन् । पुनः किं कुर्वन् पुरो नगर्याः सम्बन्धित्वेन श्रियोऽधिष्ठानदेवतायाः शशिरुचिपाण्डुराननं चन्द्रचन्द्रिकावदातवदनं विकाशयन् ।

भारतीयपक्षे–पाण्डुरधिपतिरभवत् कीदृशः सदशरथोग्रविक्रमः दशया तारुण्यपूर्णयाऽवस्थया सह वर्त्तते सदशः रथेनोग्रः[3] सोढुमशक्यो विक्रमः प्रतापो यस्य सः सदशश्चासौ रथोग्रविक्रमश्च स तथोक्तः[4] । अन्यत् स्पष्टम् ॥१॥

**उरःश्रियः स्थलकमलं भुजद्वयं समस्तरक्षणकरणार्गलायुगम् ।**
**जयश्रियः कृतकविहारपर्वतौ समुन्नते भुजशिरसी बभार यः ॥२॥**

उर इति–उरो वक्षः श्रियो लक्ष्म्याः स्थलकमलं क्षितिपद्मं[5] समस्तरक्षणकरणार्गलायुगं सकलरक्षा-विधानपरिघाद्वितयं भुजद्वयं (बाहुद्वन्द्वं) जयश्रियः वीरलक्ष्म्याः कृतकविहारपर्वतौ कृत्रिमक्रीडाचलौ समुन्नते ऊर्ध्वे भुजशिरसी स्कन्धौ बभारेति रूपकालङ्कारः[6] ॥२॥

**परित्रया बहुभरणेन च प्रजामवीवृधद्विधिविहितां यतोऽखिलाम् ।**
**ततः प्रजापतिरिति यो मतः स तां ध्रुवं प्रजापतिरपि यूथिताङ्गतः ॥३॥**

परीति–यतः कारणात् विधिविहितां विश्वयोनिनिर्मितामखिलां निरवशेषां प्रजामष्टादशप्रकृतिमवीवृधत्

---

**अन्वय—अथ ऋषिधर्मसंयमान् दिवानिशं स्मरन्, पुरःश्रियः शशिरुचिपाण्डुराननं विकाशयन्, इद्धशासनः उग्रविक्रमः स दशरथः अभवत् ।**

**ऋषियों-द्वारा प्रणीत धार्मिक संयमके विषयमें दिनरात जागरूक, चन्द्रमाकी कान्तिके समान धवल नगर लक्ष्मीके मुखकी शोभाका विकासक, वृद्धिंगत राज्यका स्वामी, भीषण पराक्रमी वह विश्व विख्यात दशरथ नामका राजा हुआ था ।**

**अन्वय—" पुरःश्रियः शशिरुचिराननं विकाशयन्,...सदशरथोग्रविक्रमः पाण्डुः अभवत् ।**

**गुरुओं, सत्यधर्म तथा संयमकी आराधनामें दिन-रात लीन, चन्द्रिकाके समान निर्मल राज्य तथा नगर—लक्ष्मीके मुखोंको प्रफुल्लित कर्त्ता, प्रचण्ड शासन, एक दो क्या; दशों रथी योद्धाओंके लिए असह्य पराक्रमी वह सर्वविदित पाण्डु नामका राजा हुआ था ॥१॥**

**जो दशरथ या पाण्डु लक्ष्मीके निवास-भूत कमलके सदृश वक्षःस्थल, समस्त संसारकी रक्षा करनेमें समर्थ अर्गला (बेंड़ा) युगलभूत विशाल भुजाओं तथा विजय-लक्ष्मीकी क्रीड़ाके कृत्रिम पर्वतों सदृश उन्नत स्कन्धोंको धारण करते थे ॥२॥**

**सब प्रकारसे रक्षा तथा बहुप्रकारसे भरण-पोषण-द्वारा वह प्रकृति नटीसे निर्मित**

---

१. -शब्दो नगरव्यावर्णनान्तर्यार्थो मङ्गलार्थो वा गृह्यते–द०, प० । २. -यः प्रधानपराक्रमः इ–द०, प० । ३. -प्रस्तीव्रः सो–द०, प० । ४. -क्तः किं कुर्वन् मुनिप्रणीतानि नीतिशास्त्रोक्ताचारणानि दिवानिशं स्मरन् विकाशयँश्च किम् ? आननं कथम्भूतं (शशिरुचि) शशिरुचिरिव रुचिः कान्तिर्यस्य तत्तथोक्तम् कस्याः पुरश्रियः कथम्भूतः सन् इद्धशासन इद्धानामात्मंमन्यानां शासयतीति'सु' इति त्यः स तथोक्त इति शेषः । श्लेषाऽलङ्कारः–द०, प० । ५. जलरुहं–द० । ६. -रः केचिच्च समुच्चयालङ्कारं वदन्ति–द०, प० ।

वृद्धिमनैषीत् । परित्रया रक्षया, न केवलं तया बहुभरणेन च प्रचुरपोषणेन च ततः कारणात् यो राजा सतां सत्पुरुषाणां प्रजापतिरिति स्रष्टेति मतः इष्टः ध्रुवम् अहमेवं मन्ये आद्यो यः कश्चित् प्रजापतिः सोऽपि यूथिताङ्गतः प्रजापतिसमूहमध्यं पतितः नामधारको बभूवेति भावः । उत्प्रेक्षा ॥३॥

**न संममे दिशि दिशि निर्मलं यशो न पौरुषं रिपुषु वदान्यतार्थिषु ।**
**जगत्सु धीर्भुवि न चमूर्जनाशिषि श्रिया सह स्थितिरपि यस्य नायुषः ॥४॥**

*नेति—यस्य राज्ञो दिशि दिशि प्रत्याशं निर्मलं[1] यशो न सम्ममे न सम्मितम् तथा रिपुषु विपक्षेषु न पौरुषं* विक्रमः । अर्थिषु याचकेषु न वदान्यता त्यागः[2] सम्ममे जगत्सु[3] धीः बुद्धिः[4] भुवि भूमौ न चमूः सेना । जनाशिषि लोकाशीर्वादे श्रिया सह लक्ष्म्या सार्द्धमायुषः प्राणधारणावतः कर्मणः न स्थितिरपि अवस्थानमपि[5] ॥४॥

**गुणोऽखिलं वसु च परेण तद्द्वयं गृहीतमप्यभजत यत्र न व्ययम् ।**
**असत्यसंव्यवहृतिलोभविस्मयं परात्तमन्वगमदशेषतः क्षयम् ॥५॥**

गुण इति—यत्र राज्ञि गुण्यते व्युत्पाद्यते चातुरी[6]क्रियते प्राणी येनासौ गुणः स्वपरहिताहितविचारणेति भावः[7] । वसन्ति प्राणिनां प्राणा अत्र इति वसु हिरण्यादि द्रव्यम् । अखिलं समस्तं तद्द्वयं कर्तृ तद्द्वयं गुणद्रव्यद्वितयं परेणान्येन गृहीतमपि आत्मसात्कृतमपि व्ययं नाशं नाभजत नासेविष्ट । असत्यसंव्यवहृतिः अलीकलौकिकाचारः लोभः ममेदं भावः, विस्मयः आश्चर्यम् । अत्र समाहारापेक्षया तत्तथोक्तम् , अशेषतः निर्मूलतः क्षयं विनाशमन्वगमत् परात्तं सत् परैरितरैर्जनैः पूर्वमात्तं गृहीतं पश्चात् क्षयं गतमिति भावः । वक्रोक्तिः ॥५॥

**अभूद्गुरुर्बहुरुपदेशभूमतः स यस्य योऽजनि जगदेकसद्गुरुः ।**
**हिते जडे परमहिते च पण्डिते रहस्यमन्त्रयत न पञ्चकं नयम् ॥६॥**

अभूदिति—यो राजा जगदेकसद्गुरुः जगतां लोकानामेकोऽसाधारणश्चासौ सद्गुरुश्च स तथोक्तोऽ ( जनि अ ) भवत् । कस्मात्कारणात् यस्य नरपतेरुपदेशभूमतः[8] उपदेशबाहुल्यात् स लोकप्रसिद्धो गुरुर्बहुरभूत् । इदमत्र तात्पर्यम्—नहि नाम शास्त्रोपदेशानां[9] कश्चिदेकोऽनेकं शास्त्रं जानन्समास्ते अतएव बहुलशब्दप्रयोगाद्वीप्सा ज्ञातव्या । तेनायमर्थो लभ्यते—यो यो बहुभ्योऽनेकशास्त्राण्यर्थतो ग्रन्थतश्चाशासीत् स गुरुर्यस्य बभूव । अतएव स राजा जगद्गुरुरिति भावः ।

हिते जडे हेयोपादेयविवेकविकले यो नामन्त्रयत यतो मनोवृत्तेरकुटिलस्वभावत्वात् । हृदयग्रन्थिविनिर्मुक्तत्वात् मूर्खत्वाद्वा मन्त्रं भिनत्ति । तथा च परं केवलं अहिते विरुद्धे पण्डिते यथोक्तमन्त्रविवेकविदुषि नामन्त्र-

---

**समस्त जनताकी वृद्धि करता था । अतएव साधु पुरुष इसे जगत्कर्ता ब्रह्मा मानते थे । वास्तवमें वह (जन-नायक) युगके मध्यमें हुआ प्रजापति ही था ॥३॥**

**जिस दशरथ अथवा पाण्डुकी निर्मल कीर्ति समस्त दिशाओं और विदिशाओंमें नहीं समायी थी, पराक्रम शत्रुओंसे नहीं सहा गया था, दानशीलताको याचक न सम्हाल सके थे, प्रतिभा लोकोंमें न समायी थी, सेना सारी पृथ्वीपर न समाती थी तथा विभव व्याप्त दीर्घायुकी कामना जनताके आशीर्वादोंमें न आयी थी ॥४॥**

**जिस राजाकी समस्त सम्पत्ति तथा साधुजनोचित गुण दूसरों (याचकों तथा अनुकरण करनेवालों) के द्वारा ग्रहण किये जानेपर कम नहीं हुए थे । किन्तु मिथ्या व्यवहार, लोभ तथा आश्चर्य सर्वथा दूसरोंमें ही चले गये थे और इसमें उनका लेशमात्र भी शेष न था ॥ ५ ॥**

---

१. -लं कुन्दावदातं य-द०, प० । २. त्यागशौर्याभ्यां प्रतिष्ठिता-द०, प० । ३. सु भुवनेषु धीः-द०, प० । ४. धीः धारणावती बु-द०, प० । ५. -पि समुच्चयालङ्कारः-द०, प० । ६. चातुरी गोचरीक्रियते-द० प० । ७. -वः यद्विलोकं विलोकं न-प० । ८. मतः बहोर्भावो भूमा । बहोर्भ्वंस्भावत्वमिति भ्रभावः । उपदेशानां भूमा तस्मात् (जै० सू० ४।४।१४८) अन्येभ्योऽपि तस् उप-प०, द० । ९. -नां बाहुल्यात् क-द०, प० ।

यत यतोऽपकृतत्वादपकारं स्मरन्[1] मन्त्रं भिनत्तीति कवेरभिप्रायः। अथवा—परैरातिभिर्महिते मणिहिरण्यादिना सन्तोष्य भेदिते पण्डिते रहस्येकान्ते नामन्त्रयत यतः पण्डितत्वादुदुम्बरकृमिन्यायेन चेतोऽन्तः[2] प्रविश्य परोपरोधादयं भिनत्ति पञ्चकं नयमिति टीकाकर्तुर्मतम्।

एतेन नरपतेराकारादिना जनानामन्तर्मनः परि(ज्ञान)लक्षणकौशल्यमुपदर्शितम्। उक्तञ्च—

"आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारेण गृह्यतेऽन्तर्गतं मनः ॥१॥ [ म. स्मृ. ८।२५ ]

पञ्चकनयस्य लक्षणम्—कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागो, विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गमन्त्रः। उक्तञ्च—

"सहायाः साधनोपायो देशकालबलाबलम्।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र इष्यते" ॥१॥ [ का. नी. ११।५६ ]

**स्वमर्पयन् गुरुमधिदेवतामिव स्वबान्धवं गुरुमिव बह्वमन्यत।**
**सदापि यः स्वमिव सहायमास्तिकः कुलोचितं सुहृदमिवानुजीविनम् ॥७॥**

स्वमिति—स्वमात्मानमर्पयन् ददानो गुरुमाचार्यं पितरं वा अधिदेवतामिव कुलदेवीमिव, स्वबान्धवम् आत्मभ्रातरं गुरुमिव पितरमिव सदापि सर्वकालं सहायं सहकारिणं स्वमिवात्मानमिव कुलोचितं कुलेनाम्नायेनोचितम् योग्यमनुजीविनमनुचरं सुहृदमिव मित्रमिव आस्तिको धार्मिको यो राजा बह्वमन्यत अधिकमज्ञासीदित्युपमा ॥७॥

**यथायथं विधिषु चतुर्विधानया व्ययुज्यत क्षणमपि राजविद्यया।**
**नियुक्तया न च यदुपायचिन्तया व्यमुच्यत क्वचिदपि यो न सेनया ॥८॥**

यथायथमिति—यथायथं यो यस्य स्वभावो यथायथं विधिषु समुत्पन्नकार्येषु नियुक्तया व्यवहृतया[4] चतुर्विधानया चतुःप्रकारया राजविद्यया आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीतिलक्षणया उपायचिन्तया च सामभेदप्रदानदण्डस्वभावया च यत् यस्मात् कारणात् क्षणमपि अन्तर्मुहूर्त्तमपि न व्ययुज्यत न परित्यक्तः। अतः कारणात् क्वचिदपि कस्मिंश्चित्स्थानेऽपि सेनया गजस्यन्दनहयपत्तिरूपया न व्यमुच्यत न निर्मुक्तः राजविद्याया निरूपणम्—

"आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ।
अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥१॥ [ का. नी. २।७ ]

—समुच्चयालङ्कृतिः ॥८॥

---

विविध शास्त्रोंकी शिक्षा देनेके कारण जिसके बहुतसे गुरु (बहुगुरु) हुए थे तथापि वह (नीतिमार्गपर चलानेके कारण) संसारका एकमात्र (एकगुरु) सच्चा गुरु था। वह प्रिय तथा अनुकूल, अविवेकी तथा अत्यन्त विरुद्ध अथवा शत्रुओंके द्वारा पूजित पण्डितके सामने नहीं अपितु एकान्तमें सहाय आदि पञ्चांग नीतिपर मन्त्रणा करता था ॥ ६ ॥

यह श्रद्धालु दशरथ अथवा पाण्डु गुरुको कुलदेवताके समान मानकर अपनी सम्पत्ति देता था। अपने भाई-बन्धुओंको गुरुके समान बहुत मानता था। अपने अनुगामियोंको सदा ही अपने समान समझता था तथा अपने वंशके अनुरूप सेवकोंको भी मित्रके समान सम्मान देता था ॥७॥

उपस्थित यथायोग्य समस्त कार्योंको करते समय वह आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीति इन चार प्रकारकी राजविद्या व्यवहार तथा सामादि उपायोंके विचारको एक क्षणके भी लिए नहीं छोड़ता था अतएव वह कहीं भी गज, रथ, अश्व, पदातिमय चतुरंग सेनासे भी अलग न होता था ॥८॥

---

१. स्मारं स्मार—प०। २. -दन्तर्हृदयं—द०। ३. समुच्चयालङ्कारः—द०, प०। ४. अधिष्ठितया—द०।

**उपाददे परसुखदुःखचिन्तया विभूतिषु कचिदुदसिच्यत स्वयम् ।**
**प्रमाद्यति स्म न विषसाद योगिवद्दिवानिशं विधिषु विभज्य यः स्थितः ॥९॥**

उपादद इति—परसुखदुःखचिन्तया परेषामात्मविलक्षणानामाश्रितानामनाथानां च सुखदुःखे हिताहिते तत्र चिन्ता जनोऽयं केनोपायेन दुःखादपाक्रियते सुखं च भविताऽस्येति परामर्शतया स्वयं परोपदेशमनपेक्ष्य कर्तृभूतया चिन्तया उपाददे । कर्मतापन्नो यो राजा तथा विभूतिषु सम्पत्सु कचित्कस्मिंश्चित् स्थाने नोदसिच्यत । स्वयं गर्वेण नानुभूयते स्म । क इव योगीव औदास्यावलम्बि मुनीन्द्रवत् न प्रमाद्यति स्म न प्रमत्तो बभूव । न विषसाद न विषादेन विषण्णो बभूव । विधिषु धर्मार्थकामलक्षणेषु कार्येषु दिवानिशमहोरात्रं स्वयं विभज्य आत्मानं विभागीकृत्य यो राजा स्थित इति समुच्चयालङ्कारः ॥८॥

**द्विषो जगद्विलयभयान्न्यपातयत् न्यषेवत स्मरमपि सन्ततीच्छया ।**
**गृहीतवान्न करमपमित्ययाचितुं स्वजन्म यः समगमयत्परार्थताम् ॥१०॥**

द्विष इति—जगद्विलयभयात् लोकविनाशभीत्या द्विषो रिपून् न्यपातयत् व्यापादयामास । स्मरमपि काममपि सन्ततीच्छया सन्तानाभिलाषेण न्यषेवत अनुशीलयाम्बभूव । अपमित्ययाचितुं याचित्वा दातुं करं सिद्धायं गृहीतवान् स्वीकृतवान । अनया युक्तया यो राजा परार्थतां साफल्यं स्वजन्म आत्मोत्पत्तिं समगमयत् अनैषीत् । समुच्चयः ॥१०॥

**जिगाय षड्विधमरिमन्तराश्रयं यतः स्मयं त्यजति न षड्विधं बलम् ।**
**न यस्य यद्व्यसनमदीपि सप्तकं स्थिराऽभवत् प्रकृतिषु सप्तसु स्थितिः ॥११॥**

जिगायेति—यतो यस्मात् कारणात् अन्तराश्रयमन्तरङ्गोद्भवं षड्विधं षट्प्रकारमरिं रिपुं जिगाय जितवान् अयुक्तितः प्रणीताः कामक्रोधलोभ(मान)मदहर्षाः क्षितीशानामन्तरङ्गो हि[1] षड्वर्गः । उक्तञ्च—

"कामः क्रोधश्च मानश्च लोभो हर्षस्तथा मदः ।
अन्तरङ्गोऽरिषड्वर्गः क्षितीशानां भवत्ययम् ॥१॥ [ का. नी. १।५७ ]

अत एव यं नृपतिं बलं सैन्यं न त्यजति स्म न मुमोच हिरण्यदानसम्भाषणाभ्यामरातिनिवारणेन च स्वामिनं सतीष्ववस्थासु बलते संवृणोति दुस्तरं तारयति इति बलं तच्च मौलभृतकश्रेण्यारण्यदुर्गमित्रभेदम् । मौलं पट्टसाधनम्, भृतकं पदातिबलम्, श्रेणयोऽष्टादश; सेनापतिः, गणकः, राजश्रेष्ठी, दण्डाधिपतिः, मन्त्री, महत्तरः, [2]तलवरः, चत्वारो वर्णाः चतुरङ्गबलं, पुरोहितः, अमात्यो, महामात्यः । आरण्यमाटविकम्, दुर्गं धूलिकोट्ट[3]पर्वतादि, मित्रं सौहृदम् । उक्तञ्च—

---

**जो दूसरोंकी सुखकी प्राप्ति तथा दुखहानिकी चिन्तासे प्रेरित होकर स्वयं ही लोकोपकारक कार्योंमें लगा रहता था, अपने वैभव और सम्पत्तिके कारण कभी उसके मनमें अहंकार नहीं आया था। वह न कभी प्रमादमें पड़ता था और न खेदखिन्न ही होता था तथा अपने दिन-रातको धर्म-अर्थ तथा कामके कार्योंका विभाग करके जीवन व्यतीत करता था ॥९॥**

**यह राजा संसारके विनाशके भयसे शत्रुओंका संहार करता था। सन्तानकी इच्छासे काम-सेवन करता था, राजस्वको भी लेकर दूसरोंको देनेके लिए प्रजासे लेता था इस प्रकार उसने अपने जन्मको ही परार्थ कर रखा था ॥१०॥**

**यतः इसने काम, क्रोधादि छहों प्रकारके अन्तरंग शत्रुओंको जीत लिया था अतः मौल, भृत, आदि छह प्रकारकी सेना इसे नहीं छोड़ती थी। मद्य, स्त्री, द्यूत, आदि सातों व्यसन इसके मनमें नहीं आये थे अतएव स्वामी, अमात्य, सुहृद, कोश आदि सातों प्रकृतियोंकी दृष्टिसे उसकी स्थिति दृढ़ थी ॥११॥**

---

१. रंगोऽरिषड्व–द०, प० । २. तलवर–प० । ३. कोटि–प०, कोट–द० ।

**शौर्यं दौर्गं च सौहार्दं मौलं भार्त्तकमाटवम् ।**

**षड्विधं च बलं प्राहुर्बुधा नीतिविचक्षणाः ॥१॥**

यत् यस्मात् कारणात् यस्य नरपतेर्नादीपि न दीप्तं बभूव किं दण्डपारुष्यकामवाक् पारुष्यार्थदूषणमद्यस्त्रीद्यूतपापर्द्धिकोपस्वभावं व्यसनसप्तकम्-उक्तञ्च

**"दण्डपारुष्यकन्दर्पवाक्पारुष्यार्थदूषणम् ।**

**प्राकृतं सप्तकं प्रोक्तं नीतिशास्त्रविशारदैः ॥१॥**

अतएव सप्तसु प्रकृतिषु स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गमित्रलक्षणासु स्थिरा निश्चला स्थितिरवस्थानमभवदभूत् । उक्तञ्च—

**"स्वाम्यमात्यः सुहृत्कोशो राष्ट्रं दुर्गं तथा बलम् ।**

**प्राकृतं सप्तकं प्रोक्तं नीतिशास्त्रविशारदैः ॥१॥ [ का. नी. ४।१ ]**

एतेन नरपतेर्जितेन्द्रियत्वं प्रदर्शितम्[1] ।

**विवर्ज्य यः प्रियमहिषीं युवाधिपं स्वमप्यतः परमुपनीय लक्ष्यताम् ।**

**सदोपधाविधिभिरमात्यमेकशो यथोचितं पदमनयद्विशोधितम् ॥१२॥**

विवर्ज्येति—यो नृपतिः सदा सर्वकालं यथोचितं (यथा) योग्यं विशोधितं निर्बाधं पदं पदवीममात्यं सचिवं महत्तरं पुरोहितं दण्डनायकञ्च अनयत् नीतवान् कथमेकशः एकमेकं किं कृत्वा पूर्वं विवर्ज्य वर्जयित्वा किं किं प्रियमहिषीं पट्टराज्ञीं युवाधिपं मुख्यकुमारं स्वमपि च किं कृत्वा लक्ष्यतां विशोध्यभावमुपनीय नीत्वा कथम्भूतं परं केभ्यः अत एभ्यः प्रियमहिष्यादिभ्यः कैः कृत्वा उपधाविधिभिः । धर्मार्थकामभयेषु व्याजेन परचित्तपरीक्षणमुपधा तस्या विषयो विधानानि तैस्तथोक्तैः । उक्तञ्च—

**"छलेन परचित्तानां धर्मार्थकामभीतिषु ।**

**परीक्षणं विधीयेत सोपधा कथ्यते बुधैः ॥१॥**

समुच्चयः ॥१२॥

**वणिक्पथे खनिषु वनेषु सेतुषु व्रजेषु योऽहनि निशि दुर्गराष्ट्रयोः ।**

**गुणाधिकं धनमववर्द्धदुद्धतं यशोधनं ध्रुवमुपचेतुमुज्ज्वलम् ॥१३॥**

वणिगिति—ध्रुवमहमेवं मन्ये उज्ज्वलं शुभ्रमुद्धतमुल्वणं यशोधनमुपचेतुमुपचयं नेतुं गुणाधिकं गुणैरौदार्यादिलक्षणैरधिकं प्रचुरं धनं कनकादिकमहनि दिवसे निशि रात्रौ अववर्द्धत् वृद्धिं प्रापयामास । क्व क्व वणिक्पथेषु वणिजां मार्गेषु खनिषु रत्नोत्पत्तिस्थानेषु वनेषु कान्तारेषु सेतुषु समुद्रतटेषु व्रजेषु गोकुलेषु दुर्गराष्ट्रयोश्च "यस्यानि (भि) योगात् परे दुःखं गच्छन्ति दुर्जनोद्योगविषया वा स्वस्य ( विजिगीषोः ) आपदो गमयतीति दुर्गम्" [नी. वा. २०।१] स्वाभाविकमाहार्यं द्विविधम् । "पशुधान्यहिरण्यसम्पदा राजते शोभते इति राष्ट्रम्" [नी. वा. १९. १] इति उत्प्रेक्षा—॥१३॥

**अनारतं तिसृषु सतीषु शक्तिषु त्रिवर्ग्यपि व्यभिचरति स न स्वयम् ।**

**पदातयः किमु किमरातयः सुता सहायता किमु किल यस्य बन्धुता ॥१४॥**

---

**अपने आप, पट्टरानी तथा युवराजके अतिरिक्त अमात्य आदि प्रत्येक महान् अधिकारीको किसी व्याजसे प्रत्येक विषयकी कसौटीपर कसके ही उसके योग्य निर्दोष तथा स्थिर पदपर उसकी नियुक्ति करता था ॥१२॥**

**निश्चित ही वह राजा निर्मल तथा पर्याप्त यशरूपी धनको संचित करनेके लिए ही व्यवसायियोंसे भरे बाजारों, खनिक क्षेत्रों, अरण्यों, समुद्र तीरोंपर स्थित पत्तनों, पशुपालकोंकी बस्तियों, दुर्गों तथा राष्ट्रोंमें गुणोंकी अपेक्षा प्रचुर मात्रामें सम्पतिको बढ़ा रहा था ॥१३॥**

---

१. -तम् । विरुद्धवानलङ्कारः—द०, प० ।

अनारतमिति—अनारतमनवरतं स्वयमात्मना त्रिवर्ग्यपि त्रयाणां धर्मार्थकामरूपाणां वर्गाणां समाहारस्त्रिवर्गी धर्ममभिभूय न हि तादृशमर्थोपार्जनम् तन्मूलत्वादर्थस्य यथैव नानुभवनाय कुठारच्छिन्नभूरुहप्रफुल्लफुल्लसम्भारः यथोक्तमर्थोपार्जनमन्तरेण न यथोक्तकामानुभवनम् सजलजलधरयुक्तजलमन्तरेण स्वच्छातुच्छपल्लवजालानुभवनवत् । कामानुभवनमन्तरेण न सन्तानोत्पत्तिः वारिणा विना बीजाङ्कुरवत् सन्तानादृते नार्थोपयोगः रमणेन विना यथा विधवातरुणीतारुण्योपयोगः। अर्थोपयोगेन विना नो धर्मः यथा तपस्यया विना न स्वर्गफल विभूतयः।

इत्यनया विरोधयुक्त्या साऽपि त्रिवर्ग्यपि यत्[1] यस्य नरपतेर्न व्यभिचरति स्म न[2] तत्याज कासु सतीषु वर्त्तमानासु[3] तिसृषु शक्तिषु प्रभुमन्त्रोत्साहलक्षणासु स्वपरज्ञानविधायिन्यः प्रभुमन्त्रोत्साहशक्तिरूपास्तिस्रः शक्तयो भूभृतां विभूतिहेतवः। उक्तञ्च—

"तिस्रो हि शक्तयः स्वामिमन्त्रोत्साहोपलक्षणाः[4] ।
स्वपरज्ञा विधायिन्यो राज्ञां राज्यस्य हेतवः ॥१॥

तासु इति अपरार्द्धेप्यध्याहार्यमत्र। अतएव उ सम्बोधने किल आश्चर्ये किमाक्षेपे किं पदातयो भृत्या व्यभिचरिष्यन्ति अपि तु न। एवं किमरातयः शत्रवः किं सुताः पुत्राः किं सहायता मित्रसमूहः। अत्राक्षेपालङ्कारः ॥१४॥

**भुवस्तलं प्रतपति संभ्रमन् रविः शशी चरन् स्वयमभिनन्दयत्ययम् ।**
**चरैः स्थितः पुरि सचराचरं जगत्परीक्ष्य यः स तपति सन्धिनोति च ॥१५॥**

भुव इति—भुवस्तलं भूमितलं सम्भ्रमन् सञ्चरन् रविरयं सूर्योऽयं प्रतपति सन्तापयति तथा चरन् शशी चन्द्रोऽयं स्वयमात्मनाभिनन्दयति प्रीणयति। यो भूमिपालः पुरि नगर्यां स्थितः सन् चरैः स्वपरमण्डले कार्याकार्यविलोकने चक्षुषीव चरन्ति प्रवर्त्तते इति चराः तैः कृत्वा सचराचरं जगत् सजङ्गमाजङ्गमं भुवनं परीक्ष्य आत्मप्रतीतिमानीय तपति स्म सन्तापयामास सन्धिनोति स्म च प्रीणयाञ्चकार च। अत्र प्रतापनाह्लादनाभ्यां सूर्याचन्द्रमसावतिशेते स्मेति। अतिशयोक्तिः ॥१५॥

**कृषीवलं कृषिभुवि वल्लवं बहिर्वनेचरं चरमटवीष्वभुङ्क्त यः ।**
**वणिग्जनं पुरि पुरसीम्नि योगिनं नियोगिनं नृपसुतबन्धुमन्त्रिषु ॥१६॥**

कृषीवलमिति—यो राजा कृषिभुवि क्षेत्रभूमौ कृषीवलं कुटुम्बिकरूपं चरं गूढपुरुषमन्वयुङ्क्त प्रेरयाञ्चकार।

---

**प्रभु-मन्त्र-उत्साह रूप तीनों समीचीन शक्तियोंका सर्वदा उपयोग करनेपर भी जिसने धर्म-अर्थ-काम रूपी त्रिवर्गका भी परस्पराविरोधेन पालन किया था। अनुगामियों, पुत्रों तथा सहायकोंकी तो कहना ही क्या है इसके शत्रु भी मित्रके समान आचरण करते थे॥१४॥**

**सूर्य स्वयं सारे संसारका परिभ्रमण करके उसे आतप देता है। चन्द्रमा भी संचार करता हुआ ही सृष्टिको अपनी चन्द्रिकासे आह्लादित करता है किन्तु यह दशरथ अथवा पाण्डुराजा राजधानीमें ही रहता हुआ स्थावर तथा जंगम संसारकी गुप्तचरोंके द्वारा पूरी जानकारी रखता था और उनपर प्रसाद तथा निग्रह करता था॥१५॥**

**कृषिके क्षेत्रमें उसने किसानको ही चर बनाया था, बाह्य प्रदेशोंमें ग्वालोंको तथा जंगलोंमें भील आदिको ही गुप्तचरके पदपर नियुक्त किया था, शहरोंमें व्यवसायियोंको, देशकी सीमाओंपर कौलादि साधुओंको तथा अन्य राजाओं, राजपुत्रों, कुटुम्बियों तथा मंत्रियोंमें उनके कर्मचारियोंको चर बनाये था॥१६॥**

**अन्तःपुरोंमें बहिरों, अपाङ्गों तथा कुवड़ोंपर चरत्वका भार था। इस प्रकार यह राजा**

---

1. यत्र–द०, प०। 2. न परस्परं त्यजति स्म–द०। 3. विद्यमानासु–प०, द०। 4. पलक्षिताः–प०, द०।

एवं प्रतिसम्बन्धिनी क्रिया तथा बहिर्बाह्ये प्रदेशे वल्लवं गोपालम्। अटवीषु अरण्यानीषु वनेचरं भिल्लं पुरि नगर्यां वणिग्जनं किराटकवेषवन्तम्। पुरसीम्नि नगरसीमायां योगिनं भट्टारकं कौलकादिवेषधारिणं गूढपुरुषं नृपसुतबन्धुमन्त्रिषु नरपतितनयबान्धवसचिवेषु नियोगिनं व्यापारिणम् इत्यनेन नरपतेर्नीतिकौशल्यमुक्तम्। समुच्चयः ॥१६॥

**वधूगृहे बधिरकिरातवामनं स्वरक्षया परबलसंग्रहेण च।**
**प्रयुक्तवान् प्रणिधिमनाकुलं परानबोधि यः प्रतिबुबुधे न चापरैः ॥१७॥**

वधूगृह इति-वधूगृहे रामामन्दिरे बधिरकिरातवामनं बधिरः[1] प्रसिद्धः किरातो विकलाङ्गः वामनः कुब्जकः समाहारापेक्षयैकत्वं स्वरक्षया आत्मावनेन तथा परबलसंग्रहेण रिपुसैन्यपरिकलनेन सह प्रणिधिं चरञ्च प्रयुक्तवान् प्रेरितवान् कथं यथा भवति अनाकुलम् विनष्टसभ्यासभ्यक्षोभतया स्वीकृतमनोधैर्यावलम्बनं यथा अतएव यो राजा परान् इतरान् शत्रून् अबोधि ज्ञातवान् कर्मतापन्नो राजा अपरैश्च शत्रुभिरपि न प्रतिबुबुधे न प्रतिज्ञात इति। समुच्चयः ॥१७॥

**अवाह्यत्तुरगमवाहितं गजं न चाविशद्वनमविगाहितं हितैः।**
**ददर्श यः सपदि न सिद्धतापसं समाययौ न तमवरोधमेककः ॥१८॥**

अवाहयदिति-हितैः परीक्षितैः[2] नरैः अवाहितमनधिरूढं तुरगमश्वं गजं दन्तिनं च यो राजा नावाहयत् नाचालयत्। अविगाहितमनालोडितं वन कान्तारं नाविशत् न प्रविष्टवान् सपदि सहसा सिद्धतापसं वेषधारिणं तपस्विनं न ददर्श नालोकितवान् तथा तं लोकप्रसिद्धमवरोधमन्तःपुरमेककः एकाकी सन् न समाययौ न गतवान्। अत्र तात्पर्यम्-अन्तःपुररक्षिकाभिर्महत्तरीभिः सार्द्धमन्तःपुरं प्राविशत् इत्यर्थः। अनेन नीतिकौशल्यमुपपादितम्[3] ॥१८॥

**इदं मया नयमपदिश्य वर्णितं शरं तु यः क्षिपति न यावदाहवे।**
**शरासनं शरमिषुधिं परोऽक्षिपत् परं विदुर्यमनप्रवर्त्तकं महः ॥१९॥**

इदमिति—मया कविना धनञ्जयेन नयमपदिश्य नीतिमाश्रित्य इदं पूर्वोक्तं वर्णितमधुना राज्ञो विक्रमो व्यावर्ण्यते। अत्र तु प्रयोगादेवेदमुपलक्ष्यते[4]। आहवे-संग्रामे प्रथममेकं शरं यो राजा यावन्न क्षिपति न क्षेप्स्यति तावत् शरासनं धनुः शरं बाणमिषुधिं भस्त्रां परः शत्रुः अक्षिपत् मुक्तवान्। अतएव परं केवलं यं राजानमनपवर्त्तकं नित्यं महस्तेजो विदुः विदन्तीति नीतिमन्त इति शेषः। विरोधालङ्कारः ॥१९॥

---

आत्मविश्वासपूर्वक अपनी रक्षा तथा शत्रुसेनाके वशीकरणके साथ-साथ सर्वत्र गुप्तचरोंका प्रयोग करता था। वह दूसरोंको भलीभांति जानता था किन्तु शत्रुओंके द्वारा इसका एक भी रहस्य न जाना गया था ॥१७॥

उस घोड़े या हाथीपर नहीं चढ़ता था जिसपर अनुगत आत्मीय जन न बैठ चुके हों। उस वनमें नहीं जाता था जिसमें पहिले उसके आदमी न घूम आये हों। सिद्ध आदि वेषधारी साधुओंसे सहसा भेंट नहीं करता था और अन्तःपुरमें कभी भी अकेला प्रवेश नहीं करता था ॥१८॥

यह वर्णन राजाकी नीतिनिपुणताको प्रधानता देनेके लिए किया है किन्तु उसका प्रताप ऐसा था कि कहीं पर भी उसका उल्लंघन नहीं होता था—युद्धमें जबतक वह बाण छोड़े तबतक ही शत्रु बाण, धनुष और तूणीरको भी फेंककर आत्मसमर्पण या पलायन कर देते थे ॥१९॥

---

१. नष्टकर्णः-प. द.। २. परीक्षितान्तःकरणैः—प., द.। ३. समुच्चयालङ्कारः-प., द०। ४. उपलभ्यते-प., द-।

**न विक्रमः शरभनिपातसन्निभः शृगालवद्भयबहुलो न यो नयः ।**
**न निन्द्यते स्वयमनुकम्प्यते परैर्नयेन वा चरितमधत्त तादृशम् ॥२०॥**

नेति—यस्य नृपतेः विक्रमः पौरुषं शरभनिपातसन्निभः 'शरभस्याष्टापदस्य सन्निपातेन सन्निभः तुल्यो नाभूत् । अत्रायम्भावः—विवेकविकलो हि अष्टापदः किल लीलया विचित्रोत्प्लवनविधानोपपन्नो नखराङ्कुरैर्मत्तमातङ्गगण्डस्थलं विदार्य पृष्ठोद्भवचरणचतुष्टयमध्ये निक्षिप्य तं च मृतकुथितगजेन्द्रपूयसम्भवैर्जन्तुजातैर्विदार्यमाणो म्रियत इत्यनया युक्त्या योऽपर्यालोचिततया विहितो विक्रमः स्वस्य मरणाय जायते स न बभूवेति भावः । शृगालवद्भयबहुलो नयः भयं बहुलं प्रचुरं यस्मिन् यस्येति वा स तथाभूतो नयः तस्य नृपतेर्न बभूव । कस्येव शृगालस्येव । अत्र तात्पर्यम्—

शृगालस्य यथा समर्थजन्तुजातमालोकमालोकं चकितचकितत्वेन प्रपलायनमिति तादृशो नृपतेर्न बभूवेति भावः । स्वयमात्मना तादृशं चरितं यो नृपतिरधत्त कृतवान् येन चरितेन परैः शत्रुभिर्न निन्द्यते । न निन्दाविषयीक्रियते । नानुकम्प्यते नानुकम्पाविषयीक्रियत इति[1] ॥२०॥

**यदा व्यरित्सदरिमदित्सदेष वा धनं तदारुषदतुषच्च यः परम् ।**
**प्रकोपसम्मदविषयो गुणः फलं विनोद्गमाद्वट इव यस्य सन्ददे ॥२१॥**

यदेति—यो नृपतिर्यदा यस्मिन् काले अरिं रिपुं व्यरित्सत् हन्तुमैच्छत् वा अथवा धनं हिरण्यादिद्रव्यमदित्सत् दातुमैच्छत् परं केवलं तदा तस्मिन् काले अरुषत् रुष्टवान् अतुषच्च तुष्टवान् च । अत्र कारणापेक्षया रोषतोषव्यवस्थितचेता बभूवेति भावः । उद्गमाद्विना कुसुममन्तरेण वट इव न्यग्रोध इव यस्यावनीश्वरस्य प्रकोपसम्मदविषयो रोषतोषगोचरो गुणः फलं सन्ददे समयच्छत् । अत्र यदैव हर्षाहर्षलक्षणो गुणो समुत्पन्नस्तदैव फलप्रदानकालयापनामकार्षीत् । समुच्चयालङ्कारः[2] ॥२१॥

**प्ररोपयन्नयभुवि मूलसन्ततिं प्रसारयन् दिशि बहुशाखमन्वयम् ।**
**फलं दिशन् विपुलमपुष्पयापनं जनस्य यः समजनि कल्पभूरुहः ॥२२॥**

प्ररोपयन्निति—यो नृपः[3] जनस्य भूरुहः सुरपादपः समजनि अभूत् किं कुर्वन् नयभुवि नीतिभूमौ मूलसन्ततिं दुर्गाध्यक्षधनाध्यक्षकर्माध्यक्षसेनापतिपुरोहितामात्यज्योतिःशास्त्रज्ञा हि मूलं क्षितिपतीनां मूलस्य सन्ततिं सन्तानं प्ररोपयत् स्थापयत् । उक्तञ्च—

> "भाण्डागारी चमूभर्ता दुर्गाध्यक्षः पुरोहितः ।
> कर्माध्यक्षोऽथ दैवज्ञो मन्त्री मूलं हि भूभृताम् ॥१॥

दिशि आशायां बहुशाखं बह्व्यः शाखाः पुत्रपौत्रादयो यत्र तथाभूतमन्वयमाम्नायं प्रसारयन् विस्तारयन् अपुष्पयापनमनायासलभ्यं विपुलं प्रचुरं फलं दिशन् संयच्छन् कल्पवृक्षोऽप्येवंभूतः नयभुवि न्यायभूमौ मूलसन्ततिं नेत्रसमूहं प्ररोपयन् अधोऽधो नयन् अन्वयं बुध्नम् बहुशाखं प्रचुरविटपस्थानं प्रसारयन् प्रतानीकुर्वन् विपुलमपुष्पयापनं न पुष्पवद्यापनाकालगमनिका यत्र तदित्थंभूतं फलं दिशन्निति । रूपकालङ्कारः ॥२२॥

---

उसका पराक्रम सिंहके अविचारित आक्रमण और आत्मविनाश सदृश न था और न उसका कूटनीतिका प्रयोग शृगालके समान अत्यधिक भीत होकर चलनेका था । अपितु इस राजाका कुछ ऐसा आचरण था जिसके कारण न तो शत्रु उसकी निन्दा कर पाते थे और न उन्हें इसपर अनुग्रह करनेका ही अवसर मिलता था ॥२०॥

यह राजा जब शत्रुका संहार करना चाहता था तभी रुष्ट होता था अथवा जब धनादि देनेकी इच्छा करता था तभी प्रसन्न होता था । उसकी रोषणता तथा प्रसन्नतारूपी गुण वट वृक्षके समान बिना फूल दिये ही फल दे देते थे ॥२१॥

राजनीति रूपी भूमिके ऊपर भण्डारी, सेनापति, दुर्गपाल आदि राजतन्त्रके सातों मूलोंको स्थिर करता हुआ, समस्त दिशाओंमें अपने कुलके ही शाखा राजोंको प्रसार करता

---

१. शार्दूलस्य—प., द. । २. समुच्चयालंकारः—प., द. । ३. भूभर्ता–द. । भूतभर्ता––प. ।

**जलाशयं दिशि दिशि पङ्कजीविनं नवोत्थितं नियतिषु देशकालयोः ।**
**विमर्द्य षष्ठिकमिव विद्विषं भुवि प्ररोपयन्नतुलमवाप[1] यः फलम् ॥२३॥**

जलाशयमिति—यो नृपतिः अतुलमसाधारणं फलमलब्ध प्राप । किं कुर्वन् ? दिशि दिशि विद्विषं शत्रुं तथा प्ररोपयन् किं कृत्वा पूर्वं विमर्द्य[7] स्वस्वस्थानात् प्रचाल्य कासु सतीषु देशकालयोर्नियतिषु कथम्भूतं सन्तं जडाशयं जडचेतस्कं पङ्कजीविनं पङ्केन पापेन जीवतीत्येवंशीलं पुनः नवोत्थितं नूतनसमुत्पन्नमलब्धमूलत्वादसहायमित्यर्थः । अधुनोपमानस्यार्थः प्रदर्श्यते । इव यथा षष्ठिकं व्रीहिविशेषं दिशि दिशि प्ररोपयन् कश्चित्पामरादिर्विपुलं फलं प्राप्नोति किं कृत्वा पूर्वं देशकालयोर्नियतिषु 'विमर्द्य' मलित्वा कीदृशं सन्तं जलाशयं जलमेवाशयः स्थानं यस्य तं तथोक्तं पङ्कजीविनं पङ्कात् कर्दमात् जीव आत्मा अस्यास्तीति तं तथोक्तं नवोत्थितमिति शेषः[2] ॥२३॥

**सुहृज्जनं क्रशयति यः स्म कर्कशं पदानतं द्विषमपि तं व्यगाहत ।**
**निजं मलं क्षिपति हि वार्द्धिरुद्धतं नदीनदं समुपनतं विगाहते ॥२४॥**

सुहृदिति—यो नृपतिः कर्कशं निर्दयं सुहृज्जनं (मित्रलोकं) क्रशयति स्म तनूचकार । (तं लोकप्रसिद्धं) पदानतं चरणपतितं[3] द्विषमपि (शत्रुमपि) व्यगाहत स्वीचकार । अर्थान्तरं [4]न्यस्यति—

वार्द्धिः समुद्रो ( हि स्फुटं ) निजम् ( आत्मीयम् ) उद्धतम् (उत्कटं) मलं बहिः क्षिपति बहिः कुरुते । समुपनतं ( सम्यक् ) प्रह्वीभूतं नदीनदं पूर्ववाहिन्यो निम्नगा नद्यः पश्चिमवाहिन्यो नद्यो नदाः नद्यश्च नदाश्च नदीनदं विगाहते गृह्णाति[5] 'गुणग्राहकोऽयमिति दर्शितम् ॥२४॥

**विवर्द्धितानतिकठिनान्नखानिव प्रियानिव स्खलितगतीन्समुच्छिनत् ।**
**पुपोष यस्तमिह नयेन विक्रिया भवत्यपि स्वपठितमन्त्रतो भयम् ॥२५॥**

विवर्द्धितानिति—यो नृपतिः विवर्द्धितान् वृद्धिं प्रापितान् अतिकठिनान् अतिनिष्ठुरहृदयान् स्खलितगतीन् स्खलिते पापे गतिर्येषां तान् प्रियानपि नखानिव समच्छिनत् सम्यक् चिच्छेद । अत्र वाराणेयम्—

यथा सम्पद्गर्वितान् निर्दयान् पापीयसः प्रियानपि सतः आत्मीयोच्चपदादुत्थाप्य[7] स्तोकपदे स्थापयामास । यथा दिवा कीर्तिः वृद्धिंगतान् कररुहान् भ्रष्टगतीन् प्रियान् पाणिपादशोभाविधायिनो नखान् छिनत्तीत्यर्थः ।

---

**हुआ तथा अनायास ही सुख-शान्तिरूपी फलोंको देता हुआ वह राजा जनताके लिए कल्पवृक्षके समान था क्योंकि कल्पवृक्ष भी मर्यादापालक भोगभूमिमें होते हैं तथा पुष्टतने शाखायुक्त होते हैं और इच्छा मात्रसे वे दश प्रकारकी भोग-सामग्री देते हैं ॥२२॥**

**शुभ ग्रहों तथा अनुकूल देशकालमें तुरन्त हुए मूढ़मति तथा पापाचारी शत्रुको सब दिशाओंमें पराजित करके वह विनम्र हो जानेपर फिर धानके समान स्थापित करता था और इससे अतुल सम्पत्तिको प्राप्त करता था। धानके लिए भी कीचड़से पूर्ण तालाबादिको उचित समय तथा देशमें खूब जोत कर जब विधि वर्ष ले तब उगनेके बाद ही रोप देनेसे वह खूब फलता है ॥२३॥**

**वह राजा कठोर अथवा निर्दय मित्रको भी दण्ड देता था तथा चरणोंमें नत शत्रुको भी अपनाकर उठाता था। समुद्र भी अपने कूड़े-कचरेको बाहर फेंक देता है और नीचेकी ओर बहनेवाली नदियों तथा नदोंको अपनेमें मिला लेता है ॥२४॥**

**स्वयं उन्नत पदपर नियुक्त किन्तु अत्यन्त निर्दय तथा पापमार्गमें प्रवृत्त अपने प्रियलोकोंको भी नखोंकी तरह काटकर फेंक देता था [ नख भी मनुष्य स्वयं बढ़ने देता है, वे कठोर होते हैं और बहुत बढ़ जानेपर चलना फिरना कठिन कर देते हैं] यह उन्हीं लोगों-**

---

१. अलब्ध–प. द. । २. अत्र नीतिमत्त्वकौशल्यमुपदर्शितम् । —श्लेषालंकारः—प., द. । ३. चरणन्यस्तमस्तकम्–प., द. । ४. उक्तार्थदृष्टान्तेन द्रढयत्याचार्यः—प., द. । ५. स्वीकरोति–प., द. । ६. गुणग्राहकत्वेन विवेचकत्वं समुपदर्शितम् । अर्थान्तरन्यासालङ्कारः—प., द. । ७. प्रचाल्य –प., द. ।

किं बहुना यो राजा तं पुपोष येन पोषितेनापि विक्रिया न भवति । युक्तमेतत् स्वपठितमन्त्रतो भयं यथा गुरुपरम्परोपदेशमन्तरेणात्माधीतात् मन्त्रात् भयं स्यात् तथात्मवर्द्धितेभ्योऽतिक्रूरेभ्यः पापरतेभ्य इत्यभिप्रायः । अर्थान्तरन्यासः ॥२५॥

**अनुद्धतान् युवजरतः श्रुतागमान् जितश्रमान्नयविनयान्वितान् सुतान् ।**
**अयोजयन् सममविरोधयन्परैश्चकार यः प्रकटमकर्कटस्थितीन् ॥२६॥**

अनुद्धतानिति—अनुद्धतान् अगर्वान् श्रुतागमान् श्रुतः[1] आगमो व्याकरणादिर्यैस्तान् जितश्रमान् कृतशस्त्रशास्त्राभ्यासान् नयविनयान्वितान् नीतिप्रश्रययुक्तान् युवजरतः युववृद्धान् सुतान् पुत्रान् परैरितरैः समं सार्द्धमयोजयन् अघटयन् अविरोधयँश्च यो राजा प्रकटं यथा भवति तथा अकर्कटस्थितीन् न विद्यते कर्कटस्येव कुलीरस्येव स्थितिरवस्थानं येषां ते तथोक्तास्तान् चकाराकार्षीत् ।

अत्र वासनेयम्—इह हि समुत्पन्नाः किल कर्कटसमाः पुत्राः पितरं भक्षयन्ति इति ज्ञात्वा प्रियभाषणादिभिरात्माज्ञाविधायिनः कृतवान् इति ॥२६॥

**ऋतं वचो-विसमुदितं क्रियाफलं कृतज्ञतां स्वविभवसम्मितां मताम् ।**
**जिगीषुतां दिगवधृतां कुटुम्बितामशेषभूभरणभरां बभार यः ॥२७॥**

ऋतमिति—यो राजा ऋतं वचः सत्यं वचनं क्रियाफलम् अविसमुदितमविसंवादि स्वविभवसम्मितामात्मविभूतिसमुदितां कृतज्ञतां मतामिष्टां दिगवधृतां दिक्षु अवधृतां विजिगीषुतां विजेतृतामशेषभूभरणभरां समस्तभूमिपोषणाधारां कुटुम्बितां प्रतिसम्बन्धं योजनीया क्रिया बभार धृतवान्[2] ॥२७॥

**प्रसेदुषि स्थितिमति यत्र राजनि ध्वजांशुकान्यपि न जहार मारुतः ।**
**स चातकः सततृषातुरो-श्रुवाः पतिंवरावलयपरिग्रहे परम् ॥२८॥**

प्रसेदुषीति—यत्र यस्मिन् प्रसेदुषि प्रसन्ने सति स्थैर्यवति राजनि मारुतोऽपि वायुरपि ध्वजांशुकानि पताकावस्त्राणि न जहार हृतवान् । स लोकप्रसिद्धः चातकः सततृषातुरः अविरततृषाव्यग्रः परं केवलं पतिंवरावलयपरिग्रहे कन्याकङ्कणाङ्गीकारे तत्प्रसिद्धमश्रुवाः वाष्पजलम् अत्रास्तिक्रियायाः अध्याहारः । परिसंख्याऽलंकृतिः ॥२८॥

**बलेन यः स्वयमनिलोऽपि नानिलः सनीतिरप्यभवदनीतिगोचरः ।**
**अशीतकः शशिशिशिरः समेखलः समेखलस्त्विति न जनेन दूषितः ॥२९॥**

---

का भरण-पोषण करता था जो अनाचारको न फैलाए । क्योंकि गुरुके बिना स्वयं सिद्ध किये गये मन्त्रसे भी अनिष्ट हो जाता है ॥२५॥

नीति शास्त्रादिके पंडितों, परिश्रम करनेमें प्रवीण, शिष्टाचार और आस्थासे पूर्ण तथा अनुद्धत वृद्ध, युवक तथा पुत्रोंको अन्य लोगोंके साथ कार्यमें ही नहीं लगाया था अपितु उनका परस्परका विरोध भी नष्ट कर दिया था । उसने स्पष्ट ही उन लोगोंकी स्थितिको केकड़ोंकी परम्परासे विपरीत कर दिया था अर्थात् युवक वृद्धोंको नष्ट नहीं करते थे ॥२६॥

उस दशरथ अथवा पाण्डुके वचन सत्य थे, अनुष्ठानोंका परिणाम उपयुक्त और अनुकूल ही होता था, कृतज्ञताको अपनी विशाल सम्पत्तिसे नापता था, अभिलषित विजयकी इच्छा समस्त दिशाओंमें व्याप्त थी तथा कुटुम्बिताकी भावना समस्त संसारके भरण-पोषणमें समर्थ थी ॥२७॥

उस स्थिरमति राजाके राज्यकालमें वायु भी ध्वजाओंके कपड़ोंको नहीं चुराता ( उड़ाता ) था [ चोरोंकी तो बात ही क्या है ] । केवल चातक पक्षी ही प्याससे व्याकुल रहता था तथा पतिको वरण करके पाणिग्रहण करनेवाली कन्याकी विदाके समय ही आँसू आते थे ॥२८॥

---

१. श्रुत आकर्णित आगमो व्याकरणतर्कषड्दर्शनाभिप्रायसिद्धान्तस्वभावो यैः । २. समुच्चयालङ्कारः—प., द. ।

बलेनेति–बलेन सामर्थ्येन कृत्वा स्वयमात्मना यो राजा अनिलोऽपि वायुरपि स कथं नानिल इति विरोधः। नैवं न विद्यते इला भूमिर्यस्यासौ अनिलः न अभवत् भूमिपरित्यक्तो नाभूदित्यर्थः। सनीतिरपि सह नीत्या वर्त्तमानोऽऽपि अनीतिगोचरोऽभवदिति विरोधः। नैवं न ईतयो गोचरा लोचनविषया यस्यासौ अनीतिगोचरः। ईतयः सप्त। तदुक्तम्–

"अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः।
स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः॥१॥

शशिशिशिरः शशीव चन्द्र इव शिशिरः शीतलः स कथमशीतक इति विरोधः। न शीतको मन्दः कार्येष्वनलस इत्यर्थः। समे खलस्त्विति। यः समे औदासीन्यावलम्बिनि पुरुषे खलो दुर्जनः। इत्थमपि दूषितो न जनेन विरोधोऽयम्। परिह्रियते। मेखलया कटिसूत्रेण सह वर्त्तमानः यद्वा समे साधौ अखलः प्रतिपालकः शिष्टानां प्रतिपालनं दुष्टानां निग्रहः राज्ञां धर्म इति वचनात्। उक्तञ्च–

"दुष्टानां निग्रहो नीत्या शिष्टानां प्रतिपालनम्।
राज्ञां धर्मोऽयमेवासौ नान्यः कश्चिच्च विद्यते॥१॥ इति[1] ॥२९॥

**न्याय्यं सुखावहमहो भुवि धर्मराज्यमित्यात्मनः प्रथयतः प्रजयानुभावम्।**
**तस्याभवत् प्रियतमा गुणपक्षपाताल्लक्ष्म्याः स्वयंवरकृता प्रथमा सपत्नी॥३०॥**

न्याय्यमिति—अहो आश्चर्यं भुवि पृथिव्यां सुखावहं सुखमावहतीति तथोक्तं धर्मराज्यं धर्मात् प्राप्तं धर्मेणोपलक्षितं वा राज्यं न्याय्यं न्यायादनपेतं यथोक्तप्रजापालनलक्षणमात्मनः स्वस्य प्रजायाः अष्टादश प्रकृत्या कृत्वा अनुभावं माहात्म्यं प्रथयतः प्रख्यापयतः समस्तस्य दशरथस्य प्रियतमा भार्या लक्ष्म्याः प्रथमा सपत्नी अभवत् बभूव। किंविशिष्टा सती स्वयंवरकृता स्वयं परोपदेशमन्तरेण व्रियते परिणीयते राजपुत्र्या राजपुत्रो यत्रासौ स्वयंवरः। स्वयंवरो कृतो यया सा कस्मात् गुणपक्षपातात् गुणा औदार्यादयः तेषां पक्षपातोऽङ्गीकारः तस्मात् समानगुणशीलत्वमुपदर्शितम्।

इदानीं भारतीयः—अहो भुवि न्याय्यं सुखावहं धर्मराज्यं धर्मस्य पाण्डोर्नराधिपस्य राज्यं तथोक्तमिति आत्मनः अनुभावं प्रजया कृत्वा प्रथयतः तस्य पाण्डो राज्ञः प्रियतमायाः लक्ष्म्याः प्रथमा सपत्नी अभवत् गुणपक्षपातात् स्वयंवरकृता सती। श्लेषः॥३०॥

**कलागमानामधिदेवतेव वेलेव लावण्यरसाम्बुराशेः।**
**अन्तर्निधिर्भूरिव वीरभूमिर्या वन्द्यतेऽद्यापि सती सतीभिः॥३१॥**

कलेति–अद्यापि साम्प्रतमपि या सती पतिव्रता सतीभिः पतिव्रताभिः [2]भामिनीभिर्वन्द्यते नमस्क्रियते

---

**वह बलमें साक्षात् अनिल ( वायु ) था। तो भी अनिल ( भूमि-राज्य-हीन ) न था, नीतिका प्रतिपालक था अनीति (अतिवृष्टि आदि छः ईतियोंसे रहित) के लिए ख्यात था। चन्द्रमाके समान शीतल था तो भी अ-शीतल ( ढीला अकर्मण्य नहीं ) था तथा करधनीको धारण करता था तो भी लोगोंके द्वारा उसपर समे-खल (साधु पुरुषोंके साथ दुष्टता करनेवाला ) लाञ्छन नहीं लगाया गया था॥२९॥**

**न्यायमार्गपर लीन, सबको सुखकर धार्मिक राज्य-द्वारा अपना तथा प्रजाका माहात्म्य प्रकट करते हुए भी उस दशरथकी राज्यलक्ष्मीकी प्रथम सौत वह प्रियतमा रानी हुई थी जिसने गुणोंपर रीझकर स्वयंवरमें उसका वरण किया था।**

**धर्म ( पाण्डु ) का राज्य न्यायप्रधान, सुखकर तथा राजा प्रजाके पुण्यका फल था तथापि आश्चर्य था कि स्वयंवरमें गुणोंपर मोहित उसकी प्रियतमा रानी राज्यलक्ष्मीकी प्रमुख सपत्नी थी॥३०॥**

**सती स्त्रियां शिक्षा संगीतादि कलाओं तथा आगमोंकी मुख्य देवीके समान, लावण्य-**

---

१. विरोधालंकारः प०, द०। २. कामिनीभिः—प०, द०।

स्तूयते वा कथम्भूता सती कलागमानां कला लिखितपठितगणितवेणुवीणादयः चतुष्षष्टिः आगमाः व्याकरणतर्कसिद्धान्तादयः । कलाश्च आगमाश्च तेषामधिदेवतेव इष्टदेवीव लावण्यरसाम्बुराशेः शरीरसमुदायशोभावारिवारिनिधेर्वेलेव अन्तर्निधिरिव अन्तर्निखातनिधानावनीव वीरभूमिः वीराणामुत्पत्त्यर्थभूमिः शूरोत्पत्तिस्थानमित्यर्थः ॥३१॥

**या कौशल्या रूपशीलेन चार्वी दीनां काकुंत्यागसान्निध्ययोगात् ।**
**दीनेष्वर्थिष्वाददे लोभवादान्नासौ राज्ञः स्वान्तमन्तर्जहार ॥३२॥**

येति—असौ कौशल्या कोशलो नाम नरेन्द्रः तस्यापत्यं स्त्री कोशलायां जाता भवा वा कौशल्या[1] राज्ञी । राज्ञो दशरथस्य स्वान्तं मनः अन्तः आन्तरं जहार हृतवतीति[2] भावः । कथंभूता सती रूपशीलेन कृत्वा चार्वी मनोज्ञा या दीनेषु अकिञ्चित्करेषु[3] दीनां म्लानां काकुं[4] वक्रोक्तिं नाददे न गृहीतवती । कस्मात्त्यागसान्निध्ययोगात् । दानैकव्यसंबन्धात् । कथम्भूतात् अलोभवादात् । न विद्यते लोभस्य वाद उक्तिर्यत्र तस्मात् ।

भारतीयः—असौ कुन्ती कुन्तेरपत्यं स्त्री कुन्ती[5] कुन्तिनृपात्मजा पाण्डोर्नराधिपस्य स्वान्तमन्तर्जहार । या दीनेषु अर्थिषु विषये लोभवादान् कार्पण्यवचनानि न आददे न गृहीतवती । कस्मात् निध्ययोगात् निधेः समूहस्य अयोगः असम्बन्धः तस्मात् केषामागसामपराधानाम् । कथम्भूता सती न दीनाङ्का दीनो म्लानोऽङ्को लक्षणं यस्याः सा तथोक्ता अस्मिन् विशेषणे पूर्वोक्तः न शब्दः सम्बन्ध्यते तेनायमर्थः न दीनांकेति लभ्यते । पुनः कथम्भूता चार्वी मनोहरा केन कृत्वा रूपशीलेन रूपं चक्षुर्विषयः शीलं गृहीतव्रतप्रतिपालनं रूपं च शीलञ्च रूपशीलं तेन कृत्वा कौशली कुशलभावः तया कौशल्या कृत्वा अत्र वेणुवीणादीनां चतुःषष्टिकलानां परिज्ञानलक्षणं दक्षत्वं प्रदर्शितमिति कवेरभिप्रायः । अथवा कौशल्या कौ पृथिव्यां शल्यामिव शल्या आत्मीयरूपशीलेनान्यासां कमनीयकामिनीनां शल्योत्पादकत्वादिति काव्यटीकाकर्तुर्मतमिति शेषः[6] ॥३२॥

**सौन्दर्यवर्येऽप्यवरोधवर्गे स्थिते विशेषेण सतामियेष ।**
**विहाय चूतस्य समस्तमङ्गं पुष्पोद्गमं चुम्बति हि द्विरेफः ॥३३॥**

सौन्दर्येति—स राजा तां राज्ञीमियेष अभिललाष केन कृत्वा अन्यासां राज्ञीनां रूपशीलादिव्यवच्छेदिना गुणेन कृत्वा क सति अवरोधवर्गे स्थितेऽपि सति कथम्भूते सौन्दर्यवर्ये लावण्यप्रधाने युक्तमेतत् चूतस्याम्रस्य समस्तं सर्वमङ्गं शाखोपशाखाबुध्नादिशरीरं विहाय त्यक्त्वा द्विरेफः द्वौ मुखकण्टकप्रख्यौ[7] रेफौ यस्य स द्विरेफः भ्रमरः हि स्फुटं पुष्पोद्गमं मञ्जरीमकरन्दं चुम्बति आस्वादयतीति सम्बन्धः । अर्थान्तरन्यासः ॥३३॥

---

**रसके समुद्रके तीरके समान और वसुन्धरा भूमिके समान राघव पाण्डव वीरोंकी जननी उस पतिव्रता पट्टरानीकी आज भी बन्दना करती हैं ॥३१॥**

**अन्वय—या रूपशीलेन चार्वी त्यागसान्निध्ययोगात् दीनेषु अर्थिषु लोभवादान् दीनां काकुं नाददे असौ कौशल्या राज्ञः स्वान्तमन्तर्जहार ।**

**जो सौन्दर्य और सदाचारके कारण ही सुन्दरी थी, त्याग वृत्तिका सतत अभ्यास होनेके कारण दीन याचकोंसे लोभमय मनोवृत्तिसे प्रेरित तुच्छ व्यंग्य वचन न बोलती उस कौशल्या ने राजा दशरथके मनको सर्वथा चुरा लिया था ।**

**अन्वय…दीनाङ्का आगसान्निध्ययोगात्…लोभवादानाददे असौ कुन्ती…**

**जो लावण्य और पतिव्रतके कारण ही रमणीक थी, विनम्रता जिसका लक्षण था तथा पापोंके समुद्रमें डूबे दीन दुःखी याचकोंको भी जो कृपणताके द्योतक वचन नहीं कहती थी उस कुन्तीने पाण्डु राजाके हृदयको लुभा लिया था ॥३२॥**

**सौन्दर्यकी दृष्टिसे सर्वोत्तम अन्य अनेक रानियोंके होनेपर भी वह राजा विशेषरूपसे**

---

१. वृद्धिकुरुनाद्यजादकोशलाम्ण्यः [ जै. ३।१।१५३] । २. ती रञ्जितवतीति भा–प., द. । ३. पु याचकेषु दो–प., द. । ४. -कुं मनोऽभिप्रायं व- प०, द० । ५. कुन्त्यवन्तिकुरुभ्यः स्त्रियाम् [ जै० ३।१।१५७ ] इति हृदुपु–प., द. । ६. श्लेषालङ्कारः प., द. । ७. पक्षौ–द० ।

**इति रतियनयानुरुध्यमानो हृदि शरणोत्तममङ्गलं नमस्यन् ।**
**व्यसनरहितराजराज्यभारः समुपचिकाय यशोधनं जयेन ॥३४॥**

इतीति—जयेन अरितिरस्कारेण कृत्वा तत् स्वमात्मीयं यशोधनं यश एव धनं द्रव्यं तत् स राजा उपचिकाय वृद्धिं नीतवान् कथम्भूतः व्यसनैरर्थदूषणादिभिः रहितः विमुक्तो राजा यत्र तादृशो राज्यभारो यस्य स तथोक्तः पुनः रतिं सुरतोत्सवम् अनया परममहादेव्या सह इति वक्ष्यमाणापेक्षया अनुरुध्यमानः कामयमानः पुनः शरणोत्तममङ्गलं शरणयोग्यत्वात् शरणः उत्तमैः सर्वज्ञैः प्राणीतत्त्वात् उत्तमः । मङ्गं सुखं लाति (ददाति) मलं पापं गालयति इति वा मङ्गलो धर्मः । स च स च स च तं हृदि हृदये नमस्यन् नमस्कुर्वन् ॥३४॥

इति निरवद्यविद्यामण्डनमण्डितमण्डलीडितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां द्विसन्धानकवेर्धनञ्जयस्य राघवपाण्डवीयापरनाम्नः काव्यस्य पदकौमुदी नाम दधानायां टीकायां दशरथपाण्डुराजवर्णनो नाम द्वितीयः सर्गः ।

---

उस कौशल्या या कुन्तीके ही पास जाता था । जैसे भ्रमर आमके स्कन्ध-शाखा पत्रादि समस्त अंगोंको छोड़कर केवल बौरको ही चूमता है ॥३३॥

सब विपत्तियोंसे रहित राज्यका शासक यह राजा अपनी पट्टरानीके साथ ही भोगों की अभिलाषा करता था तथा उत्तम शरण मंगलभूत धर्मको मनमें विनती करते हुए इसने विजयके द्वारा अपने यशरूपी धनकी परिपूर्ण उन्नति की थी ॥३४॥

निर्दोष विद्याभूषणभूषितपण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्रगुरुके शिष्य देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर नेमिचन्द्रद्वारा विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसंधान काव्यकी पदकौमुदी नामक टीकामें दशरथपाण्डुराजवर्णन नामक द्वितीय सर्ग समाप्त ।

# तृतीयः सर्गः

**अथास्य राज्ञः प्रियधर्मपत्नी धर्मोऽस्ति बन्ध्यः किमितीव मत्वा ।**
**रजःकणं तत्र फलाय काले बबन्ध चूताग्रिममञ्जरीव ॥१॥**

अथेति–अथशब्दो राज्यव्यावर्णनानन्तर्य्यार्थः[1] । अस्य पूर्वोक्तस्य राज्ञः नराधिपस्य प्रियधर्मपत्नी प्रियो धर्मो यस्याः सा प्रियधर्मा अथवा प्रियधर्मस्य हेतुत्वात् प्रियधर्मा सा चासौ पत्नी च सा तत्र काले तारुण्यभर-प्राप्तिसमये रजःकणमार्त्तवत्वं फलाय बबन्ध धृतवती । किं कृत्वा ? पूर्वं मत्वा ज्ञात्वा कथमिति । किमिव धर्मोऽस्ति बन्ध्यः निष्फल इति । केव चूताग्रिममञ्जरीव यथाऽम्रभूरुहप्रथमोद्भवपुष्पगुच्छः तत्र काले वसन्तसमये फलाय रजःकणं मकरन्दबिन्दुं बध्नातीति[2] ॥१॥

**इन्द्रो विभूत्या स बृहस्पतिर्वा बुद्ध्या सुतः स्यादिति वंशवृद्धा ।**
**सिद्धाय मन्त्रेण निरुप्तवन्तश्चरुं स दिष्ट्या ववृधे च पौरः ॥२॥**

इन्द्र इति–विभूत्या सम्पदा कृत्वा इन्द्रः पुरन्दरः बृहस्पतिर्वा अथवा बुद्ध्या मत्या कृत्वा बृहस्पतिः सुरगुरुः सुतः पुत्रः स्याद्भवेत् इति हेतोः वंशवृद्धाः कुलोद्भवशतायुषः पुरुषाः सिद्धायमन्त्रेण परमेष्ठिने बीजाक्षरलक्षणेन मन्त्रेण कृत्वा सिद्धः निष्पन्नः अयः भाग्यं यस्मादसौ सिद्धायः स चासौ मन्त्रश्च तेन तथोक्तेन कृत्वा चरुम् इष्ट-देवताबलिविशेषं निरुप्तवन्तः दत्तवन्तः । स लोकप्रसिद्धः पौरः नागरो जनः दिष्ट्या महोत्सवेन ववृधे वृद्धिं प्रापत्[3] ॥२॥

**बोधातिरेकाय सरस्वतीव लक्ष्मीरिवानेकविधार्थहेतोः ।**
**गर्भं महिष्याधित भूमिभर्तुः पुण्यस्य पुष्पोद्गम एष सर्वः ॥३॥**

बोधेति–महिषी पट्टराज्ञी गर्भमाधित धृतवती । केवोत्प्रेक्षिता ? भूमिभर्तुर्भूपस्य बोधातिरेकाय ज्ञानाधिक्याय सरस्वतीव वाणीव अनेकविधार्थहेतोः नानाप्रकारद्रव्यनिमित्तं लक्ष्मीरिव श्रीरिव युक्तं चैतत् पुण्यस्य एषोऽसौ सर्वः समस्तः पुष्पोद्गमः फलमिति सम्बन्धः । अर्थान्तरन्यासः ॥३॥

**दीप्तान्तरङ्गा शिखिनारणीव निधानगर्भेण भुवः स्थलीव ।**
**सत्त्वेन तेन स्तिमितप्रकाशा जज्ञेऽलसोद्योगवतीव देवी ॥४॥**

दीप्तेति–तेन गर्भस्थितेन सत्त्वेन प्राणिना अलसा मन्दा सती देवी पट्टराज्ञी उद्योगवतीव जज्ञे जाता । केव अरणी वह्निमन्थनकाष्ठमिव । कथम्भूता ? शिखिना कृशानुना दीप्तान्तरङ्गा दीप्तः प्रकाशमानः अन्तरङ्गो

---

**राजाकी परमप्रिय धर्मपत्नी 'क्या धर्म निसन्तति है ?' यही सोचकर उपयुक्त वयमें आम्रके द्वारा बौरके समान धर्मसन्ततिके लिए रजोदर्शनको प्राप्त हुई थी ॥ १ ॥**

**वैभवकी दृष्टिसे इन्द्र, बुद्धिकी अपेक्षा बृहस्पति ही यह राजपुत्र होगा । इस विश्वासके कारण ही वंशके वृद्ध पुरुषोंने बीजाक्षर मन्त्रोंके उच्चारण सहित सिद्ध परमेष्ठीको नैवेद्य समर्पित किया था और अयोध्या तथा हस्तिनापुरके नागरिक भी आनन्दमंगल मनानेमें दिनों दिन उन्नति कर रहे थे ॥ २ ॥**

**कौशल्या अथवा कुन्ती पटरानीने धर्मपतिके विवेककी लोकोत्तर वृद्धिके लिए सरस्वतीके समान, विविध प्रकारके धनोंके लिए लक्ष्मीके समान गर्भको धारण किया था । अथवा यह सब पुण्यरूपी वृक्षके पुष्पके उद्गमके समान था ॥ ३ ॥**

**भीतर ही भीतर प्रज्वलित अग्निसे काष्ठके समान तथा नीचे छिपी हीरादि सम्पत्तिके**

---

१. राजव्यावर्ण–प०, द० । २. उपमालंकारः–प०, द० । ३. समुच्चयालंकारः–प०, द० ।

मध्यभागो यस्याः। पुनः निधानगर्भेण निधियुक्तमध्येन भुवः स्थली इव यथा कथम्भूता स्तिमितप्रकाशा स्तिमितो निश्चलः प्रकाशः शरीरकान्तिर्यस्याः सा तथोक्ता। स्थली च स्थिरप्रकाशा जायते इति सम्बन्धः। उपमा ॥४॥

**आपाण्डुरं रागनिबद्धमङ्गमुत्साहबाहुल्यमुदात्तमोजः।**
**विश्वं जगद्वीप्सुरिवोदुवाह द्यौरभ्रलिप्ताभ्युदितार्यमेव ॥५॥**

आपाण्डुरमिति—आपाण्डुरमीषत्पाण्डुरम् अङ्गरागनिबद्धमनुरागयुक्तमुत्साहस्य बाहुल्यं (प्राचुर्यं) यत्र तत्तथोक्तम्। उदात्तमुत्कटमोजश्च 'महतां तेजः एतद्द्वितयं राज्ञी उदुवाह बभार। कथम्भूतेव विश्वं समस्तं जगद्भुवनं वीप्सुरिव व्याप्तुमिच्छुरिव। केव यथा द्यौः नभस्तलमभ्युदितार्यमाऽभ्युदितः उद्गतः अर्यमा सूर्यो यस्यां सा इत्थम्भूता सती अङ्गमात्मीयस्वरूपमुद्वहति। कथम्भूता पुनः? अभ्रैः मेघैः ईषल्लिप्ता **"कादल्पे"** **जै० सू० [३।१।४४]** इति डीः। अङ्गमापाण्डुरमीषच्छ्वेतं रागनिबद्धं लौहित्ययुक्तम् उत्कृष्टा सा लक्ष्मीः शोभा यत्राहनि तत् उत्सं उत्सं च तदहश्च तदुत्साहं सश्रीकं दिनं तस्य बाहुल्यं यत्राङ्गे तत्तथोक्तम्। ओजश्च तेजः उदात्तमुल्वणमुद्वहति कथम्भूतेव विश्वं जगद्वीप्सुरिवेत्युपमा' ॥५॥

**कुमारभृत्याकुशलः स तस्मिंल्लोकस्थितिं प्रत्यवधातुमैच्छत्।**
**अस्पृश्यमग्न्यादिभिरप्रधृष्यमन्येन तद्वंश्यमविष्यमाहुः ॥६॥**

कुमारेति—तस्मिन्नापाण्डुरत्वादिधारणकाले स राजा कुमारभृत्या बालवैद्यकं तत्पोषकशास्त्रं वा कुमारभृत्या तस्यां कुशलः प्रवीणः लोकस्थितिं लोकव्यवहारं प्रत्यवधातुमवधानीकर्तुमैच्छत् अभिलषितवान् यस्मात्, तस्मात् कारणात् तद्वंश्यं वंशे भवः वंश्यः तस्य राज्ञो वंश्यः स तथोक्तस्तमाहुः ब्रुवन्ति लोकवृद्धाः कथम्भूतमग्न्यादिभिरष्टाभिर्दैवव्यसनैः अस्पृश्यमस्पर्शविषयमगम्यमित्यर्थः। अन्येन अरिजातेन अप्रधृष्यमजेयमनभिभवनीयमित्यर्थः। अविष्यं विषेणावध्यञ्चेति ॥६॥

**जाने हि मृत्स्नाऽभ्यवहारमात्रं मातुः प्रकाश्यच्छलमन्तरात्मा।**
**समुद्रवेलाजलसिक्तसीमां गर्भस्थितः स ग्रसते स्म भूमिम् ॥७॥**

जाने इति—जानेऽहमेवं मन्ये हि स्फुटं ससत्त्वोऽन्तरात्मा अव्यक्तमूर्तिः सन् गर्भस्थितोऽपि भूमिं पृथ्वीं ग्रसते स्म गिलितवान्। कीदृशीं समुद्रवेलाजलसिक्तसीमां वारिधिपयःप्लावितमर्यादां किं कृत्वा पूर्वं मातुर्जनन्याः मृत्स्नाभ्यवहारमात्रं छलं प्रशस्तमृत्तिकाभक्षणव्याजं प्रकाश्य प्रव्यक्तीकृत्येति ॥७॥

---

**द्वारा प्रकाशमान खानके समान गर्भमें आये उस पुण्यात्मा जीवके द्वारा गर्भिणी रानीकी कान्ति स्थिर हो गयी थी और गर्भभारसे अलसायी रानी उद्योगरत सदृश प्रतीत होती थी ॥ ४ ॥**

**समस्त संसारको व्याप्त करनेकी अभिलाषासे ही उस रानीने कुछ श्वेत-लाल कान्ति युक्त शरीर, कार्य करनेकी क्षमताकी विशालता तथा अत्यन्त प्रभावक तेजको घनाच्छन्न तथा उदित सूर्ययुक्त आकाशके समान धारण किया था। क्योंकि उक्त प्रकारके आकाशका रूप भी आंशिक धवलिमा व्याप्त लालिमा, दिवस सौन्दर्य तथा प्रखर आतपमय होता है ॥५॥**

**इस प्रकारकी गर्भस्थितिके समय कुमारभृत्यमें निपुण राजा दशरथ अथवा पाण्डुने लोक-व्यवहारको भी जाननेका प्रयत्न किया था। तब इसके कुल-वृद्धोंने अग्नि आदि आठ दैवी उपसर्गोंके निवारणकी विधि, शत्रु आदिके द्वारा गर्भपात निरोधके उपाय तथा विषप्रयोगके परिहार बताये थे ॥ ६ ॥**

**ऐसा मानना चाहिये कि माताकी मिट्टी खानेकी चेष्टाको प्रकट करके दशरथ अथवा पाण्डु राजाकी पत्नियोंके गर्भमें स्थित अतएव गुप्त जीवने समुद्रकी लहरोंके पानीसे आर्द्र सीमायुक्त पृथ्वीको ही ग्रास कर लिया था ॥ ७ ॥**

---

१. धातूनां—प०, द०। २. श्लेषोपमालङ्कारः—प०, द०।

**अव्यक्तभावोऽयमलब्धदेहस्तथाधितिष्ठन्नपि गर्भभूमिम् ।**
**कोऽप्यङ्कुरो बीजमिवानुभावात्स्वजन्महेतुं कुलमुद्बभार ॥८॥**

अव्यक्तेति—अयं सत्त्वः तथापि अनुभावात् माहात्म्यात् स्वजन्महेतुमात्मोत्पत्तिहेतुं कुलम् अन्वयमुद्बभार उद्धृतवान् । किं कुर्वाणोऽपि अधितिष्ठन्नपि गर्भभूमिं यद्यपि अव्यक्तभावः अप्रकटपरिणामः अलब्धदेहः अप्राप्तशरीरः प्रवर्त्तते उपमार्थः प्रदर्श्यते इव यथा कोऽपि अनिर्वचनीयोऽपि अङ्कुरः प्रथमं द्विजसूचिकः अनुभावात् स्वजन्महेतुं बीजं उद्बिभर्ति यद्यपि गर्भभूमिं मध्यावनिं अधितिष्ठन्नपि कीदृशः अव्यक्तभावः । अव्यक्तो गुप्तो भावः सत्तालक्षणो यस्य सः तथोक्तः अलब्धदेहः । उपमा ॥८॥

**सर्वज्ञमभ्यर्च्य महामहेन व्यधत्त तस्याः क्रियया महत्या ।**
**यथोचितं पौंस्नवनादिकर्म धर्मोपधाशुद्धविधिः पुरोधाः ॥९॥**

सर्वज्ञमिति—तस्या देव्याः यथोचितं पौंस्नवनादि पुंसो भावः पौंस्नं वनति सम्भजते यत् कर्म तत्तथोक्तम् । औषधरसायनविधानैर्गर्भातिशयशुद्धिं कृत्वा गर्भसंक्रान्तिवासरमारभ्य मासस्याष्टमस्य पर्यन्तदिवसं यावत्पुत्रोत्पत्त्यर्थं मंत्राराधनं देवपूजा त्रिविधपात्रेषु च यथाक्रमं यथायोग्यं दानविधिर्यद्विधीयते तत् पौंस्नवनम् । उक्तञ्च—

> "आरभ्य सक्रान्तिदिनं हि यावन्मासाष्टमस्यावधिमुत्सवेन ।
> पुत्रेप्सया धर्म (कर्म) विधीयते यत्तत् सूरयः पौंस्नवनं वदन्ति ॥
> "केचिद् हि मासे किल पञ्चमेऽपि पूर्णेऽथ गर्भे कथमष्टमावधिः ।
> तथेति धर्माद्विविधा हि सम्पत्सम्पूर्णमायुर्न रुजो भवेयुः ॥१॥"

तदादौ यस्य तत्तथोक्तं कर्मक्रियया महत्या गरिष्ठया क्रियया कृत्वा पुरोधाः पुरोहितः व्यधत्त कृतवान् किं कृत्वा अभ्यर्च्य प्रपूज्य कं सर्वज्ञं हेयाहेयरूपतया सर्वं त्रैलोक्योदरविवरवर्तितत्वात्तत्त्वं करतलामलवज्जानातीति सर्वज्ञः । तं तथोक्तम् । केन कृत्वा महामहेन महोत्सवेन कथम्भूतः सन् धर्मोपधा शुद्धविधिः धर्मोपधया धर्मस्य परीक्षया शुद्धो यथोक्तो विधिः क्रिया यस्य सः ॥९॥

**स्वप्नेन सोमं निशि वीक्ष्य बालमादाय सारोप्य किल स्वमङ्कम् ।**
**लब्धोऽतिसौम्यस्तनयः प्रजानां मयेति दिष्ट्याभ्यववर्द्धदालीः ॥१०॥**

स्वप्नेति—सा देवी दिष्ट्या परमोत्सवेन आलीः सखीः अभ्यववर्द्धत् आनन्दयति स्म । कथमिति लब्धोऽतिसौम्यस्तनयः प्रजानामष्टादशप्रकृतीनामतिसौम्यः अतिशयेन प्रसन्नः तनयः पुत्रः लब्धः प्राप्तो

---

**पूर्वोक्त प्रकारसे गर्भमें वास करते हुए जीवने अपने परिणामोंका प्रकाश बिना किये ही तथा शरीरको धारण किये बिना ही अपने जन्मके निमित्त पितृकुलका अपने विशिष्ट प्रभावसे वैसा ही उद्धार कर दिया था जैसे भूमिमें बोया गया, सबके लिए अदृश्य तथा शरीरहीन कोई कोई अंकुर बीजको ऊपर उठा लाता है ॥ ८ ॥**

**धर्मके निमित्त शुद्ध विधि-विधानोंमें लीन पुरोहितने केवली भगवानकी महामह-द्वारा पूजा करके पटरानीका 'पौंस्न' महोत्सव बड़े आयोजनके साथ राजाओंके अनुरूप साज-सज्जा-द्वारा किया था—**

**[ गर्भाधानकी तिथिसे लेकर आठ मास बाद पुत्रकी अभिलाषासे जो धर्म कार्यमय उत्सव किया जाता है उसे 'पौंस्नवन' कहते हैं। कुछ आचार्योंका मत है कि आठवें बाद क्यों ? गर्भाधानकी तिथिसे ५ मास पूर्ण होनेपर जो आराधना-पूजा-दानमय धर्मकार्य किया जाता है उसे 'पौंस्नवन' कहते हैं। इसके कारण समृद्धि तथा आयु पूर्ण होती है और रोगादि नहीं होते हैं ] ॥ ९ ॥**

**रात्रिमें सोते समय वह रानी स्वप्नमें बालचन्द्रमाको देखकर उठा लेती थी तथा**

मयेति । किं कृत्वा पूर्वं किल अनायासेन स्वमात्मीयमङ्कमुत्सङ्गं सोमं चन्द्रं आरोप्य निवेश्य । कथम्भूतं बालं शिशुम् । किं कृत्वा पुनः आदाय गृहीत्वा । निशि रात्रौ स्वप्नेन सुप्त्या कृत्वा वीक्ष्य आलोक्य । अत्र कर्तृकर्म-क्रियाणां तिसृणां सोममित्येकं कर्मसम्बन्धनीयम् इति ॥१०॥

**[1]तेषु ग्रहेषूच्चगतेषु तस्मिन् नक्षत्रयोगे सुषुवे कुमारम् ।**
**अवग्रहो यैरभवन्नभूमे येनापि नक्षत्रमुदीर्णमन्यत् ॥११॥**

तेष्विति—तेषु लोकप्रसिद्धेषु ग्रहेषु सूर्यादिषु उच्चगतेषु स्वस्वोच्चैः स्थानस्थितेषु सत्सु तस्मिन् लोकप्रसिद्धे नक्षत्रयोगे नक्षत्राणि अश्विन्यादीनि सप्तविंशतिर्योगाः विष्कुम्भादयः सप्तविंशतिः नक्षत्राणि योगाश्च [2]समाहारः । यथोक्ते नक्षत्रयोगे सा देवी कुमारं सुषुवे जनयति स्म । यैः ग्रहैः भूमेः पृथिव्याः अवग्रहः प्रतिबन्धः न अभवत् नाजनिष्ट । येनापि नक्षत्रयोगेन क्षत्रं क्षात्रो धर्मः अन्यत् शात्रवं न उदीर्णं न समुत्पन्नम् । समुच्चयालङ्कारः ।
अत्र पूर्वोक्तस्य यथोचितविहितस्य पुंसवनादिकर्मणः फलमुपदर्शितमिति भावः ॥११॥

**तस्मिन् सुते तत्क्षणजातमात्रे रत्नप्रदीपाः प्रभया विमुक्ताः ।**
**नित्यं [3]नरालम्बितभोगभागा नागा इवोच्चैः सविषादमस्थुः ॥१२॥**

तस्मिन्निति । रत्नप्रदीपाः प्रभया दीप्त्या विमुक्ताः परित्यक्ताः सन्तः उच्चैरतिशयेन अस्थुः तिष्ठन्ति स्म । कस्मिन् सति ? तस्मिन् लोकप्रसिद्धे सुते पुत्रे तत्क्षणजातमात्रे तत्समयोत्पन्नमात्रे उत्प्रेक्षार्थं प्रदर्श्यन्ते । के इवोत्प्रेक्षिताः । नागा इव यथा नागाः सर्पास्तिष्ठन्ति । कथम्भूताः नित्यं नरालम्बितभोगभागाः नित्यं नरे आलम्बितो भोगभागः फणाप्रदेशो यैस्ते तथा कथं सविषादं क्रियाविशेषणमिति उत्प्रेक्षा ॥१२॥

**नालं न्यधित्सद् भुवि यत्र नाभ्यं पदे पदे तत्र निधिं निचाय्य ।**
**रोमाञ्चितः कञ्चुकमन्यदेकं सकञ्चुकीपर्य्यधितेव हृष्टः ॥१३॥**

नालमिति—स (लोकप्रसिद्धः) कञ्चुकी सहवासिकः हृष्टः हर्षोत्कर्षं प्राप्तः सन् अन्यत् अपरं कञ्चुकं कूर्पासं पर्यधितेव परिदधाति स्मेव कथम्भूतः ? रोमाञ्चितः उद्धर्षितरोमा किं कृत्वा पदे पदे प्रतिपदं तत्र तस्यां भुवि निधिं निधानं निचाय्य आलोक्य कस्यां भुवि यत्र यस्यां नाभ्यं नालं न्यधित्सत् निधातुमैच्छत् । उत्प्रेक्षा ॥१३॥

**दिशः प्रसेदुर्विमलं नभोऽभूत् सौवं न्यपप्तत्कुसुमं नभस्तः ।**
**विरिद्धमिद्धं[4] दिवि दुन्दुभीनां किं भागधेये सति दुर्लभं वा ॥१४॥**

---

अपनी गोदमें बैठाकर कहती थी 'मैंने अठारहों श्रेणियोंके कल्याणकर्त्ता शान्त पुत्रको प्राप्त किया है ।' इससे सेवामें लीन सखियोंके आनन्दका ठिकाना नहीं रहता था ॥१०॥

जिन ग्रहोंसे पृथ्वीपर उपसर्ग नहीं आता है उन सबके अपने-अपने उच्च स्थानपर रहनेपर तथा जिसके कारण विपरीत उद्धत क्षात्र ( शत्रु ) का उदय नहीं होता है ऐसे नक्षत्र तथा योगमें महारानीने राजपुत्रको जन्म दिया था ॥११॥

उस क्षणमें ही उत्पन्न उस राजपुत्रके सामने प्रसूतिगृहमें रखे रत्नोंके दीपक तेजहीन हो गये थे और मन्त्रवेत्ता मनुष्योंके द्वारा फणसे पकड़े गये सांपोंके समान सदाके लिए अत्यन्त उदास हो गये थे ॥१२॥

जिस स्थानपर कञ्चुकी सद्यःजात पुत्रकी नाभिके नालको गाड़ना चाहता था वहां पर पद-पदपर निधिको देखकर इतना हर्षित हुआ कि उसका रोम-रोम पुलकित हो गया था । मालूम होता था कि उसने एक और कञ्चुक (जामा) पहिन लिया है ॥१३॥

---

१. ग्रहेषु तेषूच्च—द० २. निरालम्बितभोगभागाः—प० १. निरालम्बितभोगभागाः नित्यं निरतिशयेनालम्बितोऽतिसंकोचितो भोगभागो यैः—प० । ३. ध्वनं प्रतिभाति ।

दिश इति–दिशः ( आशाः ) प्रसेदुः प्रसन्नाः बभूवुः । नभो गगनं ( विमलं ) निरभ्रमभूत् अजनि । सौवं दिविजं कुसुमं नभस्तो गगनात् न्यपतत् पपात । दिवि नभसि दुन्दुभीनां तूर्याणां विरिब्धं ध्वनितमिदं तारमत्र बभूवेति क्रियाध्याहार्या । वा अथवा–भागधेये भाग्ये सति किं दुर्लभं प्राणिनां स्यात् । अर्थान्तरन्यासः ॥१४॥

**आशीतिका वर्षवराः पुरन्ध्यः पञ्चाशदुत्तीर्णदशानिशान्ते ।**
**कुब्जाश्च पुत्रोत्सवमोहमन्त्रैरानर्तिषुः स्तोममिवाभिनीताः ॥१५॥**

आशीतिका इति–आशीतिकाः[1] अशीतिं वर्षाणामतिक्रान्ताः वर्षवराः वर्षैर्वरा अधिका इति निरुक्तेः अन्तःपुररक्षणे नियुक्ताः नपुंसकरूपा महत्तराः । पञ्चाशदुत्तीर्णदशाः पञ्चाशतं वर्षाणि उत्तीर्णा दशावस्था वयो यासां ताः पुरन्ध्यः कामिन्यः कुब्जाश्च अत्युन्नतपृष्ठवंशाः पुत्रोत्सवमोहमन्त्रैः कर्तृभिः स्तोभमावेशमभिनीता इव अभि समन्तात् प्रापिता इव निशान्तेऽन्तःपुरे आनर्तिषुः नृत्यं चक्रुरित्युत्प्रेक्षा ॥१५॥

**निवेदयद्भ्यः सुतजन्म राजा स राज्यचिह्नं सुतराज्यभाव्यम् ।**
**हित्वैतदेकं धृतवाननकिञ्चिद्देयं हि तुष्टैरपि नान्यदीयम् ॥१६॥**

निवेदयद्भ्य इति–स राजा दशरथः पाण्डुर्वा सुतजन्म पुत्रोत्पत्तिं निवेदयद्भ्यः कथयद्भ्यः न धृतवान् किञ्चित् वस्तु किं कृत्वा हित्वा परित्यज्य किं एतदेकं राज्यचिह्नं कथम्भूतं सुतराज्यभाव्यं सुतराज्योपलक्षणीयम् । हि स्फुटं अन्यदीयं वस्तु तुष्टैरपि आनन्दमन्दिरं प्रविष्टैरपि न देयं न दातव्यम् । उत्प्रेक्षार्थान्तरन्यासौ ॥१६॥

**अन्तःपुरे राजनि राजधान्यां देशेऽप्यसम्माय दिशामधीशान् ।**
**व्याप्यासनक्षोभकृदुत्सवोऽयमद्यापि विश्राम्यति न प्रजासु ॥१७॥**

अन्तःपुर इति–अयमुत्सवोऽद्यापि साम्प्रतमपि प्रजासु अष्टादशप्रकृतिषु विषये न विश्राम्यति न विश्रामं करोति । कथम्भूतः आसनक्षोभकृत् आसनस्य उपवेशनस्य क्षोभं सङ्कल्पं करोति सः । किं कृत्वा दिशामधीशान् व्याप्य । पुनः किं कृत्वा अन्तःपुरेऽवरोधे राजनि भूपे राजधान्यां मुख्यनगर्यां देशे मण्डले असम्माय अवकाशमलब्ध्वा । समुच्चयः ॥१७॥

**समं द्विषन्तः शुकसारिकाभिर्विपाशिता वल्गु शिशुं शशंसुः ।**
**निर्मोक्षमाणं सह धेनुकेन गृहे गृहे वात्सकमभ्यमुञ्चत् ॥१८॥**

---

पुत्र-जन्मके समय सब दिशाएँ स्वच्छ हो गयी थीं । आकाश मेघरहित अतएव निर्मल हो गया था । आकाशसे स्वर्गलोकके फूलोंकी वर्षा हो रही थी । वातावरणमें दुन्दुभियोंकी जोरकी ध्वनि व्याप्त हो गयी थी । शुभ भाग्य होनेपर संसारमें क्या दुर्लभ होता है ? १४॥

अस्सी वर्षसे भी अधिक वयके अन्तःपुरके नपुंसक प्रहरी, पचास वर्षसे भी अधिक वयकी रानीकी परिचारिकाएँ तथा कुबड़े, पुत्रजन्मके उत्सवरूपी वशीकरण मन्त्रके आवेशमें अन्तःपुरमें नाच रहे थे ॥१५॥

राजा दशरथ अथवा पाण्डुने पुत्रके जन्मकी सूचना देनेवालोंको इस प्रकार पुरस्कार दिया था कि उनके शरीरपर भावी राजा राजपुत्रके राज्यचिह्नको छोड़कर और कोई आभूषणादि न रह गये थे । क्योंकि महापुरुष परम प्रसन्न होनेपर भी दूसरोंकी वस्तु पुरस्कारमें नहीं देते हैं ॥१६॥

आसनको हिला देनेवाला पुत्रके जन्मका उत्सव रनवास, राजा, राजधानी तथा पूरे राज्यमें भी न समा सका था । अतएव समस्त दिक्पालों तक को व्याप्त करके यह आज भी समस्त जनतामें चालू ही है, रुका नहीं है ॥१७॥

---

१. काः अशीतिभूताः "तमधीष्टो भृतो भूतो वा" [ जै० ३।४।७६ ] इति ठञ् । वर्ष–प०, द० ।

सममिति—द्विषन्तः शत्रवः शुकसारिकाभिः समं सार्द्धं विपाशिताः विमोचिताः सन्तः वल्गु मधुरं यथा शिशुं बालं शशंसुः प्रशंसयामासुः। गृहे गृहे निर्मोक्ष्यमाणमात्मानं मोक्तुमिच्छन्तं वात्सकं तर्णकसमूहं नागरो जनः धैनुकेन गोसमूहेन सह सार्द्धमभ्यमुञ्चत् समन्तात् मुक्तवान्[१] ॥१८॥

**पुरोहितावर्तितजातकर्मा नीरञ्जितं रत्नमिवाकरस्थम्।**
**पुत्रः प्रकाशोऽयमभूत् क्रिया हि द्रव्यं निसृष्टद्युति संस्करोति ॥१९॥**

पुरोहितेति—पुरोहितेन पुरोधसा आवर्त्तितं जातकर्म यस्य स तथोक्तः सन् अयं पुत्रः तनयः प्रकाशहेतुत्वात् प्रकाशः तेजस्वी अभूत् अजनि। किमिव आकरस्थं खनिसमुत्पन्नं रत्नमिव मणिरिव कथम्भूतं नीरञ्जितमुत्तेजितम्। हि स्फुटं निसृष्टद्युति अविनष्टकान्ति द्रव्यं क्रिया कर्त्री संस्करोति विनयति। अर्थान्तरन्यासः ॥१९॥

**पूर्वं परं ज्योतिरुपार्च्य देवं स्थेयान् प्रकृत्या विशदो गरीयान्।**
**मनोऽभिरामोऽयमजातशत्रुरित्यर्थयुक्तं जुहुवे नृपेण ॥२०॥**

पूर्वमिति—नृपेण दशरथेन राज्ञा अर्थयुक्तं सार्थकमयं पुत्रः राम इति जुहुवे आहूतः। कथम्भूतः प्रकृत्या स्वभावेन स्थेयान् स्थिरः। किं कृत्वा परं ज्योतिर्देवं[२] [३]उपार्च्य अर्चयित्वा। कथम्भूतः रागः विशदः स्वच्छः स्वच्छाशयः कथं [४]मनोभिः मनसा पुनः कथम्भूतः गरीयान् गरिष्ठः पुनः अजातशत्रुः न जाताः शत्रवो यस्य सः अथवा यमात् मृत्योर्जातं मरणलक्षणं कर्म यत् तत् यमजं यमजं अतन्ति गच्छन्ति प्राप्नुवन्ति ये ते यमजाताः नन्द्यादिनेति सूत्रेणा प्रत्ययः इत्थम्भूताः शत्रवो यस्मात् सः। अथवा—यमाय यावजीवव्रताय जाताः शत्रवो यस्मिन्नुत्पन्ने सति स्वीयं स्वीयराज्यमपहाय पराभवभयात् वैरिणो व्रतिनो बभूवुरित्यर्थः।

भारतीयः—नृपेण पाण्डुना राज्ञा अर्थयुक्तमयं पुत्रः अजातशत्रुर्युधिष्ठिर इति जुहुवे आहूतः। कथम्भूतः मनोभिरामः कमनीयः अथवा आमः सार्द्रः कैः मनोभिः चित्तैः मनसः कौटिल्यरहितत्वात् बहुवचनमत्र। शेषं पूर्ववत्। श्लेषः ॥२०॥

---

शत्रुओंके साथ-साथ बन्धनसे मुक्त किये गये, तोता और मैना आदि अपनी मधुर ध्वनियोंसे नवजात राजपुत्रकी प्रशंसा करते थे। मुक्त करनेकी लोगोंका ऐसी धुन बँध गयी थी कि घर-घरसे गायोंके साथ बछड़े भी छोड़ दिये थे ॥१८॥

पुरोहितके द्वारा जन्मके संस्कार कर दिये जानेपर खानसे निकले किन्तु खरादपर चढ़ाकर चमकाये गये रत्नके समान यह राजपुत्र भी तेजस्वी दिखने लगा था। स्वभावसे कान्तिमान पदार्थको भी संस्कार अधिक कान्तिमान बना देते हैं ॥१९॥

अन्वय—नृपेण पूर्वं परं ज्योतिर्देवं उपार्च्य स्थेयान्, प्रकृत्या विशदो गरीयान् मनोभिः अजातशत्रुः अयम् अर्थयुक्तं रामः इति जुहुवे।

राजाने सबसे पहिले परम ज्ञानी भगवान्‌की सविधि पूजा करके पुत्रको सार्थक नाम रामसे पुकारा था क्योंकि यह वह राजपुत्र स्थिर, स्वभावसे निर्मल और गम्भीर था तथा मनसे भी कोई इसका शत्रु नहीं था। अथवा स्वभावसे स्थिर, मनसे स्वच्छ तथा गम्भीर और इसके शत्रु आजीवन व्रत (यम) लेकर चले गये थे अथवा यमलोक (मृत्यु) चले गये थे।

अन्वय—······मनोभिराम इति अर्थयुक्तं अजातशत्रुः जुहुवे······।

सर्वप्रथम केवलज्ञानी भगवान्‌की पूजा करके राजा पाण्डुने राजपुत्रको सार्थक नाम अजातशत्रु (युधिष्ठिर) से पुकारा था क्योंकि वह अत्यन्त दृढ़ भावसे निष्कपट, परम गम्भीर तथा सबके मनको मोह लेता था ॥२०॥

---

१. समुच्चयालङ्कारः—प०, द०। २. दैवं देवानामिदं दैवम्—प०, द०। ३. उपार्ज्य अर्जयित्वा—प०, द०। ४. अत्र राघवीयपक्षे टीकोक्तदिशा मनोभिः रामः इति छेदः। अत्र दृकोपदीर्घाप्रकृतिरूपः संधिदोषश्चिन्त्यः। भारतीयपक्षे तु मनोभिरामः मनोभिः आमः आर्द्रः इतिच्छेदो युक्त एव।

**दिनानि लब्ध्वा ववृधे शशीव कुब्जानवष्टभ्य विचक्रमे च।**
**किञ्चिद्बभाषे सवयोभिरल्पं यात्रां जनस्योपदिशन्निवासीत् ॥२१॥**

दिनानीति—दिनानि दिवसानि लब्ध्वा प्राप्य स पुत्रः ववृधे वृद्धिं गतवान्। क इव शशीव चन्द्र इव। विचक्रमे चरणाभ्यां चचाल। किं कृत्वा कुब्जान् अवष्टभ्य अवलम्ब्य। चकारोऽत्र समुच्चये। तेनायमर्थः। न केवलं विचक्रमे बभाषे च उक्तवान्। किं किञ्चित् अल्पम्। कथं सवयोभिर्मित्रैः सह साद्धं जनस्य लोकस्य यात्रां लोकस्थितिम् उपदिशन्निवासीत् बभूवेति। समुच्चयः ॥२१॥

**कपोलयोर्मूर्द्धनि पादयोस्तं निमीलिताक्षं नृपतिश्चुचुम्ब।**
**स्वस्य प्रियायाश्च सुतेऽवतीर्णमास्वादयन् स्नेहमिवैकरूपम् ॥२२॥**

कपोलयोरिति—निमीलिताक्षं संकुचितलोचनमिति क्रियाविशेषणम्। कपोलयोः गल्लयोः। मूर्द्धनि मस्तके। पादयोश्चरणयोः। एतेषु स्थानेषु तं पुत्रं नृपतिः राजा चुचुम्ब चुम्बितवान्। किं कुर्वन्निव सुतेऽवतीर्णं स्वस्यात्मनः प्रियायाश्च एकरूपं स्नेहमास्वादयन्निव। उत्प्रेक्षा ॥२२॥

**स प्राज्ञमाहाकुलशूरसङ्गं चकार पोतुः प्रथमं नरेन्द्रः।**
**पृक्तं नवं भाजनमत्र येन तद्गन्धरूपं हि भवत्यवश्यम् ॥२३॥**

स इति—स नरेन्द्रः नृपः प्रथमं पोतुः पुत्रस्य प्राज्ञमाहाकुलशूरसङ्गं प्राज्ञाः कुशाग्रबुद्धयः महाकुले जाता माहाकुलाः महान्वये जाताः सूर्यसोमादिवंशसमुद्भवाः शूरा वीरास्तेषां सङ्गं संसर्गं चकार कृतवान् हि यस्मात्कारणात् येन वस्तुना पृक्तं वासितं नवं भाजनममत्रमत्र लोकेऽवश्यं नियमेन तद्गन्धरूपं तद्गन्ध एव रूपं यस्य तादृशं भवति जायते। उक्तं च— "नवान्यमत्राणि शुभोऽशुभो वा वासोऽपि लग्नोऽनपहारभावम्। यान्येव तानीतरथा विधातुं शक्नोति नूनं न चतुर्मुखोऽपि॥" अर्थान्तरन्यासः ॥२३॥

**लिपिं स संख्यामपि वृत्तचौलः समाप्य वृत्तोपनयः क्रमेण।**
**ब्रह्माचरन् षोडशवर्षबद्धमादत्त विद्याः कृतवृद्धसेवः ॥२४॥**

लिपिमिति—स पुत्रः कृतवृद्धसेवः कृता वृद्धानां गुणवतां सेवा येन सः। विद्या आन्वीक्षिक्याद्याः आदत्त गृहीतवान्। किं कुर्वन् षोडशवर्षबद्धं (ब्रह्म) ब्रह्मचर्यमाचरन्। षोडशवर्षाणि यावदित्यर्थः। कथम्भूतः वृत्तोपनयः शिष्यत्वमुपनीयते येनासौ उपनयः मौञ्जीव्रतबन्ध इत्यर्थः। वृत्तो निष्पन्न उपनयो यस्य सः। क्रमेण इत्यस्यायमर्थः पूर्वं प्रथमं वृत्तचौलः वृत्तं चौलं चूलाकर्म यस्य सः पश्चाद्वृत्तोपनयः। किं कृत्वा समाप्य अभ्यस्य समाप्तिं नीत्वा। काम्? लिपिं पङ्क्त्या वर्णविन्यासं संख्यां गणितमपि चेति। समुच्चयः ॥२४॥

---

ज्यों-ज्यों दिन बीतते थे त्यों-त्यों राजपुत्र चन्द्रमाके समान बढ़ते जाते थे। कुबड़ोंको पकड़कर चलते भी थे तथा कुछ-कुछ बोलते थे। अपनी समान वयके लोगोंके साथ जब थोड़ा भी चलते थे तो ऐसा लगता था कि जनताको जीवनयात्राकी शिक्षा दे रहे हैं ॥२१॥

राजा दशरथ अथवा पाण्डु आँखें मूँदकर राम अथवा युधिष्ठिरके गालों, मस्तक अथवा पैरोंको चूमते थे। प्रतीत होता था कि अपने और पट्टरानीके मिले हुए और पुत्रमें उतरे स्नेहका स्वाद ही ले रहे हैं ॥२२॥

उन नरपतिने प्रारम्भसे ही अपने पुत्रको अत्यन्त बुद्धिमान्, उत्तम कुलमें उत्पन्न वीर पुरुषोंके साथ कर दिया था। क्योंकि नूतन पात्रमें जिस वस्तुका संसर्ग हो जाता है उसकी गन्ध निश्चयसे बनी रहती है ॥२३॥

पहिले चूड़ाकरण उसके बाद यज्ञोपवीत संस्कारको प्राप्त उस राजपुत्रने क्रमशः वर्णमाला तथा अंकगणितकी शिक्षाको प्राप्त करके सोलह वर्षकी वयतक ब्रह्मचर्यका पालन किया था और वृद्धजनोंकी सेवा करते हुए समस्त विद्याओंको सीखा था ॥२४॥

**आन्वीक्षिकीं शिष्टजनाद्यतिभ्यस्त्रयीं च वार्तामधिकारकृद्भ्यः ।**
**वक्तुः प्रयोक्तुश्च स दण्डनीतिं विदां मतः साधु विदाञ्चकार ॥२५॥**

आन्वीक्षिकीमिति—शिष्टजनादान्वीक्षिकीं यतिभ्यः मुनिभ्यस्त्रयीम् अधिकारकृद्भ्यः नियोगिभ्यः वार्ता वक्तुः प्रयोक्तुश्च दण्डनीतिं स पुत्रः विदाञ्चकार। कथं साधु यथा समीचीनम्। कथम्भूतः विदां विदुषां मतः इष्टः। "आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ। अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ॥" समुच्चयः ॥२५॥

**कृत्वा सपर्यां कुलदेवताभ्यो विधाय गोदानविधिं सुतस्य ।**
**सवृत्तविद्याभिजनानुरूपं स दारकर्मावनिपश्चकार ॥२६॥**

कृत्वेति—सः अवनिपः राजा सुतस्य दारकर्म विवाहं चकार कृतवान् कथम्भूतं (सवृत्तविद्याभिजनानुरूपं) सवृत्ते समानाचारे ये विद्याभिजने विद्याकुले तयोः अनुरूपं योग्यं विद्याऽत्र व्याकरणतर्कसिद्धान्तलक्षणा ज्ञेया। किं कृत्वा कुलदेवताभ्यः सपर्यां कृत्वा विधाय पुनः किं सुतस्य गोदानविधिं मौञ्जीव्रतमोक्षणं विधाय। समुच्चयः ॥२६॥

**सज्जानकीनाशमतेरपेता नवा वधू प्रेम निदर्श्य यूनः ।**
**विलासिका चित्तमसौ जहार किं कोऽपि तादृग् विषयेऽस्त्यसक्तः ॥२७॥**

सदिति—यूनः तारुण्यभराक्रान्तस्य रामस्य चित्तं हृदयमसौ वधूः जानकी सीता जहार हृतवती। कथम्भूता विलासिका विलासः नेत्रजो विकारः सोऽस्या अस्तीति विलासिका। कथम्भूता नवा तारुण्यवती। पुनः नाशमतेरपेता निर्गता। न वियोगविषयेत्यर्थः। कि कृत्वा ? निदर्श्य प्रकाश्य। किम् ? प्रेम स्नेहम्। कथम्भूतम् ? सत् समीचीनम्। कृतकोपचाररहितमित्यर्थः। उक्तञ्च—

"यत्रावकाशलेशोऽस्ति नोपचारविचारयोः।
तद्ध्यानं प्रेम वाऽक्षोषदुःखभियोगिभोगिनोरिति॥"

अर्थान्तरन्यासमाह—किं कोऽपि तादृक्रामसदृशोऽप्यस्ति यो नाम विषये इष्टलग्नवनिताचन्दनादौ असक्तः। अत्र तात्पर्यम्—यथा रामो विषयासक्तस्तथा नान्यः कश्चिदस्तीति भावः।

भारतीयपक्षः—यूनः युधिष्ठिरस्य चित्तमसौ वधूर्न जहार न हृतवती ? कथम्भूता विलासिका विलासिनी पुनः नवा तरुणी उद्भिन्नपीनघनस्तनमण्डला। पुनः कीनाशमतेः कीनाशस्य कृपणस्य मतिरिव मतिः क्रूरबुद्धिरित्यर्थः। अथवा कीनाशा दीना चासौ मतिश्च। उक्तञ्च—"कीनाशः कृपणो लुब्धो दीनो गृध्नुश्च मर्दनः"।

---

**अपने-अपने विषयके प्रतिष्ठित विद्वानोंको प्रिय राजपुत्रने सिद्धपुरुषोंसे आत्मविद्याकी शिक्षा ग्रहण की थी, ऋषियोंसे धर्म-अधर्मका ज्ञान प्राप्त किया था, अधिकारियोंसे लाभ-हानि शास्त्रको पढ़ा था तथा न्यायाधीश और शासकोंसे न्याय-अन्यायकी विवेचक दण्ड-नीतिको समझा था ॥२५॥**

**महाराज दशरथ अथवा पाण्डुने अपने कुलके आराध्य देवताओंकी सविधि पूजा करके राजपुत्रके ब्रह्मचर्य-आश्रम समाप्तिका संस्कार किया था। ततः अपने समान आचार-विचार, शिक्षा दीक्षा तथा कुलीनतासे युक्त स्थानपर उसका विवाह कर दिया था ॥२६॥**

**अन्वय—नाशमतेरपेता, विलासिका, असौ नवा वधू सज्जानकी प्रेम निदर्श्य यूनः चित्तं जहार। किं कोऽपि तादृग्विषये असक्तः अस्ति ?**

**वियोगकी कल्पनासे भी दूर, कटाक्षोंसे प्रीति बरसानेवाली इस नववधू गुणवती जानकीने अपने प्रगाढ प्रेमके आचरणसे युवक रामके चित्तको वशमें कर लिया था। संसार में कौन ऐसा है जो ऐसे विषयमें अनासक्त रह सके।**

तस्या अपेता। पुनः कथम्भूता सज्जा प्रगुणा वा सतः सत्पुरुषाज्जाता सज्जा कुलीना। किं कृत्वा? निदर्श्य किं प्रेम। अर्थान्तरमुपन्यस्यते किं कोऽपि तादृग् यथा युधिष्ठिरोऽस्ति यो नाम विषयेऽसक्तः। अत्र तात्पर्यम्—यथा विषयेऽसक्तो युधिष्ठिरस्तथा नान्यः कश्चिदस्तीति ॥२७॥

**भीमः क्रमात् वर्महरः किरीटी प्रांशुर्विशालः ककुदुन्नतांसः।**
**अभूद्वृषस्कन्धधरो महेच्छः स वर्तितो वर्तिकयेव धात्रा ॥२८॥**

भीम इति—[1]स रामः क्रमात् परिपाट्या भीमः भयानकोऽभूत् अजनि। कथम्भूतः? वर्महरः कवचोद्वहनसमर्थः। किरीटी मुकुटवान्। प्रांशुः उच्चैस्तरः। विशालः विस्तीर्णः। पुनः (ककुदुन्नतांसः) ककुदिव वृषस्कन्धोर्ध्वग्रन्थिरिव उन्नतौ अंसौ स्कन्धौ यस्य सः तथोक्तः। वृषस्कन्धधरः वृषस्येव वृषभस्येव स्कन्धधरा ग्रीवा यस्य सः। अत्र ग्रीवायाः स्थूलत्वं प्रतिपादितम्। महेच्छः महत्सु सत्पुरुषेषु इच्छा वाञ्छा यस्य सः। एतैर्विशेषणैर्युक्तः सन् उत्प्रेक्ष्यते। धात्रा चतुर्मुखेण कर्त्रा वार्तिकया चित्रलेखन्या कृत्वा वर्तित इवेति।

भारतीयः—क्रमात् आनन्तर्येण युधिष्ठिरानन्तरमित्यर्थः भीमः वृकोदरः अभूत्। कथम्भूतः वर्महरः। ततश्च किरीटी अर्जुनः। कथम्भूतः महेच्छः महती इच्छा यस्यासौ महेच्छः वा महे उत्सवे सति अच्छः अविकलहृदय[2] इति। शेषः प्राग्वत्। उत्प्रेक्षा ॥२८॥

**ततः सुमित्रोदयहेतुभूतामद्र्युन्नतिं प्राप्तमसूत सूनुम्।**
**योऽपप्रथत् सन्नकुलोदितारिः श्रीलक्ष्मणाख्यां सहदेवचर्यः ॥२९॥**

तत इति—ततः रामोत्पत्त्यनन्तरं[3] सुमित्रा राज्ञी तं सूनुं पुत्रमसूत जनितवती। कथम्भूतं अद्र्युन्नति प्राप्तं पर्वतस्योच्चतां गतम्। कथम्भूतामुदयहेतुभूतां विभवकारणभूताम् यः श्रीलक्ष्मणाख्यामपप्रथत् प्रकटितवान्। कथम्भूतः सन्नकुलोदितारिः सन्ना हताः कुलोदिताः अन्वये प्रसिद्धाः अरयो येन सः पुनः सहदेवचर्यः सह सार्द्धं देवानामिव चर्यया गत्या वर्त्तमानः। अर्द्धचक्रधरत्वाद्देवैः परिवारित इत्यर्थः।

अन्वय—दीनाशमतेरपेता, सज्जा, विलासिका, नवा असौ वधू प्रेम निदर्श्य यूनः चित्तं न जहार? किं कोऽपि तादृग्विषये असक्तः अस्ति?

दीन वृत्तिसे अछूती, गुणोंसे भूषित, विलासोंमें चतुर, यौवनके प्रारम्भमें वर्तमान, इस वधूने अपने प्रकृष्ट प्रेमके प्रदर्शन-द्वारा युधिष्ठिरके चित्तका हरण नहीं किया था? [अर्थात् किया ही था] उसके समान वयका कौन ऐसा है जो विषय-भोगमें उदासीन हो ॥२७॥

रामचन्द्रकी पीठपर, उन्नत, पुष्ट, ककुदके समान कन्धोंयुक्त तथा धर्मकी धुराको धारण करनेवाला कवचधारी, मुकुटविभूषित, प्रखर तेजस्वी और महत्त्वाकांक्षी उस भरतका जन्म हुआ था जो विधाताकी कूँचीसे चित्रित समान लगता था।

युधिष्ठिरके बाद कवचको भी तोड़ देनेवाले भीम और लम्बे चौड़े अर्जुन हुए थे। इनके उठे विशाल कन्धे थे तथा बैलके समान बलिष्ट ग्रीवा थी। सज्जन-समागमके प्रेमी ये जगन्नियन्ताकी टाँकीसे गढ़े गये-से प्रतीत होते थे ॥२८॥

अन्वय—ततः सुमित्रा अद्र्युन्नतिं प्राप्तं सूनुम् असूत। सन्नकुलोदितारिः सहदेवचर्यः यः उदयहेतुभूताम् श्रीलक्ष्मणाख्यां अपप्रथत।

भरतके जन्मके बाद दशरथकी सुमित्रा महारानीने पर्वतके समान उत्सेध युक्त पुत्र-

1. स भरतः। यतो हि रामानन्तरं भरतस्यैव जन्म अभूत्। वृषस्कन्धधरां इत्यनेन तस्यैव संकेतः अग्रजस्य न्यासत्वेन राज्यस्य प्रतिपालनात् भरत एव धर्मधुराधारक इति। २. अनाविलहृदयः—प०, द०। ३. भरतोत्पत्त्यनन्तरं प्रतिभाति।

भारतीयः–ततः युधिष्ठिरभीमार्जुनोत्पत्तिव्यावर्णनान्तरं सुमित्रोदयहेतुभूता सुमित्राणां सुहृदामुदयहेतुभूता माद्री (मद्री) राज्ञी तं सूनुमसूत। कथम्भूतमुन्नतिं प्राप्तम्। यः नकुल इत्याख्यामपप्रथत् प्रकटीचकार। केन कृत्वा श्रीलक्ष्मणा श्रीश्च लक्ष्माणि लक्षणानि च अत्र समाहारापेक्षयैकत्वं श्रीलक्ष्म तेन श्रीलक्ष्मणा। पुनः सहदेवचर्यः सहदेवेन चर्या गमनं यस्य सः तथोक्तः सन्। पुनः अदितारिः अदिता भक्षिता अरयो येन सः कालकरालवदनार्पितशत्रुः। "अद भक्षणे" इत्यस्य धातोः प्रयोगः। यद्वा दिताः खण्डिताः अरयः शत्रवः येन स तथोक्तः। "दो अवखण्डने" इत्यस्य प्रयोगः। श्लेषः ॥२९॥

**राज्ञस्तथा सुप्रजसः कुलस्य सर्वस्य सोऽतीव जनस्य जातः।**
**शत्रुघ्ननामाऽभ्युदयैकहेतुः पुत्रं पुनानं हि कुलं निराहुः ॥३०॥**

राज्ञ इति–यथा रामलक्ष्मणौ[1] द्वौ पुत्रौ जातौ तथा राज्ञो दशरथस्य सुप्रजसः कामिन्याः स लोकप्रसिद्धः शत्रुघ्ननामा पुत्रो जातः। यत्तदोर्नित्यसम्बन्धात् यथेत्यध्याहार्यमत्र। काकाक्षिगोलकन्यायेन जात इति क्रिया पूर्वपरसम्बन्धपदपरामर्शिनी। तेनायमर्थः–यः अतीव अतिशयेन अभ्युदयैकहेतुः जातः। कस्य कुलस्य वंशस्य सर्वस्य जनस्य च। इदानीमर्थान्तरन्यासः। हि स्फुटं कुलं पुनानं पुत्रं निराहुर्वदन्त्याचार्याः।

भारतीयः–स नकुलः[2] शत्रुघ्ननामा शत्रून् हतवत् शत्रुघ्नं नाम यस्यासौ शत्रुघ्ननामा भूत्वा सुप्रजसः शोभना प्रजा यस्यासौ सुप्रजाः तस्य "प्रजाय्सेधादस्" [जै० सू० ४।२।१२४] पाण्डो राज्ञः सम्बन्धित्वेन कुलस्य तथा तेन प्रकारेण सर्वस्य समस्तस्य जनस्य अतीव अभ्युदयैकहेतुर्जातः। अर्थान्तरं न्यस्यति कुलं पुनानं हि स्फुटं पुत्रं निराहुः। उक्तञ्च–

> "पुष्णाति धर्मं हि कुलक्रमेण समागतं यः कृपया प्रपूतम्।
> कुलं पुनीते जनकस्य कीर्त्या पुत्रं पवित्रं प्रवदन्ति शिष्टाः" ॥१॥

अर्थान्तरन्यासः ॥३०॥

---

को जन्म दिया था। पीढ़ियोंसे ख्यात अपने वंशके शत्रुओंका संहारक तथा देवताओंसे अनुगत उस राजपुत्रने अभ्युदयकी प्रेरक श्रीलक्ष्मण संज्ञाको धारण किया था।

अन्वय–ततः सुमित्रोदयहेतुभूता मद्री उन्नतिं प्राप्तं सूनुम् असूत। अदितारिः सन् यः सहदेवचर्यः नकुलः श्रीलक्ष्मणाख्यां अपप्रथत्।

भीम-अर्जुनके जन्मके बाद शिष्ट बन्धु-बान्धवोंके उत्कर्षकी सहायक महारानी मद्रीने परम विकासको प्राप्त पुत्रको जन्म दिया था। शत्रुओंके मान-मर्दक होकर भी 'सहदेव' से अनुगत इस नकुल पाण्डुपुत्रने अपने नामको लक्ष्मी और सल्लक्षणोंके लिए प्रसिद्ध किया था ॥२९॥

अन्वय–तथा राज्ञः सुप्रजसः कुलस्य सर्वस्य जनस्य अतीव अभ्युदयैकहेतुः सः शत्रुघ्ननामा जातः। हि कुलं पुनानं पुत्रं निराहुः।

जैसे दशरथ राजाके भरतादि हुए थे वैसे ही सुमित्रा महारानीसे अपने वंश तथा समस्त जनताके अत्यन्त उत्कर्षका साधक वह शत्रुघ्न नामका पुत्र हुआ था। ठीक है, कुलको पवित्र करनेवालेको ही वास्तविक पुत्र कहते हैं।

अन्वय–राज्ञः सुप्रजसः तथा जातः शत्रुघ्ननामा सः कुलस्य सर्वस्य जनस्य अभ्युदयैकहेतुः।

महाराज पाण्डुकी मद्री महारानीसे पूर्वोक्त प्रकारसे उत्पन्न शत्रुओंके विनाशके कारक ख्यात वह सहदेव अपने वंश तथा समस्त जनताकी उन्नतिका प्रधान कारण था। निश्चयसे पुत्र वही है जो वंशको पवित्र करे ॥३०॥

---

१. रामभरतलक्ष्मणाः त्रयः पुत्राः जाता इति चिन्त्यम्। २. स सहदेवः नकुलसहचर इति।

**सर्वः कुमारः सुकुमारमूर्तिः सोष्णीषमूर्द्धोन्नतिरौर्णिकीभ्रूः ।**
**आलिङ्गितश्रीकरकङ्कणाङ्कमार्गादिवावर्तितकण्ठरेखः ॥३१॥**

ललङ्घे इत्यनया क्रियया वृत्तत्रयेण सम्बन्धं दर्शयति—सर्व इति । सर्वः समस्तः कुमारः सुकुमारमूर्त्तिः सुकुमारा मूर्तिर्यस्य सः सोष्णीषमूर्धोन्नतिः उष्णीषः ब्रह्मद्वारस्थोच्चप्रदेशग्रन्थिलक्षणविशेषः सहोष्णीषेण मूर्द्धोन्नतिर्यस्य सः पुनः और्णिकीभ्रूः ऊर्णायां नियुक्तः "तत्र नियुक्तः" [जै० सू० ३।३।११६] इति ठण् और्णिकी । और्णिक्यौ सूक्ष्मरोमबहुले भ्रुवौ यस्य सः और्णिकी भ्रूः "न वृहत्कोकः" [जै० सू० ४।३।१४९] इति पुंवद्भावनिषेधः । आवर्तितकण्टरेखः आवर्तिताः कण्ठरेखा यस्य सः । कस्मादिव आलिङ्गितश्रीकरकङ्कणाङ्कमार्गात् आलिङ्गिता चासौ श्रीश्च लक्ष्मीः शोभा वा तस्याः करकङ्कणस्य अङ्कं चिह्नं यत्र स चासौ मार्गः । तस्मादिव उत्प्रेक्षा ॥३१॥

**ऊर्जस्वलः पर्वतभित्तिवक्षा निगूढजानुद्वयलम्बबाहुः ।**
**गम्भीरनाभिः सबृहन्नितम्बः श्रीगोपुरस्तम्भनिभायतोरुः ॥३२॥**

ऊर्जस्वल इति—स सर्वः कुमारः ऊर्जस्वलः बलवान् । पर्वतभित्तिवक्षाः विस्तीर्णोच्चभूधरसदृशोरस्क इत्यर्थः । निगूढं जानुद्वयं यस्य सः लम्बौ बाहू यस्य सः निगूढजानुद्वयश्चासौ लम्बबाहुश्च निगूढजानुद्वयलम्बबाहुः अव्यक्तसुबद्धजानुद्वितयदीर्घतरभुज इत्यर्थः । गम्भीरा नाभिस्तुन्दिर्यस्य सः । सबृहन्नितम्बः सह बृहन्नितम्बेन वर्त्तत इति । तथा श्रीगोपुरस्तम्भेन निभे तुल्ये आयते दीर्घे ऊरू जङ्घे यस्य सः तथोक्तः । उपमा ॥३२॥

**चतुर्दशद्वन्द्वसमानदेहः सर्वेषु शास्त्रेषु कृतावतारः ।**
**गुणाधिकः प्रश्रयभङ्गभीरुः पितुः कथञ्चिद्गुरुतां ललङ्घे ॥३३॥**

चतुर्दशेति—पुनः कीदृशः चतुर्दशद्वन्द्वसमानदेहः चतुर्दशद्वन्द्वेन समानो न्यूनाधिक्यरहितो देहः शरीरं यस्य सः । भ्रूलोचननासाकपोलकर्णोष्ठस्कन्धबाहुपाणिस्तनपार्श्वोरुजङ्घापादाः एतेषां चतुर्दशानां द्वन्द्वं तेन । पुनः कृतावतारः कृतोऽवतारो येन सः विहिताभ्यासः । केषु सर्वेषु शास्त्रेषु । गुणाधिकः गुणपरिपूर्णः । प्रश्रयभङ्गभीरुः विनयनाशभीरुकः । इत्थम्भूतः सन् पितुः जनकस्य कथञ्चित् केनापि प्रकारेण गुरुतां गौरवं ललङ्घे लङ्घितवान् इति । अन्त्यदीपकम् ॥३३॥

**तत्याज पुत्रो विनयं कथञ्चिज्जहौ पिता नानुनयं कदाचित् ।**
**यतः पिता पुत्रमनन्यदाशं कस्यापि नाभूदपरुद्धवृत्तम् ॥३४॥**

तत्याजेति—यतः यस्मात् कारणात् कश्चित् रामादिकः युधिष्ठिरादिको वा पुत्रः स्वपितरि विनयं न तत्याज नात्याक्षीत् तथा पिता च स्वपुत्रेषु अनुनयं प्रसादं कदाचित् काले न जहौ न त्यक्तवान् । तस्मात्

---

सभी राजपुत्रोंकी काया सुकुमार थी, मुकुट बाँधनेसे शिर उन्नत थे, भ्रकुटियोंमें ऊर्णा थी, गलेमें सब ओर गोल रेखाएँ थीं जो गलेमें आलिंगन करती हुई लक्ष्मीके हाथके कंकणके निशानकी रेखाओंके समान लगती थीं ॥३१॥

वे सबके सब बलवान् थे, पर्वतके पार्श्वके समान विशाल और उभरी छाती थी, खूब पुष्ट अतएव आवृत जानुओं-पर्यन्त लम्बी भुजाएँ थीं । नाभि गहरी थी, पौंद बड़े और पुष्ट थे तथा प्रवेश-द्वारके स्तम्भोंके समान विशाल जंघाएँ थीं ॥३२॥

उनके शरीरके भ्रू , नेत्र, नासिका आदि चौदहों अंग एक सदृश थे, समस्त शास्त्रोंका इन्होंने गम्भीर अध्ययन किया था, अधिकतम गुणोंसे भूषित थे तथा शिष्टताके अतिक्रमणसे सदैव डरते थे । अतएव अपने गुणोंके कारण इन्होंने पिताकी गुरुताको भी मात कर दिया था ॥३३॥

पुत्रोंने रंचमात्र भी विनयको नहीं छोड़ा था तथा पिताने कभी भी इनपर स्नेहकी

कारणात् पितापुत्रं पिता च पुत्रश्च समाहारापेक्षयैकत्वम्[1]। अनन्यदाशं सत् न विद्यतेऽन्यस्मिन् आशा वाञ्छा यस्य तत्तथोक्तं सत् अपरुद्धवृत्तं लौकिकव्यवहारनिन्द्याचरणं नाभूत् न जातम्। कस्य? कस्यापि। कस्याप्यत्र सामान्योक्तौ सत्यामव्ययानामनेकार्थत्वात्। अपिशब्देन परस्परार्थो गम्यते। तेनायमर्थः। पितुः पुत्रादपरुद्धवृत्तं नाभूत् पुत्रस्य पितुः सकाशादिति। निश्चयालङ्कारः ॥३४॥

**तं द्रोणसंशब्दनमादधानं गुरुं प्रणम्यादित चापविद्याम्।**
**राजन्यकं तां विजहौ विरुद्धां ग्राह्यश्च हेयश्च भवेद् गुरुभ्यः ॥३५॥**

तमिति—तं लोकप्रसिद्धं गुरुं दशरथं प्रणम्य नमस्कृत्य राजन्यकं राज्ञः अपत्यानि राजन्याः राजपुत्राः रामादयस्तेषां समूहः राजन्यकं कर्तृ चापविद्यां धनुर्विद्यामादित गृहीतवान्। कथम्भूतं सत् द्रोणसंशब्दनं मेघध्वनिमादधानम्। विरुद्धाञ्च सम्यक्। विद्याविपरीता तां च अविद्यां विजहौ त्यजति स्म। अर्थान्तरन्यासमाह—गुरुभ्यः सकाशात् सम्यग्भूतं वस्तु ग्राह्यमादेयं भवेत्, असम्यग्भूतं हेयञ्चेति।

भारतीयः—राजन्यकं पाण्डुपुत्रसमूहः चापविद्यामादित स्वीकृतवान्। किं कृत्वा तं लोकप्रसिद्धं गुरुमाचार्यं प्रणम्य। कथम्भूतं द्रोणसंशब्दनं द्रोणसंज्ञामादधानं द्रोणाचार्यमित्यर्थः। अन्यत्प्राग्वत् ॥३५॥

**पदप्रयोगे निपुणं विनामे सन्धौ विसर्गे च कृतावधानम्।**
**सर्वेषु शास्त्रेषु जितश्रमं तच्चापेऽपि न व्याकरणं मुमोच ॥३६॥**

पदेति—तत् राजन्यकं चापेऽपि चापस्यायञ्चापः धनुरभ्यास इत्यर्थः तस्मिन्नपि, व्याकरणं शब्दशास्त्रं न मुमोच न मुञ्चति स्म। कीदृशं सत् पदप्रयोगे चरणविन्यासे (सुप्तिङन्तरूपपदरचनायां) निपुणं दक्षम्। पुनः विनामे षत्वणत्वयोः संज्ञायां कृतावधानम्। सन्धौ प्रसृतानां वर्णानामेकत्रीकरणे विसर्गे विसृज्यते प्रकटीक्रियते कारकसंश्लिष्टोऽर्थो येन स विसर्गस्तस्मिंश्च कृतावधानम्। पुनः सर्वेषु शास्त्रेषु समासकृत्तद्धितादिषु जितश्रमं विहिताभ्यासमित्यर्थः। श्लेषपक्षे कथम्भूतं राजन्यकं पदप्रयोगे वै शाखालीढ-प्रत्यालीढलक्षणोपलक्षितानि पदानि तेषां प्रयोगः स्थापनभेदः तत्र निपुणम्। विनामे नम्रीकरणे सन्धौ शरसन्धाने विसर्गे शरमोक्षणे कृतावधानम्। सर्वेषु शास्त्रेषु राजीव्यधापत्रच्छेदादिविचित्रेषु जितश्रममिति। अत्र राजन्यकस्य व्याकरणपरिज्ञानपूर्वकत्वेन धनुर्विद्यापरिज्ञानमुपदर्शितम्। श्लेषालङ्कारः ॥३६॥

**उत्प्रेक्षणे लक्ष्यविधौ च दक्षं धर्मे नदीष्णं पटु शब्दभेदे।**
**निष्णातमुच्चै रचनासु चैतच्चापेऽपि तत्याज न काव्यकर्म ॥३७॥**

---

कभी नहीं की थी। अतएव पिता या पुत्रने कभी भी अपने आचरणकी मर्यादाका लोप नहीं किया था क्योंकि पुत्र तथा पिता दोनों परस्परमें एक दूसरेसे निरपेक्ष थे ॥३४॥

मेघ-गर्जनाके समान गम्भीर ध्वनिसे बोलनेवाले राम आदि राजपुत्रोंने अपने गुरु तथा पिताको प्रणाम करके धनुष विद्याको सीखा था। तथा लोकविरुद्ध कुविद्याओंको छोड़ दिया था। गुरुजनोंकी साक्षी पूर्वक ही सीखना और छोड़ना उचित होता है।

समीचीन द्रोण नामके धारक गुरुदेव ( द्रोणाचार्य ) को प्रणाम करके युधिष्ठिरादि पाँचों पाण्डवोंने शस्त्र-विद्याको सीखा था। तथा अविद्याओंका त्याग किया था—गुरुसे प्रशस्त ग्राह्य और अप्रशस्त त्याज्य होते हैं ॥३५॥

पैर जमानेमें कुशल, धनुष खींचने, लक्ष्य बाँधने तथा बाण मोचनेमें अत्यन्त सावधान तथा समस्त शस्त्रोंका अभ्यास करके भी न थकनेवाले वे राजपुत्र धनुष-विद्याके अभ्यासके समय भीव्याकरणका परित्याग नहीं करते थे।

शब्द और धातुरूपोंके प्रयोगमें निपुण, षत्व-णत्वकरण, सन्धि तथा विसर्ग करनेमें न चूकनेवाले तथा समस्त शास्त्रोंके परिश्रमपूर्वक अध्येता वैयाकरण भी व्याकरणके अध्ययनके समान चापविद्याको बना देते हैं ॥३६॥

---

१. -कत्वम्। "ऋतो विद्यायोनिसम्बन्धात्" [जै० ४।३।१३१] अम-प०, द०।

उत्प्रेक्षण इति—एतद्राजन्यकं चापेऽपि धनुरभ्यासेऽपि काव्यकर्म न तत्याज न मुञ्चति स्म। कथम्भूतं राजन्यकम्? उत्प्रेक्षणे उत्प्रेक्षाऽलङ्कारे लक्ष्यविधौ अर्थनिरूपणायाञ्च दक्षम्। पुनः नदीणं प्रवीणम्। क नर्मे अष्टादशस्थलव्यावर्णनलक्षणे अथवा धर्मस्योपलक्षणत्वादर्थकामयोर्ग्रहणम्। तेनायमर्थः—धर्मे धर्मार्थकामलक्षणे वर्गे। पुनः पटु। क? शब्दभेदे मातरिश्वेत्येवमादौ। पुनः उच्चै रचनासु खड्गचक्रलाङ्गलमुरजादिबन्धेषु निष्णातम्। श्लेषार्थोऽधुना प्रदर्श्यते—कीदृशं राजन्यकमुत्प्रेक्षणे दृढमुष्ट्योरवलोकने लक्ष्यविधौ च वेधे व्यधायाञ्च दक्षम्। धर्मे धनुर्गुणे (नदीणं) शब्दभेदे शब्दमेव लक्ष्यं कृत्वा शरमोक्षणं यत्र विधीयते स खलु शब्दभेदः तस्मिन् पटु। उच्चै रचनासु दण्डस्वस्तिकाहितुरगचक्रव्यूहादिषु सैन्यरचनासु निष्णातमिति। अत्र राजन्यकस्य काव्यविद्यापुरस्सरत्वेन धनुर्विद्यापरिज्ञानकौशल्यमुपदर्शितम्[1] ॥३७॥

**आमण्डलीभूतशरासनस्य ज्याघातवित्रासितदिग्गजस्य।**
**त्रैलोक्यमालीढपदस्य मध्यमापत्य लीनं तदमंस्त रुष्टम् ॥३८॥**

आमण्डलीति—तत् राजन्यकं कर्तृ रुष्टं कुपितं सत् त्रैलोक्यं भुवनत्रयममंस्त मन्यते स्म। कथम्भूतं लीनमिव अभावेन परिणतं (इव)। किं कृत्वा आपत्य आगत्य किं मध्यं अन्तः कस्य संबन्धित्वेन? आलीढपदस्य आलीढस्थानविशेषस्य। कथम्भूतस्य आमण्डलीभूतशरासनस्य आ समन्तात् मण्डलीभूतं शरासनं धनुर्यस्य (यस्मिन्) तस्य। पुनः कथम्भूतस्य ज्याघातवित्रासितदिग्गजस्य ज्याघातेन प्रत्यञ्चाविस्फारणेन वित्रासिता भयं नीता दिग्गजाः आशाकरिणो येन (यस्मिन्) तस्य। उत्प्रेक्षा ॥३८॥

**एवं चूडाताडितपादं परभूपा भक्त्यै कैकेयंयमुपेयुः शरणं यम्।**
**सोऽभीतोऽयं तत्र समन्ताद् भरतोऽभूत्पुत्रः सर्वोपायविधानैर्जितशत्रुः ॥३९॥**

एवमिति—एवं [2]रामलक्ष्मणशत्रुघ्नोत्पत्तिप्रकारेण सः अयमभीतः निर्भयो भरतो नाम पुत्रः अभूत् [3]अजनि। क तत्र दशरथे नृपे। कथम्भूतः? जितशत्रुः जिताः शत्रवो येन सः। कैः कृत्वा? सर्वोपायविधानैः सामभेददण्डादिप्रयोगैः। कथं समन्तात् सामस्त्येन। यं कैकेयेयं कैकेयस्य नरपतेरपत्यं स्त्री कैकेयी कैकेय्या अपत्यं पुमान् कैकेयेयः कुमारः तं कैकेयेयं परभूपाः रिपवः शरणमुपेयुरागताः। कस्यै भक्त्यै सेवानिमित्तम्। कथं यथा भवति चूडाताडितपादं मुकुटाग्रमणिचुम्बितचरणम्।

---

**धनुष चलाने तथा लक्ष्यके भेदनमें प्रवीण, युद्धके धर्म (कर्त्तव्य-अकर्त्तव्य) में पारंगत, शब्दभेदी बाण-संचालनमें दक्ष, अहि-तुरग-चक्र आदि व्यूहोंकी रचनामें कुशल राजपुत्रोंने चापविद्यामें भी कवित्व ला दिया था।**

**उत्प्रेक्षादि अलंकार तथा अर्थप्ररूपणमें प्रवीण, धर्म पुरुषार्थमें सफल, शब्दालंकारोंके पण्डित तथा उत्तमसे उत्तम प्रबन्धकी रचनामें समर्थ कवि लोग भी काव्य-कर्तृत्वको धनुर्विद्याके समान कर देते हैं ॥३७॥**

**वे राजपुत्र धनुषको खींचकर गोल कर देते थे, उनके धनुषकी डोरीकी फटकारसे दिग्गज डर जाते थे और बलपूर्वक पैर जमा देनेपर तीनों लोक सिकुड़कर एक जगह समा जाते थे तथा इन्हें रुष्ट समझते थे ॥३८॥**

अन्वय—एवं तत्र सर्वोपायविधानैर्जितशत्रुः समन्ताद् भरतः अयं पुत्रः अभीतोऽभूत्। चूडाताडितपादं यं कैकेयेयं परभूपा भक्त्यै शरणं उपेयुः।

**इस प्रकारसे उन सब भाइयोंमें सामदानादि उपायों-द्वारा शत्रुओंका विजेता, सब प्रकारसे कान्तिमान यह भरत नामका पुत्र अभय हुआ था। राजमुकुटोंके ऊपर लात मारने वाले इस कैकेयीके पुत्रकी शरणमें शत्रु राजा भी भक्तिपूर्वक आते थे।**

---

१. श्लेषाऽलङ्कारः–प०, द०। २. रामादिसमस्तसुतानां शिक्षादिक्रमेणेति चिन्त्यम्। ३. मातुलादिपक्षस्य प्रबलतया सर्वेषु सुतेष्वधिकसमर्थ इति।

भारतीयः—एवं दिवसक्रमेण तत्र पाण्डुनृपे राज्यं कुर्वाणे सति स सर्वः पुत्रः पाण्डवः भरतः तत्परतया कृत्वा जितशत्रुरभूत्। कैः कृत्वा ? अपायविधानैः नीतिशास्त्रीयमार्गविपरीतक्रियाभिः। कथम्भूतः सन् ? अभीतः अभि समन्तात् इतः प्राप्तः सन्। कमयं भाग्यम् एकैके असह्या याः भूत्वा परभूपाः भक्त्या अंगुलिखण्डनया कृत्वा यं पाण्डुपुत्रं शरणमुपेयुः आयाताः। कथं यथा चूडाताडितपादं किरीटकोटिस्थमणिप्रघृष्टचलनं यथा। कथम्भूतं पाण्डुपुत्रमयेयं न यातुं शक्यमजेयमित्यर्थः। कथं समन्तात् सर्वप्रकारेणेति। श्लेषः ॥३९॥

**श्रिया विलोलो भरतो न जातः सुतो विनीतः सकलो बभूव।**
**भज्येत राज्यं ह्यविनीतपुत्रं घुणाहतं काष्ठमिव क्षणेन ॥४०॥**

श्रियेति—[1]भरतो नाम सुतः पुत्रः श्रिया विलोलः चञ्चलो न जातः। कीदृशः ? सकलः गणितादिकलासहितः। पुनः विनीतः विनयवान् बभूव। हि स्फुटम्, इव यथा घुणाहतं घुणभक्षितं काष्ठं क्षणेन मुहूर्तेन भज्येत भङ्गं व्रजेत् तथा अविनीतपुत्रं न विनीताः पुत्रा यत्र तत् राज्यं भङ्गं गच्छेत्।

[2]भारतीयः—सकलः समस्तः सुतः पाण्डुपुत्रः[3] श्रिया लक्ष्म्या आविलः युतः सन् लोभरतः कृपणो न जातः। तथा "द्रव्यं क्रिया विनयति" इति वचनात् विनीतः सुशिक्षितः बभूव। अर्थान्तरमुपन्यस्यति। सोपस्कराणि हि वाक्यानि भवन्त्यतः काक्वेदं व्याख्यायते। इव यथा घुणाहतं काष्ठं क्षणेन भज्येत तथा अविनीतपुत्रम्, अ इव नारायण इव विनीताः सुशिक्षिताः पुत्राः यत्र तदित्थं भूतं राज्यं कथ भङ्गं लभेत अपि तु नैव। यद्वा "अवयः शैलमेषार्काः" इति वचनात् अविना मेषेण नीयत इत्यविनीतोऽग्निस्तद्वत्तेजस्विनः पुत्रा यत्र तत्[4] ॥४०॥

**तस्मिन्काले लीलया धार्त्तराष्ट्रास्ते कौरव्या भासमानस्वरूपाः।**
**आलोकान्तक्रान्तकीर्त्तिप्रतापा न्याय्यस्थित्याऽपारपारा इवास्थुः ॥४१॥**

---

अन्वय–एवं तत्र अपायविधानैः समन्ताद् जितशत्रुः अयं अभि-इतः सः सर्वः भरतः अभूत्। चूडाताडितपादं अयेयं यम् एकैके परभूपाः भक्त्या शरणं उपेयुः।

नीतिशास्त्रके अनुसार प्रयत्नों-द्वारा सब तरफके शत्रुओंके विजेता, सब प्रकारसे सौभाग्यको प्राप्त वे सब पाण्डुपुत्र भरतवंशी ( तथा कान्तिमान ) हुए थे। उनके पैरोंपर राजमुकुट झुकते थे तथा उनपर कोई आक्रमण नहीं कर सकता था। अतएव असहाय शत्रु राजा भक्तिपूर्वक इनकी शरण लेते थे ॥३९॥

अन्वय–विनीतः सकलः श्रियाविलः सुतः बभूव लोभरतो न जातः। अविनीतपुत्रं राज्यं हि घुणाहतं काष्ठमिव क्षणेन भज्येत।

समस्त राजपुत्र विनम्र, विद्यावान तथा लक्ष्मीसे सुशोभित थे। किसीमें भी लुब्ध वृत्ति न थी। जिस राजाके पुत्रोंकी उपयुक्त शिक्षा-दीक्षा नहीं होती है वह राज्य घुनसे खाये काष्ठकी तरह क्षणभरमें टूट जाता है।

अन्वय–भरतः सुतः श्रिया विलोलो न जातः सकलः विनीतः बभूव। अविनीतपुत्रं राज्यं हि घुणाहतं काष्ठमिव क्षणेन भज्येत ?

भरतवंशी पाण्डुपुत्र लक्ष्मीके अहंकारसे चंचल न हुए थे। वे सब गणित आदि कलाओंसे युक्त थे तथा विनम्र थे। अवि ( मेष ) के द्वारा ले जायी जानेवाली ( नीत ) अग्निके समान तेजस्वी पुत्र जिस राज्यमें हों क्या वह घुनसे खायी लकड़ीके समान साधारण धक्केसे टूट सकता है ? अर्थात् नहीं ॥४०॥

---

१. भारतीयपक्षार्थोऽयम्। जातावेकवचनम्। भरतवंशोद्भव इति। २. राघवीयपक्षे इति। ३. रघुपुत्रः। ४. अर्थान्तरन्यासालङ्कारः–प०, द०।

तस्मिन्निति–तस्मिन्काले तारुण्यभरोदयसमये ते लोकप्रसिद्धाः रामादयः कौ पृथिव्यां न्याय्यस्थित्या कृत्वा अपारपारा इव समुद्रा यथा तथा अस्थुः तस्थिवांसः। कीदृशाः लील्या गतिविशेषेण कृत्वा धार्त्तराष्ट्राः "पशुधान्यहिरण्यसम्पदा राजत इति राष्ट्रम्" [नी० वा० १९।१] । धृतं राष्ट्रं यैस्ते धृतराष्ट्राः धृतराष्ट्रा एव धार्त्तराष्ट्राः "स्वार्थेऽण्"। पुनः कीदृशाः ? रव्याभासमानस्वरूपाः रविरिव सूर्य इव आभासमानं दीप्यमानं स्वरूपं मूर्त्तिर्येषां ते तथोक्ताः। पुनः आलोकान्तक्रान्तकीर्तिप्रतापाः आलोकान्तं त्रिभुवनमध्यं क्रान्तं व्याप्तं याभ्यां तौ आलोकान्तक्रान्तौ कीर्तिप्रतापौ येषां ते।

अथ भारतीयः–यस्मिन्काले प्राप्तोत्तरल्तारुण्यभरा पाण्डवाः सुखं सुखेन राज्यं कुर्वाणा अस्थुः, तस्मिन्काले ते लोकविख्याताः धार्तराष्ट्राः धृतराष्ट्रस्यापत्यानि पुमांसः धार्त्तराष्ट्राः कौरव्याः अपारपारा इव जलराशय इव न्याय्यस्थित्या कृत्वा अस्थुः स्थिताः। कीदृशाः भासमानस्वरूपाः दीप्यमानमूर्त्तयः। कया लील्या शोभया। पुनः आलोकान्तक्रान्तकीर्त्तिप्रतापाः त्रिभुवनमध्यक्रान्तयशोविक्रमाः ॥४१॥

**सर्वस्वादुर्योधनेनार्जयित्वा दत्वा पित्रे येन सम्पत् फलानाम् ।**
**पृक्तास्तेन ज्यायसा भ्रातरस्ते जग्मुर्लोकालम्बनस्तम्भमूर्तिम् ॥४२॥**

सर्वेति–तेन रामेण ज्यायसा गरिष्ठेन पृक्ताः युक्ताः सन्तः ते पूर्वोक्ता लक्ष्मणादयो भ्रातरो बान्धवाः लोकालम्बनस्तम्भमूर्तिं भुवनावष्टम्भनस्तम्भस्वभावं जग्मुः गताः। येन रामेण कर्तृभूतेन पित्रे दशरथाय फलानां सम्पत् दत्ता समर्पिता। किं कृत्वा ? पूर्वं योधनेन धनुर्युद्धेन करणभूतेन अर्जयित्वा उपार्ज्य। कथंभूता सम्पत् ? सर्वस्वादुः सर्वेषां स्वपरवंशोद्भवानां साधुवृत्तीनां स्वादुः सर्वस्वादुः विश्वरसिकेत्यर्थः।

भारतीयः–तेन पूर्वोक्तेन ज्यायसा गरीयसा युधिष्ठिरेण पित्रे पाण्डुनरेन्द्राय फलानां सम्पद्दत्ता। किं कृत्वा ? पूर्वं दुर्योधनेन गान्धारीपुत्रेण कृत्वा अर्जयित्वा। कथम्भूता सम्पत् ? सर्वस्वा सर्वं स्वं द्रव्यं यस्यां सा सर्वस्वा अथवा सर्वेषां बन्धुजनानां[1] स्वा आत्मीया या सा सर्वस्वेति। श्लेषालङ्कारः ॥४२॥

---

**अन्वय–तस्मिन् काले लीलया धार्तराष्ट्राः, रव्या भासमानस्वरूपाः आलोकान्तक्रान्तकीर्तिप्रतापाः ते न्याय्यस्थित्या कौ अपारपारा इव आस्थुः।**

**उस कच्ची अवस्थामें भी अनायास राष्ट्रके भारको सहनेवाले, सूर्यके समान देदीप्यमान कान्तिधारी तथा लोकके अन्त तक व्याप्त यश और प्रतापके स्वामी वे राघव राजपुत्र अपनी नीति-निपुणताके कारण पृथ्वीपर समुद्रके समान शोभित थे।**

**अन्वय–तस्मिन्काले भासमानस्वरूपाः आलोकान्तक्रान्तकीर्तिप्रतापा धार्तराष्ट्राः ते कौरव्याः लीलया न्याय्यस्थित्या अपारपाराः इव आस्थुः।**

**तेजस्वी पाण्डुपुत्रोंके समयमें ही कान्तिमान् शरीरधारी, संसार भरमें व्याप्त कीर्ति और यशके स्वामी, धृतराष्ट्रके पुत्र वे कौरव भी दैवसंयोगसे न्यायोचित मार्गपर चलनेके कारण समुद्रके समान विराजमान थे ॥ ४१ ॥**

**अन्वय–येन योधनेन अर्जयित्वा सर्वस्वादुः फलानाम् सम्पत् पित्रे दत्ता तेन ज्यायसा पृक्ताः ते भ्रातरः लोकालम्बनमूर्तिं जग्मुः।**

**जिस रामचन्द्रने युद्धके द्वारा अर्जित, सब प्रकारसे प्रिय, लौकिक भोगोंकी साधक सम्पत्ति पिताको दी थी। उस बड़े भाईसे युक्त उन भरत आदि भाइयोंकी स्थिति संसारके लिए शरणभूत थी।**

**अन्वय–येन दुर्योधनेन सर्वस्वा फलानाम् सम्पत् अर्जयित्वा पित्रे दत्ता तेन ज्यायसा संपृक्ताः ते भ्रातरः लोकालम्बनस्तम्भमूर्तिं जग्मुः ?**

**जिस दुर्योधनने समस्त ( पाण्डव तथा कौरवों ) कुटुम्बके लिए सुखोंको देनेवाली सम्पत्ति अपने अधीन करके पिता धृतराष्ट्रको समर्पित कर दी थी। ऐसे बड़े भाईसे प्रभावित शेष कौरव भाई संसारको सम्हालनेमें सार्थक मर्यादापुरुषपनेको क्या प्राप्त हुए थे ? ॥४२॥**

---

१. पाण्डवानामिति यावत्।

इति विनमयन्नुच्चैस्तब्धानतानतिवर्धय-
न्स परिणमयन्पृथ्वीं पुत्रैर्वसून्युपहारयन् ।
सुखमगमयत्कालं हर्म्ये स्मरन्परमेष्ठिनं
न हि सुतवतां नामासाध्यं धनञ्जयमिच्छताम् ॥४३॥

इति श्री द्विसन्धानकाव्ये कवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
राघव-कौरवोत्पत्तिर्नाम तृतीयः सर्गः ॥३॥

इतीति । स दशरथः पाण्डुश्च सुखं यथा सुखेन कालं समयमगमयत् नीतवान् । किं कुर्वाणः सन्नि-त्युक्तप्रकारेण पुत्रैः कृत्वा उच्चैस्तब्धान् रिपून् विनमयन् विशेषेण नम्रान् विदधन् तथा तेनैव प्रकारेण नतान् शत्रून् अतिवर्द्धयन् वृद्धिं प्रापयन् पृथ्वीं मेदिनीं परिणमयन् हस्ते कारयन् वसूनि द्रव्याण्युपहारयन्पुष्टिं प्रापयन् । पुनः किं कुर्वन् ? परमेष्ठिनं[1] परमपुरुषं स्मरन् स्मरणविषये नयन् , क हर्म्ये मन्दिरे, अर्थान्तरमाह—हि स्फुटं धनञ्जयञ्च इच्छतामभिलषतां सुतवतां पुत्रवतां नाम अहो नासाध्यं किमपीति[2] ॥४३॥

इति निरवद्यविद्यामण्डनमण्डितमण्डलीडितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य
गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिका-
चकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदीनामदधानायां टीकायां
द्विसंधानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
राघवकौरवोत्पत्तिवर्णनो नाम तृतीयः सर्गः ॥३॥

---

पुत्रोंके द्वारा अहंकारसे मदोन्मत्त शत्रुओंको झुकाते हुए, शरणागतोंको सब प्रकारसे बढ़ाते हुए तथा पृथ्वीको अपने वशमें करते हुए तथा पुत्रोंके द्वारा सम्पत्ति अर्जित कराते हुए महाराज दशरथ तथा पाण्डु अपने राजभवनोंमें अरिहन्तादि पंच परमेष्ठीका ध्यान करके आनन्दसे जीवन बिता रहे थे। धन और जयके इच्छुक पुत्रोंके पिताओंका संसारमें कुछ भी असाध्य नहीं है ॥ ४३ ॥

निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्र गुरुके
शिष्य देवनन्दिके शिष्य, सकलकलाकी चातुर्यचन्द्रिकाके चकोर नेमिचन्द्र-द्वारा
विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसंधान-
काव्यकी पदकौमुदी टीकामें राघव-पाण्डव उत्पत्ति वर्णन
नामका तृतीय सर्ग समाप्त ।

---

१. परमे सुरनरोरगेन्द्रपूजितपदे तिष्ठतीति परमेष्ठी तं परमेष्ठिनं–प०, द० । २. अर्थान्तरन्यासालङ्कारः–प०, द० ।

# चतुर्थः सर्गः

**अथ जातु न यौवनोदये सहवासाय ममायमस्मरत् ।**
**इति जातरुषेव भूपतेर्जरसाऽगृह्यत केशवल्लरी ॥ १ ॥**

अथेति—अथ राघवादिजन्मानन्तरं भूपतेः नरेन्द्रस्य केशवल्लरी कर्मतापन्ना जरसा वार्द्धक्येन कर्तृभूतेनागृह्यत गृहीता । कथम्भूतयेव ? जातरुषेव जातकोपयेव । कथमिति ? जातु कदाचित् यौवनोदये तारुण्योदयेऽयं दशरथः पाण्डुश्च सहवासाय एकत्र स्थितये नास्मरत् न स्मरति स्म । कस्य ? ममेति । उत्प्रेक्षालङ्कारः ॥ १ ॥

**प्रथमस्तनयोऽभिषिच्यतामिति सापत्न्यभयादिवाजपत् ।**
**पलितं तमुपेत्य कर्णयोर्निजगुप्तिप्रशमो हि वर्द्धिमा ॥ २ ॥**

प्रथम इति—पलितं सितकेशः कर्तृ तं दशरथं पाण्डुञ्चोपेत्य समीपमागत्य कर्णयोरजपदब्रवीत् । कथमिति प्रथमस्तनयः रामः युधिष्ठिरश्च कर्मतापन्नः अभिषिच्यताम् राज्ये स्थाप्यतामिति । कस्मादिव ( सापत्न्यभयादिव ) सपत्न्या अपत्यं सापत्नः तस्य भावः सापत्न्यं तस्माद्यद् भयं तस्मात्तथोक्तात् । हि स्फुटं ( निजगुप्तिप्रशमः ) निजावात्मीयौ गुप्तिप्रशमौ यस्य स निजगुप्तिप्रशमः तस्य वर्द्धिमा वृद्धभावः जायत इति ॥ २ ॥

**विनिरूप्य स दर्पणे जरां निभृतं मौलिमुपोपवीजयन् ।**
**इति निर्विविजे विशांपतिर्विरतिं याति हि संसृतेर्बुधः ॥ ३ ॥**

विनिरूप्येति—इति वक्ष्यमाणापेक्षया स पूर्वोक्तः विशांपतिः प्रजापतिः निर्विविजे निर्वेदं गतवान् । किं कुर्वन् ? मौलिं मस्तकं निभृतं सङ्कुचितं यथा [1]उपोपवीजयन् विधुन्वन् । किं कृत्वा ? पूर्वं दर्पणे आदर्शे जरां पलितं विनिरूप्यावलोक्य । अर्थान्तरमाह—हि स्फुटं संसृतेः संसाराद्बुधः आत्मदर्शी पुमान् विरतिं वैराग्यं यातीति ॥ ३ ॥

**किमभुक्तमनुष्ठितं जनैर्यदपूर्वं प्रतिपालयन्त्यमी ।**
**ननु भुक्तसमैव वेदना सुखनामा विषयेषु भाविषु ॥ ४ ॥**

किमिति—अमी जनाः यदपूर्वमदृष्टं प्रतिपालयन्ति प्रतीक्षन्ते ननु किं तदभुक्तमननुभूतं कर्मतापन्नं जनैः कर्तृभिरनुष्ठितमङ्गीकृतम् ? अपि तु भुक्तमेव । ननु च भाविनं वैषयिकं भोगं प्रति प्रतीक्षन्ते सङ्कल्पजन्मान्धचञ्चलमनोमृगा जन्तव इत्याकूतम् । नैष दोषः; तु पुनः भाविषु विषयेषु सुखमेव नाम यस्याः सा,

---

**इस राजा दशरथ अथवा पाण्डुने अपने यौवनमें कभी भी सहवासके लिए मेरा स्मरण तक नहीं किया था इस प्रकारसे कुपित वृद्धावस्थाने राजाके केशोंको पकड़ लिया था ॥१॥**

**मानो सौतेले भाइयोंके डरसे ही पलितमाने ( कानके सफेद बालोंने ) राजा दशरथ अथवा पाण्डुके कानके पास जाकर कहा था कि ज्येष्ठ पुत्रका राज्याभिषेक कर दीजिये । उचित ही है क्योंकि बुढ़ापेके सगे सम्बन्धी गुप्ति और प्रशम ही हैं ॥ २ ॥**

**दर्पणमें बुढ़ापेके चिह्नोंको देखकर राजाके मस्तकपर वलियाँ पड़ गयीं थी । ऐसे मस्तकको हिलाते हुए ही भूपतिको परम वैराग्य हो गया था । उचित ही है क्योंकि आत्मदर्शी ज्ञानियोंको संसारसे वैराग्य होता ही है ॥ ३ ॥**

**लोकोंने संसारमें किसका भोग नहीं किया है जो नूतन कर्मोंकी प्रतीक्षा करते हैं ।**

---

1. उपोपवाजयन्–प०, द० ।

सुखनामा, वेदना। विद्यते परिज्ञायते यतः मनोव्यापारेणेन्द्रियव्यापाराद्धवं सुखमनया सा वेदनाऽनुभवनमित्यर्थः। भुक्तसमा भुक्तं रमणीस्रक्चन्दनादिविषयलक्षणम्। भुक्तेन समा भुक्तसमा अनुभवनकालीनेत्यर्थः। अत्र तात्पर्यमिदम्। शीतबहुले शिशिरे तृणाग्निसंयोगसुखानुकारित्वाद्विषयाणामापातरम्यत्वमवसाने वैरस्यमुपदर्शितम् ॥ ४ ॥

**त्यजतो न जहाति योऽखिलान्विषयांस्तद्विषयैकमानसः।**
**स जहातु दुरन्तभावनामजहद्वृत्तिमिमां कथं जनः ॥ ५ ॥**

त्यजत इति–अखिलान् समस्तान् विषयान् इष्टस्रग्वनिताचन्दनादींस्त्यजतः सतः यो जनः न जहाति न परित्यजति। कथम्भूतः सन्? तद्विषयैकमानसः तेषाम् इन्द्रियाणां विषयेष्वेकमसाधारणं मानसं यस्य सः तादृशः सन् इमां दुरन्तभावनाम् दुःखेनान्तः पर्यन्तो येषां ते दुरन्ता रागादयस्तेषु या भावना मनःपरिणतिः सा तथोक्ता तामजहद्वृत्तिमजहती अपरित्यजन्ती वृत्तिः वर्त्तनं यस्यास्तां स जनः कथं जहातु अपि तु नेति ॥ ५ ॥

**क्षणभङ्गुरमङ्गमङ्गिनां न गता यौवनिका निवर्त्तते।**
**विभवास्तृणवारिचञ्चला निचया मर्मरपत्रसन्निभाः ॥ ६ ॥**

क्षणेति—अङ्गिना (प्राणिना) मङ्गं शरीरं क्षणभङ्गुरं क्षणदृष्टनष्टम्। गता नष्टा सती यौवनिका तरुणं वयः न निवर्त्तते न व्यावर्त्तते। विभवाः विभूतयः तृणवारिचञ्चलाः तृणजलतरलाः। निचया मात्रन्मित्रकलत्रपुत्रादयः मर्मरपत्रसन्निभाः शुष्कपत्रसदृशाः सन्ति। अत्र तात्पर्यम्। यथा तीव्रतरवाताहृतानि शुष्कपत्राणि यदृच्छया क्वापि क्वापि यान्ति तथा मित्रकलत्रादयोऽपीति[1] ॥ ६ ॥

**द्विषि मित्रमतिं हितप्रिये रिपुबुद्धिं जनयन्ति जन्तवः।**
**विपरीततया तनूभृतामिह तत्रापि दवीयसी मतिः ॥ ७ ॥**

द्विषीति–द्विषि अनन्तसंसारभ्रमणहेतुत्वात् कलत्रादौ शत्रौ मित्रमतिं सहायबुद्धिः हितप्रिये भवभवोद्भवानवरतानन्तदुःखपरम्पराविनाशहेतुत्वादनन्तानन्तनित्यसुखविधातृत्वादात्मकार्ये धर्मलक्षणे रिपुबुद्धिं प्रतिकूलमतिं जन्तवः प्राणिनः जनयन्ति कुर्वन्ति। कया कृत्वा? विपरीततया कमनीयकामिन्यादिबाह्यवस्तुनि परकीये आत्मीया बुद्धिः, आत्मस्वभावोपलब्धिनिमित्ते श्रेयसि आत्मीये परकीया बुद्धिश्चेति परिमाणविपर्ययेण कृत्वा। अर्थान्तरन्यासमाह–तनूभृतां शरीरवतामिह लोके अपि शब्दप्रयोगात् परलोके च तत्र मित्रशत्रुपरिज्ञाने दवीयसी दूरतरा मतिर्बुद्धिरित्यर्थः[2] ॥ ७ ॥

---

**भविष्यत्के विषय-भोगोंमें भी सुख नामसे ख्यात वैसा ही अनुभव होगा जैसा कि भुक्त भोगोंमें था ॥ ४ ॥**

**संसारके विषयोंमें लुब्धचित्त जो व्यक्ति बिछुड़नेवाले समस्त भोगोपभोगोंको नहीं छोड़ता है वह व्यक्ति स्थिर-स्वभाव रूपको प्राप्त भोगोंकी अभिलाषाको कैसे छोड़ेगा? क्योंकि भावना तो बड़े परिश्रमसे छूटती है ॥ ५ ॥**

**देहधारियोंकी देह ही देखते-देखते क्षणभरमें नष्ट हो जाती है। यौवन बीत जानेपर फिर वापस नहीं आता है। घासकी नोकपर जमी ओसकी बूँदके समान सम्पत्ति चंचल और रमणीय है और पुत्र, कलत्र, आदि सगे सम्बन्धी सूखे पत्तोंके ढेरके समान एक झोंकेमें बिछुड़ जानेवाले हैं ॥ ६ ॥**

**संसारी प्राणी संसारके कारण अतएव शत्रुभूत भोगादिमें मित्रकी कल्पना करता है और कल्याणकारी अतएव प्रिय संयमादिको दुःख ( शत्रु ) मानता है। इस प्रकार विपरीत बुद्धि होनेके कारण देहधारीसे इस लोक अथवा परलोकमें भी सन्मति दूर ही रहती है ॥ ७ ॥**

---

१. उपमालङ्कारः–प०, द०। २. अर्थान्तरन्यासालङ्कारः–प०, द०।

**क्व नृपो भरतोऽमरार्चितो भुवनं येन बभूव भारतम् ।**
**क्षणिकाः सकलाः समागमाः कृतमेकं हि विवर्तते परम् ॥ ८ ॥**

क्वेति—येन भरतेन आदिनाथपुत्रेण भुवनं भारतं बभूव जातम्। स भरतः नृपः नरेन्द्रः अमरार्चितः देवपूजितः सन् क्व ? अत्रास्थिरत्वं भवभाजां सूचितम्। यथा सकलाः समस्ताः समागमाः बन्धुमित्रादयः क्षणिकाः जलबुद्‌बुदसदृशाः। एवञ्च सति हि स्फुटं कृतं विहितं परं केवलमेकं धर्मो(र्मं) विवर्त्तते परिणमति प्राणिनामिति ॥ ८ ॥

**हिममुष्णहतस्य यत्सुखं शिशिराभ्यर्दितचेतसोऽनलः ।**
**क्षणदुःखनिषेधकारणं न सुखं नित्यमुशन्ति योगिनः ॥ ९ ॥**

हिममिति—यत् यस्मात्कारणादुष्णहतस्य घर्मतप्तस्य हिमं सुखं जायते तथा शिशिराभ्यर्दितचेतसः तुहिनकदर्थितचित्तस्यानलः ज्वलनः सुखं भवितुमर्हति। तस्मात्कारणात् क्षणदुःखनिषेधकारणं मुहूर्त्तदुःख-निरासनिमित्तमिन्द्रियव्यापारोत्पन्नं सुखं न नित्यमुशन्ति मन्यन्ते योगिन इति ॥ ९ ॥

**यदपायि पयः सुतेन यद्विसुताभिः ससृजेऽश्रु मातृभिः ।**
**मधुरं लवणश्च किं द्वयं न पयः क्षारपयोधितोऽधिकम् ॥१०॥**

यदिति—सामान्योक्त्या व्याख्यायते यत् पयः क्षीरं कर्मतापन्नं सुतेन पुत्रेणापायि पीतं यदश्रु बाष्प-जलं मातृभिः ससृजे विसृष्टम्। कथम्भूताभिः ? विसुताभिः पुत्ररहिताभिः। तन्मधुरं लवणं च किं द्वयं किं नाधि-कमपि तु अधिकमेव, काभ्यां पयःक्षारपयोधितः क्षीरक्षारसमुद्राभ्याम्। अत्र मोहमाहात्म्यं प्रदर्शितम् ॥१०॥

**विगणय्य तदेवमंहसो विरिरंसन्नभिषेक्तुमग्रिमम् ।**
**इति तं व्यनयत्सुतं सतामृणनिश्चित्ततया स्वनिर्वृतिः ॥११॥**

विगणय्येति—इति वक्ष्यमाणापेक्षया तं पूर्वोक्तं सुतमग्रिमं रामं युधिष्ठिरञ्च दशरथः पाण्डुश्च व्यनयत् शासितवान्। किं कर्त्तुम् ? अभिषेक्तुं राज्यपट्टाभिषेकं कर्त्तुम्। किं कुर्वन् ? विरिरंसन् विरामं विधातु-मिच्छन्। कस्मात् ? अंहसः। किं कृत्वा ? पूर्वमेवमुक्तप्रकारेण तत्संसारवृत्तं विगणय्य हेयरूपतया विचार्य। अर्थान्तरमाह। सतां सत्पुरुषाणां स्वनिर्वृत्तिः सुखं स्यात्। कया ? ऋणनिश्चित्ततया ऋणात् निष्क्रान्तं चित्तं यस्य स ऋणनिश्चित्तः तस्य भावस्तया ॥११॥

**युगबद्धमिमं भरं भुवस्त्वमिहैको नृपपुङ्गवः परम् ।**
**धवलो वहसे ततोऽधुना न ममाज्ञामवमन्तुमर्हसि ॥१२॥**

---

जिसके नामपर इस देशका नाम भारत पड़ा वह देवोंसे पूज्य, आदिनाथका पुत्र राजा भरत कहाँ है ? संसारके समस्त सम्बन्ध तथा पदार्थ क्षणिक हैं। केवल अपना कर्म ही शेष रहता है ॥ ८ ॥

गर्मीसे सताये के लिए शीत सुखकर है। शीतसे थरथराये व्यक्तिके लिए अग्नि ही सुखद है अतएव एक क्षणभरके दुखके निषेधके कारण सुखको योगी लोग नित्य नहीं मानते हैं ॥९॥

पुत्रके द्वारा माताके स्तनसे जो दूध पिया जाता है तथा निपूती माताओंके द्वारा जो आँसू बहाये जाते हैं क्या ये दोनों ही क्रमशः मीठे और क्षार हैं ? वे क्षीरसागर तथा लवणसागरसे बड़े तो नहीं ही हैं। ( तथापि संसारी प्राणी इन्हें ही सबसे बड़ा सुख और दुःख मानता है ) ॥१०॥

इस प्रकार भावना करके राजा दशरथ अथवा पाण्डुने पापसे वैराग्य लेनेके लिए ज्येष्ठ पुत्र राम अथवा युधिष्ठिरको निम्न प्रकारसे उपदेश दिया था। सज्जनोंको दायित्वोंसे उऋण होनेपर ही आत्मशान्ति सुहाती है ॥११॥

युगेति—यस्मात्कारणात् इह लोके परं केवलं भुवः पृथिव्या इमं प्रत्यक्षीभूतं भरं भारं युगबद्ध-मेकोऽसहायः नृपपुङ्गवो नरेन्द्राग्रणीः भारवहनक्षमः धवलः सन् वहसे। ततस्तस्मात्। अधुनेदानीं ममाज्ञा-मादेशमवमन्तुमवज्ञातुं नार्हसि न योग्यो भवसीति ॥१२॥

**विजयाय जय स्वमादितो निजकर्म प्रकृतिं ततो रिपुम्।**
**गमिनः परलोकसाधनं तव मेऽपि स्थितिरीदृशी मता ॥१३॥**

विजयायेति—आदितः प्रथमतो विजयाय जयनिमित्तं स्वमात्मानं जय प्रशमय। ततः पश्चान्निजकर्म दिवसरात्रिविभागक्रियाम्। ततः प्रकृतिममात्यसप्तकम्। ततो रिपुं कामादिषट्कम् इत्येतत्सर्वं जयेति क्रियाया कर्म बोद्धव्यम्। ईदृशी स्थितिर्मता परलोकसाधनं शत्रुलोकसाधनं स्यात्। कस्य ? तव। कथम्भूतस्य तव ? गमिनो गन्तुमिच्छतः। तथाऽऽदितः विजयाय स्वमात्मानं जयामि। ततो निजकर्मप्रकृतिमात्मीयकर्मस्वभावम्। ततो रिपुं मोहनीयकर्मेत्येवमीदृशी स्थितिर्मता परलोकसाधनम्। कस्य ? मे ममापि। कथम्भूतस्य मम ? गमिनः गन्तुमुद्यतस्येति ॥१३॥

**विहिताखिलसत्त्वरक्षणं धृतसत्यस्थिति वीतमत्सरम्।**
**त्वमितोऽहमिवाभयैकवागसिधाराव्रतधर्ममाचर ॥१४॥**

विहितेति—इतोऽद्य प्रभृति हे पुत्र अभयैकवागभयैकवचनः सन् त्वमसिधाराव्रतधर्ममाचर। असिधारैव व्रतं यस्मिन्सोऽसिधाराव्रतः, स चासौ धर्मश्च तमसिधाराव्रतधर्मं वीरव्रतमित्यर्थः। कीदृशं विहि-ताऽखिलसत्त्वरक्षणं कृतसकलप्राणिपालनम्। कथं यथा भवति धृतसत्यस्थिति धृता सत्येन स्थितिर्यत्र आचरण-कर्मणि तद्यथा भवति धृतसत्यस्थिति धृतसत्यगुणावस्थमित्यर्थः। पुनरपि कथम्भूतम् ? वीतमत्सरं विशेषेण इतः प्राप्तः मत्सरोऽहङ्कारो येन स तं विशेषणप्राप्ता-हमहमिकम्। न हि मत्सरमन्तरेण वीरव्रतं सम्भवतीति वचनात्। उपमार्थः प्रदर्श्यते। अहमिव यथाऽहमभयैकवाक् आचरिष्यामि। किमसिधाराव्रतधर्मम्। व्रतं सर्वदर्शनसंमतं ब्रह्मचर्यम्। धर्मो जीवदया। व्रतञ्च धर्मश्च व्रतधर्मम्। अत्र समाहारापेक्षयैकवचनम्। असिधारेव व्रतधर्ममसि-धाराव्रतधर्मम् अत्र धर्त्तुं कर्त्तुमल्पसत्त्वैरशक्यत्वात् व्रतधर्मयोरतएव तौ खड्गधारयोपमीयेते। कथम्भूतं तत् विहिताखिलसत्त्वरक्षणम्। सत्त्वा एकेन्द्रियादयः पञ्चेन्द्रियपर्यन्ताः जन्तवः अखिलाश्च ते सत्त्वाश्च अखिलसत्त्वाः विहितमखिलसत्त्वेषु, रक्षणं यस्मिन् तत्तथोक्तम्। पुनः धृतसत्यस्थिति। धृता सत्येऽनलीकवचने स्थितिर्यस्मिन् तत्। कथम्भूतं पुनः वीतमत्सरं विशेषेण इतः गतः मत्सरः आत्मंमन्यता यत्र तथोक्तम्। विनष्टात्मंमन्यत-मित्यर्थः। श्लेषोपमा ॥१४॥

---

युगोंसे चले आये पृथ्वीके राज्यके इस दायित्वको अब तुम अकेले ही इस संसारमें प्रशान्त रूपसे धारण करोगे और श्रेष्ठ राजा बनोगे अतएव इस समय तुम्हें मेरी आज्ञाकी अवहेलना नहीं करनी चाहिये ॥१२॥

शत्रुओंको वशमें करनेके लिए जाने वाले तुम और परलोककी सिद्धिके लिए गृह-त्यागी मेरे लिए भी ऐसी परिस्थिति है कि विजयके लिए सबसे पहिले अपनेको संयमित करो, तब अपनी दिनचर्याको व्यवस्थित करो, इसके बाद मंत्री आदि जनताका विश्वास प्राप्त करो। तब शत्रुओंको जीतो [ मुनिको भी आत्मविजय, कर्मोंकी प्रकृतियोंको जीतनेके बाद ही रिपु मोहनीयपर विजय प्राप्त होती है ] ॥१३॥

मेरे समान तुम भी समस्त प्राणियोंकी सुरक्षाकी व्यवस्था करके आदर्श मर्यादाओंका पालन करते हुए, विशिष्ट आत्मगौरवकी भावनाके साथ अभयका एकमात्र नारा देते हुए आजसे ही खड्ग-धारण व्रतके कर्त्तव्योंका पालन करो। मैं भी तुम्हारे समान षट्कायके जीवोंकी रक्षा करता हुआ सत्य महाव्रतको पालूँगा। ईर्ष्या द्वेषको छोड़कर सबको अभय-दान दूँगा और असिधाराव्रत ( ब्रह्मचर्य ) का तथा क्षमादि धर्मोंका पालन करूँगा ॥१४॥

**विविधानि वसूनि वाहनं बहुदेशो दिशतीति वर्णितः ।**
**स यथोक्तिमिमामुपप्लवैर्न विहास्यत्यभिरक्ष्यतां तथा ॥१५॥**

विविधानीति—विविधानि नानाप्रकाराणि वसूनि द्रव्याणि वाहनञ्च मत्तमातङ्गतुरङ्गमं कर्मतया परिणतं सर्वं बहु दिशति ददातीति निरुक्त्या देशो वर्णितः कथितः । यथा इमामुक्तिं निर्वचनं स देशः न विहास्यति न त्यक्ष्यति । कैः कृत्वा ? उपप्लवैरुपद्रवैः कृत्वा । तथा हे पुत्र ! त्वया रक्ष्यतामिति । स्वरूपाख्यानम् ॥ १५ ॥

**उपसान्त्वय कृत्यमात्मनस्तमकृत्यं नयवृद्धिमृद्धिभिः ।**
**उभयं परकीयमात्मसात् कुरु नीतेः प्रथमोऽयमुद्यमः ॥१६॥**

उपेति—उपसान्त्वय प्रशमय त्वम् । कम् ? कृत्यम् । परैः कर्त्तुमात्मनः शक्यः अथवा परैः कर्त्तितुं छेत्तुं शक्यः कृत्यः तं कृत्यं भेद्यम् । कस्य ? आत्मनः । तथा ऋद्धिभिः कृत्वा वृद्धिं नय प्रापय त्वम् । कम् ? तं लोकविख्यातम् अकृत्यमभेद्यम् । कस्यात्मनः । तथा उभयं कृत्याकृत्यं परकीयं शात्रवीयं कुरु विधेहि कथमात्मसादात्मायत्तम् । इति नीतेः अयं प्रथमः आद्य उद्यमः इति । स्वभावाख्यानम् ॥ १६ ॥

**विधिना खलु दीयतेऽखिलं न नृपो दत्त इति स्म मा भवत् ।**
**विधिरेष सतां यमोऽसतामिति भूयाज्जनतासु ते कथा ॥१७॥**

विधिनेति—स्म मा भवत् । मा स्म भवत् भवान् । कथमिति ? विधिना दैवेन खलु निश्चयेन दीयते अखिलं वस्तुजातम् । न दत्ते न ददाति नृपो राजा इति । तथा हे पुत्र ते तव इति इत्थम्भूता कथा स्वभावाख्यानं जनतासु लोकसमूहेषु विषये भूयात्स्यात् । कथमिति एष सतां महतां पुंसां विधि दैवं तथा एष असतामवृत्तिकारणं यमः यमस्येव कार्यकर्तृत्वात् यमो मृत्युरिति । स्वभावाख्यानम ॥ १७ ॥

**वसुनोपचितेन सम्भवेदिह धर्मेण परत्र तु त्रयम् ।**
**उभयत्र न तन्मनोभुवा भुवि येन त्रयमत्र तत्क्रियाः ॥१८॥**

वसुनेति—इह लोके वसुना अर्थेन उपचितेन पुष्टिं नीतेन त्रयं धर्मार्थकामलक्षणं सम्भवेत् समुत्पद्यते । तु पुनः परत्र परलोके धर्मेणोपचितेन त्रयं सम्भवेत् । उभयत्र इह लोके परलोके च मनोभुवा कामेनोपचितेन तत्त्रयं न सम्भवेत् । भुवि पृथिव्यां हे पुत्र येन तेषां मध्ये येनाचरितेन अत्र इह लोके परलोके च त्रयं स्यात्तत्क्रियाः कुरु त्वम् ॥ १८ ॥

---

**नाना प्रकारकी सम्पत्ति तथा अनेक अश्वादि वाहनोंको प्रचुर मात्रामें जो दे उसे देश कहते हैं । उपद्रवों और संकटोंके कारण यह देश जिस प्रकार इस व्याख्याको न छोड़े उस प्रकारसे ही इसका राज्य करना ॥१५॥**

**अपने छिद्रों अथवा शत्रुके आघातोंको शान्त कर दो तथा विभवके द्वारा अपने पक्ष, दुर्ग, आदि अथवा शत्रुपर किये प्रबल प्रहारोंको सुपुष्ट करो । तथा शत्रुकी दुर्बलताओं और समर्थकोंको अपने वशमें करो, नीतिशास्त्रका यही प्रथम पाठ है ॥१६॥**

**अपने-अपने भाग्यसे सबको सब कुछ मिलता है अतएव हे पुत्र ! 'राजा नहीं देता है' ऐसा तुम्हारा अपवाद न हो । 'यह राजा सज्जनोंका विधाता है और दुर्जनोंका काल है' यही जनतामें तुम्हारे विषयमें कहा जाय ॥१७॥**

**इस लोकमें पर्याप्त सम्पत्ति संकलित करनेसे धर्म-अर्थ-काम संभव हो सकेंगे । यहाँ धर्म संचय करनेसे परलोकमें तीनों वर्ग निभ जायँगे । काम पुरुषार्थके द्वारा दोनों लोकोंमें सबका विघात होगा अतएव वही करना जिससे दोनों लोकोंमें तीनों पुरुषार्थोंका साधन हो सके ॥१८॥**

**अभिवृद्धिमियर्ति विप्रियैर्नय वैरं प्रशमं ततः प्रियैः ।**
**समुदेति हि सस्यमातपे न तरुच्छायहतं विवर्धते ॥१९॥**

अभीति—यस्मात्कारणात् विप्रियैः दण्डादिभिः कृत्वा वैरमभिवृद्धिमियर्ति गच्छति । ततः कारणात् प्रियैः सामादिभिः कृत्वा वैरं नय प्रापय त्वं प्रशमम् । हि स्फुटम् आतपे उष्णे सस्यं धान्यं समुदेति वृद्धिमायाति । तरुच्छायहतं तरुश्च छाया च तरुच्छायं[1] तेन हतं तरुच्छायहतं सत् न विवर्धते नश्यतीत्यर्थः । अत्र साभप्रयोगमाहात्म्यं प्रदर्शितम्[2] । उक्तञ्च–

"सामप्रेमपरं वाक्यं दानं वित्तस्य चार्पणम् ।
भेदो रिपुजनाकृष्टिः दण्डः श्रीप्राणसंहृतिः ॥१९॥"

**न निजो न परोऽस्ति कस्यचिद्गुणतः स्वः परवांश्च जायते ।**
**तदिदं सकलं भुवस्तलं प्रणयेनानुवशं त्वमानय ॥२०॥**

नेति—सोपस्कराणि वाक्यानि भवन्ति । अतः कस्यचित्प्राणिनो निजो नास्ति न परः । यस्मात्स्वः आत्मीयः सन् परवान् परकीयो जायते । कस्मात् गुणतः । षड् गुणात् सन्धिविग्रहयानासनद्वैधीभावसंश्रयरूपात् तत् तस्मात्कारणात् इदं सकलं समस्तं भुवस्तलं पृथ्वीतलं प्रणयेन प्रेमपरवाक्येन कृत्वा अनुवशमात्मवशमानय त्वम् । अत्र साममाहात्म्यमुपदर्शितम् । स्वभावाख्यानम् ॥ २० ॥

**इदमित्यनुशिष्य मेदिनीमुपलम्भ्यां प्रथमेन सूनुना ।**
**विदधे विरिरंसुरेनसो गृहमेधी हि सुतावधिर्मतः ॥२१॥**

इदमिति—इत्युक्तप्रकारेण इदं पूर्वोक्तमनुशिष्य[3] शिक्षयित्वा स दशरथः पाण्डुश्च प्रथमेन सूनुना ज्येष्ठेन पुत्रेण रामेण युधिष्ठिरेण च उपलम्भ्यां प्राप्यां मेदिनीं पृथिवीं विदधे कृतवान् । कीदृशः ? विरिरंसुः निवर्तितुमनाः । कस्मात् ? एनसः पापात् । हि स्फुटं गृहे मेधाऽस्यास्तीति गृहमेधी गृहस्थः सुतावधिः सुतोऽवधिः यस्य स सुतावधिर्मतं इष्टः । अत्र तात्पर्यं पुत्रमुखमवलोक्य आत्मश्रेयसे यतते गृहमेधी । अर्थान्तरन्यासः ॥ २१ ॥

**पणवाः प्रणिनेदुराहता ननृतुर्वारविलासिनीजनाः ।**
**नटगाथकसूतसूनवः पटवः पेठुरुपेत्य मङ्गलम् ॥२२॥**

पणवा इति—पणवाः पटहा आहताः ताडिताः सन्तः प्रणिनेदुः ध्वनितवन्तः । वारविलासिनीजनाः वेश्याः ननृतुः नटन्ति स्म । किं कृत्वा ? उपेत्यागत्य । तथा पटवः पटिष्ठाः सन्तः नटगाथकसूतसूनवः

---

विरुद्ध कार्य दण्डादिके द्वारा वैर बढ़ता है अतएव उसे प्रिय कर्मोंके द्वारा शान्त कर देना चाहिये । धान्य सूर्यके आतपमें खूब बढ़ता है किन्तु वृक्षकी छायाके द्वारा दब जानेपर उसमें अंकुर ही नहीं फूटते हैं ॥१९॥

यहाँ न तो कोई अपना है और न कोई पराया है । गुणों ( संधि-विग्रह-यानादि ) के द्वारा ही राजाओंके अपने और विराने बनते हैं । इसलिए तुम इस समस्त पृथ्वीको प्रेमके द्वारा अपने वशमें कर लो ॥२०॥

इस प्रकार शिक्षा देकर आरम्भ परिग्रहसे विरक्त राजाने राज्य-भारको ज्येष्ठ पुत्रके भोग्य कर दिया था । क्योंकि आदर्श व्यक्ति तब तक ही गृहस्थ रहते हैं जबतक पुत्र समर्थ न हो जाय ॥२१॥

मंगलके लिए बजाये गये पटह आदि बाजे जोरसे बजने लगे थे । वेश्याओंके झुंडके-

---

१. -रुच्छायम् । अत्र "वा तरुमृगादि" [ जै० सू० १।४।८८ ] सूत्रेणैकवद्भावः–प०, द० । २. अर्थान्तरन्यासालङ्कारः–प०, द० । ३. अनुशिष्य द० ।

नटा नर्त्तनाचार्याः गाथकाः गायकाचार्याः सूताः [1]मागधास्तेषां सूनवः पुत्रास्ते मङ्गलं पेठुः पठितवन्तः। समुच्चयः ॥ २२ ॥

**स पताकमुदात्तनायकं कृतनानारसभावविभ्रमम्।**
**प्रतिरङ्गनिविष्टपात्रकं नगरं नाट्यमिवाद्युतत्तराम् ॥२३॥**

सपताकेति—नगरं पत्तनमद्युतत्तराम् (अतिशयेन) शुशुभे। कीदृशं सत्? सपताकं सध्वजम्। उदात्तनायकं महेच्छाधिपम्। पुनः कृतनानारसभावविभ्रमम् रसाः शृङ्गारादयः भावाश्चेतोविकाराः विभ्रमाः कुटिलभ्रूभङ्गतयाऽर्द्धावलोकनानि कृता नाना बहुविधा रसभावविभ्रमा यत्र तत्तथोक्तम्। प्रतिरङ्गनिविष्टपात्रकं प्रतिप्राङ्गणस्थापितमङ्गलसद्द्रव्यपरिपूर्णस्थालकम्। किमिव? नाट्यमिव। कथंभूतं नाट्यम्? सपताकं सहोत्क्षिप्तांगुलिविन्यासेन वर्त्तमानहस्तम्। उदात्तनायकं सत्यागवन्नायकम्। प्रतिरङ्गनिविष्टपात्रकं प्रतिनृत्यस्थानप्रविष्टनर्त्तक्यादि[2] ॥ २३ ॥

**श्रवणेषु मृदङ्गनिस्वनाज्जनतोवाच परस्परं वचः।**
**ललनाश्च कपोलघट्टनान्निरविक्षन्विनिमीलितेक्षणम् ॥ २४ ॥**

श्रवणेष्विति—श्रवणेषु कर्णेषु जनता जनसमूहः परस्परमन्योन्यं वचः वचनमुवाच उक्तवती। कस्मात् मृदङ्गनिस्वनात् मृदङ्गशब्दश्रवणात्। ललनाः कामिन्यः निरविक्षन् निर्गतवत्यः चकारेण समुच्चयोऽवगम्यते। तेनायमर्थः प्रविशन्ति स्म चेत्यर्थः। कथं यथा भवति विनिमीलितेक्षणं संकुचितलोचनं कस्मात्कपोलघट्टनादिति सम्बन्धः। समुच्चयालंकृतिः ॥ २४ ॥

**भुवि पुष्पमपूरि गुल्फकं पटवासोऽपि वितस्तरे दिशः।**
**वियतोऽपि तलं वितेनिरे पुरि कालागुरुधूमयष्टयः ॥ २५ ॥**

भुवीति—भुवि पृथिव्या पुष्पं कुसुमं कर्तृ आपूरि पूरयति स्म। किम्? गुल्फकं पादघुटिका। दिशः आशाः 'कर्म' पटवासोऽपि 'कर्त्ता' वितस्तरे प्रच्छादयति स्म?। क्व पुरि नगर्याम्। वियतोऽपि तलं 'कर्म' कालागुरुधूमयष्टयः कालेयकधूमश्रेणयः वितेनिरे विस्तारयन्ति स्म[3] ॥ २५ ॥

**अधिरुह्य जनेन पश्यता गृहचैत्यद्रुमशालगोपुरम्।**
**परितोऽनवकाशकारणान्नगरीवोपरि तस्थुषी पुरः ॥ २६ ॥**

---

झुंड राजमहलपर आकर नाच रहे थे। नृत्योंके आचार्य नट, गायनाचार्य तथा अभिनयाचार्योंके कुशल वंशधर आकर मंगलपाठ कर रहे थे ॥२२॥

अयोध्या अथवा हस्तिनापुर नगर नाटकके समान अत्यन्त सुशोभित हो उठा था क्योंकि पताकाएँ फहरा रहीं थी, राजा महान् था, विविध रसों, भावनाओं और वेशभूषाओंकी बाढ़ आ गयी थी तथा प्रत्येक आँगनमें मंगलपात्र रखे हुए थे। [ नाटक भी पताका ( मंगलाचरण ) से प्रारम्भ होता है, नायक धीरोदात्त होता है, शृङ्गारादि रस, स्थायी, व्यभिचारी आदि भावोंकी भरमार रहती है, तथा अभिनेता सज्जागृहमें इकट्ठे होते हैं ] ॥२३॥

नगाड़ोंके नादके कारण नागरिक एक दूसरेके कानमें बातें करते थे। भीड़ तथा कानमें बात कहनेके कारण नागरिक-युवतियोंके भी परस्परमें गाल रगड़ जाते थे। फलतः वे आँखें झपाये हुए ही भीतर-बाहर आ-जा रही थीं ॥२४॥

नगरीमें विटप-कुञ्जोंने पृथ्वीपर फूलोंको बिछा दिया था। पटवासोंके कारण समस्त दिशाएँ व्याप्त हो गयी थीं। तथा घर-घरमें ज्वलित कालागुरु धूमके धूएँके द्वारा आकाशतलमें भी चँदोवा-सा बँधा लगता था ॥२५॥

---

१. भट्टाचार्याः प०, द०। २. श्लेषालङ्कारः प०, द०। ३. समुच्चयालङ्कारः प०, द०।

अधिरुह्येति—अनवकाशकारणात् पुरः नगर्या उपरि नगरी तस्थुषीव स्थितवतीव। अत्र बभूवेति क्रियाऽध्याहार्या। केन ? पश्यताऽवलोकमानेन जनेन। किं कृत्वा ? पूर्वं परितः सामस्त्येन अधिरुह्य। किम् ? गृहचैत्यद्रुमशालगोपुरं मन्दिरदेवकुलवृक्षप्राकारतोरणद्वारम्। अत्र समाहारापेक्षयैकत्वम्[1] ॥ २६ ॥

**अभिषेकजलप्लवेन सा वसुधा दीर्घमुदश्वसीत्तदा।**
**नवसङ्गमघर्मवारिणा स्नपिताङ्गाऽभिनवा वधूरिव ॥ २७ ॥**

अभिषेकेति—तदा तस्मिन् काले अभिषेकजलप्लवेन राज्यपदाभिषेकवारिणा कृत्वा सा वसुधा पृथ्वी दीर्घं बहुतरकालम् उदश्वसीदुच्छ्वसितवती। केव अभिनवा संभवद्यौवनभरा वधूरिव। कथम्भूता सती ? नवसङ्गमघर्मवारिणा नूतनसंयोगस्वेदजलेन स्नापिताङ्गाऽभिषिक्तशरीरा[2] ॥ २७ ॥

**कमला च दलान्तरस्रवज्जलबिन्दूज्ज्वललम्बमौक्तिकम्।**
**कमलातपवारणं तदा शशिशुभ्रं बिभरांबभूव तत् ॥ २८ ॥**

कमलेति—तदा तस्मिन् काले कमला लक्ष्मीः कमलातपवारणं कमलच्छत्रं बिभराम्बभूव धृतवती। कीदृशं दलान्तरस्रवज्जलबिन्दूज्ज्वललम्बमौक्तिकम्। दलान्तरेभ्यः पत्रान्तरालेभ्यः स्रवन्तश्च ते जलबिन्दवश्चेति दलान्तरस्रवज्जलबिन्दवः तद्वदुज्ज्वलानि लम्बानि मौक्तिकानि यस्य तत्। पुनः शशिशुभ्रमिन्दुधवलम् ॥२८॥

**हरिविष्टरमध्यमास्थितः प्रचलच्चामरचारुसंहतिः।**
**स जिगाय समुद्रवीचिभिः खलु वेलाचलमाहतं युवा ॥ २९ ॥**

हरीति—स युवा रामः युधिष्ठिरश्च खलु निश्चयेन समुद्रवीचिभिः जलधिकल्लोलैराहतं ताडितं वेलाचलं जिगाय जितवान्। कथम्भूतः सन् ? हरिविष्टरमध्यं सिंहासनमध्यमास्थितः उपविष्टः। पुनः प्रचलच्चामरचारुसंहतिः प्रचलन्ती चामराणाञ्चार्वी मनोज्ञा संहतिः श्रेणी यस्यासौ ॥ २९ ॥

**उपकर्ण्य तथा नरेश्वरं पितरि प्रागपि कोपधूमिते।**
**हृदये द्विषतां समुत्थितः प्रलयज्वाल इवानलोऽधिकः ॥ ३० ॥**

उपकर्ण्येति—द्विषतां शत्रूणां सम्बन्धित्वेन तथा तेनैव प्रकारेण हृदयेऽधिकः प्रचुरोऽनलोऽग्निः समुत्थितः उत्पन्नः। क इव ? प्रलयज्वाल इव प्रलयानल इव। किं कृत्वा ? पूर्वं नरेश्वरं रामं युधिष्ठिरञ्चोपकर्ण्य

---

भवन, देवालय, वृक्ष, प्राकार तथा तोरण-द्वारके ऊपर चढ़कर जब लोग चारों ओर दृष्टि डालते थे तो ऐसा प्रतीत होता था कि स्थानकी कमीके कारण नगरीके ऊपर दूसरी नगरी-सी बस गयी है ॥२६॥

राज्याभिषेकके जलके प्रवाहके द्वारा वह कोशल अथवा कुरुक्षेत्रकी भूमि उस समय हर्षके रोमाञ्च और पसीनेसे अभिभूत होकर नूतन वधूके समान लगती थी। क्योंकि प्रथम संयोगमें आये पसीनेसे वह भी लथपथ रहती है ॥२७॥

लक्ष्मी स्वयमेव चन्द्रमाके समान श्वेत कमलके छत्रको लेकर खड़ी हुई थी। जिसकी पंखुड़ियोंके बीचसे टपकती हुई पानीकी बूँदें ही लटकते हुए मोतियोंकी छटाको प्राप्त हो रही थीं ॥२८॥

सिंहासनके मध्यमें विराजमान और दुरते हुए चमरोंकी पंक्तिसे शोभायमान उस युवक राम अथवा युधिष्ठिर राजाने समुद्रकी लहरोंसे ताडित तीरस्थ पर्वतोंको ही जीत लिया था ॥२९॥

पूर्वोक्त प्रकारसे राम अथवा युधिष्ठिरके राज्याभिषेकको सुनकर इनके पिता दशरथ

---

१. उत्प्रेक्षालङ्कारः प०, द०। २. उपमाऽलङ्कारः प०, द०। ३. स्वभावाख्यानम्-प०, द०।

श्रुत्वा। कथम्भूते हृदये प्रागपि पूर्वमपि कोपधूमिते। क्व पितरि दशरथे पाण्डुनृपे च। अत्र तात्पर्यं रामस्य युधिष्ठिरस्य च राज्यपट्टाभिषेकं श्रुत्वा द्विषतां हृदयानि "क्व यामः किं कुर्मः" इति चिन्ताभरनिर्भराणि बभूवुः। उपमालङ्कारः ॥ ३० ॥

**स नवाजिषु लब्धविक्रमः कृतरूढिर्न गजेषु दन्तिषु।**
**निजघान तथापि विद्विषं सहसा पत्तिचयेन वर्जितः ॥३१॥**

स इति—वाजिष्वश्वेषु न लब्धविक्रमः गजेषु दन्तिषु। दन्तिष्विति विशेषणेन माणिक्यदण्डसमुद्भवानां हस्तिनां ग्रहणं न तु मरुद्द्वीपसमुद्भवानां दन्तरहितानामिति विशेषणं सार्थकम्। तेषु तथाभूतेषु गजेषु न कृतरूढिः। पत्तिचयेन पदातिसमूहेन वर्जितः परित्यक्त इति विशेषणेन विशिष्टः सन् सहसा शीघ्रं तथापि स कुमारः विद्विषं निजघान हतवानिति विरुद्धं परिह्रियते। नवाश्च ता आजयश्च नवाजयः तासु नवाजिषु नूतनसङ्ग्रामेषु लब्धविक्रमः नगजेषु गिरिसमुद्भवेषु दन्तिषु हस्तिषु कृतरूढिः अभ्यस्तावरोहणः आपत्तिचयेन वर्जितः इति विशेषणत्रयेण युक्तस्तथापि सहसा स रामः युधिष्ठिरश्च विद्विषं निजघानेति। विरोधाभासः ॥३१॥

**अजरोऽवनिवृत्तचेष्टितस्ततपङ्कोद्भवविष्टरागतः।**
**स पितामहतां च सङ्गतो विधिरप्येकमुखत्वमागमत् ॥३२॥**

अजर इति—सः अजरः न विद्यते जरा वार्द्धक्यं यस्य स अजरः तरुणः कुमारः सङ्गतः प्राप्तः कां पितामहतां प्रजापतित्वम्। कथम्भूतः सन्? अवनिवृत्तचेष्टितः अवनौ धरायां वृत्तम्प्रवृत्तञ्चेष्टितमाज्ञा यस्य सः। पुनः ततपङ्कोद्भवविष्टरागतः तते विस्तीर्णे पङ्कोद्भवे दुर्यशसि विष्टानां प्रविष्टानां रागमिष्टवस्तुषु प्रीतिं तस्यति क्षयं नयतीति क्विप् स तथोक्तः विस्तीर्णदुर्यशःप्रविष्टरागविनाशकः तथा स पिता दशरथः पाण्डुश्च महतां महस्य भावो महता तां महतामुत्सवतां च सङ्गतः। कथम्भूतः अजरोऽजे ब्रह्मणि रः शब्दो यस्य सोऽजरोः ब्रह्मैकनिष्ठवचनः। पुनः अवनिवृत्तचेष्टितोऽव समन्तान्निवृत्तं चेष्टितं यस्य सः सकलबाह्यवस्तुनिवृत्तव्यापारः। पुनः ततपङ्कोद्भवविष्टरागतः पङ्कात्पापादुद्भवो येषां ते पङ्कोद्भवाः विष्टाश्च ते रागाश्च विष्टरागाः ततश्च ते पङ्कोद्भवविष्टरागाश्च ते ततपङ्कोद्भवविष्टरागास्तान् तस्यति क्षयं नयतीति क्विप् स तथोक्तः। विस्तीर्णपापसमुद्भवरागोच्छेदक इत्यर्थः। सोपस्करत्वेन व्याख्यायते—अजरो नित्यत्वात् जगज्ज्येष्ठत्वात् प्राप्ततपोऽतिशयत्वाच्च न जीर्यत्यजरः।

---

**अथवा पाण्डुके समयसे ही धुँधाती शत्रुताकी अग्नि शत्रु राजाओंके हृदयमें प्रलयकालकी अग्निके समान जोरसे प्रज्वलित हो उठी थी ॥३०॥**

**उस राजाने न तो अश्वारोही युद्धमें पराक्रम दिखाया था, न बड़े-बड़े दाँतोंवाले हाथियोंके ऊपर चढ़कर हस्तियुद्ध किया था और न जिसके साथ पैदल सेना ही थी तथापि उसने अकस्मात् शत्रुओंका विध्वंस कर दिया था।**

**नूतन युद्धोंमें ( नव-आजिषु ) किये गये पराक्रमके लिए ख्यात, पर्वतोंमें उत्पन्न (नगजेषु), उत्तम हाथियोंपर चढ़नेमें दक्ष तथा अनायास ही आपत्ति ( सहसा-आपत्ति ) को दूर हटानेवाले इस राजाने शत्रुओंका विनाश कर दिया था ॥३१॥**

**अन्वय—अवनिवृत्तचेष्टितः ततपङ्कोद्भवविष्टरागतः अजरोऽपि स पितामहतां सङ्गतः च विधिरपि एकमुखत्वं आगमत्।**

**समस्त पृथ्वीपर शासन चलाते तथा महान् अपकार्योंमें रत लोगोंके विनाश करनेके कारण वह राम अथवा युधिष्ठिर युवक होते हुए भी भले बाबा (पितामह-ब्रह्मा) बन गये थे। [यह हुआ एक विरोध। और जब वह ब्रह्मा हुए तो चतुर्मुख होना चाहिये था वह हुआ नहीं अतएव] ब्रह्मा भी एक मुख हो गये थे। [यह हुआ दूसरा विरोध] क्योंकि ब्रह्मा भी कूटस्थ होनेके कारण वृद्ध नहीं होते हैं, पृथ्वीको सृष्टिके लिए प्रयत्न करते हैं, विकसित पंकजरूपी आसनपर बैठते हैं, संसारके पिता (गुरु) हैं और विष्णु आदि महापुरुषोंकी संगतिमें रहते हैं। परिहार—**

पुनरपरिणमनशील इत्यर्थः। अवनिवृत्तचेष्टितः त्रैलोक्यनिर्माणपर्याप्तकृत्यत्वादवगतं निवृत्तं चेष्टितं कार्यान्तरं येनात्मनोऽसौ तथोक्तः। पुनः ततपङ्कोद्भवविष्टरागतः विस्तीर्णपङ्कजविष्टरप्राप्तः। लोकविधातृत्वात् पिता जगत्कर्त्तेत्यर्थः। विशेषणत्रयगोचरः सन् स लोकविख्यातस्तेषां च महतां सत्पुरुषाणां सङ्गतः संसर्गाद्विधिरपि चतुर्मुखत्वात् कथमेकमुखत्वमगमदिति विरोधः परिह्रियते—एकमुखत्वं नाम सत्यवादमिति। विरोधाभासः ॥३२॥

**तमुदीक्ष्य नवोदयस्थितं परितापोऽर्कमिवाभवत्तदा।**
**बहुलो भरतस्य भूभुजो निजमातुर्धृतराष्ट्रजन्मनः ॥३३॥**

तमिति—तदा तस्मिन्काले तं जगद्विख्यातं रामं नवोदयस्थितमर्कमिव सूर्यमिवोदीक्ष्यावलोक्य बहुलः प्रचुरः परितापः सन्तापोऽभवत्सञ्जातः। कस्य ? भूभुजः नरपतेः भरतस्य कैकेयस्य सम्बन्धित्वेन निजमातुः स्वकीयजनन्याः। कथम्भूतायाः ? धृतराष्ट्रजन्मनः राष्ट्राजन्म यस्य तद्राष्ट्रजन्म धनधान्यहिरण्यादि धृतं राष्ट्रजन्म यया तस्याः हस्त्यश्वादिविभूतिर्मम पुत्रस्य कथं भवेदिति चेतोवृत्तिभत्याः।

भारतीयः—तं युधिष्ठिरं नवोदयस्थितमर्कमिवोदीक्ष्य तदा राज्यपट्टाभिषेककाले भूभुजः नरेन्द्रस्य धृतराष्ट्रजन्मनः दुर्योधनस्य परितापो अभवत् बभूव। कथम्भूतस्य बहुलोभरतस्य प्रचुराभिलाषसक्तस्य निजमातुः निजस्य स्वकीयस्य माता निश्चायकोऽथवा निजस्यात्मनो माता निश्चायकोऽसौ निजमाता तस्य आत्मानं स्वकीयञ्च निश्चेतुकामस्येत्यर्थः। श्लेषालङ्कारः ॥३३॥

**न विषादितया यदागमत्फलसिद्धिं सुलभामसौ तदा।**
**प्रतिपद्य भुवः पतिंवरं कृतकाक्षं रमणं त्वयाचत ॥३४॥**

नेति—यदा यस्मिन्कालेऽसौ कैकेयी सुलभां सुप्रापां फलसिद्धिं नागमत् न गृहीतवती। कया कृत्वा ? विषादितया विषादिनो भावेन। तस्मिन्काले फलसिद्धिं प्रतिपद्याङ्गीकृत्य पुनः भुवः पतिं पृथिवीनाथं रमणं वल्लभमसौ कैकेयी अयाचत प्रार्थयामास। कम् ? वरं वरप्रदानम्। कथम् ? यथा भवति कृतकाक्षं कृतं कं जलं ययोस्ते कृतके कृतकेऽक्षिणी यस्मिन्कर्मणि तत्कृतकाक्षं कृताश्रुजललोचनमित्यर्थः।

---

**अन्वय–अज-रः अव-निवृत्तचेष्टितः ततपङ्कोद्भवविष्टराग-तः पिता-महतां संगतः च विधिः एकमुखत्वं आगमत्।**

**परमात्माकी स्तुतिमें लीन, सब ओरसे इन्द्रियोंके व्यापारोंका संकोचकर्ता, अनादि पापोंकी परम्परासे उत्पन्न विशाल मोहका विनाशक, पिताके आनन्दका प्रशस्त निमित्त और निर्माणका कर्ता वह राम अथवा युधिष्ठिर सत्य वचन बोलनेके लिए कटिबद्ध था ॥३२॥**

**अन्वय–तदा अर्कमिव नवोदयस्थितं तं उदीक्ष्य भूभुजः भरतस्य धृतराष्ट्रजन्मनः निजमातुः बहुलो परितापोऽभवत्।**

**राज्यभिषेकके समय सूर्यके समान नूतन तेजयुक्त रामको देखकर राज्यकी सम्पत्ति-पर मुग्धचित्त राजा, भरतकी अपनी माता कैकेयीको अत्यधिक मनस्ताप हुआ था।**

**अन्वय–······बहु-लोभ-रतस्य, निजमातुः धृतराष्ट्रजन्मनः भूभुजः परितापोऽभवत्।**

**राज्याभिषेकके समय नवीन उदित सूर्यके समान प्रतापी युधिष्ठिरको देखकर अत्यन्त लोभी तथा विषयासक्त, अपनेको युधिष्ठिर सदृश माननेवाले, धृतराष्ट्रसे उत्पन्न कौरव राजाओंको भीषण मत्सर हुआ था ॥३३॥**

**अन्वय–यदा विषादितया सुलभां फलसिद्धिम् असौ न अगमत् तदा भुवः पतिं प्रतिपद्य कृतकाक्षं तु रमणं वरं अयाचत।**

**जब महारानी कैकेयी शोक, विलाप आदिके द्वारा अपने परमप्रिय कार्यको न करा सकीं तब उन्होंने पृथ्वीपति राजा दशरथके पास जाकर आँखोंमें बनावटी आँसू भरके अनुरक्त पतिसे वर माँगा था।**

भारतीयः—यदा यस्मिन्कालेऽसौ दुर्योधनः सुलभां फलसिद्धिं नागमत् न गृहीतवान्। कया? विपादितया विषमादिर्येषां ते विषादयः पदार्थाः तेषां भावः विषादिता तया विषतृणदारुलाक्षाजलानलप्रपञ्चेनेत्यर्थः। तदा तस्मिन्काले फलसिद्धिं प्रतिपद्य स्वीकृत्य तु पुनः भुवः पतिं युधिष्ठिरं दुर्योधनोऽयाचत। कम्? वरं रमणं सारिद्यूतम्। कथम्भूतम्? कृतकाक्षं कृतकौ कृत्रिमौ अक्षौ पाशकौ यत्र तत्कृतकाक्षं कृत्रिमपाशकमित्यर्थः। श्लेषालङ्कारः॥ ३४॥

**सकलत्रमुपेक्ष्य सत्कुलं किल कैकेयमकार्यकारणा।**
**ननु चेत्यनिरूप्य कैतवं मतिमक्षैकजयेऽकरोत्प्रभुः॥३५॥**

सकलत्रमिति—कलत्रं भार्यां तथा सत्कुलं निर्लाञ्छनान्वयं कैकेयं पुत्रञ्च भरताह्वयमुपेक्ष्यावधीर्य। कथमिति? किल लोकोक्तौ परमार्थतो वा। नन्वहो अकार्यकारणा अकार्यकारिका कैकेयीति मत्वा कैतवं कुटिलस्वभावमनिरूप्याविचार्य स प्रभुः दशरथोऽक्षैकजय इन्द्रियैकपराभवे मतिं बुद्धिमकरोत् कृतवानिति सम्बन्धः। अत्र तात्पर्यं रामं सम्बोध्य कैकेय्या वचनात् स्वप्रतिज्ञाभङ्गभयात् भरताय राज्यं दत्त्वा संसारसागरोत्तरणैकतरीं वैतरागीं दीक्षामङ्गीचकार।

भारतीयः पक्षः—स प्रभुः युधिष्ठिरः अक्षैकजये पाशकैकजये मतिमकरोत्। किं कृत्वा? पूर्वमुपेक्ष्य किं कुलं कथम्भूतं सत् समीचीनम्। पुनः कथम्भूतम्? सकलत्रं सकलान् स्वपरवर्गीयान् त्रायते पालयतीति सकलत्रम्। किं कृत्वा? पूर्वं पुनः अनिरूप्य अपरिज्ञाय च। कम्? कितवानामयं व्यवहारः कैतवः तं कैतवं द्यूतकारव्यवहारम्। कथमिति? किल। ननु अहो का एकाऽसाधारणेयमकार्यकारणेति। श्लेषः॥३५॥

**स परेण तदा जितां महीं लघु मुक्त्वा सहसादरोदरैः।**
**स्वगुरुस्थितिभङ्गभीरुकः प्रययौ भ्रातृबलेन काननम्॥३६॥**

स इति—स रामः भ्रातृबलेन बान्धवसामर्थ्येन काननं कान्तारं प्रययौ गन्तुं प्रारब्धवान्। कथम्भूतः? स्वगुरुस्थितिभङ्गभीरुकः आत्मीयजनकस्थितिभञ्जनभीलुकः। पुनः सादरः सोद्यमः। कथम्? तदा

---

अन्वय—…विपादितया कृतक-अक्षं वरं रमणं अयाचत।

जब दुर्योधन विषप्रयोग, लाक्षागृह-प्रवेश आदि उपायोंके द्वारा अपने परम आदर्शको सफल न कर सका तब उसने युधिष्ठिर महाराजके पास जाकर जाली पाशोंसे उत्तम द्यूत (जुआ) क्रीडाके लिए प्रस्ताव किया था॥ ३४॥

अन्वय—सत्कुलं उपेक्ष्य कैकेयं कलत्रं किल अकार्यकारणा च कैतवं अनिरूप्य स प्रभुः ननु अक्षैकजये मतिम् अकरोत्।

अपने दोनों श्रेष्ठ कुलोंकी उपेक्षा करके कैकयकी पुत्री कैकेयी रानी निश्चित ही अकार्य कर रही है अतः स्त्री-सुलभ कुटिलताका विचार न करके राजा दशरथने केवल इन्द्रियोंके जीतने (तपस्या) का संकल्प किया था यही आश्चर्य है।

अन्वय—प्रभुः सकलत्रं सत्कुलं उपेक्ष्य, ननु कैतवं अनिरूप्य अक्षैकजये मतिमकरोत् इयं का एका अकार्यकारणा किल।

खेद है कि धर्मराजने अपने समीचीन महान् कुल तथा पटरानीकी भी उपेक्षा करके और दुर्योधनके धूर्ततापूर्ण व्यवहारको दृष्टिमें न रखकर पाशोंके द्वारा कौरवोंको जीतनेका विचार किया था। यह अकेला ही कितना बड़ा पापकर्म था॥ ३५॥

अन्वय—तदा परेण अजितां महीं अदरैः सह लघु मुक्त्वा स्वगुरुस्थितिभङ्गभीरुकः सादरः सः भ्रातृबलेन काननं प्रययौ।

दशरथके विरक्त होनेपर अत्यन्त विनम्र तथा अपने पिता-द्वारा दत्त वचनके भंगसे भयभीत वह रामचन्द्रजी अबतक शत्रुओंके लिए अजेय कोशलके राज्य तथा निर्भय भटपूर्ण सेनाको तुरन्त छोड़कर भाईके साथ वनको चले गये थे।

तस्मिन्काले। किं कृत्वा ? पूर्वं मुक्त्वा परित्यज्य। कां महीं पृथिवीम्। कथम् ? सह सार्द्धम्। कैः ? अदरैः न दरः भयं विद्यते येषां तेऽदरा अभयास्तैः अदरैर्निर्भयैर्भटैः। कथम् ? लघु शीघ्रम्। कथम्भूतां महीम् ? अजितामनभिभूताम्। केन ? परेण शत्रुणेति।

भारतीयः—तदा तस्मिन्काले स युधिष्ठिरः भ्रातृबलेन काननं प्रययौ लघु शीघ्रम्। कथम्भूतम् ? स्वगुरुस्थितिभङ्गभीरुकः स्वस्यात्मनः गुर्वी या स्थितिस्तस्याः भङ्गे भीरुकः। किं कृत्वा ? पूर्वं मुक्त्वा। काम् ? महीम्। कथम् ? सहसा शीघ्रम्। कथम्भूताम् ? परेण दुर्योधनेन दरोदरैः पाशकैर्जिताम्[1] ॥ ३६ ॥

**स निवर्त्य समन्वितान्नृपांस्तलवर्गान्सचिवान्पुरोधसः।**
**स्थितवान्पथि सीतयाच्युतो गहने द्रौपदिकानुजान्वितः ॥३७॥**

स इति—स रामः गहने वनेऽद्रौ पर्वते च स्थितवान्। कथम्भूतः अच्युतोऽपरित्यक्तः युक्त इत्यर्थः। कया ? सीतया जानक्या। पुनः ? पदिकानुजान्वितः पदाभ्यां चरतीति पदिकः स चासावनुजश्च तेनान्वितो युक्तोऽनुचरलक्ष्मणान्वित इत्यर्थः। किं कृत्वा ? पूर्वं निवर्त्य पश्चात् प्रस्थाप्य। कान् ? नृपान्। नरेन्द्रान् तलवर्गान् तलवरनियोगीतुरगसाधनि (-कगजसाधनि)-कादीन्, तथा सचिवानमात्यान् पुरोधसः पुरोहितान्। एतान्कथम्भूतान् ? समन्वितान् अनुव्रजितुमागतान्।

भारतीयः—स युधिष्ठिरः स्थितवान्। क ? गहने। कीदृशः सन् ? सीतया भूम्या च्युतः परित्यक्तः। पुनः ? द्रौपदिकानुजान्वितः द्रौपदिका द्रौपदी द्रुपदतनया अनुजा भीमादयस्तैर्युतः। किं कृत्वा ? पथि मार्गे समन्वितान्नृपादीन्निवर्त्य। श्लेषालङ्कारः ॥ ३७ ॥

**अपि यस्य जगाम मुद्रया सकलो वारिनिधिः समुद्रताम्।**
**हृदि पश्यत संसृतेः स्थितिं स नरेन्द्रोऽपि पदातितां गतः ॥३८॥**

अपीति—यस्य रामस्य युधिष्ठिरस्य च मुद्रया सकलोऽपि वारिनिधिः समुद्रतां मुद्रया सह वर्त्तत इति समुद्रः तस्य भावः तत्ता तां मुद्रायुक्तिमत्वं जगाम ययौ। संसृतेः संसारस्य स्थितिं हृदि हृदये पश्यत। स पूर्वोक्तः नरेन्द्रोऽपि पदातितां पदाभ्यामतति पदातिस्तस्य भावं पदिकत्वं गत इति ॥ ३८ ॥

---

**अन्वय—तदा दरोदरैः परेण सहसा जितां महीं लघु मुक्त्वा स्वगुरुस्थितिभङ्गभीरुकः स भ्रातृबलेन काननं प्रययौ।**

**द्यूतके पाशोंसे शत्रुके द्वारा अकस्मात् जीते गये हस्तिनापुरके विशाल राज्यको तुरन्त छोड़कर वह धर्मराज युधिष्ठिर केवल भाइयोंके भरोसे ही वनवासमें चले गये थे क्योंकि उन्हें इस बातका भय था कि कहीं इनकी महान् सत्यनिष्ठाका उल्लंघन न हो जाय ॥ ३६ ॥**

**अन्वय—समन्वितान् नृपान्, तलवर्गान्, सचिवान् पुरोधसः पथि निवर्त्य सीतयाच्युतः पदिक-अनुजान्वितः स गहने-अद्रौ स्थितवान्।**

**साथ चलनेके लिए आये राजाओं, अश्वारोहियों-गजारूढ़ों, मंत्रियों तथा पुरोहितोंको थोड़े रास्तेसे ही वापस करके सीताको साथ लिये पैदल चलते छोटे भाई लक्ष्मणको ही अनुगामी रूपसे लिये वह राम गहनवन अथवा पर्वतोंपर रहने लगे थे।**

**अन्वय—पथि समन्वितान्…निवर्त्य सीतयाच्युतः द्रौपदिकानुजान्वितः स गहने स्थितवान्।**

**वनवासके मार्गमें आकर मिलनेवाले मित्रराजाओं, सेनापतियों, मंत्रियों तथा पुरोहित आदिको घर लौट जानेके लिए कहकर राज्यके द्वारा परित्यक्त वह धर्मराज द्रौपदी तथा भीम आदि छोटे भाइयोंके साथ वनमें वास करने लगे थे ॥३७॥**

**जिसकी राजमुद्राके द्वारा शत्रुओंके समस्त वैभवपर मुद्रा लगायी गयी थी अथवा समस्त सागर भी जिसके राज-चिह्नसे अंकित थे वह राजराजेश्वर भी पदाति—(पैदल चलनेवाला) हो गया था। संसारकी वास्तविकतापर मनमें विचार तो कीजिये ॥३८॥**

---

[1] श्लेषोपमाऽलङ्कारः प०, द०।

**अपि चीरिकया द्विषोऽभवन्ननु चामीकरदाश्च्युतौजसः ।**
**कुसुमैरपि यस्य पीडना शयने शार्करमध्यशेत सः ॥३९॥**

अपीति—नन्वहो यस्य सम्बन्धित्वेन चीरिकया लेखेनापि द्विषः शत्रवश्च्युतौजसो नष्टबला भूत्वा चामीकरदा हिरण्यप्रदा अभवन् सञ्जाताः । अथवा चकारः समुच्चये । अमी द्विषश्च्युतौजसः करदाश्चाभवन् । यस्य च कुसुमैः पुष्पैरपि शयने पीडना पीडाऽभवत् स रामो युधिष्ठिरश्च शार्करं शर्करावन्तं प्रदेशमध्यशेत आश्रित्य सुप्तवान् ॥ ३९ ॥

**घनसारसुगन्ध्ययाचितं हृदयज्ञैश्चषकेऽम्बु पायितः ।**
**स विमृग्य वनेष्वनापिवानटनीखातसमुत्थितं पपौ ॥४०॥**

घनसारेति—यः पूर्वं हृदयज्ञैः पुरुषैः चषके रत्नमयकचोलके घनसारसुगन्धि कर्पूरवासितमयाचितम-प्रार्थितमम्बु पानीयं पायितः । स वनेषु विमृग्यावलोक्यानापिवानलब्धवान्सन् अटनीखातसमुत्थितं धनुरग्रप्र-देशोल्लिखितनिर्गतं जलं पपौ आस्वादितवान्[1] ॥ ४० ॥

**कुलजं शमिनं बहुश्रुतं स्थिरसत्त्वं ध्रुवयुद्धमूर्जितम् ।**
**यदि तादृशमप्यपैति तन्न खलु श्रीः श्रिय एव तादृशी ॥४१॥**

कुलजमिति—कुलजमन्वयोत्पन्नं शमिनमुपशमवन्तं बहुश्रुतं प्रचुरशास्त्रवन्तं स्थिरसत्त्वं ध्रुवबलं ध्रुवयुद्धं स्थिरसंग्राममूर्जितं बलिष्ठं तादृशमपि श्रीर्लक्ष्मीर्यदि चेत् यस्मात्कारणात् अपैति खलु परित्यजति तत्तस्मात्कारणात् श्रीरेव तादृशी न श्रियः । भाग्यवन्तं श्रयति सेवत इति श्रीः तस्याः श्रियः । अत्र तात्पर्यं यदि भाग्यवन्तं पुरुषं त्यजति श्रीस्तदा यथोक्तनिरुक्तिमत्याः श्रियः सभा न भवतीति ॥ ४१ ॥

**क्रमशोऽतिजगाम नर्मदां स दुरन्तां जलधीरितोद्यमाम् ।**
**अवधीरणयाऽतिलङ्घिनीं स्खलितप्रायगतिं प्रियामिव ॥४२॥**

क्रमश इति—दुरन्तामलब्धमध्यां जलधीरितोद्यमां जलधौ समुद्र ईरितः प्रेरितः उद्यमो यया सा तां समुद्रप्रेरितोद्यमाम् अवधीरणयाऽवहेलयाऽतिलङ्घिनीमतिदूरगमनशीलां स्खलितप्रायगतिं स्खलितप्राया स्खलित-सदृशी गतिर्यस्यास्तामिति विशेषणचतुष्टयगोचरां नर्मदां लोकप्रसिद्धां नदीं स रामो युधिष्ठिरश्च क्रमशः क्रमेण कृत्वा अतिजगाम अतिक्रान्तवान् । उपमार्थः प्रदर्श्यते—कामिव प्रियामिव यथा कश्चिन्नरो नारीमवधीरणया अव-ज्ञयाऽतिक्रामति । कथम्भूताम् ? नर्मदां नर्म कर्करं ददातीति ताम् । पुनः जलधीरितोद्यमां जले जडे मूर्खविषये

---

**जिस राम अथवा युधिष्ठिरके लेख मात्रसे शत्रुओंका तेज गल जाता था तथा वे शत्रुलोग सोनेकी भेंट अथवा कर देने लगते थे । शय्यापर फूल भी जिसको चुभते थे वही अब बालूपर सोते थे ॥३९॥**

**जिन्हें पहिले बिना माँगे ही मनकी बात समझनेवाले परिचारक चन्दन आदिसे सुग-न्धित जलको रत्नोंके पात्रोंसे पिलाते थे उन्हें ही आज वनमें खोजनेपर भी पानी नहीं मिलता था, धनुषके कोनेसे बालूमें गड्ढा करके वे पानी पीते थे ॥४०॥**

**वैसे कुलीन, मन्दकषायी, प्रतिष्ठित,बलशाली, अनेक शास्त्रोंके पण्डित, युद्धके निश्चित विजेता तथा मनस्वी व्यक्तिको भी यदि लक्ष्मी छोड़ देती है तो वह श्री ( कान्ति ) नहीं है अपितु ऐसी सम्पत्तिको श्रिय ( भाग्यवानका सहारा लेनेवाली ) ही कहना ठीक होगा ॥४१॥**

**कष्टसे अवगाहन योग्य, समुद्रकी दिशामें बहती हुई, असावधान होते ही बहा ले जानेवाली तथा पत्थरोंके कारण टकराती या नीची-ऊँची बहती हुई अतएव प्रियाके समान नर्मदा नदीको क्रमशः वह राम अथवा युधिष्ठिर पार कर गये थे [ परिहासशील, कुकर्मरत,**

1. श्लेषोपमाऽलङ्कारः—प०, द० ।

**इदमेवमनादिगोचरं चिरमुच्चैरितरेतराश्रयम् ।**
**विषयं वनमप्यनेकशः स सुखं दुःखमिवात्यगान्नृपः ॥५०॥**

इदमिति—स नृपः रामः युधिष्ठिरश्च इदमेवं विषयं देशं वनमपि अरण्यञ्च अत्यगादतिचक्राम । कथम् ? अनेकशः बहून्वारान् । कथम्भूतं विषयं वनञ्च ? अनादिगोचरं न आदेर्गोचरो विषयो यस्य सः तं तञ्च । कथम् ? चिरं बहुतरकालं यथा भवति अत्यगात् । इतरेतरमाश्रयो यस्मिन् गमनकर्मणि तदितरेतराश्रयम् । पुनर्विषयं पुनर्वनमिति कृत्वा अन्योन्याश्रयमिति क्रियाविशेषणं यथा कथमुच्चैरतिशयेन । अधुना उपमार्थः प्रदर्श्यते । सुखं दुःखमिव यथाऽतिक्रामति प्राणी तथा सुखं यथा सुखं तथा दुःखमत्र पूर्वोक्तानि विशेषणानि योज्यानि । उपमालङ्कारः ॥ ५० ॥

**पथि सोऽवरजोऽग्रजं वचः स्फुटमित्यादित वीक्ष्य तादृशम् ।**
**विदिशं विशता विशां दिशं त्यजता सत्यमलङ्कृतं त्वया ॥५१॥**

पथीति—पथि मार्गे स पूर्वोक्तोऽवरजः लक्ष्मणः अग्रजं रामं तादृशं देशवनान्युल्लङ्घयन्तं वीक्ष्यावलोक्य इति वक्ष्यमाणापेक्षया स्फुटं प्रव्यक्तं यथा भवति वचः वचनमादित उक्तवान् । त्वया भवता सत्यमलङ्कृतं भूषितम् । किं कुर्वता सता ? विशां देशानां विदिशं विशता प्रविशता दिशं त्यजता ।

भारतीयः—पथि तादृशमग्रजं युधिष्ठिरं वीक्ष्य स लोकप्रसिद्धः अवरजो भीमो वाऽर्जुनः इति वक्ष्यमाणं वचः स्फुटमादित गृहीतवान् । विशां देशानां सम्बन्धित्वेन विदिशं दिशं विशता त्यजता च त्वया सत्यमलङ्कृतमिति[1] ॥ ५१ ॥

**स्वकुलं[2] समलंकृतं गुणैरुपनीताश्च महापदं जनाः ।**
**अनुजा विनयेन भूषिता न पराभूतिरितोऽस्ति काचन ॥५२॥**

स्वेति—त्वया गुणैरौदार्यादिभिः स्वकुलं समलंकृतं सम्यक्प्रकारेण विभूषितम् । जनाः महापदं महापदवीमुपनीताः प्रापिताः । अनुजाः भ्रातरः विनयेन भूषिताः इत एभ्यः प्रकारेभ्यः नास्ति काचन परा अन्या भूतिर्विभूतिरिति ।

भारतीयः—स्वकुलं समलं सलाञ्छनं त्वया गुणैः कृतम् । जनाश्च महापदं महतीम् आपदं

---

**अनादि कालसे चले आये तथा अनन्त कालतक चलते रहने योग्य यह संसारके सुख और दुःखके इस इतरेतर आश्रय ( सुखके बाद दुःख और दुःखके बाद सुख ) के समान ही राजा राम अथवा युधिष्ठिर अनेक बार देशसे वनमें और वनसे देशमें होते चले आते थे ॥५०॥**

**उक्त प्रकारसे चले जाते ज्येष्ठ भ्राताको देखकर मार्गमें छोटे भाई लक्ष्मण अथवा भीम-अर्जुनने स्पष्ट कहा था कि हे अग्रज, इस प्रकार देशोंकी सीमाओंमें प्रवेश करके तथा उनको छोड़कर आपने इन्हें सचमुच विभूषित ही किया है ॥५१॥**

**अन्वय—गुणैः स्वकुलं समलंकृतं, च जनाः महापदे नीताः अनुजा विनयेन भूषिताः इतः परा काचन भूतिः नास्ति ।**

**पितृभक्ति आदि गुणोंके द्वारा अपने कुलकी शोभा बढ़ायी है। जनताका पद ऊँचा किया है। छोटे भाइयोंको अनुशासनसे दीक्षित किया है। फलतः संसारमें इससे बड़ी कोई विभूति नहीं है।**

**अन्वय—गुणैः स्वकुलं समलं कृतं, च जनाः महा-आपदं नीताः, वि-नयेन अनुजाः भूषि-[ शि ] ताः इतः परा काचन अभूतिः नास्ति ।**

**द्यूतके पाशोंके द्वारा हे धर्मराज, आपने अपने कुलको दूषित किया है। जनताको**

---

1. श्लेषाऽलङ्कारः—प०, द० । 2. एतेषां पद्यानामनुकूलप्रतिकूलार्थत्वात् पक्षद्वयम्, न तु राघवभारतीयापेक्षयेति ।

विपत्तिमुपनीताः । अनुजाः बान्धवाः विनयेन विगतो नयः विनयः दुर्नयस्तेन भूषिताः भुवि उषिताः तेन कृत्वा इत एभ्यः प्रकारेभ्यः नास्ति काचन पराभूतिरभिभवः अन्येति पदमध्याहार्यम्[1] ॥ ५२ ॥

**यदि राजतयाविना नृपाः कृतराज्या इव सानुभावनाः ।**
**यशसा च युतास्तदेतया बहुचिन्ताहतया किमु श्रिया ॥५३॥**

यदीति—यदि राजतया राजभावेन विना कृतराज्या इव नृपाः नरेश्वराः सानुभावना समाहात्म्याः यशसा च युताः भवेयुस्तत् तस्मात् उ अहो किमेतया श्रिया लक्ष्म्या कथम्भूतया बहुचिन्ताहतया बह्वी या चिन्ता तया हतया नष्टया ।

भारतीयः—यत् यस्मात्कारणात् सानुभावना सानुषु पर्वतनितम्बेषु भावना स्थितिर्येषां ते पर्वतनितम्बस्थितिकाः सन्तः नृपाः कृतराज्या इव भवेयुः । कथम्भूताः ? अविना न विद्यते विना येषां ते अविना युक्ता इत्यर्थः । कया इराजतया इरायाः अजः क्षेपः यस्याऽसाविराजः पृथिवीपरित्यागयुक्तः पुरुष इत्यर्थः । इराजस्य भावः इराजता तया पृथिवीपरित्यागत्वेनेत्यर्थः । यशसा युताश्च स्युः तत् तस्मात् किमु अहो एतयाऽनया श्रिया । कथम्भूतया ? बहुचिन्ताहतया बहूनां स्वपरवर्गीयाणां चिन्ता बहुचिन्ता तया हतया बहुचिन्ताहतया । श्लेषालङ्कारः ॥ ५३ ॥

**चमरा व्यजनेन वीजयन्ति द्विरदास्ते दधते च नित्यसेवाम् ।**
**शबराः शिविरेषु बद्धगेयाः किमु राज्येन गतेन वा स्थितेन ॥५४॥**

चमरेति—शिविरेषु निवेशेषु चमराः चमर्यः व्यजनेन कृत्वा वीजयन्ति । ते प्रसिद्धाः [2]कान्तारसमुद्भवाः द्विरदा हस्तिनः नित्यसेवां अनवरतवल्गनं च दधते धरन्ति तथा शबराः पुलिन्दाः बद्धगेयाः विरचितगीताः भूत्वा दधते धरन्ति नित्यसेवाम् । एषु प्रकारेषु सत्सु उ अहो किं गतेन वा अथवा स्थितेन राज्येनेति सम्बन्धः ।

भारतीयः—वा उपमार्थे स्थितेन राज्येनेव गतेन राज्येन उ अहो युधिष्ठिर ते तव सम्बन्धित्वेन शिविरेषु वसतिस्थानेषु लक्षितलक्षणानिरूपणात् चमराः पुरुषाः व्यजनेन चामरेण कृत्वा किं वीजयन्ति ? चकारेण समुच्चयार्थो गम्यते । तथा द्विरदाः किं नित्यसेवां दधते ? तथा शबराः गीतेन कृत्वा शं सुखं वृण्वते

---

**कौरवोंपर छोड़कर महा विपत्तिमें डाल दिया है और नीतिसे काम न करके हम छोटे भाइयोंको भूमिपर सोनेके लिए बाध्य किया है ॥५२॥**

**यदि राजाके कार्यादिके बिना ही राजाका प्रभाव, माहात्म्य आदि राज्य करनेवालोंके समान हो जाँय और कीर्तिको प्राप्त करले तो अनेक चिन्ताओंसे साबाध इस राज्य-लक्ष्मीसे क्या प्रयोजन है ?**

**अन्वय—यत इराजतया विना सानुभावना नृपाः कृतराज्या इव यशसा च युताः तद् बहुचिन्ताहतया एतया श्रिया किमु ।**

**यतः पृथ्वीके राज्यके त्यागसे भूषित अतएव पर्वतोंपर निवास करनेमें प्रसन्न मन त्यागी राजा राज्य करनेवालोंके समान यशके भागी होते हैं अतः अपनों तथा परायों; सभीको चिन्तामें डालनेवाली इस लौकिक सम्पत्तिसे हे धर्मराज ! क्या लाभ है ॥५३॥**

**चमरी मृग अपनी पूँछोंसे चमर ढोरते हैं । जंगली हाथी प्रतिदिन सवारीकी सेवामें रहते हैं । जहाँ पड़ाव डालते हैं वहीं भील आदि ग्राम्यगीत गाते हैं । तब राज्यके रहने या चले जानेसे क्या अन्तर हुआ ?**

**राज्यपदपर रहनेके समान ( वा ) राज्य खो देनेपर आपको चमरधारी क्या**

---

१. श्लेषाऽलङ्कारः—प०, द० । २. रेवातीरसमुद्भवा—प०, द० ।

शृण्वन्तीति शवराः गायनाः अथवा शेन सुखेन म्रियन्ते इति शवराः सुखिनः बद्धगेयाः सन्तः नित्यसेवां किं दधते ! अपि तु नेति सर्वत्र सम्बन्धः। अत्रैतत्तात्पर्यम्–यथा स्थितेन राज्येन चामरधरादयः सम्भवन्ति तथा न गतेन राज्येनेति। आक्षेपालङ्कारः ॥ ५४ ॥

**त्वामभ्युपैतु पुनरभ्युदयाय दीप्ति-**
**रौत्सुक्यमागतवतीव रविं दिनादौ।**
**ध्वान्तं विसर्पति तवानुदयान्नयत्वं**
**कालेऽभिवृद्धिमभिमानधनञ्जयश्च ॥५५॥**

**इति श्री द्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्येऽरण्य-वासवर्णनं नाम चतुर्थः सर्गः ॥४॥**

---

त्वामिति—हे राम हे युधिष्ठिर च त्वां भवन्तं च पुनः दीप्तिः प्रतापलक्षणाऽभ्युपैतु व्यावृत्यागच्छतु। कस्मै ? अभ्युदयाय विभवाय। कथम्भूता सती ? औत्सुक्यं रामस्य आगतवती। उपमार्थः–इव यथा रविमादित्यं दिनादौ दिवसस्य प्रथमारम्भे दीप्तिः पुनरभ्युपैति। कथम्भूता ? औत्सुक्यमागतवती। उत्तरार्द्धे सोपस्करतया व्याख्यानं विधीयते–तथा तव भवतः सम्बन्धित्वेन अनुदयादभिभवात् ध्वान्तमनीतिलक्षणतमः विसर्पति सामस्त्येन प्रवर्त्तते। यथा रवेरनुदयात् ध्वान्तमन्धकारः विसर्पति। अतएव काले समये तथा अभिमानधनम् अभिमान एव धनम् अथवा अभिमानश्च धनञ्च अभिमानधनं समाहारापेक्षयैकत्वमत्र। जयञ्चेति कर्म, अभिवृद्धिं नय त्वं भवान्। यथा रविः अभिमानधनमभि सामस्त्येन मानं प्रमाणं यस्य तत् अभिमानञ्च तद्धनञ्चाभिमानधनं सप्रमाणकिरणसन्दोहमित्यर्थः। जयञ्च तमस्तोमनिराकरणलक्षणञ्च कर्मद्वयम् अभिवृद्धिं नयति क्व काल इति[1] ॥ उपमालङ्कारः ॥ ५५ ॥

**इति निरवद्यविद्यामण्डनमण्डितमण्डलीडितस्य पट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिका-चकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदीनामदधानायां टीकायां द्विसंधानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये राघवपाण्डवारण्यगमनवर्णनो नाम चतुर्थः सर्गः ॥४॥**

---

**हवा करते हैं ? हाथी आदिकी प्रतिदिन सवारी प्राप्त होती है क्या ! राजमहलके समान शिविरमें भी क्या गायक गीत सुनाते हैं ? अर्थात् नहीं ॥५४॥**

**हे राम अथवा युधिष्ठिर लौकिक अभ्युदयके लिए मिलनकी उत्कण्ठासे प्रेरितके समान प्रभुता फिर आपको उसी तरह प्राप्त हो जैसे प्रातःकाल कान्ति सूर्यसे मिलती है, आपके वनमें रहनेके कारण कोशल अथवा कुरु देशमें अनीतिरूपी अन्धकार सब ओर छाया है अतएव आप उचित समयपर सर्वथा विकास, आत्मगौरव रूपी धन और अनीतिकी जयको करें। [ सूर्य भी रात्रिमें फैले हुए अन्धकारको पूर्ण विस्तृत किरणोंरूपी सम्पत्तिसे जीतता है और समस्त पदार्थोंकी वृद्धिका कारण होता है ] ॥५५॥**

**निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्र गुरुके शिष्य देवनन्दिके शिष्य, सकलकलाकी चातुर्यचन्द्रिकाके चकोर नेमिचन्द्र-द्वारा विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसंधान-काव्यकी पदकौमुदी टीकामें राघव-पाण्डवारण्यगमन नामक चतुर्थ सर्ग समाप्त।**

---

१. काले इति सम्बन्धः–प०, द०।

# पञ्चमः सर्गः

**ततो वनं देशमनेकमेव पुण्याश्रमं तीर्थमतीत्य राजा ।**
**गूढः प्रदीप्त्यारविराटभूमिं स्फीतांसको दण्डकलक्षितां सः ॥१॥**

तत इति—ततो रामलक्ष्मणसीता सम्बन्धित्वेन स्वदेशपरित्यागकान्तारप्रवेशवर्णनानन्तरं स राजा रामः दण्डकलक्षितां भूमिमाट गतवान् । कथंभूतः ? स्फीतांसकः पीनोन्नतस्कन्धः । पुनः ? रविरिव रविः अथवा स्वयमेव प्रदीप्त्या क्षात्रतेजसा रविः । पुनः गूढः प्रच्छन्नवृत्तिकः । किं कृत्वा ? पूर्वं गतवान् रामः अतीत्यातिक्रम्य । किम् ? वनमरण्यं तथा देशं विषयं तथा पुण्याश्रमं तापसवसतिं तथा तीर्थम् । येन दृष्टेनाश्रितेन वा अपारसंसारपारावारस्तीर्यते तत्तीर्थं ऊर्जयन्तादि सर्वम् । कथंभूतम् ? विशेष्यमनेकमेव नानाप्रकारमेव ।

भारतीयः—ततः पाण्डवानां सम्बन्धित्वेन स्वदेशपरित्यागकान्तारप्रवेशवर्णनानन्तरमनेकमेव वनं देशं पुण्याश्रमं तीर्थमतीत्य स जगद्विख्यातो राजा युधिष्ठिरः स्फीतां लोकविख्यातां विराटभूमिं मत्स्यदेशमार गतवान् । कथंभूतः ? कोदण्डकलक्षितांसः कोदण्डकेन धनुषा लक्षितः अंसः स्कन्धो यस्य सः । पुनः गूढःसंवृतः कया प्रदीप्त्या प्रतापेनेति ॥श्लेषोपालङ्कारः ॥१॥

**विहाय चापव्यवहारमुग्रं यथा नियोगं प्रयतो जितात्मा ।**
**निरूप्य तस्यां स कुलायभूमिं योगीव कञ्चित्[1] समयं निनाय ॥२॥**

विहायेति—तस्यां दण्डकारण्यभूमौ स रामः कञ्चित्समयं कालं निनाय नीतवान् । किं कृत्वा ? पूर्वं निरूप्य समर्प्य, कां भूमिम् कस्मै ? कुलाय अन्वयाय भरताय । किं कृत्वा ? पुनश्च ( च पुनः ) विहाय परित्यज्य । कम् ? अपव्यवहारं दुर्नीतिम् । कथम्भूतम् ? उग्रं सोढुमशक्यम् । कथम्भूतो रामः ? जितात्मा जितेन्द्रियः । पुनः प्रयतः प्रयत्नवान् । कथम् ? यथा नियोगं यथा स्वाभिप्रायेण नियोगो व्यापारो यत्र कर्मणि तत् यथा नियोगम् । उपमार्थः प्रदर्श्यते । योगीव यथा योगीन्द्रः तस्यां लौकिकप्रसिद्धायां भूमौ सकुलाय

---

**अन्वय—ततो अनेकमेव वनं, देशं, तीर्थं, पुण्याश्रमं अतीत्य, स्फीतांसको प्रदीप्तभा रविः सः गूढः राजा दण्डकलक्षितां भूमिं आट ।**

**उक्त प्रकारसे भ्रमण करते हुए अनेक वनों, देशों, ऋषियोंके पवित्र आश्रमों तथा प्रयाग आदि तीर्थोंको पार करके पुष्ट उन्नत स्कन्धधारी, तेजमें सूर्य समान वह गुप्त वेशधारी राजा राम दण्डक नामसे ख्यात प्रदेशमें पहुंचे थे ।**

**अन्वय—......कोदण्डलक्षितांसः प्रदीप्त्या गूढः स राजा स्फीतां विराटभूमिं आर ।**

**गुप्तवासके प्रसंगसे अनेक देशों, वनों, तपोभूमियों और ऊर्जयन्त आदि तीर्थोंसे निकलता हुआ पुष्ट कन्धेपर धनुष लटकाये तथापि प्रताप शौर्यकी दृष्टिसे अज्ञात वह राजा युधिष्ठिर विस्तृत तथा ख्यात मत्स्य देशमें पहुंचा था ॥ १ ॥**

**अन्वय—उग्रं चापव्यवहारं विहाय यथा नियोगं प्रयतः जितात्मा स तस्यां कुलायभूमिं निरूप्य योगीव कञ्चित् कालं निनाय ।**

**दारुण धनुषके प्रयोगको छोड़कर अपने स्वभावानुसार जीवन व्यतीत करनेमें लीन तथा आत्मजेता राजा रामने दण्डकारण्यमें झोपड़ीके लायक भूमिको चुनकर योगीके समान कुछ समय व्यतीत किया था [ आत्मापर विजय न पानेके कारण योगी भी बुरे आचरण तथा उग्रताको छोड़कर किसी वनमें कुटिया बनाता है और योगशास्त्रके अनुसार क्रिया करता है और अभ्यासमें कुछ समय बिताता है ] ।**

---

1. किञ्चित्—द० ।

समानं कुलं यस्याऽसौ सकुलः तस्मै सकुलाय भूमिं निरूप्य कश्चित् समयं नयति। कथम्भूतः जितात्मा ? पुनः प्रयतः प्रयत्नपरः। कथम् ? यथा नियोगं स्वाभिप्रायव्यापारम्। किं कृत्वा ? पूर्वं विहाय च। कम् ? अप-व्यवहारम्। कथम्भूतम् ? उग्रमिति सम्बन्धः।

भारतीयः—स युधिष्ठिरः तस्यां विराटभूमौ कञ्चित्समयं निनाय। क इव ? योगीव। किं कृत्वा ? पूर्वं निरूप्यावलोक्य। काम् ? कुलायभूमिं कुलायाय नीडाय भूमिः कुलायभूमिः तां निवासभूमिम्। कथम्भूतः ? अजितात्मा अजितेन्द्रियः द्यूतव्यसनोपहतः। पुनः कथंभूतः ? प्रयतः। कथम् ? यथा नियोगम्। किं कृत्वा ? पूर्वं विहाय विमुच्य। काम् ? चापव्यवहारम्। कीदृशम् ? उग्रं तीव्रम्। उपमार्थः प्राग्वत्। श्लेषालङ्कारः॥२॥

**विरामभूमिः कमनीयतायाः कृष्णोदयानां विनिवासहेतुः।**
**समाययौ कामनिवेशमूर्तिस्तत्राभिमुख्यं किल कीचकस्य ॥३॥**

विरामेति—तत्र दण्डकारण्ये किल लोकोक्तौ शास्त्रोक्तौ वा कीचकस्य वेणोः सम्बन्धित्वेन आभिमुख्यं कृष्णो लक्ष्मणः समाययौ गतवान्। कथंभूतः ? कमनीयतायाः रमणीयतायाः विरामभूमिः विश्रामावनिः। पुनः दयानां करुणानां विनिवासहेतुः स्थितिकारणम्। पुनः कामनिवेशमूर्तिः कन्दर्पस्थितिशरीरक इति सम्बन्धः।

भारतीयः—तत्र विराटभूमौ किल कृष्णा द्रौपदी कीचकस्य कीचकनामधेयस्य नराधिपस्याभिमुख्यं समाययौ गतवती। कथंभूता ? कमनीयताया विरामभूमिः। पुनरुदयानां निवासहेतुः। पुनः कामनिवेशमूर्तिः कामानामभिलाषाणां निवेशाय रचनायै मूर्तिर्यस्याः सा[1] ॥३॥

**विलासभावेन विलम्बमानं निस्त्रिंशमत्राहृत सूर्यहासम्।**
**असौ निजग्राहमहोद्धतिस्तं पुण्यैकरूपेण वशं हि सर्वम् ॥४॥**

विलासेति—अत्रास्मिन् प्रस्तावे असौ लक्ष्मणस्तं लोकप्रसिद्धं सूर्यहासं सूर्यहासनामधेयं निस्त्रिंशं खड्गमाहृत गृहीतवान्। कथम्भूतं निस्त्रिंशम् ? विलम्बमानं निरालम्बतया लम्बमानम्। केन ? विलासभावेन वीनां पक्षिणां लासः विलासः क्रीडा यत्र तद्विलासं तस्य भावेन गगनं समुपेत्येत्यर्थः। कथंभूतो लक्ष्मणः ?

---

**अन्वय**—जितात्मा यथा नियोगं प्रयतः सकुलाय भूमिं निरूप्य तस्या उग्रं चापव्यवहारं विहाय कञ्चित् समयं निनाय।

सत्य, आदि व्रतोंके पूर्ण पालनके कारण आत्मजयी तथापि कर्म-संयोगके अनुसार जुआ, आदि आचरण कर्ता युधिष्ठिर अपने सगोत्रोंके लिए राज्य हार कर विराट भूमिमें पहुंचनेपर प्रखर शस्त्र विद्याको त्यागकर कुछ समय बिता रहे थे ॥ २ ॥

**अन्वय**—तत्र कमनीयतायाः विरामभूमिः दयानां विनिवासहेतुः कामनिवेशमूर्तिः कृष्णः किल कीचकस्य आभिमुख्यं समाययौ।

दण्डकारण्यमें रहते समय सुन्दरताकी चरमसीमा, दया दाक्षिण्यकी निवासभूमि तथा सशरीर कामके समान मनोहर वासुदेव लक्ष्मण कीचक ( वेणुवन ) के सामने आ पहुंचा था।

**अन्वय**—......उदयानां विनिवासहेतुः...कृष्णा...।

विराट भूमिमें निवासके समय परमलावण्यकी चरम कृति, अनेक अभ्युदयोंकी निमित्त, तथा कामरूपी मन्दिरमें विराजमान करने योग्य मूर्तिके समान द्रौपदी संयोगसे कीचक राजाके सामनेसे निकल गयी ॥ ३ ॥

**अन्वय**—विलासभावेन विलम्बमानं तं सूर्यहासं निस्त्रिंशं अत्र निजग्राहमहोद्धतिः असौ आहृत हि पुण्यैकरूपेण सर्वं वशं।

पक्षियोंकी उड़ानके समान आकाशमें लटकते उस लोकप्रसिद्ध सूर्यहास खड्गको दण्डकारण्यमें, स्वयमेव वरण करनेके कारण परम प्रतापी लक्ष्मणने पकड़ लिया था। उचित ही है क्योंकि, केवल पुण्यके प्रतापसे सब कुछ वशमें हो जाता है।

1. श्लेषालङ्कार—प. द.।

निजग्राहमहोद्धृतिः निजश्चासौ ग्राहश्च निजग्राहः तेन महोद्धृतिर्यस्य सः स्वकीयाङ्गीकारमहोद्धृत इत्यर्थः। अर्थान्तरमुपन्यस्यते—हि स्फुटं सर्वं वस्तुजातं पुण्यैकरूपेण कृत्वा वशमात्माधीनं जायत इति सम्बन्धः।

भारतीयः—अत्रावसरे असौ कृष्णा द्रौपदी तं लोकप्रसिद्धं कीचकं निजग्राह निगृहीतवती। केन कृत्वा? विलासभावेन कटाक्षपातेन। कथम्भूतम्? विलम्बमानं क्रीडां कर्त्तुं त्वरयन्तम्? पुनः निस्त्रिंशं निर्दयम्। कथम्भूतम्? आहृतसूर्यहासमाहृतः लुप्तः (लोपितः) सूर्यस्य हासो दीप्तिर्येनासौ आहृतसूर्यहासः तम् आहृतसूर्यहासम् तिरस्कृतरविप्रतापमित्यर्थः। कथम्भूता महोद्धृतिः? महेनोत्सवेन उद्धृतिर्यस्याः सा महोद्धृतिः उत्सवोद्धृतेत्यर्थः। युक्तमेतत्, हि स्फुटं पुण्यैकरूपेण मनोहररूपेण सर्वं वशं स्यात्। अर्थान्तरन्यासालङ्कारः ॥४॥

**इच्छातिभङ्गेन न रन्तुकामं तं तेन निघ्नन्नियमेन सक्तम्।**
**स्वस्थं परं ज्योतिरसौ चकार नश्यन्ति वाऽस्थानकृतप्रयासाः ॥५॥**

इच्छेति—असौ लक्ष्मणस्तं नरं रामायणीयकथाप्रसिद्धं विमुक्तजटाजूटधारिणं शम्बुकुमाराख्यं परं केवलं स्वस्थं स्वर्गस्थं चकार। कथम्भूतो लक्ष्मणः? तु पुनः ज्योतिः द्विरुक्तं क्षात्रं तेजः स्वयमेवेत्यर्थः। कथम्भूतम्? सक्तं सम्बद्धम्। केन? नियमेन व्रतेन। कथम्? कागम(त्व)र्थम्। किं कुर्वाणो लक्ष्मणः? तं शम्बुकुमारं स्वस्थं स्वर्गस्थं चकार? तेन सूर्यहासाभिधानेन खड्गेन तं वंशजालं निघ्नन् संभिन्दन्। केन कृत्वा? पुनः इच्छातिभङ्गेन, मूलावशेषमिदं वंशजालमेतेन खड्गेन छिनद्मीति वाञ्छातिभङ्गनेनेति भावः। अर्थान्तरमभिधीयते—वा एवार्थसूचकः। अस्थानकृतप्रयासा नश्यन्त्येव।

भारतीयः—असौ कृष्णा द्रौपदी तेन विलासभावेन कृत्वा तं कीचकं नरपरं स्वस्थं सुखिनं न चकार न कृतवती। कथम्भूता सती? परं केवलं ज्योतिः स्वयमेव परमार्थतः पतिव्रतालक्षणं तेजः। कथम्भूतं कीचकम्? न सक्तमनियन्त्रितपरिणामम्। क्व? नियमे व्रते। पुनः निघ्नं परदाररतम्। पुनः रन्तुकामं भोक्तुकामम्। केन कृत्वा? इच्छातिभङ्गेन इन्द्रियाणां यथेष्टं तृप्तिर्भवतात् तावदिमां भोक्ष्यामि पश्चाद्धिंस्यामीति वाञ्छाभङ्गनभयेनेत्यर्थः। अर्थान्तरन्यासवत्[1] ॥५॥

**सुरासुरातिक्रमविक्रमस्य दशास्यनामोद्वहतः स्वसारम्।**
**सुतापयोगादभवत्सुदुःखा कामेषु भग्नेषु कुतः सुखं वा ॥६॥**

---

अन्वय—विलासभावेन विलम्बमानं आहृतसूर्यहासं निस्त्रिंशं तं महोद्धृतिः असौ निजग्राह हि पुण्यैकरूपेण सर्वं वशं।

इस अवसरपर भाग-विलासकी इच्छासे पीछे-पीछे दौड़नेवाले, सूर्यकी हँसीसे भी तीक्ष्ण और उत्तेजक हँसी हँसते उस निर्दय कीचकको अत्यन्त उद्धत इस द्रौपदीने झिड़क दिया था। पुण्यमय आचरणके द्वारा सब कुछ सम्भव है ॥ ४ ॥

अन्वय—परं ज्योतिरसौ इच्छातिभङ्गेन तेन कामं तं निघ्नन् नियमेन सक्तं नरं स्वस्थं चकार। हि अस्थानकृतप्रयासाः नश्यन्ति।

अत्यन्त तेजस्वी लक्ष्मणने इच्छामात्रसे विपुल संहारकारी उस चन्द्रहास खड्ग-द्वारा यों ही वंशवन को काटते हुए वहीं परम तपस्यामें लीन शम्बुकुमारको भी स्वर्गीय कर दिया था। अस्थानपर किये गये प्रयत्न विनाशका ही कारण होते हैं।

अन्वय—…नियमेन सक्तं रन्तुकामं, निघ्नं तं तेन इच्छातिभंगेन स्वस्थं न चकार।

पतिव्रतके तेजसे भासमान द्रौपदी व्रत नियमादिके भंगकर्त्ता, रमण करनेके लिए व्याकुल, परस्त्रीगामी और अधम कीचकको; उक्त प्रकारसे तर्जनापूर्वक मनोरथ भंग करके सदाचारी या शान्त नहीं किया था। ठीक ही है अपात्रके साथ किये गये सत्कर्म निष्फल ही होते हैं ॥ ५ ॥

अन्वय—सुरासुरातिक्रमविक्रमस्य दशास्यनामोद्वहतः स्वसा सुतापयोगात् भरम् सुदुःखा अभवत्। वा कामेषु भग्नेषु सुखं कुतः?

---

1. श्लेषालङ्कारः—प०, द०।

कस्मात् ? अभीतमहानराजतः अभीतो भीमः महानरोऽर्जुनस्तयोराजिः सङ्ग्रामस्तस्मात्। अथवा सम्मुखागतार्जुनरणात्। पुनः कृतयुद्धविक्रमः कृतञ्च तत्युद्धञ्च कृतयुद्धं तत्र विगतः क्रमो यस्य सः विहितरणविगतशक्तिरित्यर्थः। पुनरभीतमहाः प्रभ्रष्टतेजा इति। श्लेषः ॥ ३५ ॥

**चिरस्य युद्ध्वा स पपात निष्क्रियः सहैव शुद्धान्तवधूजनाश्रुभिः।**
**सुरासुराणां कुसुमाञ्जलिर्दिवस्तयोरपप्तन्मधुपायिभिः समम् ॥३६॥**

चिरस्येति—स खरदूषणो रिपुः चिरस्य चिरकालं युद्ध्वा संप्रहृत्य निष्क्रियः निश्चेष्टः सन् शुद्धान्तवधूजनाश्रुभिरन्तःपुरकामिनीजनवाष्पजलैः सह पपात। तयोः नरेन्द्रयोः सुरासुराणां देवदानवानां कुसुमाञ्जलिः प्रसूनाञ्जलिः दिवः आकाशात् अपप्तत् पपात। कथम् ? समम्। कैः ? मधुपायिभिः भ्रमरैः[१] ॥ ३६ ॥

**निपीय रक्तं सुरपुष्पवासितं सितं कपालं परिपूर्य सनृताम्।**
**नृतां प्रशंसन्त्यनयोर्ननर्त्तवाननर्तवाचोर्युधि रक्षसां ततिः ॥३७॥**

निपीयेति—रक्षसां ततिः श्रेणिः न नवा ननर्त्त अपि तु ननर्त्तैव। क ? युधि संग्रामे। "द्वौ नञौ प्रकृतमर्थं गमयतः।" किं कुर्वती सती ? अनयोः नरेन्द्रयोः सनृतां सत्यां नृतां नृधर्मं प्रशंसन्ती। कथम्भूतयोरनयोः ? ऋतवाचोः सत्यवचसोः। किं कृत्वा ननर्त्त ? सुरपुष्पवासितममरकुसुमसंस्कृतं रक्तं रुधिरं निपीय पीत्वा। पुनः किं कृत्वा ? सितं शुक्लं कपालं परिपूर्य भृत्वा ॥३७॥

**प्रसार्य पादावधिरोप्य बालकं विधाय वक्त्रेऽङ्गुलिपङ्क्तमङ्गना।**
**प्रवेशयामास वसां महीक्षितां प्रकल्प्य पीथं पिशिताशिनां शनैः ॥३८॥**

प्रसार्येति—पिशिताशिनां राक्षसानामङ्गना कामिनी महीक्षितां नरपतीनां वसां मांसादिगतस्नेहं बालकं प्रवेशयामास पाययति स्म। धातूनामनेकार्थत्वात्। किं कृत्वा ? पूर्वं पीथं[२] प्रकल्प्य सङ्कल्प्य। किं कृत्वा ? वक्त्रे वदने मन्दमंगुलिपङ्कं विधाय कृत्वा। किं कृत्वा ? अधिरोप्य। कम् ? बालकम्। किं कृत्वा ? पादौ प्रसार्य ॥३८॥

**समुत्पतन्तो दिवि रेणवोऽणवो विलूनमूलाः क्षतजेन तेनते।**
**अधःप्रदीप्तज्वलनाः सितासिता रणस्य धूमा इव रेजिरेऽजिरे ॥३९॥**

समुत्पतन्त इति—अणवः सूक्ष्माः रणोद्भवा रेणवः धूल्यः रेजिरे भान्ति स्म। किं कुर्वन्तो रेजिरे ? दिवि गगने समुत्पतन्तः उत्प्लवमानाः। कथम्भूताः ? अधःप्रदीप्तज्वलनाः अधस्तात्प्रज्वलिताग्नयः। कथम्भूताः ?

---

गये थे। क्योंकि उनका युद्धका पराक्रम समाप्त हो गया था और सब प्रकारसे प्रभाव समाप्त हो जाने से वे निस्तेज हो गये थे ॥ ३५॥

उक्त प्रकारसे चिरकाल तक युद्ध करके वह खरदूषण अथवा कीचक निष्क्रिय हो अन्तःपुरकी रानियोंके आँसुओंके साथ साथ गिर गया था। तथा दोनों पक्षके इन योद्धाओंके लिए देवता और दानवोंकी पुष्पांजलियाँ गिरीं थी जिनपर भौंरे गूंज रहे थे ॥३६॥

सत्यवादी राघव-पाण्डव राजाओंकी अक्षरशः सत्य महा मानवताकी प्रशंसा करती हुई राक्षसोंकी पंक्तियां युद्ध भूमिमें स्वर्गीय पुष्पोंसे सुगन्धित मृतोंके रक्तको श्वेत कपालोंमें भरकर यथेच्छ पीकर नाच उठी थीं ॥३७॥

मांसाहारी राक्षसोंकी स्त्रियोंने पैरोंको फैलाकर उनपर बच्चेको बैठा लिया था फिर मृत राजाओंकी चर्बीका घोल बनाकर बच्चोंके मुखमें अंगुलि डालकर धीरे-धीरे उसे उनके गलेके नीचे उतार दिया था ॥३८॥ –

संग्राम-भूमिमें ऊपर उड़ी हुई धूलके कण घावोंसे बहे रक्तके कारण नीचे शान्त हो

---

१. सहोक्तिः—प०, द०। २. पा-थक् ( पातुर्तुदीति। उण्, २।७ ) पिबति रसादीमिति पा-कर्त्तरि-थक् सूर्याग्निकाकाः।

विलूनमूलाः विलूनं मूलमधिष्ठानं येषां ते तथोक्ताः। केन कृत्वा ? तेन प्रसिद्धेन क्षतजेन भटव्रणजातरुधिरेण। क ? अजिरे। कस्य ? रणस्य। कथम्भूताः ? सितासिताः सिताश्चासिताश्च सितासिताः धवलश्यामलाः। क इव ? धूमा इव यथा धूमा आकाशे उत्पतन्तः सितासिता राजन्ते तथा रेणवोऽपीति। उत्प्रेक्षा ॥३९॥

**शवाः शिवानां मुखतीयवह्निना रथेषु देहस्थितबाणदारुणा।**
**विदह्यमाना विधिमाययुर्भटाः स्त्रियश्च ता बाष्पजलाञ्जलिं ददुः ॥४०॥**

शवा इति–आययुः प्रापुः। के ? भटाः वीराः। कम् ? विधिं संस्कारम्। कथम्भूता भटाः ? शवाः मृताः। केषु ? रथेषु। पुनः कथम्भूताः भटाः ? विदह्यमानाः संक्रियमाणाः। केन ? मुखतीयवह्निना मुखोद्भवाग्निना। कासाम् ? शिवानां शृगालीनाम्। केन कृत्वा ? देहस्थितबाणदारुणा शरीरगतशरेन्धनेन। ददुश्च दत्तवत्यः। काः ? स्त्रियः कामिन्यः। कम् ? बाष्पजलाञ्जलिमश्रुजलाञ्जलिम्। समुच्चयः ॥४०॥

**मतङ्गजानामधिरोहका हता मतं गजानां विवशा विसस्मरुः।**
**तदीयपङ्क्त्या चपलायमानया परे विभिन्नाश्च पलायमानया ॥४१॥**

मतङ्गजानामिति–विसस्मरुः विस्मृतवन्तः। के ? विवशाः विकला मतङ्गजानामधिरोहका निषादिनः। किम् ? गजानां मतं शिक्षाम्। कथम्भूताः ? हता मृताः। अत्र भावो व्यज्यते। शरपञ्जरजर्जरीभूतशरीराः यावत्कण्ठगतप्राणाः तावद्गजानां मतं न विसस्मरुरिति। च पुनः पलायमानया विद्रुतया चपलायमानया चञ्चलया तदीयपङ्क्त्या गजपंक्त्या परे शत्रवो विभिन्नाः विदीर्णाः। समुच्चयः ॥४१॥

**बभौ महल्लोहितसम्भृतं सरः प्रपीयमानं तटवर्तिभिः खगैः।**
**यमेन रक्तं विनिगीर्य देहिनामजीर्णमुद्गीर्णमिवातिपानतः ॥४२॥**

बभाविति–लोहितसम्भृतं रुधिरप्रपूर्णं महद्विस्तीर्णं तटवर्त्तिभिः तीरस्थितैः खगैः पक्षिभिः प्रपीयमानः मतिपीयमानं सरः बभौ चकासे। यमेन कृतान्तेन पूर्वं निगीर्य निपीय उद्गीर्णमुद्वान्तं देहिनां प्राणिनां रक्तं रुधिरमिव। कथम्भूतम् ? अतिपानतोऽतिपानात् [1]अजीर्णमपरिणतम् ॥४२॥

**गता हयेभ्योऽप्यसवोऽतिवेगतो गजा मुमूर्च्छुः शरवर्षतोऽगजाः।**
**रथा विभिन्नाः पतिता मनोरथा नरा गतास्ते न समानरागताः ॥४३॥**

गता इति–हयेभ्योऽपि अश्वेभ्योऽपि अतिवेगतोऽतिजवात् असवः प्राणाः गतास्तथा अगजा-गिरिजाताः गजा हस्तिनः शरवर्षतो बाणवर्षणात् मुमूर्च्छुः मूर्च्छितास्तथा रथाः विभिन्नाः भग्नास्तथा

---

गये थे फलतः ऐसे लगते थे जैसा कि नीचे आग जलते रहनेपर ऊपर उठता श्वेत-श्याम धुआं लगता है ॥३९॥

रथोंमें पड़े हुए योद्धाओंके शव शृगालियोंके मुखकी आगसे शरीरमें चुभे बाणों रूपी ईन्धनके द्वारा जल रहे थे और इस प्रकार अन्तिम संस्कारको प्राप्त हुए थे। तथा उनकी स्त्रियोंके आंसुओंके पानीसे उन्हें जलांजलि दी गयी थी ॥४०॥

मदोन्मत्त हाथियों पर सवार योद्धाओंने प्राण निकल जानेपर ही विवश होकर हाथियोंका संचालन छोड़ा था। फलतः (बना महावतके होनेके कारण) भागनेवाली और अत्यन्त चंचल हस्ति पंक्तिके द्वारा रास्तेमें आये शत्रु कुचल दिये गये थे ॥४१॥

किनारोंपर बैठे पक्षियोंके द्वारा पिया गया मृतक योद्धाओंके रक्तसे परिपूर्ण रक्तका विशाल सरोवर ऐसा लगता था मानो यमराजने मनुष्योंका बहुत अधिक रक्त पी लिया है जो कि अत्यधिक होनेके कारण पचा नहीं है फलतः वमन कर दिया है ॥४२॥

बाण वर्षाके कारण घोड़ोंसे भी अधिक तेजीसे उनके प्राण निकल गये थे, पर्वतोंमें उत्पन्न विशाल हाथी भी मूर्छित होकर लुढ़क गये थे, रथ टूट फूट गये थे, और विपक्षियोंके

---

१. उत्प्रेक्षाऽलङ्कारः–प०, द०

मनोरथाः मनोऽभिलाषाः पतिताः गताः तथा ते लोकप्रसिद्धाः नराः शत्रवः समानरागताः सह मानेन वर्त्त-मानः समानः समानो रागो येषां ते समानरागाः तेषां भावाः समानरागतास्ताः ससत्कारानुरागभावान् न गता इत्यर्थः । समुच्चयः ॥४३॥

**तथा द्विपेन्द्रास्तुरगाः पदातयो महान्वया भूपतयः क्षणेन तत् ।**
**गतं समस्तं समवर्त्तिनो मुखं च्युतं न चोद्यं स्थितमेव विस्मितम् ॥४४॥**

तथेति—द्विपेन्द्रा मतङ्गतास्तथा तुरङ्गा अश्वास्तथा पदातयः भृत्यास्तथा महान्वया गजसाधनाः अश्वसाधनास्तथा भूपतयश्चावनीश्वराः तत् समस्तं सकलं द्विपेन्द्रादि कर्तृ समवर्तिनः यमस्य मुखं वदनं क्षणेन मुहूर्त्तेन गतम् । अधुना सोपस्करतया व्याक्रियते तत्र च्युतं द्विपेन्द्रादि कस्मात्समवर्त्तिनो मुखात् । तत्र न चोद्यं नाश्चर्यम् । अत्र काकाक्षिगोलकन्यायेनोभयपदपरामर्शित्वं नञो ज्ञातव्यम् यत् स्थितं द्विपेन्द्रादि तद्विस्मितमेवेति ॥४४॥

**तथाहि भोगाः स्तनयित्नुसन्निभाः गजाननाधूननचञ्चलाः श्रियः ।**
**निनादिनाडिन्धमकण्ठनाडिवच्चलाचलं न स्थिरमायुरङ्गिनाम् ॥४५॥**

तथाहीति—अत्र सन्तीति क्रियाऽध्याहार्या । तथा भोगाः कमनीयकामिन्यादयः स्तनयित्नुसन्निभाः मेघसदृशाः सन्ति । अत्र भोगानां क्षणदृष्टत्वं प्रदर्शितम् तथा श्रियो विभूतयः गजाननाधूननचञ्चलाः हस्तिवदनप्रकम्पचञ्चलाः । कथम् ? हि स्फुटम् । तथा नास्ति । किम् ? चलाचलं वस्तु । कथम्भूतं नास्ति ? स्थिरं निश्चलम् । किंवत् ? निनादिनाडिन्धमकण्ठनाडिवत् ध्वनिमद्विहङ्गमगलधमनीवत् । तथा नास्ति । किम् ? आयुः प्राणधारणलक्षणं धर्मम् । कथम्भूतं नास्ति ? स्थिरम् । केषाम् ? अङ्गिनां प्राणिनामिति ॥ ४५ ॥

**अशेषमाकीर्णमुपैति शून्यतां क्षणाद्वियुङ्क्ते समवेतमुच्चकैः ।**
**यदेव रक्तं भजते विरक्ततामहोऽनुभावाः क्षणिकाः स्वभावतः ॥४६॥**

अशेषमिति—अशेषं सर्वमाकीर्णं प्रसृतं वस्तु शून्यतां लोचनगोचरातीततामुपैति प्राप्नोति । कथम् ? क्षणात् क्षणेन । तथा समवेतं सम्बद्धं वस्तु वियुङ्क्ते विघटते । उच्चकैरतिशयेन यदेव रक्तं सानुरागं तदेव विरक्ततां भजते व्रजति । अतएव सर्वे अनुभावाः अनुज्ञाताः पदार्थाः स्वभावतः, परमार्थवृत्त्या अहो क्षणिकाः स्युः ॥ ४६ ॥

**ततः स्फुटं पञ्चकमीक्षमाणौ तौ सिंहपोताविव विक्रमेण ।**
**निर्जग्मतुर्युद्धमुखान्नरेन्द्रौ क्रोधाभिमानाविव मूर्तिमन्तौ ॥४७॥**

---

मनोरथ भी नष्ट हो गये थे किन्तु बिचारे शत्रु लोग सम्मान और प्रीतिके साथ वापस न जा सके थे ॥४३॥

मदोन्मत्त श्रेष्ठ हाथी, वायुके समान वेगशाली घोड़े, पैदल सैनिक तथा उत्तम कुलमें उत्पन्न राजपुत्र ये सब क्षणभरमें ही सबके समान रूपसे विनाशक यमराजके मुखमें समा गये थे। कोई नहीं बचा इसमें क्या कहना है आश्चर्य तो यही है कि कुछ बच गये थे ॥४४॥

प्राणियोंके प्रिय भोग गर्जते बादलोंके समान चंचल हैं, लक्ष्मी हाथीके हिलते हुए शिरके समान है तथा आयु भी मधुर गायकोंके गलेकी नलियोंके समान चल तथा अचल है। कोई भी वस्तु स्थिर नहीं है ॥४५॥

जो पूर्णरूपसे फैल जाता है वही शून्य हो जाता है, जो अत्यन्त अनुरक्त होता है उसीका क्षणभरमें वियोग होता है तथा जो अत्यन्त मित्र होता है वही शत्रुताको धारण करता है। खेदकी बात है कि समस्त पदार्थोंकी प्रकृति ही क्षणभंगुर है ॥४६॥

तत इति–ततः संसारस्थितिविचारणानन्तरं तौ नरेन्द्रौ रामायणीयभारतीयकथासम्बन्धिनौ युद्धमुखात् रणाङ्गणात् विक्रमेण पौरुषेण निर्जग्मतुः निर्गतवन्तौ। किं कुर्वाणौ ? पञ्चकं रणं स्फुटं व्यक्तमीक्षमाणावलोकमानौ। काविव ? सिंहपोताविव पञ्चाननपिल्लकाविव। काविव ? मूर्त्तिमन्तौ सशरीरौ क्रोधाभिमानाविव। उत्प्रेक्षा ॥४७॥

**भयाद्यदेवोद्गतमङ्गनानां देवासुराणां प्रधनोत्सुकानाम्।**
**तदेव हर्षस्य तयोर्जयेन रोमाञ्चमस्याप्युपकारि जातम् ॥४८॥**

भयादिति–प्रधनोत्सुकानां रणदर्शनोत्कण्ठितानां देवासुराणाम् अङ्गनानाम् कामिनीनां भयाद्भीतेः यद्रोमाञ्चमुद्गतं जातं तदेव रोमाञ्चं देवासुराणां हर्षस्यापि आनन्दस्य चोपकारि उपकृत् जातम्। केन कृत्वा ? तयोर्नरेन्द्रयोर्जयेनेति ॥४८॥

**[1]आशा मुक्ता बन्धनेनेव सर्वा दीर्घं तत्रोदश्वसीदेव भूमिः।**
**युद्धे वृत्ते विश्रमं विश्वमागान्नो विश्रान्तः कन्दरे सिंहनादः ॥४९॥**

आशा इति–आशा दिशः बन्धनेनेव मुक्ताः उत्कलिताः। कथम्भूता दिशः ? सर्वाः समस्ता तथा भूमिः पृथ्वी दीर्घमुदश्वसीदेवोच्छ्वसितवत्येव। विश्वं जगत् विश्रममागात् आगतम्। क्व सति ? तत्र युद्धे रणे वृत्ते पर्याप्ते सति। तथा तयोर्नरेन्द्रयोः सिंहनादः कन्दरे गुहायां नो न विश्रान्तः ॥ ४९ ॥

**[2]वियति सिद्धगणोऽप्युपवीणयञ्जलधरान्तरदर्शितविग्रहः।**
**त्रिभुवनं भ्रमति स्म यशस्तयोः किमु मुहुर्मुमुहुर्न च वैरिणः ॥५०॥**

वियतीति–सिद्धगणः अपि वियति गगने तयोर्यशः कीर्त्तिमुपवीणयन् वीणयोपगायन् सन् त्रिभुवनं त्रैलोक्यं भ्रमति स्म बभ्राम। कथम् ? मुहुर्वारंवारम्। कथम्भूतः ? जलधरान्तरदर्शितविग्रहः पयोदमध्यप्रकटितशरीरः। उ अहो, वैरिणः किं न मुमुहुः न विचेतस्का बभूवुः, अपि तु मुमुहुरेव। चकारेण नियमार्थो गम्यते। तेनायमर्थः-वैरिण एव नान्ये जनाः मुमुहुरित्यर्थः ॥ ५० ॥

**[3]प्रतिनिनदमयासीद्देवतूर्यैर्दिगन्तश्चलदलिकुलनीला पुष्पवृष्टिः पपात।**
**स्तुतिमकृत सरस्वत्यम्बरेऽदृश्यरूपा कुसुमसुरभिरुच्चैरुद्ववौ मातरिश्वा ॥५१॥**

---

इसके बाद वे दोनों राम तथा भीम राजा सब ओर शत्रु शून्य युद्धस्थलीको देखते हुए वहाँसे लौटे थे। अपने सर्वोपरि पराक्रमके कारण वे सिंहके बच्चोंके समान लगते थे। अथवा शरीरधारी क्रोध और अभिमान सदृश दिखते थे ॥४७॥

युद्ध देखनेके लिए सदैव उत्कण्ठित देवों और दैत्योंकी स्त्रियोंको भयके कारण जो रोमांच हुआ था, वही इनकी विजयसे उत्पन्न हर्षके रोमांचको करनेमें साधक हो गया था ॥४८॥

इस युद्धकी समाप्ति हो जानेपर समस्त दिशाएं बन्धनमुक्तके समान हो गयी थीं, पृथ्वीने मुक्तिकी लम्बी सांस-सी खींची थी तथा समस्त जगत्‌ने मानो विश्रामको ही प्राप्त किया था। किन्तु इनका सिंहनाद गुफाओंमें अब भी गूँज रहा था ॥४९॥

जलधरोंके बीच-बीचमें अपने शरीरको चमकाते हुए सिद्ध जातिके देव आकाशमें भी वीणापर इन राजाओंकी कीर्ति गाते हुए तीनों लोकोंमें घूम रहे थे। क्या अब भी शत्रु लोग इसे सुनकर निर्जीव नहीं हुए थे ॥५०॥

---

१. शालिनी वृत्तम्। तल्लक्षणं "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" [ वृ. र. ३।३५ ] २. द्रुतविलम्बितच्छन्दः। लक्षणमुक्तं प्राक्। ३. मालिनी वृत्तम्। तल्लक्षणञ्च "ननमयययुतेयं मालिनी भोगिलोकैः" [ वृ. र. ३।८४ ]

प्रतीति—दिगन्तः कर्ता आघामध्यं प्रतिनिनदं प्रतिध्वानं कर्म अयासीत् जगाम। कैः ? देवतूर्यैः सुरवाद्यैः। तथा चलदलिकुलनीला भ्रमद्भ्रमरासारश्यामला सुरपुष्पवृष्टिः पपात पतति स्म। तथाऽदृश्यरूपाऽप्रकटमूर्तिः सरस्वती अम्बरे नमसि स्तुतिं स्तवनमकृत कृतवती। कुसुमसुरभिः पुष्पपरिमलवाही उच्चैरतिशयेन मातरिश्वा वात उद्ववावूर्ध्वं प्रवर्त्तते स्म ॥ ५१ ॥

[1]लोकातिरिक्तमनयोर्बलशौर्यवीर्यमालोक्य रूपमभिमानधनञ्जयञ्च।
मोक्तुं न चैकमुभयोरशकज्जयश्रीर्भ्रान्ता स्वयंवरविवाहपतिंवरेव ॥५२॥

इति श्री द्विसन्धानकवेर्धनञ्जयस्य कृतौ राघव-पाण्डवीयमहाकाव्ये 'गोग्रहनिवर्तन-खरदूषणवधो' नाम षष्ठः सर्गः ॥६॥

लोकेति—नाशकत् न समर्था बभूव। का जयश्रीः वीरलक्ष्मीः। किं कर्त्तुम् ? अनयोः प्रत्यक्षीभूतयोरुभयोर्द्वयोर्मध्ये एकमपि मोक्तुं परित्यक्तुम्। किं कृत्वा ? बलशौर्यवीर्यम्। समाहारापेक्षयैकत्वं नपुंसकत्वं चात्राव-बोद्धव्यम्। तथा रूपमभिमानधनं तथा च जयमालोक्य दृष्ट्वा। कथम्भूतं बलादि ? लोकातिरिक्तं भुवनातिशायि। कथम्भूता सती ? भ्रान्ता स्वेच्छया प्रवृत्ता। केव स्वयंवरविवाहपतिंवरेव ॥ ५२ ॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्र-पण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरी-चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदीनाम दधानायां टीकायां खरदूषणवधगोग्रहनिवर्तनो नाम षष्ठः सर्गः ॥६॥

---

देवताओंके द्वारा बजायी गयी तुरइयोंकी प्रतिध्वनि समस्त दिशाओंमें व्याप्त हो गयी थी। गूंजते हुए भौंरोंके झुण्डके कारण ही श्यामल पुष्पवृष्टि आकाशसे हो रही थी। साक्षात् प्रकट न होकर भी सरस्वती ही आकाशमें स्तुतिगान कर रही थी। पुष्पोंकी गन्धसे सुरभि पवन बह रहा था ॥५१॥

राघव-पाण्डव राजाओंके लोकोत्तर बल-प्रताप तथा वीरताको एवं सौन्दर्य, गौरव, सम्पत्ति तथा विजयको देखकर, स्वयंवर द्वारा पति वरण करनेके लिए उद्यत युवतीके समान, विजयलक्ष्मी भ्रान्त हो गयी थी क्योंकि दोनोंमें से एकको भी नहीं छोड़ सकती थी ॥५२॥

निर्दोषविद्याभूषण भूषित पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती श्रीमान् पंडित विनयचन्द्र गुरुके शिष्य, देवनन्दिके शिष्य, सकलकलाचातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें 'खरदूषणवध-गोग्रह-निवर्तन' नाम षष्ठ सर्ग समाप्त।

1. वसन्ततिलकावृत्तम्। तल्लक्षणमत्र "उक्तं वसन्ततिलका तभजाः जगौ गः" [वृ. र. ३।७९]।

# सप्तमः सर्गः

[1]अत्रान्तरे शरच्छन्नदिग्दशास्यः सपुष्पकः।
चन्द्रहासकरः कालो बाणासनपरिग्रहः ॥१॥

अत्रेति—अत्रान्तरे खरदूषणवधप्रस्तावे कुलकबन्धित्वात् श्लोकत्रयेण समागमदिति क्रियया सम्बन्धः। दशास्यः रावणः समागतम् आययौ। कथम्भूतः शरच्छन्नदिक् मार्गणाच्छादिताशः। पुनः सपुष्पकः पुष्पकाख्येन विमानेन सह वर्त्तमानः। पुनश्चन्द्रहासकरश्चन्द्रहासाभिधानोऽसिः करे यस्य सः। पुनः कालः श्यामः। पुनः बाणासनपरिग्रहश्चापपरिग्रहः।

भारतीयः—अत्रान्तरे गोग्रहनिवर्त्तनसमये शरत् शरत्संज्ञः कालः समागमत्। कथम्भूतः? छन्नदिग्दशास्यः संवृताशादशमुखः। पुनः पुष्पैः कुसुमैः सहितः सपुष्पकः। पुनश्चन्द्रस्य हासं करोतीति सः चन्द्रहासकरः (इन्दुद्युतिकर इत्यर्थः) पुनः बाणाः वृक्षविशेषाः असनाः बीजवृक्षाः परिग्रहो यस्य सः बाणासनपरिग्रहः ॥१॥

दीप्त्यारविन्दिनं लोकं विश्वं कुर्वन्निवाकुलम्।
दुःखलब्धात्मसम्भूतिं स्वसारं मानयन्मुहुः ॥२॥

दीप्त्येति—किं कुर्वन् समागमत्? स्वसारं सूर्पणखाख्यां भगिनीं मुहुः वारंवारं मानयन् सत्कारविषयां कुर्वन्। कथम्भूताम्? दुःखलब्धात्मसम्भूतिं दुःखेन लब्धः प्राप्तः [2]आत्मसम्भूतिः सम्बुकुमाराख्य आत्मजः पुत्रो यया सा ताम्। पुनः किं कुर्वन् इव? दीप्त्या तेजसा रविं सूर्यं दिनं दिवसं विश्वं समस्तं लोकं जगत् आकुलं व्यग्रं विदधदिव। रवौ सति दिनं दिने सति लोकस्तया युक्त्या लोकस्यैवाकुलत्वमिति विशेषणं ज्ञेयम्।

भारतीयः—शरत्कालः किं कुर्वन् समागमत्। दुःखलब्धात्मसम्भूतिं कष्टप्राप्तात्मोत्पत्तिं मानयन् जानन्। कथम्? मुहुर्यथा भवति तथा स्वसारं स्व आत्मा सारो यत्र आत्मसम्भूति माननकर्मणि तत् स्वसार-

---

खरदूषणके संहार होते ही सावधानीसे धनुष सम्हाले और बाणोंसे दिशाओंको ढँकता हुआ-सा, पुष्पक विमानपर सवार हाथमें चन्द्रहास एक प्रकारका खड्ग लिये काला अथवा यम समान दशमुख [ आ पहुँचा था ]

गोधनपर घेरेके समाप्त होते ही नीली ( बाणव ) घासके आसनको बिछाता, फूलोंसे सुसज्जित, चन्द्रमाके हास्यसे कान्तिमान दशों दिशाओंमें व्याप्त शरत्काल प्रारम्भ हो गया था ॥ १ ॥

अपने तेजके द्वारा सूर्य, दिन, देश तथा विश्वको व्याकुल करता हुआ तथा बड़ी कठिनाईसे पुत्र-पतिके वियोगसे आयी मूर्च्छासे चैतन्य हुई बहिन सूपर्णखाको बारबार समझाता हुआ [ रावण ]।

बड़े कष्टोंके बाद हुए अपने प्रारम्भ तथा विस्तारको बारम्बार जानता तथा जनाता

---

१. सर्गेऽस्मिन्नष्टाक्षरात्मकोऽनुष्टुब् जातिभेदः। तत्रादौ पथ्यावक्त्रम्। तल्लक्षणञ्च "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् [ वृ. र. २।२२ ]। २. दुःखं मरणं कष्टं प्राप्तः आत्मनः सम्भूति सन्ततिः अथवा स्वस्य संज्ञेति। शरत्पक्षे सम्भूतिः विभूतिः शोभेति।

मिति क्रियाविशेषणम्। किं कुर्वन्निव ? दीप्त्या घर्मेण लोकं जनमाकुलं व्याकुलं कुर्वन्निव। कथम्भूतम् लोकम् ? अरविन्दिलमरविन्दानि सरोजानि सन्त्यस्मिन् तं पुनः विश्वं सर्वम् ॥२॥

पद्मस्योदर्कसन्तापं भेदं कुवलयस्य च ।
सानाथ्यं बन्धुजीवानां कर्त्तुकामः समागमत् ॥३॥

पद्मस्येति—पुनः दशास्यः किं कुर्वन् समागमत् ? पद्मस्य रामस्य उदर्कसन्तापमुत्तरकालीनं दुःखं कर्त्तुकामः विधातुमनाः। पुनः कुवलयस्य भूमण्डलस्य भेदं विनाशं बन्धुजीवानां खरदूषणत्रिशिरसां सोदरप्राणिनां सानाथ्यं सप्रभुत्वं कर्त्तुकामः।

भारतीयः—शरत्कालः किं कुर्वन् समागमत् ? पद्मस्य सरोजस्य अत्र जात्यपेक्षयैकवचनम् उदर्कसन्तापमुद्गतसूर्यसन्तापं कुवलयस्य कुमुदस्य भेदं विकाशम्। अत्र जात्यपेक्षयैकवचनम्। बन्धुजीवानां माध्याह्निकपुष्पाणां सानाथ्यं सस्वामित्वं च कर्त्तुकामः ॥३॥

तथा तं वीक्ष्य वियति व्यभ्रे चेलुः सुरासुराः ।
स्थित्यतिक्रमभीतेन शस्त्रमिन्द्रेण संहृतम् ॥४॥

तथेति—सुरासुराः ( देवदानवाः ) व्यभ्रे निर्मेघे वियति नभसि तं दशास्यं वीक्ष्य ( अवलोक्य ) चेलुः प्रकम्पिताः तथा स्थित्यतिक्रमभीतेन स्थान (प्रभुता) परित्यागभीतेन इन्द्रेण (शक्रेण) शस्त्रं संहृतम् परिहृतम्।

भारतीयः—सुरासुराः व्यभ्रे निरभ्रे वियति सति तं शरत्कालं वीक्ष्य चेलुः विकृतवन्तः। इन्द्रेण मेघेन शस्त्रं धनुः संहृतम्। 'गिरौ वर्षति वासव' इति वचनात्। कथम्भूतेन ? स्थित्यतिक्रमभीतेन अवस्थानोल्लङ्घनभीरुणा। अत्र रामायणीयकथापेक्षया सुरासुरशक्रादीनां रावणप्रतापजनितभयं भारतकथापेक्षया सोत्सवत्वं प्रदर्शितमिति भावः। श्लेषालंकारः ॥४॥

उत्पलायत लोलाक्षः कामुकीभिरुपारतः ।
किन्नराणां गणः क्रीडन् प्रसन्नपवने वने ॥५॥

उत्पलेति—प्रसन्नपवने प्रसन्नो, गुणत्रयसमन्वितः पवनो वायुर्यत्र तस्मिन्वने कान्तारे क्रीडन् क्रीडां कुर्वन् किन्नराणामश्वमुखानां गणः समुदायः कामुकीभिः कामिनीभिः सहोत्पलायत ऊर्ध्वमुड्डीनः। कथम्भूतः ? लोलाक्षः चकितलोचनः। पुनरुपारत उपद्रुतः।

---

हुआ तथा अपनी धूपके द्वारा प्रफुल्लित कमलोंसे पूर्ण संसार तथा प्राणियोंको कष्ट देता हुआ। [ शरत्काल ] ॥ २ ॥

पद्म श्रीरामको भविष्यमें कष्ट देनेकी इच्छासे, समस्त पृथ्वीको सन्तप्त करनेके लिए तथा खरदूषणादि सगे सम्बन्धियोंको समृद्ध बनानेके लिए ही रावण आ पहुँचा था।

कमलोंके लिए सूर्यकी तेज धूप देनेकी दृष्टिसे, कुवलयोंको विकसित करनेके लिए तथा दुपहरीके पुष्पोंको सनाथ करता हुआ शरत्काल आ गया था ॥ ३ ॥

मेघशून्य निर्मल आकाशमें उक्त प्रकारसे आते रावणको देखकर सुर तथा असुर घबरा गये थे । तथा लोक-मर्यादाओंके टूटनेके डरसे इन्द्रने भी अपने शस्त्र बन्द कर लिये थे।

पूर्वोक्त रूपसे समागत शरत्को देखकर देवों तथा दैत्योंके समूह निर्मल आकाशमें क्रीड़ाके लिए निकल पड़े थे। विहारकी मस्तीमें कहीं वे सीमाका उल्लंघन न कर जाँय इसी दृष्टिसे इन्द्रने अपना धनुष संकोच लिया था ॥ ४ ॥

निर्मल वायुयुक्त वनमें क्रीड़ा करता हुआ किन्नर देवोंका समूह कामिनी नायिकाओं के द्वारा सताये जानेपर भयसे चंचल नेत्र हो गया था और वह ऊपर उड़ गया था।

भारतीय:—नराणां गणः समुदायः किमुपारतः निवृत्तः अपितु नोपारतः। कथम्भूतो गणः ? उत्तका-यतलोलाक्षः कमलदीर्घचपलनेत्रः। अन्यत् सुगमम्। श्लेषालंकारः ॥५॥

**साधुन्यायेऽथमत्युच्चैर्गतोद्धतगतिः स्थितः।**
**इच्छुः प्रसादमेतस्य लोकः प्रणतिमीयिवान् ॥६॥**

साध्विति—अयं लोकः एतस्य रावणस्य प्रणतिं प्रणामम् ईयिवान् गतवान्। कथम्भूतः ? प्रसादं प्रसन्नतामिच्छुः वाञ्छन्। पुनः साधुन्याये साधूनां सत्पुरुषाणां न्यायः सुविहितो मार्गः अथवा साधुश्चासौ न्यायः तस्मिन् स्थितः। पुनरत्युच्चैर्गतोद्धतगतिरत्युच्चैः अतिशयेन गता उद्धता उत्कटा गतिः प्रवर्त्तनं यस्य सः।

भारतीय:—या उद्धता गतिः पूर्वमासीत् सा इयं धुन्याः नद्याः (अत्युच्चैरतिशयेन) गता तथा स्थिते मर्यादायुतो लोकः प्रणतिमीयिवान्। कथम्भूतः ? प्रसादं पुष्पफलादि सम्पत्तिमिच्छुः। कस्य ? एतस्य शरत्कालस्य। अत्र रामायणपक्षे भूमिक्षोभकथनं भारतीय पक्षे शरत्कालस्वभावकथनं प्रदर्शितम् ॥६॥

**वीचिबाहुभिरालिङ्गं श्चिरदृष्टामिवावनिम्।**
**पारावारश्चचालोच्चैरपारः पूरयन्दिशः ॥७॥**

वीचीवि—अपारः पारावारः समुद्रः उच्चैरतिशयेन आशाः दिशः पूरयन् सन् वीचिबाहुभिस्तरङ्ग-हस्तैश्चिरदृष्टामिव बहुतरकालावलोकितामिव अवनिं भुवम् आलिङ्गन् (परिरम्भमाणः) सन् चचाल चकम्पे। अत्रेदं तात्पर्यं रामायणीयपक्षे रावणप्रतापाविर्भूतो भूक्षोभः, भारतीयपक्षे शरत्कालस्वभाव उक्तः ॥७॥

**सहसा वल्लकीहस्ता विचेलुः सिद्धकोटयः।**
**दिवि ज्योतिर्गणज्योतिस्तीव्रं जज्ञेऽतिविद्युति ॥८॥**

सहसेति—सिद्धकोटयः सिद्धाः अञ्जनपादुकादिसिद्धाः पुरुषविशेषा देवयोनयः तेषां कोटयः सहसा शीघ्रं विचेलुः पलायिताः। कथम्भूताः ? वल्लकीहस्ताः वीणापाणयः तथा जज्ञे जातम्। किम् ? ज्योतिर्गणज्योतिः नक्षत्रसमूहतेजः। कथम्भूतं जज्ञे ? अतिविद्युति विद्युतिं द्युतिमतिक्रान्तमतिविद्युति तेजोहीनमित्यर्थः। कथम्भूतं सत् ? दिवि गगने तीव्रं सत्। अत्र रावणप्रतापात् क्षोभोक्तिः।

अथ भारतीयः—सहसाः सहासाः (हास्यसंयुक्ता इत्यर्थः) पुनः वल्लकीहस्ताः सिद्धकोटयः विचेलुः

---

शरत्की स्वच्छ वायुसे पूर्ण वनमें कमलके समान विशाल आँखोंवाला तथा क्रीड़ामें मस्त किंनरसमूह क्या काम-विह्वल स्त्रियोंके साथ खूब नहीं रमा था ? ॥ ५ ॥

उद्धत आचरणको छोड़कर सब प्रकारसे शिष्टाचार पालनमें लीन होकर यह लोक इस रावणकी कृपा पानेके लिए उसको प्रणाम करने लगा था।

जो नदियाँ वर्षाऋतुमें अत्यन्त उद्धतरूपसे बहती थीं वे ही अब पूर्णरूपसे स्वाभाविक रूपमें आ गयीं थी। लोक भी शरद्का अनुग्रह प्राप्त करनेकी इच्छासे उसकी आराधना करता था ॥ ६ ॥

चिरकालसे इच्छित पृथ्वीको अनन्त समुद्रके समान बाहुरूपी लहरोंसे जकड़ता हुआ तथा समस्त दिशाओंको भयाक्रान्त करता हुआ वह बढ़ा जा रहा था।

बहुत समयसे बिछुड़ीके समान पृथ्वीको विस्तृत सागरकी लहरोंरूपी हाथोंसे आलि-ङ्गन करता हुआ तथा दशोंदिशाओंको व्याप्त करता हुआ शरत्काल फैलता आ रहा था ॥ ७ ॥

सिद्धोंके समूह हाथोंमें वीणा दबाये एकाएक भाग खड़े हुए थे। सूर्य चन्द्रादिका आकाशमें प्रखरतासे चमकता प्रकाश सर्वथा तेजहीन हो गया था।

सिद्ध आदि देव हाथमें लता या वीणा लिये क्रीड़ा विहार कर रहे थे। बिजली-चमक-

विहरन्ति स्म । तीव्रं सोढुमशक्यं ज्योतिर्गणज्योतिः दिवि बभौ । कथम्भूतायां दिवि ? अतिविद्युति विद्युत-मतिक्रान्ता अतिविद्युत् तस्यामतिक्रान्ततडिल्लतायामित्यर्थः । अत्र शरद्व्यावर्णनम् ॥ ८ ॥

**विमुक्तं दूरमभ्रान्तैर्विमानैः ककुबन्तरम् ।**
**नभश्वरसमारूढैः कृतकानकसिञ्जितैः ॥ ९ ॥**

विमुक्तमिति—विमानैः देवयानैः ककुबन्तरं दिगन्तरालं विमुक्तं परित्यक्तम् । कथम् ? दूरं विप्रकृष्टम् । कथम्भूतैः ? अभ्रान्तैः निःसन्देहैः अथवा भ्रमणरहितैः । पुनः नभश्वरसमारूढैः नभश्वराः समारूढा येषु तैः । पुनः कृतकानकसिञ्जितैः कृतानि विहितानि कानकानि सिञ्जितानि हेमविकारक्षुद्रघण्टकशब्दा येषु तैः । अत्र रावणप्रतापक्षोभः ।

भारतीयः—अभ्रान्तैरभ्राणामन्तैः अभ्रान्तैः मेघसमूहैः नभः गगनं ककुबन्तरं च दूरं विमुक्तम् । कथम्भूतैः ? विमानैः गतमानैः संख्यातीतैः । पुनः रसं पानीयम् आरूढैः सजलैः । पुनः कृतकानकसिञ्जितैः कृतकमानकानामिव सिञ्जितं ( ध्वनितं ) यैः ॥ ९ ॥

**छोत्कारच्छातजठरैस्तृणकौतुककङ्कणैः ।**
**बन्धूकतिलकन्यासैर्नीलोत्पलवतंसकैः ॥ १० ॥**
**महाकुचभराकृष्टसंक्षिप्तान्तर्भुजान्तरैः ।**
**क्षिपद्भिः केकरान् स्वस्मिन् नियन्तुमसहैरिव ॥११॥**
**सिञ्चद्भिरिव लावण्यरसवृष्ट्या दिगन्तरम् ।**
**कैदारिकगतैर्दारैश्चकितं विनिचायितम् ॥१२॥** [ त्रिभिर्विशेषकम् ]

छोत्कारेति—श्लोकत्रयेण रावणशरत्कालयोः प्रतापक्षोभौ निरूप्येते । भावे क्तान्तक्रियाद्वितयं बोद्धव्यम् । दारैः कलत्रैः विनिचायितमवलोकितं चकितञ्च विलोक्य भीतमित्यर्थः । कथम्भूतैः ? छोत्कारच्छातजठरैः (छोत्कारेण) शकुनिसन्तर्जनध्वनिना छातं तनूकृतं जठरमुदरं येषां तैः छोत्कारच्छातजठरैः । पुनः तृणकौतुक-कङ्कणैः तृणस्य कौतुकेन कंकणानि येषां तैः । पुनः बन्धूकतिलकन्यासैः बन्धूकानां तिलके न्यासो येषां पुनः नीलोत्पलवतंसकैः नीलोत्पलस्य वतंसः कर्णपूरो येषां तैश्च । पुनः महाकुचभराकृष्टसंक्षिप्तान्तर्भुजान्तरैः एकस्मात् भुजात् अपरो भुजो भुजान्तरं तस्य अन्तः अन्तर्भुजान्तरम् । महान्तौ च तौ कुचौ च महाकुचौ तयोर्भरेण पूर्व-माकृष्टं पश्चात् संक्षिप्तमन्तर्भुजान्तरं येषां तैः । पुनः स्वस्मिन्नात्मनि केकरान् कटाक्षान् नियन्तुं नियन्त्रयितु-मसहैरसमर्थैरिव क्षिपद्भिः विसृजद्भिः । पुनर्लावण्यरसवृष्ट्या शरीरकान्तिविशेषनिर्यासवर्षेण दिगन्तरमाशान्त-रालं सिञ्चद्भिरिव । पुनः कैदारिकगतैः कैदारिके कैदारसमूहे गताः प्राप्तास्तैः वप्रव्रजस्थितैः । अत्र रावणशर-त्कालयोः स्वभावोक्तिः ॥१०–१२॥

---

रहित स्वच्छ आकाशमें तारा आदि ज्योतिषी देवोंकी चमक बढ़ी मालूम होती थी ॥ ८ ॥

सोनेकी घंटियोंकी रुनझुनसे युक्त, खेचरोंकी सवारीमें निकले तथा वस्तुस्थितिसे परिचित विमानोंने दिशाओंके मार्ग छोड़ दिये थे और दूर चले गये थे ।

पटहोंके समान गर्जनेवाले जलसे परिपूर्ण तथा अनगिनत मेघखण्डोंने आकाशको बिल्कुल छोड़ दिया था ॥ ९ ॥

शू शू करनेके कारण कृशोदरियों, घासके मंगलसूत्र तथा कंकणधारिणी, बन्धूक पुष्पके तिलकसे विभूषित, नीलकमलके कर्ण-भूषणसे सुशोभित, उन्नत स्तनोंके भारसे झुकी, संक्षिप्त भुजान्तर्वर्ती केकर भूषण अथवा कटाक्षोंको—अपने आपमें न सम्हाल सकनेके ही कारण डालती हुई, सौन्दर्यके रसकी वृष्टिके द्वारा समस्त दिशाओंको सींचती-सी अलि-यानोंमें बैठी स्त्रियोंने क्रमशः भय तथा उत्कण्ठासे चकित होते हुए रावण तथा शरद्‌को देखा था ॥१०–१२॥

**बिशक्षीरचितां चञ्चुं व्याददद्भिः कथञ्चन ।**
**सरःसु पक्षतिक्षेपैरटितं वाटराटकैः ॥१३॥**

बिशेति—वाटराटकैः हंससमूहैः पक्षतिक्षेपैः पक्षमूलविधूननैः अटितं गतम् । कथम्भूतैः ? चञ्चुं त्रोटिं कथञ्चन महता कष्टेन व्याददद्भिः प्रसारयद्भिः । क ? सरःसु सरोवरेषु । कथम्भूतां चञ्चुम् ? बिशक्षीरचितां पद्मिनीकन्ददुग्धोपचयप्राप्ताम् ।

भारतपक्षे—रटितं शब्दितम् । कैः ? वाटराटकैः । शेषं प्राग्वत् । एकत्र प्रतापकथनमन्यत्र शरत्स्वभावकथनम् ॥१३॥

**कञ्जकिञ्जल्कगन्धान्धैः केकारवविषादिभिः ।**
**नष्टं प्रापनिकैः क्वापि दुष्कलत्रकुलैरिव ॥१४॥**

कञ्जेति—प्रापनिकैः मयूरैः क्वापि कस्मिन्नपि प्रदेशे नष्टं चक्षुर्विषयमतीत्य गतम् । कथम्भूतैः ? कञ्जकिञ्जल्कगन्धान्धैः अरविन्दमकरन्दपरिमलान्धैः । पुनः केकारवविषादिभिः केकारवे विषादो येषां तैः । कैरिव नष्टम् ? दुष्कलत्रकुलैरिव कुलटाजनैरिव अथवा दुष्टं कलत्रकुलं येषां तैः पुरुषैः । उभयोः प्रतापस्वभावाख्यानम् ॥१४॥

**दन्तान्तरसमासक्तपुष्करा दिक्षु दन्तिनः ।**
**घनबन्धननिर्मुक्ता जगर्जुर्दुर्जना इव ॥१५॥**

दन्तान्तरेति—दिक्षु दन्तिनः जगर्जुः गर्जितवन्तः । कथम्भूताः ? दन्तान्तरसमासक्तपुष्कराः रदमध्यसम्बद्धशुण्डाग्राः । पुनः घनबन्धननिर्मुक्ताः निविडबन्धननिर्मुक्ताः । क इव ? दुर्जना इव । अत्रेदं तात्पर्यम्—रावणप्रतापज्वलनज्वालावलीभिरालीढा दिग्गजाः स्वकीयामाशां विहायान्यत्र गर्जनाञ्चक्रुः ।

भारतीये—दन्तिनो हस्तिनः दिक्षु आशासु जगर्जुः । कथम्भूताः ? दन्तान्तरसमासक्तपुष्कराः दन्तमध्यालम्बितारविन्दाः । घनबन्धननिर्मुक्ता मेघबन्धनवर्जिताः । क इव ? दुर्जना इव । अत्र शरत्कालस्वभावनिर्देशकथनं प्रदर्शितमिति भावः ॥ १५ ॥

**निशम्याक्रान्तजगतः पाटवं तस्य दुःसहम् ।**
**आसीदास्वनितस्यापि क्षोभोऽरण्ये तपस्यताम् ॥१६॥**

निशम्येति—तपस्यतां तपः कुर्वतामपि मुनीनामास्वनितस्य मानसस्य क्षोभ आसीत् सञ्जातः । क ? अरण्ये वने । किं कृत्वा ? पूर्वं निशम्य आकर्ण्य । किम् ? पाटवं पटुत्वम् । कस्य ? तस्य रावणस्य । कथम्भूतस्य तस्य ? आक्रान्तजगतः आक्षिप्तलोकस्य । कथम्भूतम् ? पाटवं दुःसहं सोढुमशक्यम् ।

भारतपक्षे तस्य शरत्कालस्येति । शेषः प्राग्वत् ॥ १६ ॥

---

नीर क्षीरका भेद करनेमें समर्थ चोंचको सिकोड़कर [ उठाकर ] पंखोंको फड़फड़ाकर हंससमूह जल्दीसे तालाबोंमेंसे उड़ गये थे [ शब्द कर रहे थे ] ॥१३॥

कमलोंके परागकी सुगन्धिसे अन्धे अपनी ही ध्वनिको सुनकर दुखी मोर कहीं ऐसे छिप गये थे जैसे कुलटा स्त्रियोंके नीच कुलोत्पन्न पति नष्ट हो जाते हैं [ रावणके भय तथा शरद्-ऋतुके कारण मोर वनसे भाग गये थे ] ॥१४॥

दिग्गज भयके कारण दांतोंके बीचमें सूंड़ दबाकर प्रबल और घने बन्धनोंको तोड़कर दुर्जनोंके समान चिंघाड़ रहे थे ।

दाँतोंमें फूल फँसाये, बादलोंके प्रतिबन्धसे परे हाथी सब ओर आनन्दसे चिंघाड़ रहे थे ॥ १५ ॥

विश्वके उत्पीड़क उस रावणके असह्य प्रतापकी चर्चा सुनकर वनमें तपस्वियोंके भी चित्त क्षुब्ध हो गये थे [ संसारमें व्याप्त शरद्‌की मोहकताको जानकर तपस्वियोंके चित्त भी चंचल हो जाते हैं ] ॥१६॥

**विश्वेन वारिणा तस्मिन् द्योतमाने महीयसि ।**
**कलुषत्वं परित्यक्तं स्वच्छत्वमुपपादितम् ॥१७॥**

विश्वेनेति–विश्वेन समस्तेन अरिणा शत्रुणा कलुषत्वं मलिनत्वं परित्यक्तम् । क्व सति ? तस्मिन् रावणे द्योतमाने प्रतपति सति । कथम्भूते ? महीयसि गरिष्ठे । तथा अरिणा स्वच्छत्वं प्रसन्नत्वमुपपादितं वा जनितञ्च ।

भारतीये–वारिणा जलेन तस्मिन् शरत्काले । शेषं तुल्यम् ॥१७॥

**वप्राणां रम्यतालक्ष्मीः सोत्पलाशालिसम्पदाम् ।**
**तेन पक्कफलापाण्डुरानिन्ये लङ्घनक्रियाम् ॥१८॥**

वप्राणामिति–आनिन्ये सामस्त्येन नीता । का ? रम्यतालक्ष्मीः । कामानिन्ये ? लङ्घनक्रियामास्कन्दनक्रियाम् । केन कर्त्रा ? तेन रावणेन । केषां रम्यतालक्ष्मीः ? वप्राणां भूधरनितम्बानाम् । कथम्भूतानाम् ? सोत्पलाशालिसम्पदां सोच्चब्रह्मवृक्षभ्रमरविभूतीनाम् , अथवा उच्चपलाशानामालिरुत्पलाशालिः सैव सम्पत् येषां ते तथोक्तास्तेषाम् । कथम्भूता रम्यतालक्ष्मीः ? पक्वफलापाण्डुः आ ईषत्पाण्डुः आपाण्डुः पक्वफलैरापाण्डुः पक्वफलापाण्डुः इति सम्बन्धः ।

अथ भारतीयः–आनिन्ये । का ? रम्यतालक्ष्मीः । काम् ? लङ्घनक्रियाम् । केन ? तेन शरत्कालेन । केषाम् ? रम्यतालक्ष्मीः । वप्राणाम् । कथम्भूतानाम् ? शालिसम्पदां शालय एव सम्पद्येषां तेषाम् । कथम्भूता ? सोत्पला सकमला । पुनः पक्वफला । पुनः पाण्डुरिति । अत्र श्लोके आनिन्ये इति क्रियायाः मुख्यामुख्यभेदेन कर्मद्वितयं बोद्धव्यम् ॥१८॥

**किंशुकाकुलभूमीनां नगानां फलसम्पदः ।**
**नामिताः परिपक्वाणां कृता रभसयामुना ॥१९॥**

किंशुकेति–कृताः विहिताः । काः कर्मतापन्नाः ? फलसम्पदः । कथम्भूताः कृताः ? नामिता नम्राः । केन ? अमुना रावणेन । कया ? रभसया औत्सुक्येन विमानवेगेनेत्यर्थः । केषां फलसम्पदः ? नगानां तरूणाम् ? कथम्भूतानाम् ? किंशुकाकुलभूमीनाम् किंशुकैः पलाशकुसुमैः आकुला भूमिर्येषाम् । पुनः परिपक्वाणां पाकपर्यायं प्राप्तानाम् ।

भारतीयः–किं न कृता अपि तु कृता एव । काः ? फलसम्पदः । कथम्भूताः ? अमिताः प्रचुराः ? केन ? अमुना शरत्कालेन कर्त्रा । केषां सम्पदः ? नगानां शालीनाम् । कथम्भूतानाम् ? शुकाकुलभूमीनां कीरव्याप्तमेदिनीनाम् ? पुनः परिपक्वानाम्[1] ॥१९॥

---

अत्यन्त प्रतापी रावणका प्रभाव फैलनेपर नूतन शत्रुसमूह ने ( नव-अरिणा ) अखिल विश्वमें सदाचारको छोड़ दिया था तथा कपट कूटका आश्रय लिया था । [ अत्यन्त कान्तिमान् शरद् ऋतुके आनेपर समस्त जलराशिने मलिनता छोड़कर निर्मलता धारण की थी ] ॥१७॥

विकसित उच्च पलाशोंपर गूँजते भौरोंसे सुशोभित पर्वतोंके प्रान्तोंकी सौन्दर्यपूर्ण कान्तिको रावणने पके फलोंके समान श्वेत ( आभाहीन ) करके लंघन करती हुई-सी कर दी थी । [ धान्यरूपी सम्पत्तिसे पूर्ण क्यारियोंकी शोभा तथा श्रीको पके फलों और विकसित कमलोंके द्वारा सर्वथा श्वेत-रक्त करके शरत्कालने उछलकूद ही मचा दी थी ] ॥१८॥

किंशुक वृक्षोंसे व्याप्त, फलों तथा खनिज आदि सम्पत्तिसे परिपूर्ण पर्वतोंकी सार्थक सम्पत्तिको इस रावणने क्या वेगके साथ परिगणन नहीं किया था । [ पके फलोंसे लदे तोतोंसे घिरे वृक्षोंकी फलरूपी सम्पत्तिको क्या इस ऋतुने तुरन्त ही निस्सीम नहीं बना दिया था ? ] ॥१९॥

---

१. श्लेषः–ब० मा० ।

**तस्मिन्कालेऽनुजोपायात् प्रस्थितं प्रतिकेशवम् ।**
**विश्वविश्वम्भरानाथमित्थमूचेऽग्रजं वचः ॥२०॥**

तस्मिन्निति—तस्मिन्कालेऽवसरे अनुजा शूर्पणखाख्या भगिनी अग्रजं ज्येष्ठभ्रातरं रावणं वचः वचनमूचे उक्तवती । कथम् ? इत्थं वक्ष्यमाणप्रकारेण । कथम्भूतम् ? विश्वविश्वम्भरानाथं समस्तमेदिनीपतिम् ? पुनः कथम्भूतम् ? केशवं लक्ष्मणं प्रति प्रस्थितं प्रचलितम् । कस्मात् ? उपायात् सामादिप्रयोगात् ।

भारतीयः—अनुजः भीमः अग्रजं युधिष्ठिरं प्रति वचो वचनम् ऊचे । कथम् ? इत्थम् वक्ष्यमाणापेक्षया । कस्मिन् काले ? तस्मिन् काले शरत्समये । कथम्भूतम् ? अग्रजम् ? अपायात् द्यूतक्रीडावशात् पृथिव्यादेर्हरणात् विश्वविश्वम्भरानाथम् समग्रवसुन्धराधिपतिं केशवं नारायणं प्रति प्रस्थितं प्रचलितम्[1] ॥२०॥

**प्रतिकर्तुं परीभावं जरासन्धाभियोगजम् ।**
**उद्यमोजातशत्रोस्ते समावहति मे रुचिम् ॥२१॥**

प्रतीति—समावहति समाधत्ते । कः ? उद्यमः । काम् ? रुचिम् । कस्याः ? मे मम । कस्योद्यमः ? ते तव । कथम्भूतस्य ? जातशत्रोः समुत्पन्नरिपोः । किं कर्तुमुद्यमः ? परीभावमवज्ञां प्रतिकर्तुं प्रतीकारं नेतुम् । कथम्भूतम् ? जरासन्धाभियोगजं 'रसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि सप्तधातवः' कालपरिणत्या एते रसादयो जीर्यन्ते तनूभवन्ति यस्यां सा जरा निर्बलत्वम्, जरायाः सन्धा यस्य स जरासन्धः जरासन्धश्चासावभियोगश्च जरासन्धाभियोगः तस्माज्जातं तं तथोक्तं वार्द्धकपरिणतिसम्बन्धोत्पन्नमसामर्थ्यसम्भूतमित्यर्थः ।

भारतीयः—समावहति । कः ? उद्यमः । काम् ? रुचिम् । कस्य ? मे मम । कस्योद्यमः ? ते तव । किमाख्यस्य ते ? अजातशत्रोः युधिष्ठिरस्य । किं कर्तुमुद्यमः ? परीभावं प्रतिकर्तुम् ? कथम्भूत परीभावम् ? जरासन्धाभियोगजम् । जरासन्धाभियोगो जरासन्धगृह्यो दुर्योधनः तस्माज्जातम् ॥२१॥

**दुःखमोचनमिष्टस्य क्रियते हेतिधारिणा ।**
**वीरेण भीरुणा शूर शाखोद्धारेण बाहुना ॥२२॥**

दुःखेति—हे शूर क्रियते विधीयते । किम् ? दुःखमोचनम् । केन कर्त्रा ? वीरेण । कस्य ? इष्टस्य मित्रस्य । कथम्भूतेन ? हेतिधारिणा शस्त्रधारिणा । केन कृत्वा ? बाहुना भुजेन । कथम्भूतेन बाहुना ? शाखोद्धारेण शाखानामुद्धारो यस्य तेन । अथवा भीरुणा हेतिधारिणा हा इति शब्दं धरतीति तेन कष्टमिति शब्दधारिणेत्यर्थः । शाखोद्धारेण बाहुना इष्टस्य दुःखमोचनं किं क्रियते अपि तु नेत्यर्थः ॥२२॥

---

ऐसे ही समय छोटी बहिन सूर्पणखाने समस्त विश्व और पृथ्वीके स्वामी, तथा सामादि उपायोंसे लक्ष्मणके विरुद्ध बढ़ते हुए बड़े भाई रावणसे निम्न बात कही थी [ शरद्-ऋतु आनेपर अनुज भीमने द्यूतक्रीड़ाके कारण लोक तथा भूमिके स्वामित्वसे गिरे अतएव श्रीकृष्णजीकी ओर मंत्रणाके लिए उन्मुख बड़े भाई धर्मराजसे कहा था ] ॥२०॥

मेरे वार्द्धक्यकी मर्यादापर आक्रमण करनेसे हुए मेरे अपमानके प्रतीकारके लिए तुम्हें प्रयत्न करना चाहिए ऐसी मेरी इच्छा है क्योंकि तुम्हारे भी शत्रु खड़े होने लगे हैं। [ जरासन्ध राजासे मिलकर किये गये हम पाण्डवोंके अपमानका प्रतिशोध करनेके लिए हे अजातशत्रु युधिष्ठिर ! आपको प्रयत्न करना चाहिये ऐसी मेरी सम्मति है ] ॥२१॥

हे शूर रावण ! अपने वंशकी प्रतिष्ठाका विस्तारक वीर पुरुष बाहुसे शस्त्र ग्रहण करके अपने प्रिय लोगोंके दुःखका विनाश करता है। हाँ, 'हा हा' शब्दसे निन्दित, वंश परम्पराके उन्मूलक व्यर्थबाहु भीरुके द्वारा कुछ भी नहीं होता है ॥२२॥

---

1. श्लेषः–ब०, मा० ।

**शरधाराभिवर्षेण वैरिविप्लवकारिणा ।**
**विधुरं ह्रियते बन्धो बाष्पाम्भोदुर्दिनेन वा ॥२३॥**

शरेति–हे बन्धो ! ह्रियते । किं कर्मतापन्नम् ? विधुरं भयम् । केन कर्त्रा ? त्वया । केषाम् ? नृणामित्यध्याहार्यपदं बोद्धव्यम् । केन कृत्वा ह्रियते विधुरम् ? शरधाराभिवर्षेण बाणावलिवृष्ट्या । कथम्भूतेन ? वैरिविप्लवकारिणा शत्रुध्वंसविधायिना । वाऽथवा ह्रियते विधुरम् । केन कृत्वा ? बाष्पाम्भोदुर्दिनेन अश्रुजलप्रच्छादितदिवसेन । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इति ॥२३॥

**राजसन्दर्शने व्याधौ चिन्तायां रिपुपीडने ।**
**प्रतिक्रियासु सर्वासु निर्बन्धाद्बान्धवं विदुः ॥२४॥**

राजेति–निर्बन्धादङ्गीकारात् बान्धवं विदुः जानन्ति । के विद्वांसः इत्यध्याहार्यम् । क क ? राजसन्दर्शने तथा व्याधौ तथा चिन्तायां तथा रिपुपीडने शत्रुकदर्थने तथा प्रतिक्रियासु प्रतिकारे कथम्भूतासु सर्वासु समस्तासु ॥२४॥

**स्थाने मातुलपुत्रस्य परिपात्यै तवोद्यमः ।**
**आपदीषल्लभाः कर्त्तुमुपकारा हि मानिनाम् ॥२५॥**

स्थानेति–हे बन्धो ! स्थाने युक्तमेतद्यत् जायते । कः ? उद्यमः । कस्य ? तव । कस्यै ? परिपात्यै रक्षायै । कस्य ? मातुलपुत्रस्य खरदूषणस्य । अर्थान्तरमुपन्यस्यते–हि स्फुटं जायते । के ? उपकाराः । कथम्भूताः ? ईषल्लभाः दुर्लभाः । किम् ? कर्त्तुं विधातुम् । कस्याम् ? तस्याम् आपदि विपत्तौ । केषाम् ? मानिनाम् ।

भारतीयः–स्थाने युक्तं जायते । कः ? उद्यमः । कस्य ? तव । कस्यै ? परिपात्यै रक्षानिमित्तम् । कस्य ? मातुलपुत्रस्य वासुदेवस्य । अर्थान्तरन्यासः पूर्वोक्त एव ॥२५॥

**अस्ति नानाप्रकारोऽसौ कामं दुर्योधनो रिपुः ।**
**तत्तवैष बलं पक्षो ज्योत्स्नाभोगो विधोरिव ॥२६॥**

अस्तीति–अस्ति विद्यते । कः ? असौ रिपुः । कथम् ? काममत्यर्थम् । कथम्भूतः ? दुर्योधनः दुःखेन योद्धुं शक्यः स दुर्योधनः दुःखसाध्य इत्यर्थः । पुनः नानाप्रकारः बहुविधः । तत्तस्मात् कारणात् एषः खरदूषणः बलं स्यात् तव । अत्र उपमार्थः प्रदर्श्यते । क इव ? पक्ष इव यथा पक्षः बलं स्यात् । कस्य ? विधोश्चन्द्रस्य । कथम्भूतः ? ज्योत्स्नाभोगः ज्योत्स्नाया आभोगो विस्तारो यस्य, शुक्ल इत्यर्थः ।

---

शत्रुओंमें आतंक फैलानेमें समर्थ बाणोंकी बहुमुखी मारके द्वारा वीर पुरुष अपने सगोंके भयको दूर कर देता है अथवा विपत्ति कालमें बहे आँसुओंको पोंछ देता है । [ वैरीके समान विनाशकर्त्ता, बाण वृष्टिके समान मूसलाधार घटाओंसे घिरे दुर्दिनके द्वारा भी ओस तथा चन्द्रकान्तिका लोप किया जाता है ] ॥२३॥

राजसभामें बुलाये जानेपर, भीषण रोगके समय, चिन्ताग्रस्त होनेपर, शत्रुओंके द्वारा सताये जानेपर तथा सब प्रकारकी सुरक्षा अथवा प्रतिशोधके समय साथ देनेके कारण ही 'बान्धव' कहलाता है ॥२४॥

अपने मामाके पुत्र ( खरदूषण अथवा श्री वासुदेव ) की सुरक्षाके लिए तुम्हारा ( रावण अथवा युधिष्ठिरका ) प्रयत्न करना सर्वथा उचित है । क्योंकि महापुरुषोंकी विपत्तिके समय सहायता करनेके अवसर बहुत कम आते हैं ॥२५॥

यह सत्य है कि यह राघव शत्रु ऐसा है जिसके पास विविध उपाय हैं तथा इसके साथ युद्ध करना अत्यन्त कठिन है अतएव यह खरदूषण आपका उसी प्रकार बल बढ़ावेगा जैसे शुक्लपक्ष चन्द्रमाको बढ़ाता है । [ पाण्डव-शत्रु राजा दुर्योधन विविध सहाय आदि

भारतीयः—असौ दुर्योधनः रिपुरस्ति । तत्तस्मादेव विष्णुः तव बलं स्यात् । अन्यच्छेषं पूर्ववत्[1] ॥२६॥

**प्रभाविशारदं वीर्यं तवोद्योगाय दीप्यते ।**
**निर्वाणाय परं तत्त्वमाध्यात्मिकमिवाखिलम् ॥२७॥**

प्रभेति—प्रभाविशारदं प्रभया विशारदं प्रवीणं तव वीर्यम् उद्योगाय दीप्यते स्फुरति । कस्मै ? किमिव ? आध्यात्मिकमध्यात्मभवमखिलं समस्तं परं तत्त्वं निर्वाणाय मोक्षाय इव ।

भारतीयः—शारदं शरदि भवं प्रभावोऽस्यास्तीति प्रभावि प्रौढिमत् यद्वा प्रभवत्येवं शीलं प्रभावि दीप्तिरक्षकम् । शेषाः योजनाः प्राग्वत्[2] ॥२७॥

**देवावदातविततां दिशः सह विहायसा ।**
**सूचयन्ति विना विघ्नात्सिद्धिं हस्तगतामिव ॥२८॥**

देवेति—हे देव दिशः आशाः विहायसा सह नभसा सार्द्धमवदातविततां नैर्मल्यं प्राप्ताः सन्त्यः विघ्नाद्विना अन्तरायादृते सिद्धिं चिन्तितवस्तुप्राप्तिं हस्तगतामिव सूचयन्ति वदन्ति ॥२८॥[3]

**मृदुराश्वासजननः खरदण्डविघट्टनः ।**
**कृतकृत्योऽधिकारीव तवार्यान्वीपिकोऽनिलः ॥२९॥**

मृद्विति—हे आर्य स्वामिन्, अनिलो वायुरधिकारीव नियोगीव आन्वीपिकोऽनुकूलो वर्त्तते । कथम्भूतः ? मृदुः मन्दः पुनः आश्वासजननः शीतलः पुनः खरदण्डविघट्टनः कमलस्पर्शित्वात्सुरभिरित्यर्थः । अधिकार्यपि मृदुभाषित्वात् मृदुराश्वासजननः प्राणिनामाप्यायनोत्पादकः पुनः खरदण्डविघट्टनः खरो दण्डो येषां ते खरदण्डाः शत्रुनृपास्तेषां विघट्टनो विध्वंसकः पुनः कृतकृत्यः कृतकार्यः । अत्र रामायणपक्षे रावणप्रयाणे पवनानुकूलत्वं प्रोक्तम् ।

भारतपक्षे—शारदवायुगुणाः प्रोक्ताः[4] ॥२९॥

**भूरिस्तम्बेरमेकान्ते फलशालिवने घने ।**
**राजन् कपिशताकीर्णे पश्य त्वं कामनीयकम् ॥३०॥**

भूरीति—हे राजन् ! त्वं फलशालिवने फलैः शालत इत्येवं फलशालि तच्च तद्वनं तस्मिन् कामनीयकं निरीक्षस्व । कथम्भूते ? भूरिस्तम्बेरमे भूरयः स्तम्बेरमा यस्मिन् तस्मिन् कपिशतैराकीर्णे वानरशतसङ्कुले ।

---

साधनोंसे अत्यन्त सुसज्जित है तथापि वासुदेवकी उपस्थिति हमारे पक्षको पुष्ट करेगी जैसे शुक्लपक्ष चन्द्रमाको करता है ] ॥२६॥

परमोत्कृष्ट समस्त, आध्यात्मिक तत्त्व जिस प्रकार निर्वाणकी प्राप्तिके लिए होते हैं उसी प्रकार हे रावण ! प्रतापसे उद्दीप्त आपके पराक्रमकी शोभा भी पुरुषार्थमें है । [ हे धर्मराज ! अत्यन्त प्रभावपूर्ण शरद्ऋतुके समागमसे आपके पराक्रमकी भी सार्थकता शत्रुविनाश करनेमें है ] ॥२७॥

हे देव आकाशके साथ-साथ अत्यन्त निर्मल और विस्तीर्ण दिशाएँ भी सूचित करती हैं कि किसी विघ्न बाधाके बिना ही कार्य होगा अर्थात् सिद्धि मुट्ठीमें आ गयी है ॥२८॥

नम्र लोगोंमें विश्वास उत्पन्नकर्ता, तथा उग्र लोगोंको दण्डके द्वारा ध्वस्त करनेमें समर्थ सफल अधिकारीके समान अनुकूल बहती हवा [ मन्द, आन्तिहारक, कमलके फूलोंमेंसे बहता मनोहर शरद् ऋतुका पवन ] भी आपके अनुकूल चल रही है ॥२९॥

हे रावण ! फलोंसे शोभायमान, शान्त तथा सघन, सैकड़ों बन्दरोंसे व्याप्त एवं अनेक

---

१. श्लेषः—ब०, भा० । २. श्लेषोपमा—ब०, भा० । ३. उत्प्रेक्षा—ब०, भा० । ४. श्लेषः—ब०,भा० ।

भारतीयः—हे राजन् ! फलशालिवने फलैरुपलक्षितं यच्छालिवनं तस्मिन् कामनीयकं पश्य । कथम् ? अरमत्यर्थम् । कथम्भूते ? भूरिस्तम्बे बहुकाटकसमूहे । पुनः एकान्ते विजने पुनः कपिशताकीर्णे कपिशतया पिङ्गतया व्याप्ते[1] ॥३०॥

**शत्रूणां दण्डकक्षेत्रमप्रवि(वे)श्यमिदं घनम् ।**
**अभीष्टस्तम्बकरिभिरवगाढं विलोकय ॥३१॥**

शत्रूणामिति—इदं प्रत्यक्षं दण्डकक्षेत्रं दण्डकारण्यं विलोकय निरीक्षस्व । कथम्भूतम् ? शत्रूणामप्रवि(वे)श्यं प्रवि(वे)ष्टुमशक्यं पुनरभीष्टस्तम्बकरिभिः न विद्यते भीर्येषां तेऽभियः, ते च ते इष्टाश्च ते स्तम्बकरिणश्च तैः निर्भयामितमत्तगजैरवगाढं व्याप्तम् ।

भारतीयः—हे शत्रूणां दण्डक । इद क्षेत्रं विलोकय । अभीष्टस्तम्बकरिभिरमिलषितव्रीहिभिरप्रकृष्टपच्यशालिभिरित्यर्थः । अवगाढं व्याप्तम् । शेषं तुल्यम्[2] ॥३१॥

**अस्मिन्नद्रावितस्थाने गहने पुण्डरीकिणि ।**
**प्रफुल्लानोकहच्छन्ने नातिराजति वासरः ॥३२॥**

अस्मिन्निति—अस्मिन्नद्रौ इतः स्थाने गहने वने वासरः दिवसः नातिराजति न शोभतेतराम्, कथम्भूतेऽद्रौ ? पुण्डरीकिणि व्याघ्रवति पुनः प्रफुल्लानोकहच्छन्ने विकसितवृक्षाच्छादिते ।

भारतीयः—वा इवार्थेऽस्मिन् गहने सरः सरोवरं किमिव नातिराजति अपि तु अतिराजत्येव । कथम्भूते ? अद्रावितस्थानेऽनुपद्रुतप्रदेशे पुनः पुण्डरीकिणि सकमले, शेषं समम्[3] ॥३२॥

**नातिक्रामन्ति सरितो गतिस्खलितदूषिताः ।**
**अस्मिन्नेकानुकूलत्वं यान्ति गेहेऽङ्गना इव ॥३३॥**

नेति—सरितः नद्यः नातिक्रामन्ति नातिलङ्घन्ते । कथम्भूताः ? गतिस्खलितदूषिताः गतेः स्खलितमेव दूषितं यासां ताः गतिस्खलनदोषवत्य इत्यर्थः । तथा यान्ति गच्छन्ति । किम् ? एकानुकूलत्वम् । क्व ? अस्मिन् प्रस्तावे । का इव ? अङ्गना इव कामिन्यो यथा । क्व ? गेहे वेश्मनीति सम्बन्धः[4] ॥३३॥

---

हाथियों युक्त वनके सौन्दर्यको देखो । [ हे युधिष्ठिर ! आप अनेक तनोंसे घन, एकान्त फले हुए अतएव भूरे भूरे शालिवनके सौन्दर्यको देखें ] ॥३०॥

निर्भय असंख्य मत्त हाथियोंसे भरे हुए और अत्यन्त घने फलतः शत्रुओंके प्रवेशके लिए कठिन इस दण्डक भूमिको देखिये । [ हे शत्रुओंको दण्ड देने में समर्थ धर्मराज ! बिना बोये ही उगी प्रिय धानसे व्याप्त अतएव घने तथा बीचमेंसे जानेके लिए अयोग्य इस खेतको देखिए ] ॥ ३१ ॥

फूले वृक्षोंसे ढके, व्याघ्रों ( पुण्डरीक )से व्याप्त इस पर्वत अथवा इस गहन वनमें दिन भी अच्छा नहीं लगता है । [ विकसित कमलयुक्त पूर्णरूपसे खिले फूलोंसे ढके वृक्षयुक्त इस उपद्रवरहित गहन स्थानपर क्या तालाब अत्यन्त मनमोहक नहीं लगता है ? ॥ ३२ ॥

प्रवाहके पलटनेके कारण हानि करनेमें समर्थ नदियाँ भी इस क्षेत्रमें तटोंका लंघन नहीं करती हैं । घरमें कुलीन अंगनाके समान वे पूर्ण रूपसे अपने किनारोंके ही भीतर बहती हैं । [ आचरणमें शिथिलताओंके दोषके कारण इस देशमें स्त्रियाँ मर्यादाओंका उल्लंघन नहीं करती हैं । शरत्कालीन नदियोंके समान एकपतिके व्रतका निर्वाह करती हैं ] ॥ ३३ ॥

---

१. श्लेषः—ब०, ना० । २. श्लेषः—ब०, ना० । ३. श्लेषः—ब०, ना० । ४. उपमा—ब०, ना० ।

पयोधरभराक्रान्तनितम्बालसविक्रमाः ।
तन्वीः स्पर्शसुखोत्सङ्गा नानाकुसुमवासिताः ॥३४॥

पयोधरेति–अधुना कुलकेन व्याख्यास्यामः । अयं देशः [1]दरीर्गुहा बिभर्ति धारयति । कथम्भूताः ? पयोधरभराक्रान्तनितम्बालसविक्रमाः पयोधराणां[2] मेघानां यो भरस्तेन आक्रान्ता ये नितम्बाः सानवस्तैरलसाः वीनां पक्षिणां क्रमाः पादविक्षेपाः यासु ताः पुनः तन्वीः शर्करारहितत्वाच्च लघ्वीः मृद्वीरित्यर्थः । पुनः स्पर्शसुखोत्सङ्गा स्पर्शसुख उत्सङ्गो मध्यं यासां ताः । पुनः नानाकुसुमवासिताः विविधपुष्पसुरभीकृताः ।

भारतीयः–अयं देशः तन्वीः कामिनीः बिभर्त्ति । कथम्भूताः तन्वीः ? पयोधरभराक्रान्तनितम्बालसविक्रमा पयोधरभरेण स्तनभारेणाक्रान्तो यो नितम्बः कटिप्रदेशस्तेन । अलसौ मन्दौ विक्रमौ चरणौ यासां ताः । शेषं समम् ॥३४॥

सानुवृत्तोरुसम्भोगा गम्भीरावर्तनाभिकाः ।
रम्याधरोदरीभूताः प्ररोहचिकुरश्रियः ॥३५॥

सान्विति-पुनः कथम्भूताः । सानुवृत्तोरुसम्भोगाः सानौ प्रस्थे वृत्तो वर्त्तुलः उरुः वरिष्ठः सम्भोगो विस्तारो यासां ताः पुनः गम्भीरावर्त्तनाभिकाः गम्भीरः अतलस्पर्शी[3] आवर्त्तो जलभ्रमो यस्याः सा नाभिः मध्यप्रदेशो यासां ताः पुनः रम्याः पुनः धरोदरीभूताः धरायाः भुवोऽनुदरमुदरं भूताः धरोदरीभूताः पुनः प्ररोहचिकुरश्रियः प्ररोहाः वृक्षनेत्रा एव चिकुराः केशास्तैः श्रीः शोभा यासां ताः ।

भारतीयः–अयं देशः तन्वीः बिभर्ति । कथम्भूताः ? सानुवृत्तोरुसम्भोगाः क्रमवृत्तजघनविस्तारसहिताः । पुनः रम्याधरोदरीभूता रम्याण्यधरोदराणि यासां ताः रम्याधरोदर्यस्ताद्दशीभूताः रम्याधरोदरीभूताः पुनः प्ररोहचिकुरश्रियः प्ररोहाणामिव चिकुरश्रीः केशशोभा यासां ताः ॥३५॥

युक्ताः कुशलताभोगैरुत्कटाक्षाः शुभाननाः ।
कान्ता बिभर्ति देशोऽयमस्मिन्नुच्चैस्तलोदरीः ॥३६॥

युक्ता इति–अयं देशः दरीः बिभर्त्ति । कथम्भूता दरीः ? कुशलताभोगैः दर्भवल्लीसमूहैर्युक्ताः समन्विताः पुनरुत्कटाक्षा उत्कटा उग्रा अक्षा बिभीतकवृक्षाः यासु ताः । पुनः शुभानना रम्यद्वारप्रवेशाः पुनः कान्ताः कं जलमन्ते समीपे यासां ताः । कथम्भूतो देशः ? उच्चैस्तल उच्चभूमिकः[1] अस्मिन् दण्डके ।

---

इस देशके पर्वतोंमें ऐसी गुफाएँ हैं जिनमें पक्षिलोग धीरे-धीरे निश्शंक भावसे चलते हैं क्योंकि गुफाओं वाले छोटे-छोटे शिखर मेघोंकी घटासे घिरे रहते हैं । वे गुफाएँ पतली हैं, सुगन्धसे भरी हैं, ( ३४ ) शिखरके भीतर उनकी परिधि विस्तृत हो गयी है, उनका वृत्ताकार अन्त अत्यन्त दूर है, वे सुन्दर हैं तथा पृथ्वीके उदरके समान हैं, चारों तरफ उगी दूब, वृक्षोंके अंकुर आदि उनके केशसे प्रतीत होते हैं । ( ३५ ) कांस-लताओंके विस्तारसे व्याप्त, सोंचर नमकसे भरीं, सुन्दर प्रवेश द्वार सहित तथा जलाशयके पास स्थित हैं और अत्यन्त गहरी हैं ( ३६ ) [ इस देशमें स्तनोंके भारसे झुकी; नितम्बभारसे मन्थरगामिनी, कृश देहधारिणी, स्पर्शन इन्द्रियके सुख ( संभोग )की निमित्त, विविध प्रकारके पुष्पोंसे सजी ( ३४ ), आनुपातिक वृद्धि युक्त जंघाधारिणी, गहरी गोल नाभिवती, सुन्दर ओष्ठ उदर धारिणी, अंकुरोंके समान सुन्दर केश शोभित ( ३५ ) भोगोंके सेवनमें दक्ष, कटाक्ष विक्षेपमें पारंगत, मनोहर मुखवती तथा अत्यन्त कृश उदरधारिणी कान्ताएँ हैं ] ॥ ३६ ॥

इस देशकी अनुकूल बहती नदियोंका प्रवाह जब मेघोंकी घटासे आक्रान्त होता है तब इनको पार करनेमें पराक्रम ठंडा पड़ जाता है किन्तु इस ऋतु ( शरद् )में ये पतली

---

१. प्रकरणप्राप्तत्वात् कान्ता—अर्थेऽपि संभवति । २. पयोधराणां भरस्तेनाक्रान्तनितम्बास्तैरलसाश्च ते वयश्च तेषां क्रमः पादविक्षेपो यासु ताः–प०, द० । ३. अतलस्पर्शाः–प०,द० ।

भारतीयः—अयं देशस्तन्वीः बिभर्त्ति । क ? अस्मिन् स्थाने । कथम्भूताः ? कुशलतामार्गैश्चातुर्यप्राचुर्यैः युक्ताः पुनः उत्कटाक्षा उद्गतापाङ्गाः पुनः शुभाननाः रम्यवदनाः कान्ताः कमनीयाः पुनरुच्चैस्तलोदरीरुच्चैस्तीव तलं क्षाममुदरं यासां ताः सदसन्मध्यप्रदेशा इत्यर्थः[1] ॥३६॥

**विक्षिप्तपुष्पशयनाः सुरतापातसम्भ्रमात् ।**
**कुसुमेषुचिताः कामसङ्ग्रामरचना इव ॥३७॥**

विक्षिप्तेति—कुलकसम्बन्धेन व्याकरिष्यामः । भो देव भान्तीति क्रियाऽध्याहार्या । उपवने उद्यानवने एताः दिव्यस्त्रीणां सुराङ्गनानां क्रीडाः । कथम्भूताः ? सुरतापातसम्भ्रमात् सुरतस्य आपातेन यः सम्भ्रमस्तस्मात् सम्भोगप्रथमारम्भव्याकुलत्वात् विक्षिप्तपुष्पशयनाः विकीर्णकुसुमतल्पाः पुनः कुसुमेषुचिताः पुष्पबाणपुष्टाः । का इव ? कामसङ्ग्रामरचना इव स्मरसमरसन्निवेशा इव ॥३७॥

**अलीककलहाकृष्टसूत्रशेषीकृतस्रजः ।**
**अन्योन्यबन्धनानीतबिशसूत्रयुता इव ॥३८॥**

अलीकेति—पुनः कथम्भूताः ? अलीककलहाकृष्टसूत्रशेषीकृतस्रजः अलीककलहेनाकृष्टाः पश्चात् सूत्रशेषीकृताः स्रजो यासु ताः प्रेमकलहाक्षिप्ततन्तुशेषीकृतकुसुममालाः । किंविशिष्टा इवोत्प्रेक्षिताः ? अन्योन्यबन्धनानीतबिशसूत्रयुता इव परस्परयन्त्रणानायितपद्मिनीकन्दतन्तुबद्धा इवेत्यर्थः ॥३८॥

**सलाक्षिकपदन्यासाः कुङ्कुमै रञ्जिता इव ।**
**एताश्चोपवने दिव्यस्त्रीणां क्रीडाः सुरान्विताः ॥३९॥**

सलाक्षिकेति—सलाक्षिकपदन्यासाः लाक्षारक्तचरणन्यासेन सह वर्त्तमानाः । का इवोत्प्रेक्षिताः ? कुङ्कुमैः घुसृणैः रञ्जिता इव विलिप्ता इव पुनः सुरान्विताः देवयुताः ।

भारतीयः—हे दिव्य ! मनोहर उपवने स्त्रीणां कामिनीनामेताः क्रीडाः भान्ति । कथम्भूताः ? कुसुमेषुचिताः कुसुमेषु सुमनस्सु पुष्टाः कुसुमबहुला इत्यर्थः । अथवा कुसुमेषुः कामस्तेन चिताः पुष्टाः कन्दर्पपुष्टाः । पुनः सुरान्विताः वारुणीयुताः । शेषं समानम्[2] ॥३९॥

---

पड़ गयी हैं, इनमें अवगाहनादिका आनन्द लिया जा रहा है, आस-पास खिले फूलोंकी सुगन्धसे व्याप्त हैं । ( ३४ ) अत्यन्त गोल एवं विशाल मोड़ों युक्त हैं, गहरी भँवरोंके कारण इनमें कूप ( पाताल ) पड़ गये हैं, वे सुन्दर हैं और पृथ्वीके पेटके समान है । किनारेपर उगी वनस्पतियोंके अंकुरोंकी शोभा अद्‌भुत है । ( ३५ ) दूर दूर तक कुश तथा लताकुञ्जोंसे व्याप्त हैं, किनारोंपर ऊँचे बहेड़ेके पेड़ खड़े हैं, उनका तल गहरा और विस्तृत है तथा ये सर्वदा सुन्दर और जलपूर्ण हैं । ३६ ।

इस देशकी गुफाएं देव वर्गके अवतरणके प्रसंगसे फैले फूलोंकी शय्या ही प्रतीत होती हैं, विविध पुष्पोंसे व्याप्त होनेके कारण कामदेवकी व्यूह-रचना सी प्रतीत होती हैं ( ३७ ) परस्परके गुंजनसे आकृष्ट भौंरोंकी मालामें केवल सूत्रकी ही कमी है, अथवा परस्परमें सन्निकट आ जानेसे मृणाल-तन्तुमें पिरोयेसे लगते हैं ( ३८ ) । निकटस्थ छोटे पर्वतोंपर लाक्षा फैली हुई है । फलतः कुंकुमसे रंगेसे लगते हैं । इनके उपवनोंमें देवताओंके साथ स्वर्गकी अप्सराओंकी क्रीडाएं चलती हैं । ( ३९ ) [ प्रथम प्रारब्ध संभोगके भयसे पुष्पशय्या इधर-उधर हो गयी है । फलतः पुष्प रूपी बाणोंसे व्याप्त सुरत संग्रामकी स्थलीके समान हैं । ( ३७ ) दिखावटी कलहमें खींची गयी मालाओंके सिर्फ सूत्र ही शेष रह गये हैं, वे ऐसे लगते हैं मानो एक दूसरीको बाँधनेके लिए मृणाल सूत्र हों । ( ३८ ) आलता युक्त पैरोंके चिह्नोंसे व्याप्त हैं और कुंकुमसे रंगी-सी हो रही हैं ऐसी कामिनियोंकी अलौकिक क्रीडाएँ इन उपवनोंमें होती है । ३९ । ]

---

1. श्लेषः—ब०, ना० । 2. श्लेषः—ब०, ना० ।

स्मरार्त्ता वारुणीभूतपरिप्लवविलोचनाः ।
सिञ्चन्त इव सुधया गायन्तः काकलीकलम् ॥४०॥
चलत्परिमलासक्तलीलालोलालिसंवृताः ।
तमालबहुलारण्यमभिविष्टा इव स्फुटम् ॥४१॥
इह किंपुरुषाः पश्य पुष्पाणामुच्चिकीर्षया ।
उद्यानेन परिश्रान्ताः सङ्क्रीडन्ते प्रियासखाः ॥४२॥

स्मरार्त्ता इति—कुलकेन व्याख्यास्यामः । हे रावण ! पश्य निरीक्षस्व । इह दण्डकवने किम्पुरुषाः किन्नराः पुष्पाणामुच्चिकीर्षया उच्चेतुमिच्छया सङ्क्रीडन्ते विहरन्ति । कथम्भूताः ? उद्यानेनोर्ध्वगमनेन परिश्रान्ताः खिन्नाः । पुनः प्रियासखाः प्रियाः सखायो येषां ते वनितासहायाः पुनः स्मरार्त्ताः कन्दर्पकदर्थिताः पुनः वारुणीभूतपरिप्लवविलोचना वारुणीभूतः परिप्लवो ययोस्तादृशे विलोचने येषां ते मदिरासमुत्पन्नाभिभवदृश्य इत्यर्थः । किं कुर्वन्तः ? काकलीकलं मधुरस्वरमनोहरं यथा तथा गायन्तः । पुनः सुधयाऽमृतेन सिञ्चन्त इव प्लावयन्त इव पुनश्चलत्परिमलासक्तलीलालोलालिसंवृताः परिमलेष्वासक्ताः परिमलासक्ताः चलन्तश्च ते परिमलासक्ताश्च चलत्परिमलासक्ताः लीलायां लोला लम्पटा येऽलयः मधुपास्ते लीलालोलालयश्चलत्परिमलासक्ताश्च ते लीलालोलालयश्च तैः संवृताः भ्रमदामोदरतक्रीडाचञ्चलभ्रमरपरिवेष्टिताः । किं विशिष्टा इवोत्प्रेक्षिताः ? तमालबहुलारण्यं स्फुटं निश्चयेन अभिविष्टाः प्रविष्टा इव ।

भारतीयः—हे युधिष्ठिर ! पश्य । उद्याने उपवने पुरुषाः किं न सङ्क्रीडन्ते अपि तु सङ्क्रीडन्त एव । कथम्भूताः ? अरुणीभूतपरिप्लवविलोचनाः स्मरार्त्ता वा मकरध्वजपीडिता इव । शेषं समम्[1] । ॥४०–४२॥

देवाङ्गनापदन्यासगुञ्जद्वलयशिञ्जनाः ।
एते लतागृहा भान्ति कामकारालया इव ॥४३॥

देवेति—एते लतागृहाः वल्लीमन्दिराणि भान्ति शोभन्ते । कथम्भूताः ? देवाङ्गनापदन्यासगुञ्जद्वलयशिञ्जनाः देवाङ्गनानां पदन्यासेन गुञ्जन्ति रणन्ति वलयशिञ्जनानि कङ्कणनूपुराणि येषु ते । उत्प्रेक्षन्ते—कामकारालया इव कन्दर्पबन्दीगृहा इव ।

भारतीयः—हे देव भान्ति, के ? एते लतागृहाः । कथम्भूताः ? अङ्गनापदन्यासगुञ्जद्वलयशिञ्जनाः । शेषं तुल्यम् ॥ ४३ ॥

---

काम-वासनासे व्याकुल, मदिरासे उत्पन्न मादकताके कारण चंचलनेत्र, मधुर सूक्ष्म स्वरमें गाते हुए मानो अमृतकी वृष्टि करतेसे ( ४० ) उड़ती सुगन्धिपर मोहित तथा क्रीडाके कारण चंचल भौरोंसे घिरे; मानो अधिकतम तमाल वृक्षोंके जंगलमें प्रवेश कर जानेपर भी दृश्य ( ४१ ) आकाशमें उड़नेके कारण थके तथा प्रियतमाओंके साथ निकले किन्नर जातिके देव यहाँ फूल चुननेकी क्रीड़ा कर रहे हैं । हे रावण ! देखो ( ४२ ) [ कामदेवके द्वारा दी गयी वेदनामें लाल-लाल व्याकुल विरहके आसुओंसे पूर्ण नेत्रोंसे सींचते हुए समान, प्रेमगीतको सूक्ष्मस्वरसे गुनगुनाते हुए ( ४० ) परिचर्याके लिए दौड़ती हुई, सुगन्ध जलादि लानेमें लीन, विभ्रम और सहज वात्सल्यवती सखियोंसे घिरे हुए, शीतोपचारके लिए लगाये तमाल पत्रोंके अरण्यमें ही छिपे हुएसे ( ४१ ) अत्यन्त दुर्बल तथा बान्धवोंको प्यारे ये मतिमान पुरुष इस उद्यानमें हे युधिष्ठिर ! देखिये क्यों नहीं क्रीड़ा कर रहे हैं ? अर्थात् विरह व्याकुल हो कर पड़े हैं ] ।४२ ।

सुर-सुन्दरियोंके लीलापूर्वक पैर रखनेसे पैजनियोंसे निकली झुन-झुन ध्वनियुक्त ये लताकुञ्ज कामदेवके कारावासोंके समान प्रतीत होते हैं [ हे देव ! युधिष्ठिर ! सुन्दरियों········ ] ४३ ।

---

1. श्लेषः—ब०, ना० ।

स्वगोचरमिति—स नृपती रावणः राजमार्गं प्रपेदे, कथम्भूतम् ? हर्म्यस्थकन्योज्झितपुष्पलाजं हर्म्यस्थाः सौधस्थिताः याः कन्यास्ताभिरुज्झितानि पुष्पाणि लाजा आर्द्रतण्डुला यत्र तं मन्दिरगतकुमार्य्युपक्षितकुसुमजलार्द्रतण्डुलमित्यर्थः। किं कृत्वा ? सम्मान्यलङ्कारमणीं लङ्कावनरक्षकस्य वनमालिकाख्यस्य भार्याम् अथवा (लङ्का) नगरीसंज्ञा सम्मान्या चासौ लङ्का च सम्मान्यलङ्का सम्मान्यलङ्केव रमणी सम्मान्यलङ्कारमणी तां तथोक्ताम्, किं कुर्वन् ? स्वगोचरमात्मविषयम् अधिस्त्रि स्त्रीषु प्रवृत्तं जल्पं शृण्वन्नाकर्णयन्।

भारतीयः—स नृपतिर्युधिष्ठिरः राजमार्गं प्रपेदे, किं कृत्वा ? पूर्वं निरूप्य, कान् ? सम्मान्यलङ्कारमणीन् सम्मानिनः सम्यक् प्रकारेण मां लक्ष्मीमनन्ति प्राणन्ति पुष्टिं नयन्तीति सम्मानिनः अलङ्कारभूता मणयः सम्मानिनश्च तेऽलङ्कारमणयश्च सम्मान्यलङ्कारमणयस्तान् अथवाऽलङ्कारे मणयो येषां ते तान्, सम्मान्यलङ्कारमणीन् लक्ष्मीवतः प्रधानपुरुषानित्यर्थः। शेषोऽर्थः प्राग्वत्[1] ॥४९॥

**आर्द्रा बालाश्चिक्षिपुस्तस्य शेषामुच्चैरूढा येन सा धूर्वरायाः।**
**आलोकान्तं कीर्तिलक्ष्मीप्रतापैरुच्चै रूढायेन सा धूर्वरायाः ॥५०॥**

आर्द्रामिति—बाला मुग्धाः कामिन्य आर्द्रां शेषां तस्य राज्ञः चिक्षिपुः क्षिप्तवन्त्यः। तस्य कस्य ? येन राज्ञा वरायाः शोभनाया उर्वरायाः भूमेरुच्चैर्वोढम् उच्चैः महती सा लोकप्रसिद्धा, धूर्धुरा ऊढा धृता। कथं यथा भवति ? आलोकान्तं लोकत्रयं यावत्, पुनः कथं यथा भवति ? साधु लोकप्रशंसाविषयत्वात् मनोहारि, कैः कृत्वोढा धूः ? कीर्तिलक्ष्मीप्रतापैः, कथम्भूतेन येन ? रूढायेन अयः शुभावहो विधिः, रूढः जगद्विख्यातोऽयो यस्य तेन[2] ॥५०॥

**विभीषणाभ्युन्नतकुम्भकर्णमुख्यैर्महानागबलैर्युतेन।**
**पराक्रमेणेन्द्रजितोद्धतेन प्रत्यभ्युदीये हरिणेक्षणेन ॥५१॥**

विभीषणेति—इन्द्रजिता इन्द्रजिदाख्येन पुत्रेण प्रत्यभ्युदीये प्रत्यभ्युत्थितम्। कथम्भूतेन ? हरिणेक्षणेन मृगलोचनेन, पुनरुद्धतेन गर्वपर्वताधिरूढेन, पुनः पराक्रमेण परान् शत्रून् आक्रमतीति पराक्रमस्तेन पुनः महानागमिव बलं येषां तैः महानागबलैर्युतेनान्वितेन, कथम्भूतैः ? विभीषणाभ्युन्नतकुम्भकर्णमुख्यैः, विभीषणश्चाभ्युन्नत उदयं प्राप्तश्चासौ कुम्भकर्णश्च मुख्यौ प्रधाने येषां तैः।

भारतीयः—हरिणा नारायणेन ईक्षणेन कृत्वा प्रत्यभ्युदीये। कथम्भूतेन हरिणा ? विभीषणाभ्युन्नतकुम्भकर्णमुख्यैः, विभीषणानि भीष्माणि अभ्युन्नतास्तुङ्गा कुम्भाश्च कर्णाश्च मुख्यानि च येषां तैस्तथोक्तैर्महा-

---

अपनी परम प्रिय लंकाकी स्त्रियोंको देखकर रावण अथवा अत्यन्त सम्पत्तिशाली नागरिकोंके मणियुक्त भूषणधारियोंके अभिवादन स्वीकार करके धर्मराजने अपनेको लेकर स्त्रियोंमें चलती बातें सुनते हुए उस राज-मार्गपर प्रस्थान किया था जिसपर भवनोंके ऊपर बैठी कन्याओंने फूल तथा लावेकी वर्षा की थी ॥४९॥

जो शुभ कार्योंका पोषक है तथा जिसने शेष तथा उर्वरा भूमिका वह महान् दायित्व साहसके साथ यश, सम्पत्ति और प्रभुताके द्वारा तीनों लोकोंमें पूर्ण रूपसे धारण किया है उस पर लड़कियोंने आर्द्र पूर्णाहुति छोड़ी थी ॥५०॥

महान् नागोंके समान बलशाली विभीषण तथा अत्यन्त ऊँचा कुम्भकर्ण आदि प्रमुखों सहित हरिण समान चंचलनेत्र, शत्रुओंके आक्रामक इन्द्रजीत नामक पुत्रने रावण की अगवानी की थी।

अत्यन्त भयंकर और ऊँचे सविशेष गण्डस्थल तथा कर्णधारी विशाल हाथियोंकी

---

१. श्लेषः—ब०, ना०। उपजातिवृत्तम्। २. शालिनीवृत्तम्। लक्षणं हि—"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" (वृ० र० ३।३५)।

नागबलैः गजसैन्यैर्युतेन, पुनः कथम्भूतेन ? इन्द्रजिता इन्द्रं जयतीति इन्द्रजित्तेन तथोक्तेन, पराक्रमेण हेतुना उद्धतेन सगर्वेण[1] ॥५१॥

**अत्र स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्त्तिः ।**
**अत्रस्नुताधिकमनोजवधूतमालमाल्येन तेन सहितः स्वगृहं विवेश ॥५२॥**

अत्रेति—स राजा रावणः गृहं विवेश, कथम्भूतः ? तेनेन्द्रजिता सहितः, क्व ? अत्रास्मिन्नवसरे, कथम्भूतः ? स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्त्तिः, स्नुतेन स्वेदोद्गमेनोपलक्षितोऽधिको मनोजः कन्दर्पो यासां ताः स्नुताधिकमनोजाः ताश्च ता वध्वश्च ताभिः प्रयुक्तो यः कुसुमाञ्जलिस्तेन सिक्ता मूर्त्तिर्यस्य सः, कथम्भूतेनेन्द्रजिता ? अत्रस्नुताधिकमनोजवधूतमालमाल्येन त्रसनशीलः त्रस्नुः, "त्रसिगृधृधृषिभ्यः क्नुः" न त्रस्नुरत्रस्नुस्तस्य भावो ऽत्रस्नुता तया, अधिकश्चासौ मनोजवो निर्भयत्वादधिकमनोवेगस्तेन धूतानि कम्पितानि मालमाल्यानि मालार्हकुसुमानि यस्य तेन । अत्र युधिष्ठिररावणयोर्विशेषणे पूर्वोक्त एव बोद्धव्ये[2] ॥५२॥

**सुसहायतया सुसहायतया मधुरं मधुरञ्जितयाजितया ।**
**शमितः शमितः सहितः सहितः प्रतिवासरवासरतिं प्रययौ ॥५३॥**

सुसहायतयेति—प्रययौ गतवान्, कोऽसौ ? स राजा, काम् ? प्रतिवासरवासरतिं प्रतिवासरं प्रतिदिनं प्रतिवासं प्रतिमन्दिरं यथा रतिः प्रीतिस्ताम्[3], कथम्भूतः ? शं सुखमितः प्राप्तः, पुनः शमितः शान्तः, पुनः सुसहायतया निर्व्यभिचारिमित्रसमूहेन सहितो युक्तः, कथम्भूतया ? सुसहायतया सहायस्य भावः सहायता शोभना सहायता यस्यास्तया मित्रधर्मवत्येत्यर्थः । पुनः मधुरञ्जितया मधुना वसन्तेनाह्लादितया, कथं यथा भवति ? मधुरमत्यन्तपेशलं पुनः अजितया जेतुमशक्यया, कथम्भूतो राजा ? सहितः हितं सुखं हिताः सुखहेतवो मनुष्याः हितेन हितैश्च सह वर्त्तमानः[4] ॥५३॥

**तां श्रीवधूं चिन्तयतान्यभोग्यां तेन स्वसात्कर्त्तुमपार्यमाणाम् ।**
**न शीतमुष्णं न मतं सुखाय स्वावस्थयातप्यत केवलं सः ॥५४॥**

तामिति—परमतप्यत संतापं प्राप्तः, कोऽसौ ? स रावणः, कया कर्त्र्या ? स्वावस्थयेति, कथं परमतप्यत ? तदेवाह—न मतं नेष्टम्, किम् ? शीतं श्रीगन्धकमलकर्पूरादिवस्तु, तथा नमनम्, किम् ? उष्णं वीर्यं कुङ्कुमादिवस्तु, केन ? तेन रावणेन, कस्मै ? सुखाय, किं कुर्वता ? तां जगद्विख्यातां श्रीवधूं सीतां

---

सेनासे सज्जित, इन्द्रको जीतनेमें समर्थ पराक्रमधारी तथा आत्मगौरवी विष्णु ( कृष्णजी ) ने धर्मराजको आँखोंपर लिया था ॥५१॥

बहते पसीनेसे व्यक्त अधिकतर कामासक्ति युक्त नागरिक बन्धुओंके द्वारा तमालके पत्तेमें रखकर छोड़ी गयी पुष्पाञ्जलियोंसे आर्द्र रावण अथवा युधिष्ठिरने निर्भयताके आधि-युक्त मनोभावशाली तथा मालाके फूलोंके बिखेरते इन्द्रजीत अथवा विष्णुके साथ वहाँपर अपने गृहमें प्रवेश किया था ॥५२॥

अजेय, सर्वथा समर्थ तथा विस्तृत निर्दोष मित्रमण्डलीसे युक्त वसन्त अथवा मदिरा से रंगीन सुखको प्राप्त तथा शान्त और कल्याणकारी राजाने प्रतिदिन प्रत्येक निवासमें मधुर रतिको दिया था ॥५३॥

दूसरेके द्वारा भोग्य लक्ष्मी-स्वरूपिणी सीता अथवा राज्यलक्ष्मी रूपी वधूको सोचते हुए तथा उसे अपने आधीन करनेमें असमर्थ उस रावण अथवा युधिष्ठिरके लिए शीतल

---

१. श्लेषः—द०, ना० । उपजातिवृत्तम् । २. वसन्ततिलकावृत्तम् । ३. प्रतिवासरं वासे रतिस्ताम् । ४. तोटकवृत्तम् ।

मनसा चिन्तयता, कथम्भूताम् ? अन्यभोग्यां राघवसेव्यां पुनः स्ववशादात्मसात् कर्तुमपार्यमाणामशक्याम् अतएव केवलम् अतप्यत।

भारतीयः पक्षः—तेन युधिष्ठिरेण सुखाय शीतं न मतमुष्णं न मतम्, कथम्भूतेन तेन ? ताम् आबालं गोपालादिप्रसिद्धां श्रीवधूं राज्यलक्ष्मीं चिन्तयता, कथम्भूताम् ? अन्यभोग्यां दुर्योधनसेव्याम्, किं कर्तुम् ? स्ववशात् स्वाधीनाम्, केवलमतप्यत, कया ? स्वावस्थया दुर्दशयेति[1] ॥५४॥

**त्रेपे नृपाणां समवस्थयोच्चैः सेहे न दुर्योधनकामबाधाम्।**
**बालाङ्गनापाङ्गकृतापहासं रहस्यसौभाग्यमलं निनिन्द ॥५५॥**

त्रेप इति—त्रेपे लज्जितः, कोऽसौ ? स रावणः, कया ? समवस्थया, केषाम् ? नृपाणाम्, कथम् ? उच्चैः अतिशयेन। तथा न सेहे न सोढुं समर्थोऽभूत्, काम् ? दुर्योधनकामबाधां दुःखेन योद्धुं शक्यो दुर्योधनः स चासौ कामस्तस्य बाधां पीडाम्। निनिन्द, किम् ? असौभाग्यमलं दौर्भाग्यरजः, क्व ? रहस्येकान्ते, कथम्भूतम् ? बालाङ्गनापाङ्गकृतापहासम्, बालाङ्गनानां मुग्धस्त्रीणामपाङ्गाः कटाक्षास्तैः कृतमपहासं यस्य तत्।

भारतीयः—असौ नृपाणां समवस्थया त्रेपे। तथा दुर्योधनकामबाधां गान्धारीतनयाभिलाषपीडां न सेहे। तथा भाग्यं दैवं रहस्यलमत्यर्थं निनिन्द। कथम्भूतं बालाङ्गनापाङ्गकृतापहासं बालाः शिशवोऽङ्गनाः कामिन्यस्ताभिरपाङ्गनिन्द्यं यथा भवति तथा कृतमपहासं यस्य तत्तथोक्तम्। कर्मण्येतदेव रूपम्[2] ॥५५॥

**न गुणैर्वधूभिरमितो रमितो न विलेपनं निजगृहे जगृहे।**
**विभवेषु नो वशमितः शमितः स गतो यतित्वमुदितो मुदितः ॥५६॥**

न गुणैरिति—स राजा वधूभिर्न रमितः, कथम्भूतः सन् ? गुणैरौदार्यधैर्यादिभिरमितोऽगाधस्तथा विलेपनं श्रीगन्धादिलक्षणं न जगृहे नाङ्गीचकार, क्व ? निजगृहे आत्मीयमन्दिरे, तथा विभवेषु परिच्छदादिषु लक्षणेषु न वशमितः गतः, तथा स राजा गतः, किम् ? यतित्वं मुनिरूपताम्, कथम्भूतः सन्, उदितोऽभ्युन्नतः, श्रमितः, शान्तः, पुनः कथम्भूतः सन् ? अमुदितोऽहृष्टः सन्निति[3] ॥५६॥

**स वैरिणा श्रीमदनेन राजा निगूहमानो हृदयं विदीर्णम्।**
**अगाधगम्भीरमुदात्तसत्त्वमाकारमग्र्यं बिभरां बभूव ॥५७॥**

स इति—स राजा रावण आकारं कोपप्रसादजनितां शरीरप्रकृतिं बिभराम्बभूव बभार। किं कुर्वाणः ? श्रीमदनेन श्रीकन्दर्पेण विदीर्णं विदारितं हृदयं निगूहमानः संवृण्वन् दुर्जनजनहास्यभयान्न प्रकटयन्, कथम्भूतं हृदयम् ? अगाधगम्भीरमगाधमकलितं तथा गम्भीरं निःक्षोभम्, अग्र्यं प्रधानम्, उदात्तसत्त्वमुदात्तमुत्कृष्टं सत्त्वं बलं यस्मिन् तत्।

भारतीयः—स राजा युधिष्ठिरः आकारं बिभराम्बभूव, कथम्भूतम् ? अग्र्यमादेयं पुनरुदात्तसत्त्वमुल्वण-

---

अथवा उष्ण पदार्थ भी सुख नहीं देते थे। वह क्रमशः अपनी कामदशा अथवा दुरवस्थासे ही जल रहे थे ॥५४॥

रावण तथा युधिष्ठिर दोनों ही अन्य राजाओंके सामने आते लजाते थे। कष्टसे सामना करने योग्य कामदेवकी बाधाको रावण नहीं सह पाता था तथा कौरव दुर्योधनकी मनमानी युधिष्ठिरको असह्य थी। और बालकों, स्त्रियों तथा अंपगोंके द्वारा भी हँसे जाने वाले अपने अभागेपनको एकान्तमें धिक्कारते थे ॥५५॥

निःसीम गुणोंका भण्डार वह रानियोंके साथ रमण नहीं करता था, अपने भवनमें भी किसीसे लेपादि नहीं कराता था, और भोग-विलासोंमें उसका मन नहीं लगता था। सुखोंसे घिरे, प्रतापी तथा प्रसन्न यतिके रूपको वह प्राप्त हुआ था ॥५६॥

श्री कामदेव रूपी शत्रुके द्वारा खंड-खंड किये अपने हृदयको छिपाते हुए वह राजा रावण अत्यन्त गुप्त, सहिष्णु, विशाल शक्ति सम्पन्न बाह्य आकारको धारण किये था [ इस

---

1. श्लेषः—व०, ना०। उपजातिवृत्तम्। 2. श्लेषः—व०, ना०। 3. प्रमिताक्षरा वृत्तम्। लक्षणं हि—"प्रमिताक्षरा सजससैरुदिता" ( वृ० र० ३।१२ )।

सामर्थ्यम्, पुनः कथम्भूतम्? अगाधगम्भीरम् अनाकलितनिःक्षोभम्, कथम्भूतो राजा? हृदयं निगूहमानः, कथम्भूतम्? अनेन वैरिणा दुर्योधनेन विदीर्णं पुनः श्रीमल्लक्ष्मीवत्। शेषं तुल्यम्[1] ॥५७॥

स सदसि हृषीकेशेनोच्चैर्बलेन गरीयसा
परमतनयेनार्यं भ्रातृव्रजेन च सङ्गतः।
विलुलितकथः शस्त्रे शास्त्रे कलासु कथासु च
प्रभुरगमयत्कञ्चित्कालं धनञ्जयमूर्जयन् ॥५८॥

इति श्रीधनञ्जयकृतौ राघवपाण्डवीये महाकाव्ये रावणयुधिष्ठिरलङ्काद्वारवतीप्रवेश-
कथनो नामाष्टमः सर्गः ॥८॥

---

स इति–सोऽयं रावणः कञ्चित्कालं समयमगमयत् निनाय, किं कुर्वन्? धनं द्रव्यं तथा जयमूर्जयन्नुपार्जयन्, कथम्भूतः? प्रभुः विभुः, पुनः विलुलितकथः विलुलिता कथा येन सः, विहितविचारण इत्यर्थः। क? शस्त्रे चापतोमरादिलक्षणे तथा शास्त्रे व्याकरणतर्कादिलक्षणे जात्यपेक्षयैकवचनम्। तथा कलासु वेणुवीणादिषु तथा कथासु कादम्बर्यादिषु। क? सदसि सभायाम्, पुनः कथम्भूतः? गरीयसा गरिष्ठेनाजय्येन बलेन सैन्येन सङ्गतः संयुक्तस्तथा परमतनयेन परमा श्रीर्यस्य स परमः परमश्चासौ तनयश्च परमतनयस्तेन श्रीमदिन्द्रजिता पुत्रेण सङ्गतः, कथम्भूतेन? हृषीकेशेनेन्द्रियनियन्त्रा इष्टस्रग्वनिताचन्दनादीननुभवितुमित्यर्थः, कथम्? उच्चैरत्यर्थं तथा भ्रातृव्रजेन विभीषणादिसमूहेन सङ्गतः।

भारतीयः–धनञ्जयमर्जुनम् ऊर्जयन्प्रौढिं नयन्, हृषीकेशेन नारायणेन बलेन बलभद्रेण तथा परमतनयेन परं केवलं मत इष्टः नयो दुष्टशिष्टनिग्रहानुग्रहलक्षणो येन तेन दुष्टानां निग्रहः शिष्टानां प्रतिपालनं राज्ञां धर्मो न तु जटाधारणं शिरोमुण्डनं चेति वचनात्। यद्वा परेषामरीणां मतो ज्ञातो नयो नीतिर्येन तेन, भ्रातृव्रजेन भीमादिसमूहेन सङ्गतः गरीयसेति कृष्णबलयोर्विशेषणं लोकपूज्यत्वात्। शेषं पूर्ववत्[2] ॥५८॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्र-
पण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरी-
चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदी नाम दधानायां टीकायां
रावणयुधिष्ठिरलङ्काद्वारवतीप्रवेशकथनोऽष्टमः सर्गः ॥८॥

---

राज्य-लक्ष्मीयुक्त शत्रु दुर्योधनके द्वारा खण्डित मनको छिपाते हुए राजा युधिष्ठिर ] ॥५७॥

इन्द्रिय जेता, बलवान, गौरवशाली भाइयों तथा श्रेष्ठ पुत्रके साथ राजसभामें शास्त्र, शास्त्र और ललित कलाओंकी चर्चा करता हुआ तथा अपनी सम्पत्ति और विजयके साधनों को बढ़ाता हुआ राजा रावण कुछ समय बिता रहा था।

परम बली, सबके श्रेष्ठ, हृषीकेश कृष्णजी तथा भाइयोंके साथ शत्रुओंकी योजनाएँ जाननेमें व्यस्त इस राजा युधिष्ठिरने यादव राजसभामें शस्त्र-शास्त्र तथा संगीतादिकी चर्चाएँ करते हुए और अर्जुनकी प्रतिष्ठा बढ़ाते हुए कुछ समय व्यतीत किया था ॥५८॥

निर्दोषविद्याभूषण भूषित पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती श्रीमान् पंडितविनयचन्द्र
गुरुके प्रशिष्य, देवनन्दिके शिष्य, सकलकलाचातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र द्वारा
विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान
काव्यकी पदकौमुदी टीकामें रावण युधिष्ठिर-लङ्काद्वारावती-
प्रस्थान कथन' नामका अष्टम सर्ग समाप्त।

---

1. श्लेषः–ब०, ना०। उपजातिवृत्तम्। 2. श्लेषः–ब०, ना०। हरिणीवृत्तम्। लक्षणं हि "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा।" (वृ० र० ३।९१)।

# नवमः सर्गः

तस्मिन्काले जरासन्धो वैरामोघभिया युतः ।
चित्तस्थमनुजं पश्यन्दूरतः पुरुषोत्तमम् ॥१॥
तथा विराधितं वैरिभीमहानियमोद्यतम् ।
उद्युक्त्याश्वासयन्ख्यातस्तं कौरव्यंशुभावहः ॥२॥
पृथ्व्याः पातालङ्कान्तः श्रीगृहं प्राप्य भूषणम् ।
सीताचिन्ताकुलः कार्यं दुःखमालोचयन्स्थितः ॥३॥
अज्ञातचरितं शत्रुं श्रीवधूहरणोद्यतम् ।
विरित्सन्विधुना धौते सौधे शीतेऽप्यतप्यत ॥४॥

श्लोकचतुष्टयमतप्यतेति क्रियया व्याख्यायते—तस्मिन्निति—अतप्यत, कोऽसौ ? रामो राघवः, कथम् ? वै स्फुटम्, क्व ? तस्मिन्काले सीतापहरणसमये, कि कुर्वन् ? पश्यन्नस्मिन्नवसरे नान्यः, कश्चित्सहायो ममास्तीति अन्तर्मुखाकारतया वीक्ष्यमाणः। कम् ? अनुजं भ्रातरम्। किमाख्यम् ? पुरुषोत्तमं लक्ष्मणम्, कथम्भूतम् ? चित्तस्थं मनोगतम्। कथम्भूतो रामः अघभिया पापभयेन दूरतो दूरादयुतोऽसङ्गतः निष्पापो निर्भयश्चेत्यर्थः, पुनः जरासन्धः जरयाऽसन्धोऽसम्बन्धो यस्य सः, वार्द्धक्याविषयः चरमाङ्गत्वात्, शरीराविकारित्वात्, मोक्षगामित्वात्तस्येति सम्बन्धः। भारतीयः—अतप्यत कोऽसौ ? जरासन्धः जरासन्धाभिधानो नारायणप्रतिकूलो विद्याधरचक्रवर्त्ती, किं कुर्वन् ? पश्यन्। कम् ? चित्तस्थमनुजं मनोगतमनुष्यम्, किमाख्यम् ? पुरुषोत्तमं नारायणम्, कस्मात् ? दूरतः दूरात्। कस्मिन् ? तस्मिन्काले शरत्समये, कथम्भूतः सन् ? युतो युक्तः, कया ? वैरामोघभिया वैरात् कंसस्य स्वभागिनेयस्य वधसमुत्पन्नात् अमोघा चासौ भीश्च वैरामोघभीस्तया वैराप्रतिहताशङ्कयेति।

तथेति—कथम्भूतो रामः ? ख्यातः प्रसिद्धः क्व ? कौ भुवि, किं कुर्वन् ? श्वासयन् धीरयन्, कम् ? तं प्रसिद्धं विराधितं खरदूषणनिर्द्धाटितं चन्द्रोदरपुत्रम्, कथम् ? तथा तेनैव लक्ष्मणस्मरणप्रकारेण वैरिभीमहानियमोद्यतं वैरिभ्यां खरदूषणाभ्यां भीः वैरिभीः वैरिभियां वैरिवैरे सति महानियमः खरदूषणयोर्वधघटनायां यावन्ममेष्टस्रग्वनिताचन्दनादिपरित्यागलक्षणं व्रतं वैरिभी महानियमः तत्रोद्यतस्तं तथोक्तम्, कया ? उद्युक्त्या महाविचारणया, पुनः कथम्भूतः ? रव्यंशुभावहः रवेरंशवः रव्यंशवस्तेषां भावं सत्तां स्वरूपं वा हन्तीति रव्यंशुभावहः आत्मप्रतापेनार्कप्रतापस्य जेतेत्यर्थः। दिनकरकिरणदीप्तिभृदिति।

---

तस्मिन्, काले चित्तस्थं पुरुषोत्तमम्, अनुजं दूरतः पश्यन् वै जरासंधः रामः अघभिया युतः कौ ख्यातः रव्यंशुभावहा, तथा विराधितं वैरिभी महा नियमेनोद्यतं तम् आश्वासयन् पृथ्व्याः पातालंकान्तः श्रीगृहभूषणं प्राप्य सीताचिन्ताकुलः कार्यमालोचयन्दुखं स्थितः।

सीताका अपहरण हो जानेके समय पुरुषश्रेष्ठ मनमोहन अनुज लक्ष्मणको दूर गया देखकर वार्द्धक्यसे परे ( 'चरम शरीर', युवक ) रामको निश्चयसे रावणके पाप अर्थात् सीताहरणकी आशंका हो गयी थी। पृथ्वीपर विख्यात, सूर्यकी किरणोंके प्रतापके तिरस्कारक राघव, लक्ष्मणके द्वारा कथित प्रकारसे सताये गये अतएव शत्रुके भयकी समाप्तिके लिए कठोर प्रतिज्ञाओंमें बद्ध, उसको साहसके वचनोंसे समझाता हुआ, भारत भूमिसे लेकर पाताल लंका पर्यन्त लक्ष्मीके निवासभूत सीताके भूषणोंको पा कर सीताकी चिन्तामें विभोर तथापि कर्त्तव्यका विचार करता हुआ, दुखसे समय बिता रहा था।

भारतीयः–कथम्भूतो जरासन्धः ? ख्यातः प्रसिद्धः, किं कुर्वन् ? तं प्रसिद्धं कौरव्यं दुर्योधनमाश्वासयन् जरासन्धगृह्याः कौरव्या इति वचनात्। कया ? उद्युक्तया उच्चैर्विचारणया, कथं तथा ? दूरस्थस्यापि पुरुषोत्तमस्य चित्तस्थस्यावलोकनप्रकारेण कथम्भूतं कौरव्यम् ? विराधितम्, कैः ? पाण्डवैरिति सम्बन्धो बोद्धव्यः, पुनः कथम्भूतम् ? वैरिभीमहानियमोद्यतं वैरी चासौ भीमश्च तस्य हानौ वध उद्यतं प्रतिकूलवृकोदर-प्राणत्यागव्रतोद्यमपरमित्यर्थः। कथम्भूतो जरासन्धः ? शुभावहः शुभमावहतीति शुभावहः अथवा शुभं न वहतीति सः नारायणहस्ताद्व्यापादनावधिसमलतया दुर्दशां वहमान इत्यर्थः।

पृथ्व्या इति–कथम्भूतो रामः ? स्थितः, कथं यथा भवति ? दुःखम्, किं कुर्वन् ? आलोचयन् अन्तर्मुखाकारतया व्यालोकमानः, किम् ? कार्यं कर्त्तव्यम्, कथम्भूतः ? सीताचिन्ताकुलः जानकीचिन्तनव्यग्रः, किं कृत्वा ? पूर्वं प्राप्य :प्रविश्य, किम् ? श्रीगृहं विलासमन्दिरम्, क्व ? पाताललङ्कान्तः पाताललङ्कामध्ये, कथम्भूतम्, पृथिव्या मेदिन्या भूषणमलङ्कारम्। भारतीयः–कथम्भूतः जरासन्धः ? स्थितः कथं यथा ? दुःखम्, किं कुर्वन् ? आलोचयन्, किम् ? कार्यम्, कथम्भूतः ? सीताचिन्ताकुलः भूमिचिन्तया व्यग्रः केनोपायेनावनिर्मम स्थिरा भविष्यतीति स्मरणव्यासः, किं कृत्वा ? श्रीगृहं प्राप्य, कथम्भूतम् ? भूषणम्, पुनः कथम्भूतम् ? आललं मनोहरहरितालादिरसचित्रलिखितभित्तिकमित्यर्थः। कथम्भूतः ? कान्तः कमनीयमूर्त्तिः, पुनः पृथ्व्याः पाता रक्षकः।

अज्ञातेति–अतप्यत सन्तापेनान्वभूयत स रामः, क्व ? सौधे[1], कथम्भूते ? शीतेऽपि शीतलेऽपि पुनः धौते शुद्धीकृते, केन ? विधुना चन्द्रेण, किं कुर्वन् ? शत्रुं रावणं विरित्सन् संहर्त्तुमिच्छन्, कथम्भूतम् ? अज्ञातचरितमविदितचेष्टं खेचरविद्याभ्याससम्भूतेः, पुनः श्रीवधूहरणोद्यतं सीताहरणतत्परम्।

भारतीयः–जरासन्धः सौधेऽतप्यत, कथम्भूते सौधे ? विधुना कर्पूरेण धौते शुद्धे, किं कुर्वन् ? शत्रुं नारायणं विरित्सन्, कथम्भूतम् ? श्रीवधूहरणोद्यतं लक्ष्मीललनापहारोद्यतम्। शेषं प्राग्वत्[2] ॥१—४॥

**सत्यग्रेसरसीतापहारिण्येषत्यलोकयत् ।**
**यां यां तया तयारत्या दूनः परमकाष्ठया ॥५॥**

---

अन्वय–तस्मिन्काले चित्तस्थमनुजं पुरुषोत्तमं दूरतः पश्यन् जरासंधो वैरामोघभिया युतः तथा विराधितं वैरिभीमहानियमोद्यतं तं कौरव्यम् उद्युक्त्या आश्वासयन् शुभाऽवहः ख्यातः पृथिव्याः पाता कान्तः, सीता चिन्ताकुलः कार्यम् आलोचयन् दुःखं स्थितः।

उस शरत्कालमें भी अहर्निश मनमें बसे पुरुषोत्तम नारायण रूपी शत्रुको दूरसे ही सोचकर जरासंधपर शत्रुका व्यर्थ न होनेवाला भय छा जाता था, पूर्वोक्त प्रकारसे उत्तेजित किये गये प्रमुख शत्रु भीमके विनाशकी प्रतिज्ञाके पालक कौरव राजा दुर्योधनको बड़े-बड़े आश्वासन देकर स्थिर करते हुए यह पुण्यसे विमुख तथापि ख्यात, अपने राज्यकी सुरक्षाके लिए चिन्तित, पृथ्वीके पालक रूपसे ज्ञात तथा सुन्दर वह (जरासंध) सुसज्जित तथा पूर्ण रूपसे चित्रित शोभन भवनमें पहुँचकर भावी कर्तव्यका विचार करता हुआ दुःखसे समय बिता रहा था ॥१–३॥

प्रतिष्ठा तथा पत्नीके हरणके लिए प्रवृत्त तथा अज्ञात शील एवं गन्तव्य शत्रुके वधके लिए उत्सुक राम चन्द्रिकासे प्लावित, सुधामय तथा शीतल वातावरणमें भी सन्तप्त हुए थे [ राज्यलक्ष्मी रूपीके वधूके अपहरणके लिए तत्पर तथा अपनी आक्रमण योजना और तयारीको गुप्त रखते हुए शत्रु श्रीकृष्णजीके वधके लिए व्याकुल जरासंध कपूरसे धुले अत्यन्त शीतल राजभवनमें भी जल रहा था ] ॥४॥

---

१. सुधामय इत्यर्थः बलस्वरघात्। २. श्लेषः–द०, ना०। सर्गोऽस्मिन्ननुष्टुप्छन्दः। ३. अग्रे सरतीत्यग्रेसरा "पुरोऽग्रतोऽग्रेषु सर्तेः" इति टः। सतीनामग्रेसरा सत्यग्रेसरा सा चासौ सीता च सत्यग्रेसरा सीता "स्त्रीपुंनपुंसकवदनूरेकार्थे स्त्रियां पुंवत्" इति पुंवद्भावः। सत्यग्रेस–प०,द०।

सतीति—हे परम उत्कृष्टविभूतिक श्रेणिक ! असौ रामः पुनः कदर्थितः, कया ? तया तया काष्ठया दिशा, कया ? अरत्या पीडया, अलोकयद् दृष्टवान् , काम् ? यां यां काष्ठाम् , कथम् ? इति वर्त्तते का ? एषा काष्ठा, कथम्भूता ? सत्यग्रेसरसीतापहारिणी सत्यग्रेसरसीतामपहरतीत्येवं शीला पतिव्रताग्रणीजानक्य-पहारिणीति ।

भारतीयः—दूनः, कोऽसौ ? जरासन्धः, कया कर्त्र्या ? तया तया सरस्या सरोवरेण, कया कृत्वा ? अरत्या, कथम्भूतया ? परमकाष्ठया परमोत्कर्षया, अलोकयत् , काम् ? यां यां सरसीम् , कथम् ? इति वर्त्तते, का ? एषा सरसी, क्व ? अग्रे पुरतः, कथम्भूता ? तापहारिणी पुनः सीता मनोज्ञा[1] ॥५॥

**स्तनभारोऽधिकगुरुर्मध्यस्थो बलिविभ्रमः ।**
**तथापि साधुसंयोगात्तं न जहुः पुरेऽङ्गनाः ॥६॥**

स्तनेति—न जहुः न हृतवत्यः, काः ? अङ्गनाः कामिन्यः, कम् ? तं पूर्वोक्तम् , कस्मात् ? साधु-संयोगात् , क्व ? पुरे नगरे, कथम् ? तथापि ? यद्यपि विद्यते कः ? स्तनभारः, कथम्भूतः ? अधिकगुरुः घनपीनोन्नतः, तथा यद्यपि विद्यते बलिविभ्रमः बलित्रयोल्लासः, कथम्भूतः सन् ? मध्यस्थः, यत्राधिको गुरुः शिक्षादायकः पुरुषः, यत्र च मध्यस्थो बलिविभ्रमः बलिनां विजृम्भणं मध्यगतं तत्र तत्संयोगेनान्यः कश्चिद्ब-लवान् पुरुषोऽपि पुरुषं पराजयत इति तद्वत्संयोगात् । किं रामा रामं जरासन्धश्च शत्रुजयचिन्ताकुलितं जहुः ? अपि तु न जहुरित्यनेन रामायणापेक्षया रावणपराजयमन्तरेण भारतीयकथापेक्षया नारायणपराजयमन्तरेण रामजरासन्धाभ्यां रमणीकर्पूरादि न रोचते स्मेति भावः ॥६॥

**मत्तवारणमारुह्य सन्दशन्दशनच्छदम् ।**
**जातु भ्रूभङ्गविक्षेपमीक्षाञ्चक्रे दिगन्तरम् ॥७॥**

*मत्तेति—स रामः जातु कदाचित् भ्रूभङ्गविक्षेपं यथा तथा दिगन्तरमीक्षाञ्चक्रे ददर्श, किं कुर्वन् ?* मत्तवारणं बालाणकमारुह्य दशनच्छदमोष्ठं दशन् सन् ।

भारतीयः—मत्तवारणं मत्तदन्तिनम् , शेषं समम् ॥७॥

**कदाचित्कृतनेपथ्यं स तुरङ्गमधिष्ठितः ।**
**उपरुद्धः क्षणं तस्थौ तैः सुमित्रात्मजादिभिः ॥८॥**

---

सती शिरोमणि सीताका इधर अपहरण हुआ होगा इस विचारसे रामने जिस-जिस दिशाको खोजा, उस-उस दिशाने उनको शोकसे संतप्त किया था ।

अन्वय—एषा सती सरसी अग्रे तापहारिणी इति यां यां अवलोकयत्..........।

यह सुन्दर झील पहिले संतापको दूर करती थी इस दृष्टिसे जरासंध जिस-जिस पर गया उसी-उसीने अन्तिम सीमाको प्राप्त अरतिका दुःख दिया था ॥ ५ ॥

उस राम अथवा जरासंधके मनको नगरमें अत्यन्त उन्नत स्तनभारवती तथा त्रिवलियुक्त कटिधारिणी स्त्रियाँ इसलिए नहीं हरण कर सकी थीं कि ये राम-जरासन्ध क्रमशः साधुओंकी संगतिमें तथा साध्यकी पूर्तिमें लीन थे ॥ ६ ॥

क्रोधसे ओठोंको चबाते हुए राम जंगली हाथीपर चढ़कर भ्रकुटी टेढ़ी करके कभी-कभी समस्त दिशाओंको खोजते थे । [ जरासंध राजभवनके छज्जेपर खड़ा होकर कृष्णजी-की दिशामें देखता था ] ॥ ७ ॥

---

1. श्लेषः—ब०, ना० ।

कदाचिदिति–स रामः क्षणं मुहूर्त्तं सुमित्रात्मजादिभिः लक्ष्मणविराधिताद्यैरुपरुद्ध आवृत्तः सन् तस्थौ स्थितः, कथम्भूतः ? अधिष्ठितः आरूढः, कम् ? तुरङ्गमश्वम्। कथम्भूतम् ? कृतनेपथ्यं विहितभूषणम्।

भारतीयः–सुमित्रात्मजादिभिः सुमित्राः शोभनानि मित्राणि येषां ते, ते च आत्मजादयश्च तैरुपरुद्धः। शेषं समम्[1] ॥८॥

**कल्याणनिक्कणा वीणा श्रुती नृत्यं विलोचने।**
**हरिचन्दनमप्यङ्गं तानि तस्य न पस्पृशुः ॥९॥**

कल्याणेति–कल्याणनिक्कणा वीणा तस्य नरेन्द्रस्य श्रुती कर्णौ तथा नृत्यं विलोचने, तथा हरिचन्दनम् अङ्गम् इत्थं तानि वस्तूनि न पस्पृशुः ॥९॥

**प्रौढे मन्त्रिणि तद्राज्यं प्राज्यं क्षिप्त्वा विराधिते।**
**भोगेषु विरतोऽरातिघातदीक्षामुपाददे ॥१०॥**

प्रौढ इति–भोगेषु ताम्बूलमाल्यादिषु विरतो विरक्तो रामोऽरातिघातदीक्षाम् उपाददेऽङ्गीचकार। किं कृत्वा ? तद्राज्यं पातालल‌ङ्कायां राज्यं विराधिते चन्द्रोदरपुत्रे क्षिप्त्वा, कथम्भूते ? प्रौढे अजय्ये, पुनः मन्त्रिणि हेयोपादेयतत्त्वविवेचके, कथम्भूतं राज्यम् ? प्राज्यं सर्वाङ्गपरिपूर्णम्। जरासन्धपक्षे–अविराधिते अविरोधिते[2] ॥१०॥

**अन्यदा साहसगतेर्विघातेन सदागतेः।**
**उद्धूतभूपरागेण विलोलितगृहाश्रमः ॥११॥**
**उत्सन्नगौरवकुलः पुंनागोल्लासवर्जितः।**
**निरन्तरवितापात्मा निजभूमहिमोज्झितः ॥१२॥**
**येन श्रीरुद्धृता मुक्ताफलसञ्जातपत्रजा।**
**तेन श्रीवृक्षमात्रेण किञ्चिदालक्षितोदयः ॥१३॥**
**उद्गिरन्निव सन्तापमभ्यग्रामन्दमाकुलम्।**
**सुग्रीवोपेतदारं तं नृपतिं शुचिरायया ॥१४॥**

अन्यदेति–चतुष्कुलकेन व्याख्यास्यामः। सुग्रीवो नाम विद्याधरचक्रवर्ती तं प्रसिद्धं नृपतिं रामम् आययावागतः, कथम्भूतः ? विलोलितगृहाश्रमः विलोलितः परित्याजितः गृहाश्रमो गृहस्थधर्मो यस्य सः,

कभी-कभी राम सुसज्जित घोड़ेपर ( सीताजीको खोजनेके लिए ) चढ़ते थे तो सुमित्राके पुत्र लक्ष्मणजी, भील आदिके द्वारा रोके जानेपर क्षण भरके लिए रुक जाते थे। [ सुन्दर वेश-भूषायुक्त रंगस्थलीमें बैठा जरासंध भी हितैषी मित्रों और पुत्रादिसे घिर जानेपर क्षण भरके लिए शान्त होता था ] ॥ ८ ॥

आनन्ददायक ध्वनि करती वीणाका राग इनके कानतक न पहुँचता था, नृत्य आँखोंको न रुचता था और हरिचन्दनका लेप भी उसके शरीरको न छूता था ॥ ९ ॥

विलासादिसे रिक्त रामने वयस्क अथवा अनुभवी, मंत्र विचारमें दक्ष, चन्द्रोदरके पुत्रको शत्रु रावणका सर्वाङ्गपूर्ण लंकाका राज्य देकर प्रतिज्ञा कर ली थी। [ जरासंधने भी अनुकूल गामी, गम्भीर तथा मंत्रीको द्वारकाका समृद्ध राज्य देकर शत्रुभूत नारायणके घातकी प्रतिज्ञाकी पूर्तिके लिए ताम्बूलादि छोड़ दिये थे ] ॥ १० ॥

जिसका कोई अवरोध नहीं कर सकता था उस साहसगति ( सुग्रीव ) का राजाके

1. श्लेषः–ब०, ना०। 2. एष श्लोकः प०द० मुद्रित पुस्तकेषु "मत्तवारण" इति श्लोकात्पूर्ववर्ती।
3. श्लेषः–ब०, ना०।

केन ? विघातेन उपघातेन, कथम्भूतेन ? उद्धूतभूपरागेण उद्धूतः भूपस्य रागो येन तेन, कस्य ? साहसगतेः विकटसुग्रीवस्य, कथम्भूतस्य साहसगतेः ? सदागतेरप्रतिहतशासनस्य, कदा ? अन्यदाऽन्यस्मिन्नहनि। भारतीयः—शुचिर्ग्रीष्मस्तं नृपतिं जरासन्धमाययौ। कथम्भूतः ? विलोलितगृहाश्रमः विलोलिताः गृहाः मन्दिराण्याश्रमास्तपस्विनां वसतयः मठादयो येन सः, केन ? सदागतेर्वातस्य विघातेनोपप्लवेन, कथम्भूतेन ? उद्धूतभूपरागेण उद्धूतः भुवः परागो येन तेनोत्क्षिप्तभूमिरेणूत्करेणेत्यर्थः। कथम्भूतस्य सदागतेः ? साहसगतेः शीघ्रं प्रवर्त्तमानस्य, अन्यदाऽन्यस्मिन्काले।

उत्सन्नेति। कथम्भूतः ? उत्सन्नगौरवकुल उत्सन्नं गौरवं यस्य तत्कुलं यस्य स ध्वस्तमाहात्म्यवंशः, पुनः कथम्भूतः ? पुन्नागानां प्रधानपुरुषाणामुल्लासेन आनन्देन वर्जितः, पुनः निरन्तरवितापात्माऽहोरात्रसन्तापात्मा पुनः निजभूमिहिमोज्झित आत्मीयपृथिवीमाहात्म्यपरित्यक्तः। भारतीयः—कथम्भूतः शुचिः ? उत्सन्नगौरवकुलः उत्सन्नाः शुष्काः गौरवकुला यत्र सः, पुनः पुन्नागोल्लासवर्जितः, पुन्नागानां वृक्षविशेषाणामुल्लासेन पल्लवितकुसुमितभावलक्षणेन वर्जितः दूरीकृतः, पुनर्निरन्तरवितापात्माऽन्तान्निष्क्रान्तो निरन्तः स चासौ रवितापः सूर्यतापः, तद्रूप आत्मा स्वरूपं यस्य सः पुनः निजभूमहिमोज्झितः निजः स्वाभाविकः भूमा बाहुल्यं यस्य तन्निजभूम निजभूम च तद्धिमं निजभूमहिमं तेनोज्झित उत्सृष्टः, तस्य विश्वस्मिन् सन्तापविधायिस्वरूपत्वात्।

येनेत्यादि—कथम्भूतो राजा ? आलक्षितोदयः आलक्षित उदयो यस्य सः। कथम् ? किञ्चित्स्वल्पं यथा, केन कृत्वा ? श्रीवृक्षमात्रेण श्रीवृक्षो नाम दक्षिणस्तनोपरि शुभलाञ्छनविशेषः श्रीवृक्ष एव मात्रं परिमाणं श्रीवृक्षमात्रस्तेन, येन श्रीवृक्षमात्रेण मुक्ता परित्यक्ता, का ? श्रीः लक्ष्मीः, कथम्भूता ? उद्धता उल्वणा पुनः फलसङ्घातपत्रजा फलानां भोगोपभोगलक्षणानां सङ्घातः फलसङ्घातः फलसम्पत्तिः, पत्राणि गजतुरगादीनि तेभ्यो जाता, अथवा येनोद्धताऽतिशयेन विध्वस्ता, का ? श्रीः शोभा, कथम्भूता ? मुक्ताफलसङ्घातपत्रजा मुक्ताफलानां सङ्घो यत्र तन्मुक्ताफलसङ्घं मुक्ताफलसङ्घञ्च तदातपत्रञ्च मुक्ताफलसङ्घातपत्रं तस्माजाता। भारतीयः—कथम्भूतः शुचिः ? किञ्चिदालक्षितोदयः किञ्चिदालक्षित उदयो जन्म यस्य सः, केन ? तेन श्रीवृक्षमात्रेण पिप्पलवृक्षपरिमाणेन, येन श्रीवृक्षमात्रेण मुक्ता, का ? श्रीः शोभा, कथम्भूता ? उद्धतोत्कटा, पुनः फलसङ्घातपत्रजा फलवृन्दपल्लवजा।

उद्गिरन्नित्यादि—सुग्रीवो राममाययौ। कथम् ? अभ्यक् सम्मुखम्, कथम्भूतम् ? दमाकुलं दण्डनीतिव्यग्रं पुनः अपेतदारम् अपहृतकलत्रम्, कथम्भूतः सुग्रीवः ? शुचिरकुटिलः किं कुर्वन्निव ? सन्तापमुद्गिरन्निव वमन्निव। भारतीयः—शुचिः जरासन्धमाययौ सन्तापमुद्गिरन्निव। कथम्भूतं सन्तापम् ? अभ्यग्रामन्दमभ्यग्रश्चासावमन्दश्च तम् अभिनववेगम्, कथम्भूतम् ? आकुलं व्यग्रं पुनः सुग्रीवोपेतदारं सुग्रीवाभिरुपेताः दाराः कलत्राणि यस्य तम्[1] ॥११-१४॥

---

अकस्मात् उत्पन्न क्रोधके द्वारा विनाश होनेपर गृहस्थाश्रमसे उदासीन अपने वंशकी गरिमासे हीन, श्रेष्ठ पुरुषोंकी सेवा संगतिसे रहित, दिनरात मन ही मन जलता, अपने ही राज्यमें प्रभावहीन सूचित जिसके द्वारा लक्ष्मी, विपुल भोगोपभोग, गजतुरंग, आदि रूप होती है उस अकेले श्रीवृक्ष (दक्षिण स्तनपरके चिह्न) के द्वारा ही जिसके प्रतापका कुछ-कुछ आभास मिलता था वह शुद्धाचार-युक्त सुग्रीव, आत्मसंतापको उगलता हुआ-सा दण्डनीतिकी योजनामें लीन, पत्नीसे बिछुड़े राजा रामके सामने एक दिन उपस्थित हुआ था।

अत्यन्त तीव्रगति वायुके विरूप हो जाने तथा उड़ती हुई धूलके कारण गृहों तथा आश्रमोंको व्याकुल करता गौर बकुलादि पुष्प फलोंका विनाशक, पुन्नागादि वृक्षोंके विकास हीन, सर्वदा गर्मी ही गर्मी फैलाता, अपने प्रतापसे शीतका उन्मूलक, फलसमूह तथा पत्रोंकी शोभाके विस्तारक केवल पीपलके वृक्षके द्वारा ही जिसके प्रतापका कुछ आभास मिलता है ऐसा ग्रीष्म काल अभिनव तथा उग्र उष्णताका वमन करता हुआ सुन्दर ग्रीवाधारिणी स्त्रियोंसे घिरे राजा जरासंधके सम्मुख आया था ॥ ११-१४ ॥

---

[1] श्लेषः—ब०, ना०।

**निपीड्यासनमावेद्य स्वं साहसगतिं तथा।**
**प्रवृद्धमायासमयं स प्रतापमपप्रथत् ॥१५॥**

निपीड्येति—स सुग्रीवः साहसगतिं विद्याधरविटसुग्रीवमपप्रथत् प्रथयामास। किं कृत्वा ? स्वं सुग्रीवोऽहमित्यात्मानं निवेद्य निरूप्य, किं कृत्वा ? आसनं विष्टरं निपीड्य उपविश्य, तथाऽपप्रथत्, कम् ? साहसगतेः प्रतापम्, कथम्भूतम् ? प्रवृद्धमायासमयं प्रवृद्धो मायासमयो यस्य स तं विस्तारितकौटिल्यकालम्।

भारतीयः—तथा तेनागमनप्रकारेणैवापप्रथत्। कोऽसौ ? स शुचिः, कम् ? प्रतापम्, कस्य ? स्वस्येति सम्बन्धो ज्ञेयः। कथम्भूतं प्रतापम् ? प्रवृद्धं प्रौढिमन्तम्, पुनः कथम्भूतम् ? आयासमयमायासेन निर्वृत्तः आयासमयस्तम्, किं कृत्वा ? आवेद्य प्रकटयित्वा, कम् ? स्वम्, कथम्भूतम् ? साहसगतिं साहसी गतिर्यस्य तम्, किं कृत्वा ? पूर्वं निपीड्य पीडयित्वा, किम् ? आसनं बीजवृक्षम् अत्र जात्यपेक्षयैकवचनम्[1] ॥१५॥

**जातं रणरणोपेतं सांराविणमितस्ततः।**
**प्रभञ्जनोद्यतं तस्य मदाघातकरं महत् ॥१६॥**

जातमिति—जातम्, किम् ? सांराविणं सामस्त्येन ध्वनितम्, कथम् ? इतस्ततोऽत्र तत्र, कस्य ? तस्य साहसगतेः, कथं सांराविणम् ? रणरणोपेतं शस्त्रध्वनिसंयुक्तं पुनः प्रभञ्जनोद्यतं विध्वंसनसंयुक्तम्, पुनः कथम्भूतं जातम् ? मदाघातकरं महद्विनाशकरं पुनः महद्गरिष्ठम्।

भारतीयः—तस्य ग्रीष्मस्य रणरणोपेतं शब्दानुगतशब्दोपेतं प्रभञ्जनोद्यतं महावातकृतं मदाघातकरमूष्मातिशयेन दर्पविनाशकरम् ॥१६॥

**मज्जनेषु मनो गूढं विपरीतजलात्मसु।**
**प्रकृत्या यः पुरस्तेषां समापातयदङ्गिनाम् ॥१७॥**

'मजनेष्विति—तेषामङ्गिनाम् प्राणिनां पुरोऽग्रेसरः, यः सुग्रीवविटः प्रकृत्या स्वभावेन विपरीतजलात्मसु धर्म्यपथविरुद्धजडात्मसु मजनेषु[2] मदयन्ति। 'मदी हर्षग्लेपनयोः'। तेषु जनेषु, गूढं मनः समापातयत्समासक्तवान्।

भारतीयः—प्रकृत्या पुरः पुलो महान् यो ग्रीष्मस्तेषामङ्गिनां प्राणिनां मनो गूढं निबिडं यथा स्यात्तथा, विपरीतजलात्मसु पक्षिव्याप्तवारिपूर्णेषु, मजनेषु वाप्यादिस्नानस्थानेषु ॥१७॥

---

पूर्वोक्त प्रकारसे कुटिलताके जाल-द्वारा किये गये अपने सिंहासन और प्रतापके पराभवको कहकर उसने साहसगतिको रामके पास भेजा था। [ उक्त प्रकारसे बीज-वृक्षोंको सुखाकर अपनी उग्रगतिका परिचय देते हुए ग्रीष्म ऋतुने अत्यन्त कष्टकारक अपने आतपको फैला दिया था ] ॥ १५ ॥

उस (साहसगति) का प्रताप शस्त्रोंकी झंकारयुक्त, इधर-उधर चर्चाका विषय, विध्वंसके लिए तत्पर तथा अहंकारको चूर करता सिद्ध हुआ था। [ग्रीष्मका साँय-साँय करता, शोरपर शोर मचाता, आँधीके रूपमें कार्यशील और मस्तीको हवामें मिलाता रूप होता है ] ॥ १६ ॥

उन शरीरधारियोंमें श्रेष्ठ उस साहसगतिने धर्ममार्गसे विपरीत, विवेकहीन तथा अहंकारी नागरिकोंमें प्रच्छन्न रूपसे अपना अभिमत सहज ही फैला दिया था। [ प्रकृतिमें प्रधान उस ग्रीष्म ऋतुने समस्त संसारके प्राणियोंके मनोंको पक्षियोंसे व्याप्त जलाशयोंमें मज्जन करने के लिए अत्यन्त झुका दिया था ] ॥ १७ ॥

---

१. श्लेषः—ब०, मा०। २. मुद्रितप्रतिमजुलस्य। ३. मदयन्तीति मदः ते च जनाश्च तेषु।

**उच्चैरंहाः प्रतापेन कालः साक्षाद्भयानकः ।**
**तथा मेयं पुरं देशं विश्वं विषमयोजयत् ॥१८॥**

[1]उच्चैरिति—उच्चैरंहा विपुलवेगः साक्षात्काल इव भयानकः प्रतापेन विषमयो गरलमयो यः विश्वमशेषम् अमेयं पुरं नगरं देशं विषयम् अजयत् ।

भारतीयः—अयोजयत्प्रेरयामास, कोऽसौ ? कालः ग्रीष्मसमयः, किम् ? पुरं नगरं विषं जलम् । मुख्यामुख्यया द्विकर्मिक क्रिया देशं तथा विश्वं लोकं किम् ? विषं जलम्, कथम् ? अमेयं गणनातीतम्, कथम्भूतः कालः ? उच्चैरंहा अतिवेगः, पुनः भयानकः, केन ? प्रतापेन, कथं साक्षात् परामार्थवृत्त्येति ॥१८॥

**उत्तुङ्गश्यामलकुचा तेन रम्या प्रियालकैः ।**
**वनाधिदेवता लक्ष्मीः सर्वेषां पश्यतां हृता ॥१९॥**

उत्तुङ्गेति—हृतापनीता, काऽसौ ? प्रिया भार्या, केन ? तेन साहसगतिना, केषां सताम् ? सर्वेषां खेचराणां भूचराणाञ्च, किं कुर्वतां सताम् ? पश्यतामीक्षमाणानाम् असमर्थतया निभालयतामित्यर्थः, कथम्भूता प्रिया ? लक्ष्मीः पुनर्वनाधिदेवता पुनरुत्तुङ्गश्यामलकुचा उत्तुङ्गौ पीनौ श्यामलौ कुचौ यस्याः सा, पुनः रम्या मनोहारिणी, कैः ? कुटिलकेशैः ।

भारतीयः—हृता, का ? वनाधिदेवतालक्ष्मीः वनाधिदेवतैव लक्ष्मीः, केन ? तेन कालेन, कथम्भूता ? उत्तुङ्गश्यामलकुचा उत्तुङ्गाः श्यामलकुचा वृक्षविशेषा यस्याः सा, पुनः कथम्भूता ? प्रियालकैश्चारै रम्या । सर्वमन्यत् प्राग्वत् ॥१९॥

**चन्दनस्यन्दसान्द्राङ्गी मल्लिकामालभारिणी ।**
**तारेन्दुवदना बाला सापि तेनोपतापिता ॥२०॥**

चन्दनेति—उपतापिता संक्लेशिता, का ? सापि बाला मुग्धवधूः किमाख्याता ? तारा तारेति नामधेया, केन ? तेन साहसगतिना, कथम्भूता ? चन्दनस्यन्दसान्द्राङ्गी श्रीखण्डलेपलिप्ताङ्गी पुनः मल्लिकामालभारिणी, मल्लिकामालां बिभर्तीति एवं शीला मल्लिकामालभारिणी पुनरिन्दुवदना चन्द्रमुखी ।

भारतीयः—सापि बाला तेन शुचिना उपतापिता । "बालेत्यत्र जात्यपेक्षयैकवचनम् । कथम्भूता ? तारेन्दुवदना शारदचन्द्रानना ॥२०॥

**साकूतोच्छ्वसितावश्यं महिषी सकलाकुला ।**
**सुभृङ्गारार्यतापाङ्गविभ्रमास्तं जलाशयम् ॥२१॥**

---

अत्यन्त तीव्र गति, प्रतापमें साक्षात् यमके समान भयंकर, निस्सीम और विषमय साहसगतिने नगर, देश तथा विश्वको ही जीत लिया था । [ लम्बे-लम्बे दिनों युक्त अथवा धूपयुक्त, सर्वथा तापके कारण यमके समान भीषण ग्रीष्म ऋतुने नगर, देश और सृष्टिको अपरिमित जलकी ओर लगा दिया था ] ॥ १८ ॥

उस साहसगतिने समस्त विद्याधरोंके सामने ही ऊँचे-ऊँचे श्यामल कुचधारिणी, सुन्दरी, वनकी देवी रूप तथा साक्षात् लक्ष्मी प्रियाका बाल पकड़कर अपहरण किया था । [ सबके देखते-देखते ही ग्रीष्मने ऊँचे-ऊँचे श्यामलकुच वृक्षोंसे बढ़ी तथा संचारके द्वारा रमणीय देवीके समान वनकी शोभाका अपहरण किया था ] ॥ १९ ॥

चन्दनके लेपसे देहको पोते, मल्लिकाके फूलोंकी मालासे सजी तथा चन्द्रमुखी उस बाला ताराको भी साहसगतिने कष्ट दिया था । [ ग्रीष्मने चन्दनका लेपधारिणी मल्लिका फूलोंसे ढँकी शरत्कालीन चन्द्रमाके समान सुन्दर मुखधारिणी बालाओंको गर्मीसे व्याकुल कर दिया था ] ॥ २० ॥

---

१. मुद्रितप्रतिमवलम्ब्येयं व्याख्या दत्ता ।

साकृतेति—हे आर्य अकृत चकार, का ? सा महिषी पट्टराज्ञी तारेति प्रसिद्धनामधेया । कम् ? तं साहसगतिम्, कथम्भूतम् ? वश्यमात्मवशवर्त्तिनम्, कथम्भूतम् ? जलाशयं मूढमित्यर्थः । कस्मात् ? तापाङ्गविभ्रमात् तापाङ्गस्य विशेषेण विभ्रमणात्, 'अत्र कामावस्था सूचिता' । कथम्भूता ? उच्छ्वसिता प्राणिता, पुनः कथम्भूता ? सकला कलाभिः सह वर्त्तमाना, पुनराकुला व्यग्रा, पुनः सुश्रृङ्गारा प्रशस्तभूषणा ।

भारतीयः—आरार्यत गतवती; काऽसौ ? महिषी सैरिभी, कम् ? जलाशयं सरोवरम्, कथं यथा भवति ? अपाङ्गविभ्रमात्तं कटाक्षविक्षेपकोडीकृतम् ? कथम्भूता ? कृतोच्छ्वसिता कृतमुच्छ्वसितं यया सा, कथं यथा भवति ? अवश्यमनात्माधीनम्, पुनः कथम्भूता ? सकला समस्ता, पुनराकुला पुनः सुश्रृङ्गा प्रशस्तविषाणा ॥२१॥

**सैकतेषु प्रियोपेता न तत्सञ्चारभीरवः ।**
**सञ्चरन्ति सराजीषु निबद्धा राजहंसकाः ॥२२॥**

सैकतेष्विति—न सञ्चरन्ति न प्रवर्त्तन्ते । के ? राजहंसकाः राजहंसानां नृपप्रधानानां समूहाः, केषु ? सैकतेषु, कथम्भूताः ? प्रियोपेताः कामिनीयुताः, पुनः कथम्भूताः ? तत्सञ्चारभीरवः साहसगतिप्रवर्त्तनभीतियुक्ताः, पुनः कथम्भूता ? सराजीषु निबद्धाः कन्दर्परणसायकयन्त्रिताः ।

भारतीयः—राजहंसकाः मरालाः सैकतेषु शैवलेषु न सञ्चरन्ति स्म, कथम्भूताः ? प्रियोपेताः वरटायुताः, पुनः कथम्भूताः ? तत्सञ्चारभीरवः ग्रीष्मविजृम्भणत्रस्ताः, पुनः राजीषु श्रेणीषु निबद्धाः नियमितगात्राः । शेषं सुगमम् ॥२२॥

**लोको वितपमानेन तप्तस्तेन गृहं गृहम् ।**
**अनुप्रवेशं निभृतमध्यास्तेहितकाङ्क्षया ॥२३॥**

लोक इति—लोको जनः, अध्यास्त तस्थौ, किं कृत्वा ? गृहं गृहं मन्दिरं मन्दिरं निभृतं निश्चलं यथा तथा, ईहितकाङ्क्षया मनोवाञ्छया अनुप्रवेशं प्रविश्य कथम्भूतः सन् ? तप्तः क्लेशितः ; केन ? वितपमानेन दीप्यमानेन तेन साहसगतिना ।

भारतीयः—अध्यास्ते, कोऽसौ ? लोकः, किं कृत्वा ? पूर्वमनुप्रवेशं प्रविश्य; किम् ? गृहं गृहम्, कथं यथा भवति निभृतम्, कया ? हितकाङ्क्षया सुरताभिलाषेण, कथम्भूतः सन् ? वितपमानेन आत्मना ज्वलता तेन शुचिकालेन तप्तः सन्[1] ॥२३॥

**मातरिश्वैकवृत्तेऽस्मिन्कालान्तरवितापिनी ।**
**तप्तं नाथहरिकुलं निलीनं वृक्षकुक्षिषु ॥२४॥**

---

समस्त कलाओंमें प्रवीण, व्याकुल तथा जोरोंसे साँस लेती समीचीन शृंगारवती उस पटरानी ताराने भी विवेकहीन साहसगतिको कटाक्ष डालकर वशमें कर लिया था। [ गर्मीसे शरीर मूर्छित हो जानेके कारण, सुन्दर सींगधारिणी व्याकुल तथा जोरसे हाँफती समस्त भैसोंको उसने उस तालाबके वशमें कर दिया था ॥ २१ ॥

साहसगतिके अकस्मात् आगमनकी शंकासे भीत, श्रेष्ठ राजा लोग अपनी प्रेयसियोंके साथ समुद्र अथवा नदीके पुलिनोंपर नहीं घूमते थे यद्यपि कामदेवसे युद्धमें बन्दी हो चुके थे। [ गर्मीके प्रसारसे भयभीत हंस भी हंसियोंके साथ पुलिनपर नहीं निकलते थे। वृक्षपंक्ति आदिके नीचे ही छिपकर बैठे रहते थे ] ॥२२॥

प्रबल प्रतापी साहसगतिके द्वारा सताया गया लोक उसके आनेके तुरन्त बाद ही अपने-अपने घरमें छिपकर बैठते थे क्योंकि इसीमें उनका कल्याण था। [ग्रीष्म ऋतुसे तपाया गया मनुष्य भी प्रवेश करनेके बाद अपने स्वास्थ्य और सुखकी दृष्टिसे घरमें ही धूपसे बचकर बैठता है ] ॥२३॥

---

1. श्लेषः—ब०, अ० ।

मातरीति-हे नाथ हे स्वामिन् राम, निलीनं प्रविष्टम्, किम् ? हरिकुलम्, कासु ? वृक्षकुक्षिषु, कथम्भूतम् ? तप्तं सन्तप्तम्, क्व सति ? अस्मिन् साहसगतौ मातरि स्वजनन्यां विषये इवैकवृत्ते शुन इवैकं वृत्तं यस्य स तस्मिन् सति, कथम्भूते ? कालान्तरवितापिनि कालान्तरे वितपत इत्येवं शीलः स तस्मिन् समयान्तरवितपनशीले।

•भारतीयः-नाथ हरिकुलं बलीवर्दसमूहः वृक्षकुक्षिषु विषये तप्तं सन्तप्तं सद्विलीनम्। क्व सति ? अस्मिन्शुचिसमये सति, कथम्भूते ? मातरिश्वैकवृत्ते मातरिश्वनिवायावेकं वृत्तं यस्य तस्मिन्, पुनः कथम्भूते ? कालान्तरवितापिनी कालौ वर्षाशिशिरौ तयोरन्तः पर्यन्तः कालान्तस्तस्मिन्यो रविः सूर्यः तस्य तापोऽस्त्यस्मिन्निति कालान्तरवितापी तस्मिन्[1] ॥२४॥

परोत्तापनशीलस्य पांसुलस्य चितौजसः।
दुर्वृत्तं दुःसहं तस्य दुर्जनस्येव लक्षितम् ॥२५॥

परेति-तस्य साहसगतेः दुर्वृत्तं दुश्चेष्टितं दुसहं सोढुमशक्यं लक्षितं ज्ञातम्। कस्येव ? दुर्जनस्येव, कथम्भूतस्य ? परोत्तापनशीलस्य पुनः पांशुलस्य पारदारिकस्य पुनश्चितौजसः दुष्टपराक्रमस्य।

भारतीयः-तस्य शुचिसमयस्य दुर्वृत्तं लक्षितम्। कथम्भूतम् ? दुःसहम्, कस्येव ? दुर्जनस्येव, कथम्भूतस्य शुचिसमयस्य ? परोत्तापनशीलस्य, पुनः पांशुलस्य धूलिग्राहिणः पुनश्चितौजसः दुष्टतेजसः। अन्यत्समम् ॥२५॥

गृहवापीषु सोपानपंक्तयस्तस्य तापतः।
पानीयपथसञ्चारैर्विमुक्ताः प्रतिवासरम् ॥२६॥

गृहेति-पानीयपथे सञ्चारो येषाम्, जलहारिणां मनुष्याणां तैः, सोपानपङ्क्तयः, विमुक्ताः परित्यक्ताः, कासु ? गृहवापीषु प्रासादक्रीडादीर्घिकासु, कस्मात् ? तस्य साहसगतेः तापत उपद्रवात्, कथं यथा भवति ? प्रतिवासरं दिनंदिनम्।

भारतीयः-पानीयपथसञ्चारैः कल्लोलैः, तस्य शुचिसमयस्य तापतः सन्तापात् शोषणलक्षणात्, शेषं पूर्ववत् ॥२६॥

विहाय स्वानि सद्मानि तत्प्रचारविशङ्कया।
दिनं गमितवन्तोऽन्ये वनदुर्गेषु निद्रया ॥२७॥

---

दूर देश तथा समय तक कष्ट दाता तथा अपनी माताके साथ भी कुत्तेके समान आचरणकर्ता इसके द्वारा सताया गया हरिवंश पेड़ोंके तनोंमें छिप गया है।[ आँधी रूपी प्रकृतिधारक तथा अन्य समय भी तपानेवाले इस ग्रीष्म ऋतुसे त्रस्त बैलोंका समूह पेड़ोंकी छायामें जा बैठा है ] ॥२४॥

उस साहसगतिका दुष्ट आचरण दुर्जनके समान दुखसे सहने योग्य है क्योंकि दूसरोंको कष्ट देना ही उसका स्वभाव है; परस्त्री गमनके पापमें रत है तथा पराक्रमका अनीतिमें ही उपयोग कर रहा है। [ अत्यन्त तपनसे जलानेवाले, धूलबहुल तथा कष्टकर तेजस्वी ग्रीष्म ऋतुका स्वभाव भी दुर्जनके समान होनेसे असह्य होता है ] ॥२५॥

दिनों दिन बढ़ते साहसगतिके उपद्रवोंके कारण जलमार्गसे चलनेवालोंने अपने नौकादि आरोहणोंको घरकी बावड़ियोंमें छोड़ दिया था। [ जलमार्गपर उठती लहरोंने घरकी बावड़ियोंकी सीढ़ियोंको प्रतिदिन पानी सुखाये जानेके कारण छोड़ दिया था ] ॥ २६ ॥

---

1. श्लेषः-ब०, मा०।

विहायेति–अन्ये वनदुर्गेषु निद्रया प्रतिदिनं गमितवन्तः । किं कृत्वा ? स्वानि सद्मानि गृहाणि विहाय परित्यज्य तत्प्रचारविशङ्कया साहसगतिप्रवर्त्तनभीत्या ।

भारतीयः–तत्प्रचारविशङ्कया शुचिसमयविजृम्भणभयेन् । समव्याख्यानम् ॥२७॥

**सन्तापवद्दिनं जातं निशा कशिमयोजिनी ।**
**अहो प्रतापो यत्तस्य बाधानिष्ठं दिवानिशम् ॥२८॥**

सन्तापवदिति–दिनं सन्तापवत्सन्तापयुक्तं, जातम्, तथा निशा रात्रिः कशिमयोजिनी कशिमानं योजयत्येवंशीला जाता, अहो आश्चर्यं वर्त्तते, कः ? तस्य साहसगतेः प्रतापः, यत् किम् ? दिवा च निशा च दिवानिशमहोरात्रम्, कथम्भूतम् ? बाधानिष्ठं पीडातत्परम्, अत्र तस्योपद्रवोद्रेकात् क यामि किं करोमीत्यहोरात्रचिन्ताकुलत्वं लोकस्य प्रदर्शितम् ।

भारतीयः–दिनं सन्तापवत् सन्तापकं जातं तथा निशा कशिमयोजिनी कशिम्ना युज्यत इत्येवं शीला कशिमयोजिनी कृशतया युक्तेत्यर्थः । अहो चित्रम्, एवं तस्य शुचिसमयस्य वर्त्तते यद्दिवानिशं लोकानां बाधानिष्टमासीत् । अत्र जातिव्यावर्णनम् ॥२८॥

**उद्दीपितोऽर्यमायाभिर्निजप्रकृतिभिर्जनम् ।**
**अतापयदसावेवं तीव्राणां हीदृशी गतिः ॥२९॥**

उद्दीपित इति–हे अर्य स्वामिन्, एवमुक्तप्रकारेणासौ साहसगतिः निजप्रकृतिभिः जनं लोकमतापयत्; कथम्भूतः ? मायाभिः कौटिल्यैरुद्दीपितः हि युक्तम्, ईदृशी गतिर्वर्तते । केषाम् ? तीव्राणामिति ।

भारतीयः–एवमुक्तप्रकारेणाऽसौ शुचिसमयः जनमतापयत् । काभिः ? निजप्रकृतिभिरात्मीयस्वभावै, रुद्दीपितः, कः ? अर्यमा सूर्यः, ही कष्टम् अन्यत्समम् ॥२९॥

**तथावस्थं तमालोक्य तथा च क्रीडनोचितम् ।**
**रिपुमुद्धाधितं पापच्छिद्रामोघधियोद्यतः ॥३०॥**

तथेति–असौ रामो राघवः रिपुं शत्रुमुद्धाधितुं व्यापादयितुमुद्यतः, कया कृत्वा ? शत्रुरयमिति कृत्वा, अघधियाऽघे धीरघधीस्तया अघधिया, कथम्भूतः सन् ? पापच्छित् पापं छिनत्तीति स तथोक्तः, किं कृत्वा ? पूर्वमालोक्य, कम् ? तं तथावस्थं सुग्रीवं तथा चालोक्य, कम् ? तं रिपुं साहसगतिं तथावस्थं परकलत्रापहरणनुष्टं पुनः क्रीडनोचितं जनोपप्लवेन खेलनयोग्यम् ।

---

साहसगतिके आक्रमणके भयसे कितने ही राजा लोग अपने महलोंको छोड़कर जंगलों अथवा किलोंमें क्या सोकर दिन बिताते थे ? अर्थात् जंगल या किलेमें भी जागते-जागते उनका समय जाता था । [ गर्मीके उग्ररूप धारण करनेके भयसे बहुतसे लोग अपने घरोंको छोड़कर घने वनोंमें जाकर सोते-सोते दिन बिताते थे ] ॥२७॥

उस साहसगतिका प्रचण्ड प्रताप ऐसा था जो दिनरात लोगोंको कष्ट देता था । दिन भर सन्ताप रहता था तो रातमें चिन्तासे शरीर और प्राण सूखते रहते थे । [ आश्चर्य है कि ग्रीष्मका प्रचार दिनरात बाधा करता था क्योंकि दिन तपाता था और रात छोटी हो गयी थी ] ॥२८॥

हे आर्य ! अपने मायावी स्वभावके कारण अत्यन्त रुद्र ( निर्दय ) यह साहसगति प्रजाको सब प्रकारसे कष्ट दे रहा था । [ अत्यन्त जलता यह सूर्य अपने इस उग्र स्वभावके द्वारा संसारको तपा रहा था ] ठीक ही है निर्दय अथवा उष्माशीलोंका ऐसा ही आचरण हो सकता है ॥२९॥

पापविनाशक राम अनर्थ बढ़ने की आशंकासे इस प्रकार दुर्गतिको प्राप्त सुग्रीवको देखकर तथा चक्रधारीके द्वारा सर्वथा पीडन करने योग्य शत्रु साहसगति का नियंत्रण या

भारतीयः—असौ जरासन्धः, तं रिपुमुद्बाधितुमुद्यतः, कया कृत्वा ? पापच्छिद्रामोघधिया पापद्वारेष्व-प्रतिहतबुद्ध्या, किं कृत्वा ? तं शुचिसमयम् आलोक्य, कथम्भूतम् ? तथावस्थं लोकबाधाकरं तथा आलोक्य, कम् ? तं रिपुम् , कथम्भूतम् ? ईडनोचितं स्तुतियोग्यम्[1] ॥३०॥

पश्यन्निव पुरः शत्रुमुत्पतन्निव खं मुहुः ।
निगिलन्निव दिक्चक्रमुद्गिलन्निव पावकम् ॥३१॥

संहरन्निव भूतानि कृतान्तो विहरन्निव ।
ग्रीष्माग्न्यर्कपदार्थेषु चतुर्थ इव कश्चन ॥३२॥

प्रमत्तानेकपालोलमुच्चैरथ निरन्तरम् ।
प्रचण्डतरसामन्तं द्विषो दण्डमयोजयत् ॥३३॥

अधुना श्लोकत्रयमयोजयदित्यनया क्रियया व्याकुर्मः । पश्यन्निवेति—असौ रामो राघवः दण्डं दण्ड-नीतिमयोजयत्प्रेरितवान् , किं कुर्वन्निव ? पुरोऽग्रतः शत्रुं पश्यन्निव निरीक्षमाण इव, गगनमुत्पतन्निव उत्पत-मान इव, दिक्चक्रं दिशां चक्रवालं गिलन्निव निर्मूल्य गिलन्निव, पावकं दहनमुद्गिलन्निव उद्गरन्निव, संहरन्संहारविपर्यीकुर्वन्, कः कानीव ? कृतान्तो यमः भूतानि जन्तुजातानीव, किं कुर्वन्निव ? विहरन्निव प्रवर्त्तमान इव, क इवोत्प्रेक्षितः ? चतुर्थ इव, कश्चन कोऽपि, केषु मध्ये ? ग्रीष्माग्न्यर्कपदार्थेषु शुचिज्वलन-दिवाकरपदार्थेषु त्रिषु मध्ये—अथ शब्दः प्रकारान्तरसूचकः, कथ्यते । अयोजयत् , कोऽसौ ? रामः । कम् ? दण्डं दण्डनीतिम्; कस्य ? द्विषः शत्रोः, कथम्भूतं दण्डम् ? अमन्तं रोगवन्तम् , केन हेतुना ? प्रचण्डतरसा तीव्रवेगेन, कथम् ? निरन्तरम्; कथम् ? अत्यमत्यर्थम् । अमन्तमित्यस्य प्रयोगस्य भावः कथ्यते—रामेण प्रयो-जिता दण्डनीतिमहर्निशं चिन्तयन्तः शत्रवो रोगिणो जायन्त इति भावः । कथम्भूतो रामः ? प्रमत्तानेकपालः "तल्प्रत्ययस्तसादिषु वर्त्तते, तेनायमर्थः—अहमित्यस्य भावो मत्ताः प्रकृष्टा मत्ता येषां ते प्रमत्ताः क्षत्रियोऽहं क्षत्रियोऽहमित्यहमहमिका निष्ठा इत्यर्थः । प्रमत्ताश्च तेऽनेकाश्च (के च) प्रमत्तानेकाः (के) प्रमत्तानेकान्पा-लयतीति प्रमत्तानेकपालः, कथम् ? उच्चैः अतिशयेन, अथवाऽजयत् , कोऽसौ ? रामः; कान् ? द्विषः शत्रून् कथं यथा भवति ? अन्तं प्राणत्यागं यथा, कथम्भूतो रामः ? दण्डमयो नीत्यात्मक इत्यर्थः । पुनः कम्भूतः ? उच्चैर्महान्, केषाम् ? प्रचण्डतरसां प्रचण्डं तरो वेगो येषां ते प्रचण्डतरसः तेषां प्रचण्डतरसां तीव्रवेगानाम्, पुनः प्रमत्तानेकपालः प्रमत्तान् प्रमादिनो जनाननेकानपायात्पालयतीति प्रमत्तानेकपालः, कथम् ? निरन्तरं कथम् अलमिति ।

---

विनाश करनेके लिए उद्यत हो गया था। [ पाप तथा छिद्रोंके अन्वेषणमें सर्वथा सफल जरासन्ध गर्मीके इस उग्र रूपको देखकर स्तुति करने योग्य चक्रवर्ती शत्रु (कृष्ण) का विरोध करनेमें लग गया था ] ॥३९॥

मानो शत्रुको सामने ही खड़ेके समान देखते हुए बारम्बार आकाशमें उचकता समान, समस्त दिशाओंको निगलता हुआ सदृश, घूमते हुए शरीरधारी यमके समान, आगको उग-लता हुआ सा, समस्त प्राणियोंके संहारमें लीनके समान; ग्रीष्मऋतु, अग्नि और सूर्य पदार्थों-से भी बढ़कर किसी दाहक चौथी वस्तु के समान—अत्यन्त स्वाभिमानी अनेक क्षत्रियोंके प्रतिपालक अथा दण्डनीतिके पारंगत रामने अपने प्रतापके ही कारण रोगी शत्रुको निर्बाध, प्रबल तथा सतत प्रचण्ड वेगके साथ पराजित कर दिया था । [जरासंधने मदोन्मत्त हाथियों-से तरंगित, रथोंकी भीड़के कारण घनी तथा अत्यन्त उद्धत सामन्तोंसे पूर्ण सेनाको शत्रुकी ओर भेज दिया था ] ॥३१-३३॥

---

१. श्लेषः—ब०, ना० । २. तलप्रत्ययस्य तसादिपाठेन विभक्तिसंज्ञत्वादस्मदो मदादेश इति भावः ।

भारतीयः पक्षः—असौ जरासन्धः द्विषः शत्रोः दण्डं सैन्यमबोभयत्। कथम्भूतम्? प्रमत्तानेकपालोलं प्रमत्तानेकपा लोला यत्र तं प्रक्षीवगजेन्द्रचञ्चलं पुनरुच्चैरथनिरन्तरमुच्चैर्महान्तो रथा निरन्तरा अविच्छिन्नाः यस्मिन्तम् पुनः प्रचण्डतरसामन्तं प्रचण्डाः सामन्ताः क्षत्रियविशेषा यत्र तम्[1] ॥३१॥३३॥

**अधिष्ठितोऽस्त्रविद्याभिर्वीरश्रीलक्ष्मणान्वितः।**
**विजजृम्भे तमुद्देशं विक्षेपो व्याप्य विद्विषः ॥३४॥**

अधिष्ठित इति—विजजृम्भे प्रज्वलति स्म, कोऽसौ? रामः, किं कृत्वा? पूर्वमुद्देशमुद्दिश्य, कम्? तं साहसगतिम्, किं कृत्वा? पूर्वं व्याप्य स्वप्रतापेन प्रच्छाद्य, कान्? द्विषः शत्रून्, कथम्भूतो रामः? विक्षेपः विगतः क्षेपः कालगमनिका यस्य सः, परित्यक्तकालयापन इत्यर्थः। पुनरस्त्रविद्याभिः "त्रिविधमस्त्रं यन्त्रमुक्तं पाणिमुक्तं पाणियुक्तञ्च। विद्याः शास्त्राणि अस्त्राणां विद्या अस्त्रविद्याः ताभिरधिष्ठितः समाश्रितः, पुनः वीरश्रीलक्ष्मणा वीरश्रियोपलक्षितो यो लक्ष्मणस्तेनान्वितः।

भारतीयः—विक्षेपो दण्डः विजजृम्भे; किं कृत्वा? पूर्वमुद्देशमुद्दिश्य, कम्? तं नारायणम्, किं कृत्वा? पूर्वं व्याप्य; कान्? विद्विषः कथम्भूतः सन्? अधिष्ठितः, काभिः? अस्त्रविद्याभिः पुनः वीरश्रीलक्ष्मणा जयलक्ष्मीविह्नेनान्वितः[2] ॥३४॥

**वज्रावर्त्तं धनुर्मित्रमिवाकृष्य निपीडितम्।**
**तं नातिसन्दधे को वा नम्रात्मा व्यभिचारकः ॥३५॥**

वज्रेति—नातिसन्दधे नमति स्म, किं तत्कर्तृ? धनुः, कम्? तं रामम्, किमाख्यं धनुः? वज्रावर्त्तं वज्रावर्त्तनामधेयम्, कथम्भूतम्? निपीडितम्, किं कृत्वा? पूर्वमाकृष्य, किमिव नातिसन्दधे? मित्रमिव, युक्तमेतत् को वा नम्रात्मा व्यभिचारकः व्यभिचारी स्यात्, अपि तु न।

भारतीयः—नातिसन्दधे वञ्चति स्म, किं कर्तृ? धनुः; कम्? तं दण्डम्, कथम्भूतम्? वज्रावर्त्तं वज्रस्येवावर्त्तः पुलकं यस्य तद्वज्रावर्त्तम्, कथम्भूतम्? निपीडितम्, किं कृत्वा? पूर्वमाकृष्य, किमिव? मित्रमिव। शेषं सुगमम् ॥३५॥

**समासवदसौ लोपं दाहं मदनबाणवत्।**
**विध्वंसघटनां राहुरिव कर्तुं समुद्यतः ॥३६॥**

समासेति—असौ रामः लोपं कर्तुं समुद्यतः, क इव? समास इव तथा दाहम्, क इव? मदनबाणवत् कन्दर्पशर इव, तथा विध्वंसघटनां विनाशयोजनाम्, क इव? राहुरिव विधुन्तुद इव।

---

पहिले शत्रुओंको प्रतापसे आतंकित करके बादमें उस साहसगतिको लक्ष्य बना कर शास्त्र तथा नीति विद्याके प्रामाणिक विद्वान्, वीरोंकी शोभाभूत लक्ष्मणजी द्वारा अनुयात तथा एक भी क्षण नष्ट बिना किये आगे बढ़ते राम आगे बढ़े आ रहे थे। [ समस्त शत्रुओं-को आक्रान्त करके अस्त्रविद्याओंसे परिपूर्ण, वीर लक्ष्मीके चिन्होंसे युक्त जरासंध की सेनाका आक्रमण कृष्णको लक्ष्य बनाकर बढ़ता आ रहा था ] ॥३४॥

खींचकर चढ़ाया गया ( आलिंगन किया गया ) वज्रावर्त नामका प्रसिद्ध धनुष मित्रके समान आगे झुक गया। उचित ही है कौन शिष्ट पुरुष धोखा देता?

वज्रके समान पुलकयुक्त सेनाको; बलपूर्वक घसीटकर सताये गये मित्रके समान धनुषने धोखा दिया था, क्योंकि कौन उद्दण्ड व्यक्ति ऐसा है जो विश्वासघात न करता हो। ॥३५॥

यह राम अथवा जरासन्धकी सेना व्याकरणके समासके समान लोप ( विनाश )

---

१. श्लेषः– ब०, ना०। २. श्लेषः–ब०, ना०।

भारतीयः–असौ दण्डः समुद्यतः। व्याख्या प्राग्वत् ॥३६॥

**अस्त्राणि यन्त्रमुक्तानि तस्मिन्देशे समन्ततः।**
**निर्घाता इव निष्पेतुर्घोरसंहारहेतवः ॥३७॥**

अस्त्राणीति–तस्मिन् किष्किन्धाख्ये देशे अस्त्राणि चक्रादीनि समन्ततः सामस्त्येन निष्पेतुः पतितानि, कथम्भूतानि ? घोरसंहारहेतवः तीव्रक्षयकारणानि, क इव ? निर्घाता इव अशनय इव।

भारतीयः–देशे सौराष्ट्राभिधे। शेषं समम् ॥३७॥

**कलत्रपुत्रमित्राणि गृहीत्वा तत्र ते जनाः।**
**यथायथं पलायन्त भावि भद्रं हि जीवितम् ॥३८॥**

कलत्रेति–ते नागरिकाः जनाः, यथायथ यदृच्छया पलायन्त। किं कृत्वा ? कलत्रपुत्रमित्राणि समादाय, क्व ? तत्र किष्किन्धाख्ये देशे, हि युक्तमेतत्, किं तत् ? जीवितम्, कथम्भूतं स्यात् ? भद्र कल्याणम्, कथम्भूतं सत् ? भावि।

भारतीयः–तत्र सौराष्ट्रे देशे। शेषं समम्[1] ॥३८॥

**ततो बलेन बाल्येऽपि सहजेन कृतायतिः।**
**सर्वार्जुनमयोदात्तनायकाभरणान्वितः ॥३९॥**
**परदारग्रहाविष्टः स्पष्टमायोजितायुधः।**
**दिव्यान्वयोऽत्र सुग्रीवरूपः कोपारुणेक्षणः ॥४०॥**
**कृत्वोच्चैरथवेगेन केशवस्त्रातिसंयतिम्।**
**निर्ययौ साहसगतिः स भीमः संयुगं प्रति ॥४१॥**

अधुना त्रिकलेन व्याख्यायते ॥ तत इति–ततः किष्किन्धाख्यनगरात् संयुगं प्रति स साहसगतिः निर्ययौ। कथम्भूतः सन् ? कृतायतिः विहितप्रसिद्धिः ? केन ? बलेन सामर्थ्येन, कथम्भूतेन ? सहजेनाकृत्रिमेण, क्व ? बाल्येऽपि बाल्यावस्थायामपि, पुनः सर्वार्जुनमयोदात्तनायकाभरणान्वितः सर्वाणि समस्तान्यर्जुनमयानि हाटकनिर्मितान्युदात्तनायकानि उदात्तो दीप्त्योत्कटः नायको मध्यमणिर्येषां तानि च तान्याभरणानि तैरन्वितः। भारतीयः—केशवः ततो द्वारकायाः सकाशान्निर्ययौ, कथम्भूतः सन् ? कृतायतिः विहितोत्तरकालफलः, क्व ? बाल्येऽपि शैशवेऽपि, कथं सह निर्ययौ ? सहजेन बन्धुना बलेन बलभद्रेण। पुनः कथम्भूतः ? सर्वार्जुनमयोदात्तनायकाभरणान्वितः सर्वे समस्ताः, अर्जुनो हेतुर्येषां तेऽर्जुनमयाः, सर्वे च तेऽर्जुनमयाश्च सर्वार्जु-

कामदेवके बाणके समान तपन ( हरन ) और राहुके समान विनाश ( चन्द्रमाके अंशका ग्रास ) करनेमें प्रयत्नशील हो गया था ॥३६॥

उस किष्किन्धा अथवा सौराष्ट्र देशमें चारों ओरसे मन्त्रोंके द्वारा चलाये गये तथा भयंकर संहार करते हुए शस्त्र वज्रपातके समान गिर रहे थे ॥३७॥

उस देशमें समस्त नागरिक अपनी स्त्री, बच्चे तथा मित्रोंको साथ लेकर जैसे बन पड़ा भाग खड़े हुए थे। भविष्यकी कल्याणमय कल्पना पर ही जीवन आश्रित है यह इस पलायनसे स्पष्ट है ॥३८॥

अपने स्वाभाविक बलके कारण बाल्यावस्थामें ही प्रसिद्ध हुआ, विशुद्ध सोनेसे पूरेके पूरे बने उदात्त नायकके आभूषणोंको धारे हुए, सुग्रीवकी पत्नी ताराको रखनेके लिए कदाग्रही, स्पष्ट ही मायाचारी, शस्त्रोंके द्वारा जीतने योग्य विद्याधर कुलमें उत्पन्न, आंशिक

1. अर्थान्तरन्यासः–ब०, ना०।

नमयाः, ते च त उदात्तनायकाश्च सर्वार्जुनमयोदात्तनायकास्त एवाभरणानि तैरन्वितः।

पुनः कथम्भूतः ? परदाराग्रहाविष्टः परदारेष्वाग्रहः इमां तारां सुग्रीवपत्नीं भोक्ष्यामीति दुरभिनिवेशस्तेनाविष्टः पुनः स्पष्टमायः स्पष्टा प्रव्यक्ता माया कौटिल्यं यस्य स तथोक्तः पुनः जितायुधोऽभ्यस्तशस्त्रः, पुनः दिव्यान्वयः दिवि यान्तीति दिव्या विद्याधराः, दिव्यानामन्वयो यस्य स दिव्यान्वयः पुनः सुग्रीवरूपः ईषत्सिद्धः सुग्रीवः सुग्रीवः सुग्रीवरूपरूपधारीत्यर्थः, क्व ? अत्र किष्किन्धानगरे पुनः कोपारुणेक्षणः क्रोधलोहितलोचन इति। भारतीयः—पुनरपि कथम्भूतः केशवः ? परदाराग्रहाविष्टः शत्रुविदारणाङ्गीकारयुक्तः पुनरायोजितायुध आयोजितान्यात्मसात्कृतान्यायुधानि तोमरादीनि येन सः, पुनः दिव्यान्वयः प्रशस्तान्वयः यादवान्वयः पुनः सुग्रीवरूपः प्रशस्यरेखात्रयान्विता ग्रीवा यस्मिंस्तद्रूपं यस्य सः, क्व ? अत्र लोके। स साहसगतिः संयुगं प्रति सङ्ग्राममुद्दिश्य निर्ययौ।

किं कृत्वा ? केशवस्त्रातिसंयतिं कृत्वा केशवस्त्रयोरतिसंयतिः केशवस्त्रातिसंयतिस्ताम्, अतिशयेन केशवस्त्रयोर्बन्धनं कृत्वेत्यर्थः। केन ? वेगेन जवेन पुनः भीमो भयानकः। कथम् ? उच्चैरतिशयेन। अथशब्दो मङ्गलवाची गृह्यतेऽव्ययानामनेकार्थत्वात्, तेनायमर्थः—मङ्गलानि पुरस्सराणि कृत्वा निर्ययौ। भारतीयः—केशवो नारायणः, उच्चै रथवेगेन स्यन्दनजवेन संयुगं प्रति निर्ययौ, किं कृत्वा ? त्रातिसंयतिं कृत्वा सन्नाहबन्धनं विधाय। कथम्भूतः ? साहसगतिः-साहसं सन्नाहं यत्र नाहं न भाय (वाऽ) य मिति प्रत्ययः: साहसे भवा साहसी साहसी गतिः प्रवर्त्तनं यस्य सः पुनः सभीमः वृकोदरयुतः[1] ॥३९-४१॥

निषेकदिवसः कच्चिदुपालिङ्गन्नु किञ्चन।
प्राणिनामपमृत्युः स्विदिति लोकं विशङ्कयन् ॥४२॥
आलीढपदविन्यासमध्यमध्युषितं जगत्।
अमंस्तोपनतं विश्वं सहसाकृष्टकार्मुकः ॥४३॥

त्रिकलमधुना युगलेनाह—निषेकेति—साहसगतिरमंस्त, किं कुर्वन् ? लोकं विशङ्कयन् संशयं नयन्, कथमिति ? कच्चित् कोमलामन्त्रणे, अहो वर्त्तते निषेकदिवसो मृत्युदिनं न्वहो किञ्चनोपालिङ्गन् स्विदपमृत्युरकालमरणं वर्त्तते, केषाम् ? प्रणिनामिति। असौ साहसगतिः जगदमंस्त मन्यते स्म, कथम्भूतम् ? आलीढपदविन्यासमध्यमध्युषितमालीढस्थानान्तरालं निविष्टम्, कथम्भूतं जगत् ? उपनतमनुपक्रमायातम्, पुनः विश्वं समस्तम्, कथम्भूतः साहसगतिः ? आकृष्टकार्मुक आरोपितचापः।

भारतीयः—असौ केशवः। शेषं समम् ॥४२-४३॥युग्मम् ॥

ऋजूपकारिनिर्व्याजं कृच्छ्रेष्वव्यभिचारिणम्।
स मित्रमिव निर्दोषं दूरं चिक्षेप मार्गणम् ॥४४॥

सिद्धिका पात्र, क्रोधसे लाल लाल आँखें किये, बालों तथा वस्त्रोंको भलीभाँति बाँधे हुए वह भीषण साहसगति युद्ध करनेके लिए अत्यन्त वेगशील रथपर झटकेसे निकला था [सगे भाई बलभद्रके द्वारा बाल्यावस्थामें ही भावी पुण्यका संचय कर्त्ता, अर्जुन आदि समस्त धीरोदात्त नायक ही जिसके भूषण हैं, शत्रुओंके विनाशकी घोर प्रतिज्ञासे अभिभूत, शस्त्रों तथा उनके संचालनमें सर्वोपरि, प्रशस्त वंशमें उत्पन्न, त्रिवलि युक्त सुन्दर ग्रीवाधारी, क्रोधके कारण रक्तनेत्र, साहसके साथ गम्भीर गति तथा भीमसे अनुगत कृष्ण सन्नाहको पहिनकर तीव्रगतिवाले रथके द्वारा युद्धकी तरफ चल दिये थे] ॥३९-४१॥

क्या मृत्युका दिन ही सबका आलिंगन कर रहा है ? अथवा क्या मनुष्य मात्रकी अकाल मृत्यु ही चली आ रही है इस प्रकारकी शंकामें लोक पड़ गया था। पास पास पड़े पैरोंके बीचके स्थानमें ही पूर्ण विश्वको दबाता हुआ और चापको चढ़ाते ही वह साहसगति अथवा केशव सारे विश्वको पराजित मानते थे ॥४२-४३॥

[1] श्लेषः—ब०, मा०।

एभिः शिरोभिरतिपीडितपादपीठः
सङ्ग्रामरङ्गशवनर्तनसूत्रधारः ।
तं कंसमातुल इहारिगणं कृतान्त-
दन्तान्तरं गमितवान्न समन्दशास्यः ॥३८॥

एभिरिति—दशास्यो रावणः, कं तं भुवनतले प्रतीतमरिगणं शत्रुमेलापकं न गमितवान् न नीतवान् ? अपि तु सर्वमपि गमितवान् । किम् ? कृतान्तदन्तान्तरं यमदशनमध्यप्रदेशम्, क ? इह मध्यलोके, कथम् ? समं युगपत्, कथम्भूतः सन् ? समातुलः मातुलेन मारीचेन सह वर्त्तमानः, पुनः कथम्भूतः ? एभिः पूर्वोक्तै-र्नरेन्द्रैः शिरोभिर्मौलिभिः अतिपीडितपादपीठः अतिपीडितं निघृष्टं पादपीठं यस्य सः, सामन्तोपमर्दितचरणविष्टर इत्यर्थः पुनः सङ्ग्रामरङ्गशवनर्त्तनसूत्रधारः समरनर्त्तनस्थाने शवनर्त्तनाचार्य्यः ।

भारतीयः—स कंसमातुलो जरासन्धः तमरिगणं कृतान्तदन्तान्तरं न गमितवान्, अपि तु गमितवानेव, कथम्भूतः ? मन्दशास्यः मन्दतोद्रेकत्वादात्मंमन्यानां शिक्षादायकः । अन्यत्सर्वं समम्[1] ॥३८॥

विगणय्य परस्य चात्मनः प्रकृतीनां समवस्थितिं पराम् ।
असुयोपचिताः कयापि चेद्द्विषतेऽसूयियिषन्ति सूरयः ॥३९॥

विगणय्येति—चेद्यदि, उपचिताः पुष्टिं नीताः, के ? सूरय आचार्य्याः, कयापि, कया ? असुया प्रकृति-समवस्थित्या, तदा असूयियिषन्त्यसूयां कर्त्तुमुत्सहन्ते, कस्मै ? द्विषते शत्रवे, किं कृत्वा ? पूर्वं विगणय्य ज्ञात्वा विमर्द्येत्यर्थः, काम् ? परस्य शत्रोस्तथाऽऽत्मनः परामुत्कृष्टां प्रकृतीनां समवस्थितिम्[2] ॥३९॥

तत्संहारो मा स्म भूद्बन्धुतायाः सिद्धादेशव्यक्तये सिद्धशैलम् ।
नीत्वा विष्णुं तं परीक्षामहेऽमी ज्ञात्वा दण्डं साम वा योजयामः ॥४०॥

तदिति—तत्तस्मात्कारणात् बन्धुतायाः बन्धुसमूहस्य मैत्र्या वा संहारो विलयो मा स्म भूत् मा भवत् । अतः परीक्षामहे परीक्षाङ्कुर्मः । के ? अमी वयम्, किं कृत्वा ? पूर्वं नीत्वा तं विष्णुं लक्ष्मणम्, कं नीत्वा ? सिद्धशैलं कोटिशिलाम्, कस्यै ? सिद्धादेशव्यक्तये श्रुतज्ञानोपदिष्टनिश्चयाय, तथा च योजयामः । कम् ? दण्डं वाऽथवा साम, किं कृत्वा ? पूर्वं ज्ञात्वा, कं ? तं विष्णुं लक्ष्मणम् । भारतपक्षे नारायणमिति[3] ॥४०॥

इत्यस्य वाचमभिनन्द्य भरोत्थितानां
राज्ञां गलाङ्कदगलद्गुलिकाच्छलेन ।

---

इन पराक्रमी राजाओंके मस्तकोंसे पूजित चरण, आसनपर विराजमान, संग्राम रूपी रंगमंचपर शवोंके नर्तन करानेके लिए सूत्रधार तथा अपने मामासे अनुगत उस दशमुखने इस पृथ्वीमें कौनसे अपने शत्रु समूहको एक ही साथ यमके दातोंके बीचमें नहीं झोंक दिया है ? [······सूत्रधार तथा मूर्खताके कारण अहंकारियोंके शिक्षक (मन्दशास्यः) उस कंसके मामा, जरासंध (कंसमातुलः)ने इस पृथ्वी······झोंक दिया है ।] ॥३८॥

अपनी अथवा शत्रुकी अठारह प्रकृतियोंकी अन्योन्य साधना उत्कृष्ट स्थितिकी उपेक्षा करके यदि किसी प्रकृतिसे प्रेरित होकर राजा शत्रुके प्रति अभियान करता है तो नीति-शास्त्रके आचार्य उसपर ईर्ष्या ही करते हैं ॥३९॥

अतएव बन्धुता अथवा बन्धुओंका संहार नहीं होना चाहिये । वासुदेव लक्ष्मण अथवा कृष्णको लेकर कोटिशिलापर जाते हैं और वहाँसे जिज्ञासा करते हैं । वहाँ श्रुतज्ञानियोंसे जानकर साम अथवा दण्डका प्रयोग करेंगे ॥४०॥

---

१. वसन्ततिलकावृत्तम् । २. वैतालीयं वृत्तम् । ३. शालिनीवृत्तम् ।

मन्त्रस्य कल्पितमिवाजनि मल्लिकाना-
मारधनं जयपरं मुकुलोपहारैः ॥४१॥

इति श्रीद्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
मन्त्रनिर्णयकथनो नामैकादशः सर्गः ॥११॥

इतीति—अजनि जातम्, किम्? आराधनम्, कस्य? मन्त्रस्य, केन? गलाङ्गदगलद्गुलिकाच्छलेन गलस्याङ्गदा गलाङ्गदाः, गलाङ्गदेभ्यो गलन्त्यश्च ता गुलिकाश्च गलाङ्गदगलद्गुलिकास्तासां छलेन कण्ठ-केयूरक्षरन्मौक्तिकव्याजेन, केषाम्? राज्ञां भूपानाम्, कथम्भूतानां राज्ञाम्? भरोत्थितानाम्, किं कृत्वा? पूर्वमभिनन्द्य संस्तुत्य, उररीकृत्येत्यर्थः। काम्? वाचं वाणीम्, कस्य? अस्य जाम्बवस्य, कथम्? इत्युक्त-प्रकारेण मन्त्रस्याराधनम्, किमिव? कल्पितमिव, कैः? मुकुलोपहारैः कलिकोपहारैः, कासाम्? मल्लिका-नाम्, कथम्भूतमाराधनम्? जयपरं जयं पिपर्त्ति पालयतीति जयपरमिति।

भारतपक्षे—अस्य बलभद्रस्येति[1] ॥४२॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनय-
चन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरी-
चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदी नाम दधानायां
टीकायां सुग्रीवजाम्बवाञ्जनेय-नारायणपाण्डवादिमन्त्र-
कथनो नामैकादशः सर्गः ॥११॥

---

उक्त प्रकारकी इस जामवन्त अथवा बलरामकी सम्मतिको स्वीकार करके झटकेके साथ उठे राजाओंके गलेके भूषण अथवा अंगपरसे गिरते हुए मल्लिकाकी कलियोंकी अञ्जलि-तुल्य मणियोंके व्याजसे मंत्रणाकी पूजाविधि सी हो गयी थी जिसका परिणाम विजय ही था ॥४१॥

इति निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती श्रीमान् पण्डित विनयचन्द्र
गुरुके शिष्य, देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र-द्वारा
विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान
काव्यकी पदकौमुदी टीकामें 'सुग्रीवजाम्बवाञ्जनेय-
नारायणपाण्डवादिमंत्रकथन नामक
एकादश सर्ग समाप्त।

---

१. वसन्ततिलकावृत्तम्।

## द्वादशः सर्गः

**अथ वानराधिपतिभिः प्रबलैः परमः पुमान्बलयुतोऽनुगतः ।**
**श्रुतविक्रमप्रश(मि)भिः प्रययौ विनयैर्विभूतिमिव सिद्धशिलाम् ॥१॥**

अथेति–अथशब्दोऽत्र मन्त्रकथनानन्तर्यार्थो बोद्धव्यो मङ्गलार्थो वा गृह्यते । प्रययौ प्रकर्षेण गतवान्, कः ? परमः पुमाँल्लक्ष्मणः, काम् ? सिद्धशिलां कोटिशिलानामधेयां दृषदम्, कथम्भूतः सन् ? अनुगतः, कैः ? वानराधिपतिभिः सुग्रीवप्रभृतिभिर्वानरेन्द्रैः, कथम्भूतैः ? प्रबलैः प्रकृष्टसामर्थ्यवद्भिः, पुनः श्रुतविक्रमप्रशमिभिः शास्त्रपौरुषोपशमवद्भिः । कथम्भूतः परमः पुमान् ? बलयुतः रामयुक्तः, कामिव ? विभूतिमिव, यथा सम्पदं विनयैरनुगतः सन् पुमान् प्रयातीति शेषः ।

भारतीयः–अथवा परमः पुमान्नारायणः सिद्धिशिलां प्रययौ, कथम्भूतः सन् अनुगतः, कैः ? नराधिपतिभिः समुद्रविजयादिभिर्भूपैः, कथम्भूतैः ? प्रबलैः प्रकृष्टबलसैन्ययुक्तैः, पुनः कथम्भूतैः ? श्रुतविक्रमप्रशमिभिः, कथम्भूतः परमः पुमान् ? बलयुतः बलभद्रयुतः, कामिव ? विभूतिमिव, यथा विनयैरनुगतः सन् मानवो विभूतिं प्रयातीति[1] ॥१॥

**अनुजग्मुरेनमनुकूलतया हरिवंशजाः सुखचरा बहवः ।**
**व्यवसायमायनिचया इव तं किममी न वाततनयप्रमुखाः ॥२॥**

अनुजग्मुरिति–किं नानुजग्मुरपि त्वनुजग्मुरेव, के ? अमी हरिवंशजाः सुग्रीवादयो नरेन्द्राः, कम् ? तमेन लक्ष्मणम्, कया ? अनुकूलतया आनुकूल्येनामतयेत्यर्थः, कथम्भूता हरिवंशजाः ? सुखचराः प्रशस्यविद्याधराः, पुनर्वाततनयप्रमुखाः हनुमत्प्रभृतयः, कतिसंख्याः ? बहवः प्रचुराः, क इव कं यथा ? इव यथा आयनिचयाः द्रव्यप्रवेशद्वाराणि व्यवसायमुद्यममनुगच्छन्तीति ।

भारतीयः–हरिवंशजाः यादवान्वयसमुत्पन्नाः, भूपालाः, तं नारायणम्, सुखचराः सुखेन वर्त्तमानाः, पुनराततनयप्रमुखा विस्तीर्णनीतिप्रमुखाः । शेषं समम् ॥२॥

**रविमण्डलोत्थित इवान्य इव स्वयमन्यजन्म गतवानिव सः ।**
**नरभीमयोजनसुदुःसहया प्रभया परिष्कृततनुः शुशुभे ॥३॥**

रवीति–स लक्ष्मणः शुशुभे, कथम्भूतः ? प्रभया परिष्कृततनुरलङ्कृतशरीरः, कथम्भूतया ? जनानां सुदुःसहयाऽतिशयेन सोढुमशक्यया, कथम्भूतः ? नरभीमयो नराणां भयहेतुः, क इवोत्प्रेक्षितः ? रविमण्डलोत्थित इव सूर्यबिम्बात्समुत्पन्न इव, तथाऽन्य इवोत्प्रेक्षित इव स्वयमात्मनाऽन्यजन्म गतवानिव ।

मंत्रणाके बाद, बड़ी सेनाओंके स्वामी, शास्त्र, पराक्रम तथा प्रशमधारी वानरवंशी राजाओंसे अनुगत, बलभद्र (राम)के साथ परम पुरुष लक्ष्मण उसी प्रकार कोटिशिलाको गया था जैसे विनम्रतासे अनुगत विभूति जाती है [समुद्रविजय आदि राजाओंसे अनुयात बलरामके साथ परमपुरुष कृष्ण उसी प्रकार कोटिशिला······जाती है] ॥१॥

हरिवंशमें उत्पन्न ये बहुतसे उत्तम विद्याधर (सु खचरा) हनुमान आदि अनुकूल होनेके कारण क्या उस लक्ष्मणके पीछे पीछे वैसे ही नहीं गये थे जैसे उद्योगशीलताके साथ सम्पत्तिके आगमन मार्ग चलते हैं [यादववंशमें उत्पन्न बहुतसे सुखसे जीवन बिताते तथा विस्तृत नीतिके प्रमुख संचालक अनुकूलताके कारण क्या उस कृष्णके···हैं] ॥२॥

अत्यन्त परिष्कृत शरीर होनेके कारण लोगोंके लिए भयकारक वह लक्ष्मण, जनसाधारणके लिए न सहने योग्य अपनी कान्तिके द्वारा ऐसा सुशोभित हुआ था कि वह सूर्य-

---

1. सर्गेऽस्मिन् प्रमिताक्षरवृत्तम् ।

भारतीयः—शुशुभे, कः ? स नारायणः, कथम्भूतया प्रभया ? नरभीमयोजनसुदुःसहया, नरोऽर्जुनः, भीमो वृकोदरः तयोर्योजनं योगस्तेन सुदुःसहया । शेषं समानम् ॥३॥

**विशदं यशोऽखिलदिशं निखिलां भुवमायतिः स्तुतिकथां महिमा ।**
**समतीयिवत्सममिदं सकलं भुजयोः शिरोऽस्य समतीतवतोः ॥४॥**

विशदमिति–इदं सकलं कर्म समतीयिवदतिक्रान्तवत् ? किम् ? इदं सकलं कर्तृ, कथम् ? सममेकवेलया, कयोः सतोः ? भुजयोर्बाह्वोः, कथम्भूतयोः सतोः ? शिरः समतीतवतोः, मस्तकमतिलङ्घितवतोः, कस्य ? अस्य लक्ष्मणस्य विष्णोश्च । अत्रेदं तात्पर्यम् – उन्नतस्कन्धावलोकनायशःप्रभृतीनां स्पर्द्धा प्रदर्शिता । तद्यथा–समतीयिवत्, किं कर्तृ ? यशः, काम् ? अखिलदिशं समस्ताशाम्, कथम्भूतम् ? विशदम्, तथा समतीयुषी, का ? आयतिः प्रसिद्धिः, काम् ? भुवम्, कथम्भूताम् ? निखिलाम्, तथा समतीयिवान्, कोऽसौ ? महिमा माहात्म्यम्, काम् ? स्तुतिकथाम् ॥४॥

**किमु मे भुजेन भुवनस्य भरं वहतः शिला बहिरियं जगतः ।**
**दधतो भुवं किमु नगस्य भरस्तरुरित्ययं स्मयमियाय मुहुः ॥५॥**

किम्विति–किमित्यनेन शब्देनाक्षेपो गम्यते, उ अहो, इयं शिला जगतः किं बहिरस्ति, मे मम, किं कुर्वतः ? वहतो धरतः, कम् ? भुवनस्य भरम्, केन कृत्वा ? भुजेन बाहुना, किमु भुवं दधतः बिभ्रतः नगस्य गिरेः तरुर्भरः अपि तु नैव, इत्ययं विष्णुः मुहुर्वारं वारं स्मयं गर्वमियाय गतवान् ॥५॥

**विनिपातितं विनिहितं प्रथमं क्वचिदात्मनोद्धृतमदः सुहृदाम् ।**
**अधुनात्मसाहसमसौ सहसा ददृशे व्रजन्निव निरूपयितुम् ॥६॥**

विनिपातितमिति–अधुना साम्प्रतमिति ददृशे दृष्टः, कोऽसौ ? असौ विष्णुः, किं कुर्वन् ? व्रजन्, कथम् ? सहसा शीघ्रम्, किं कर्तुमिव ? निरूपयितुमिव, किम् ? अद एतदात्मसाहस धैर्यम्, केषाम् ? सुहृदाम्, कथम्भूतं सत् ? विनिपातितं तथा विनिहितं तयोद्धृतम्, केन ? आत्मना, क्व ? क्वचित् कापीत्यर्थः, कथम् ? प्रथममिति ॥६॥

**सघनागमो निजशुचिः सुरभिर्वनपुष्पगः समहिमोग्रजवः ।**
**सरसां शरच्छविमितः शिशिरो मरुदन्वगात्तमृतुमूर्त्तिरिव ॥७॥**

सघनागम इति–अन्वगादनुगतः, कोऽसौ ? मरुद्वातः, कम् ? तं विष्णुम्, कथम्भूतः ? सघनागमः सह घनागमेन वर्त्तमान इति सघनागमः मन्दया गत्या वर्त्तमान इत्यर्थः । पुनर्निजशुचिः निजेनात्मना शुचिर्निर्मलः रेणूत्करशून्य इत्यर्थः, पुनः सुरभिः सुगन्धिः, अतएव सुरभिर्यतो वनपुष्पगः कान्तारकुसुममकरन्द-

---

मण्डलसे उत्पन्न, अथवा दूसरेके तुल्य अथवा स्वयमेव दूसरे जन्मको प्राप्तके समान शोभित हो रहा था [···अर्जुन, भीम आदिसे सम्बन्धके कारण अगम्य वह कृष्ण······था] ॥३॥

इस लक्ष्मण अथवा कृष्णके शिरके ऊपर उठी भुजाओंने एक साथ ही आगे कहे सब चमत्कारोंका भी अतिक्रमण कर दिया था। निर्मल यशने समस्त दिशाओंको, सौभाग्यकी ख्यातिने पूर्ण विश्वको तथा महिमाने स्तुतिकी चर्चाको लाँघ दिया था ॥४॥

समस्त विश्वके दायित्वको इन भुजाओंसे उठाये हुए मेरे लिए क्या यह शिला जगत्के बाहर है ? पृथ्वीको धारण करनेवाले भूधरके लिए पेड़का भार अलग होता है क्या ? यह सोच कर वह (लक्ष्मण-कृष्ण) आश्चर्यमें पड़ गये थे ॥५॥

कहीं पर छोड़ा गया अथवा रखा गया अपना प्राचीन साहस अब मैंने अपने आप ही सम्हाल लिया है । बन्धु-बान्धवोंको यह प्रत्यय करानेके लिए ही अकस्मात् जाता हुआ सदृश वह लक्ष्मण अथवा कृष्ण देखा गया था ॥६॥

मेघोंकी घटायुक्त, स्वयमेव निर्मल, वनके फूलोंके परागयुक्त होनेसे सुगन्धित, शीतलता (हिम) युक्त, शरत् ऋतुके तालाबों की (अथवा सरस) कान्ति युक्त, शिशिर तथा जोरसे

बिन्दूत्करवासनावासिततनुरित्यर्थः। पुनः समहिमः समं हिमं यस्य सः सर्वजनतापहारकतया प्रशस्य इत्यर्थः, पुनरग्रजवः प्रधानवेगः मयूरपिच्छभेदीत्यर्थः। पुनः शरच्छविं वारिरूपतामितः प्राप्तः, कथम्भूतां शरच्छविम्? सरसां रसिकाम्। अत्र तात्पर्यं जलल्वसमालम्बिततयाऽतिसूक्ष्मसूक्ष्मस्वभावताप्रतिपन्नान् पयःकणान् प्रक्षरतीत्यर्थः। अतएव शिशिरः शीतलः, क इवोत्प्रेक्षितो मरुत्? ऋतुमूर्त्तिरिव, षण्णां ऋतूनां मूर्त्तिरिव तद्यथा शरच्छरत्कालः स लोकप्रसिद्धो घनागमः प्रावृट्, तथा शुचिः ग्रीष्मः, तथा सुरभिर्वसन्तः, तथा समहिमो हेमन्तः, कथम्भूतः सन्? छविं स्वच्छतामितः, केषाम्? सरसां सरोवराणां तथा शिशिर एते षड्ऋतवस्तमनुजग्मुरिवेति ॥७॥

**क्वचनातिपातमटवीमटवीं सधुनीं धुनीमभिनिवेशमगात्।**
**सलतागृहान्वसतिरम्यतया तरसाभिपादमभिपादमगात् ॥८॥**

क्वचनेति–अगात् गतवान्, कः? स विष्णुः, कथम्? तरसा शीघ्रम्, किं कृत्वा? पूर्वमतिपातमतिक्रम्य, काम्? अटवीमटवीम्, अरण्यानीमरण्यानीम् पुनः किं कृत्वा? पूर्वमभिनिवेशं प्रविश्य, काम्? धुनीं धुनीम्, तरङ्गिणीं तरङ्गिणीम्, पुनः किं कृत्वा? पूर्वमभिपादमभिपादं प्रपद्य, कान्? अगान् पर्वतान् "अगानित्यत्र केचिद्वृक्षानिति व्याख्यानयन्ति"। कथम्भूतान्? सलतागृहान्, कया? वसतिरम्यतया मन्दिररमणीयतयेति ॥८॥

**पथि पाण्डुराजकुलवृद्धिमतः किल केशवं मुखरयन्ककुभः।**
**इति भीमसेन उचितावसरं सरसं जगाद स मरुत्तनयः ॥९॥**

पथीति–किल लोकोक्तौ शास्त्रोक्तौ वा। अतः कारणाजगाद उक्तवान् कोऽसौ? स मरुत्तनयो हनूमान्, कम् केशवं लक्ष्मणम्, क? पथ्यध्वनि, कथं यथा भवति? उचितावसरं योग्यप्रस्तावं पुनः सरसं पुनः पाण्डुनिर्मलं परीक्षाक्षोदक्षममित्यर्थः, कथम्? इति वक्ष्यमाणप्रकारेण, किं कुर्वन्? ककुभ आशा मुखरयन् शब्दयन्, कथम्भूतः? भीमसेनः भीमा सेना यस्य सः, अथवा भीमा चासौ सा च भीमसा तस्या इनः भीमसेनः, शत्रूणां प्रध्वंसनवशात्परमोत्कर्षं प्राप्ता या लक्ष्मी तस्या प्रभुरित्यर्थः। कथम्भूतं केशवम्? राजकुलवृद्धिं राजकुलस्य नरेन्द्रसमूहस्य वृद्धिर्यस्य स तथोक्तस्तम्, तस्य लक्ष्मणस्यानेकेषां भूमिपालानां मेलापकोऽभूदित्यर्थः। अथवा पाण्डुराजकुलवृद्धिं पाण्डुरं निःपापं तथा विशदम्, अजनामा नृपो दशरथस्याद्यः पुरुषः, अजस्य कुलमजकुलं पाण्डुरञ्च तदजकुलञ्च पाण्डुराजकुलं तस्य वृद्धिर्यस्मात् तम्।

भारतीयः—भीमसेनो वृकोदरः; कथम्भूतः? पाण्डुराजकुलवृद्धिमतः पाण्डुराजकुलस्य पाण्डुराजान्वयस्य वृद्धौ मत इष्टः, पुनर्मरुत्तनयः मरुतः देवाः सन्त्यस्य मरुत्तः 'पर्वमरुद्भ्यां तः', इति सूत्रेण तप्रत्ययः, मरुत्तस्येव शक्रस्येव नयो नीतिर्यस्य स तथोक्तः शेषं तुल्यम् ॥९॥

**शशिनस्तुलां समुपयाति कुलं भवतो यतेरुपशमश्च विधाम्।**
**तव पौरुषं स्वसदृशं भुवनं भ्रमदप्यपेक्ष्य भुजयोरजरत् ॥१०॥**

---

बहता फलतः मूर्तिमान छहों ऋतुयुक्त पवन उसके पीछे-पीछे बह रहा था [घनागमसे वर्षा, सरस छवि शरद, शीतलतासे शिशिर, सम-हिमसे हेमन्त, सुरभि वन पुष्प युक्त बसन्त तथा निजशुचि ग्रीष्म] ॥७॥

कहीं पर जंगलके बाद जंगलोंको पार करता, नदियोंसे समन्वित नदियोंको घुसकर लाँघता, और लताकुञ्जोंसे व्याप्त एवं सब तरफसे वृक्षों द्वारा आच्छादित पर्वतोंको पैदल ही पैदल; भवनकी रमणीयताके साथ चढ़ता-उतरता वह वेगसे चला आ रहा था ॥८॥

भीषण सेनाके स्वामी उस पवनञ्जयके पुत्र हनुमानने धवल कीर्तिधारी राजा अजके कुल (रघुवंश)की वृद्धिकी दृष्टिसे उचित अवसर देखकर दिशाओंको गुँजाते हुए निम्न सरस वचन लक्ष्मणजीको कहे थे [राजा पाण्डुके वंशकी प्रतिष्ठाभूत इन्द्रके समान नीतिज्ञ (मरुत्तनय) भीमने श्री कृष्णसे···वचन कहे थे] ॥९॥

शशिन इति– समुपयाति प्राप्नोति, किं कर्तृ ? कुलमन्वयः, काम् ? तुलां सादृश्यम्, कस्य ? शशिनश्चन्द्रस्य, विशदतया सकललोकानामानन्दकारिकुलमित्यर्थः । तथा भवन उपशमः यतेर्योगिनः विद्यां तुलां समुपयाति, तथा तव भुजयोः पौरुषं पराक्रमोऽजरजीर्णम्, किं कुर्वत् ? भुवनं जगत् भ्रमत् पर्यटत्, किं कृत्वा ? पूर्वमभ्यपेक्ष्यानपेक्ष्य, किम् ? स्वसदृशमात्मसमं मित्रम् । अन्येषां शत्रूणाममावाद्युद्धाभावो दर्शितः ॥१०॥

**तव पूर्वजेन यदुनोपनताः किमरातयो नरघुणा निहताः ।**
**सकलं जगद्वशगतं कृतवान्स कया शिलोद्धरणडम्बनया ॥११॥**

द्वि० तवेति–उ अहो, किं नोपनताः किं न नम्रीकृताः ? के ? अरातयः शत्रवः, तथा किं न निहताः किं न प्रध्वस्ताः ? के ? अरातयः, केन ? रघुणा दशरथेन, कथम्भूतेन ? पूर्वजेनाद्येन, कस्य ? तव, अपि तूपनता निहताश्च । अत्र तात्पर्यं ये शरणमागतास्ते नम्रीकृताः, ये च स्तब्धवृत्तयस्ते निहता इत्यर्थः । तथा कृतवान्, कोऽसौ ? स रघुः, किम् ? जगत्, कथम्भूतम् ? वशगतमात्माधीनं पुनः सकलं समस्तं यद्यस्मात् कारणात्; तत्र किं प्रयोजनम् ? कया ? शिलोद्धरणडम्बनया तवेति शेषः ।

भारतीयः–किं निहता अपि तु, न, के ? अरातयः, कथम्भूताः सन्तः ? उपनताः, पुनः नरघुणाः नरकीटकाः, केन कर्त्रा ? यदुना राज्ञा, कथम्भूतेन ? पूर्वजेन, कस्य ? तव, तथा च कृतवान् स यदुः, किम् ? जगत्, कथम्भूतम् ? वशगतं पुनः सकलम्, तत्र किं ? कया शिलोद्धरणडम्बनयेति ॥११॥

**जनमाकलस्व भुवि सांशयिकं भवतस्तथाप्युचितमुद्यमनम् ।**
**तदिदं द्विषां हि पलितङ्करणं विजयश्रियश्च सुभगङ्करणम् ॥१२॥**

जनमिति–त्वं भुवि जनं लोकं सांशयिकं संशयापन्नं हि स्फुटमाकलस्व जानीहि, तथापि भवतस्तव उद्यमनमुद्यम उचितं स्यात्, तदिदमुद्यमनम्, कथम्भूतं स्यात् ? द्विषां शत्रूणां पलितङ्करणम् अपलितं पलितङ्क्रियतेऽनेन तत्तथोक्तम्, तथा विजयश्रियश्च सुभगङ्करणम् असुभगं सुभगङ्क्रियतेऽनेन तत्तथोक्तम् ।"कृञः करणे युट् च" । अत्रेदं तात्पर्यम्–त्वदुद्यमं श्रुत्वा पलायमानानां द्विषतां भूमेरुद्धूतेन रेणूत्करेण धूसरितकेशाः सन्तो वार्द्धकेन विना त्वयोद्यमेन कृत्वा पलिता इव क्रियन्ते, तथा चिरं निःसौभाग्याया जयश्रियस्त्वयोद्यमेन कृत्वा सौभाग्यं क्रियते ॥१२॥

**कुलपर्वताः कुलपराभवतः समवैमि तेऽद्य निजमुन्नमनम् ।**
**कलयन्ति फल्गु विलयं मनुते सवितोदयास्तमयसानुमतोः ॥१३॥**

कुलेति–समवैमि जानामि, कलयन्ति मन्यन्ते, के ? ते कुलपर्वताः कुलाचला मेर्वादयो गिरयः, किम् ? उन्नमनमुन्नतिम्, कथम्भूतम् ? फल्गु व्यर्थम्, पुनः कथम्भूतम् ? निजमात्मीयम् । कुतः ? कुलपरा-

---

आपका कुल (लोकके लिए आनन्दकारी होनेसे) चन्द्रमाकी समानता करता है, आपकी शान्ति यतियोंकी प्रशमता तुल्य है और आपके भुजाओंका पराक्रम त्रिभुवनमें घूमता हुआ किन्तु अपने सदृश दूसरेको न पाकर (निराशासे) थक गया है ॥१०॥

आपके पूर्वज महाराज रघुने क्या शरणागत शत्रुओंको विनम्र नहीं बनाया था ? अथवा अहंकारियोंका सर्वनाश नहीं किया था ? उन्होंने तो सारे संसारको जीत लिया था, अतएव आश्चर्य है ( यत्-उ ) इस कोटिशिलाके उठानेकी विडम्बनासे क्या लाभ है ? [आपके वंशके आदिपुरुष राजा यदुने नरकीट, विनम्र शत्रुओंको क्या मारा था ? उन्होंने........ लाभ है] ॥११॥

तथापि संसारकी संशयशील जनताको पुरुषार्थ बता दीजिये इस दृष्टिसे आपका यह उद्योग सर्वथा उचित है। क्योंकि आपके भयसे भागते शत्रुओंके बाल धूलधूसर ( पके सदृश ) हो जायगे और विजयलक्ष्मीका सौभाग्य फिरसे चमक उठेगा ॥१२॥

हे लक्ष्मण अथवा कृष्ण ? आपके द्वारा हुए अपने वंशके पराभवके कारण कुलाचल

भवतोऽन्वयाभिभवात्, कस्य ? ते तव, कथम् ? अद्य साम्प्रतम्, अतो मनुते, कः ? सविता रविः, कम् ? विलयं प्रध्वंसम्, कयोः ? उदयास्तमयसानुमतोरुदयाचलास्ताचलयोः। अत्रेदं तात्पर्यम्–विष्णोः कुलादभिभूतानां क्षोणीधराणां स्वकीयामुन्नतिं फल्गुमन्यमानानां विलये सति तन्मध्यवर्तित्वादुदयास्तभूधरयोर्विलयं मनुतेऽहं निराश्रयो भविष्यामिति सखेदत्वं सूर्यस्य प्रदर्शितम् ॥१३॥

तदितो निरूपय पयोधरयोस्तटयोर्भरेण मृदुमदगतिम्।
वलिशोभितां सरितमश्वमुखीमपि सारसानुगमनाकुलिताम् ॥१४॥

तदिति–हे विष्णो निरूपयावलोकयस्व, कः ? त्वम्, काम् ? सरितम्, कथम् ? तदित इतस्ततः, कथम्भूतम् ? वलिशोभिताम् तरङ्गशोभिताम्, पुनः मृदुमन्दगतिं पेशलालसगमनाम्, केन ? पयोधरयोर्जलधारिणोस्तटयोः कूलयोर्भरेण पुनः सारसानुगमनाकुलितां सारसानां लक्ष्मणानामनुगमनेन गमनपौनःपुन्येन आकुलितां क्षोभं नीतामित्यर्थः। अपि शब्दोऽत्र समुच्चये न केवलं सरितमवलोकय, अश्वमुखीं किन्नरीमप्यवलोकय, कथम्भूताम् ? पयोधरयोस्स्तनयोस्तटयोरुच्छ्रितयोर्भरेणोन्नत्येन मृदुमन्दगतिं पुनर्वलिशोभितां जठरराजित्रयविराजितां पुनः सारसानुगमनाकुलितां सारञ्च तत् सानुषु गमनं च, तेनाकुलिताम् ॥१४॥

इह सैकतं तरणितप्तमिदं परिहृत्य हंसकुलमेति सरः।
विरला वसन्ति च सति व्यसने किमु पक्षपातनिरता हि पुनः ॥१५॥

इहेति–इहास्मिन्प्रदेशे इदं हंसकुलं तरणितप्तं दिनकरप्रदीप्तं सैकतं सिकतापुञ्जं परिहृत्य परित्यज्य सरः सरोवरमेति व्रजति। युक्तमेतत्–किं वसन्ति तिष्ठन्ति, के ? विरलाः सत्पुरुषाः, अपि तु न केऽपि, क्व सति ? व्यसने विनिवासनिपाते, उ अहो पुनः किं वसन्ति, के ? पक्षपातनिरताः, अपि तु न, कथम् ? हि स्फुटमिति शेषः ॥१५॥

परतो नतं जघनपार्ष्णिभराद्बहु पूर्वतः कुचभरात्किमपि।
पुलिनेषु सूचयति तत्पदयोरमराङ्गनागमनमत्र पदम् ॥१६॥

परत इति–अत्रास्मिन्प्रदेशे सूचयति, किं कर्तृ ? पदम्, किं कर्म ? अमराङ्गनागमनम्, कयोः पदम् ? तत्पदयोरमराङ्गनाचरणयोः, केषु ? पुलिनेषु सैकतेषु, कथम्भूतम् ? नतम्, कथं यथा भवति ? बहु, कथम् ? परतः पश्चात्, कस्मान्नतम् ? जघनपार्ष्णिभरात् जघनभरेणान्तर्हितत्वात् पार्ष्ण्योर्भारोऽप्युपचर्यते, न तु साक्षादस्तीति भावः। तथा नतम्, कथम् ? किमपि कियत्, कथम् ? पूर्वतः पुरतः कस्मात् किमपि नतम् ? कुचभरादिति ॥१६॥

---

आज अपनी ऊँचाई व्यर्थ ही समझते हैं। फलतः सूर्य भी उदयाचल और अस्ताचल पर्वतोंकी समाप्तिकी कल्पना करता है, ऐसा मेरा विचार है ॥१३॥

जलके प्रवाहके रोकनेवाले किनारोंकी ऊँचाईके कारण धीरगम्भीर बहती हुई, तरंगोंसे सुन्दर तथा सारसोंके इधर-उधर आने-जानेसे आकुल इस नदीको तथा स्तनोंकी ऊँचाई और भारके कारण विलासपूर्वक मन्दमन्द जाती, त्रिवलिसे सुन्दर तथा ठोस और उन्नत शिखरों ( सार-सानु ) पर चलनेके कारण अश्वमुखी किन्नरीको भी देखिये ॥१४॥

सूर्यके आतपसे तपायी गयी बालुकामय स्थानको छोड़कर यह हंसोंका झुंड तालाबकी ओर चला आरहा है। उचित ही है क्योंकि विरले ही चरित्रवान व्यक्ति आपत्ति आनेपर दृढ़ रहते हैं। जो पंखोंपर उड़ने वाले हैं [ जो पक्षपाती लोग हैं ] उनका तो कहना ही क्या है ॥१५॥

जंघा तथा नितम्बोंके भारके कारण पड़ीकी तरफ बहुत गहरा तथा पंजेकी तरफ भी स्तनोंके भारके कारण कुछ कम गहरे पदचिह्न बतलाते हैं कि इन बालुकामय प्रदेशोंमें देवोंकी देवियाँ विहार करके गयी हैं ॥१६॥

**अमुतश्च पुष्पशयनं रचितं नवयावकाङ्कितपदं त्रिदशैः ।**
**रुधिरारुणं कुसुमबाणचितं मदनस्य पङ्ककमिव ज्वलति ॥१७॥**

अमुत इति–अमुतश्चास्मिन्प्रदेशेऽपि ज्वलति भाति, किम् ? पुष्पशयनं कुसुमास्तरणम् , कथम्भूतं सत् ? चितं विहितम् , कैः ? त्रिदिवैर्देवैः, पुनः कथम्भूतम् ? नवयावकाङ्कितपदं नूतनालक्तकचिह्नितपदम् , किमिवोत्प्रेक्षितम् ? मदनस्य कन्दर्पस्य रुधिरारुणं रक्तशोणितं कुसुमबाणचितं प्रसूनशरपुष्टं पङ्ककं युद्धमिव ॥१७॥

**स्तनतापसूनमवनम्रनलं बिशपत्रमत्र कुसुमास्तरणे ।**
**किमुतोज्झितान्यमनसा विगुणा सुरयोषिता विरहवल्लकिका ॥१८॥**

स्तनेति–अत्रास्मिन्प्रदेशेऽभूत्, किम् ? बिशपत्रं पद्मिनीपत्रं कथम्भूतम् ? स्तनतापसूनं कुचतापशुष्कं पुनरवनम्रनलमवनम्रो नलो यस्य तत्तथोक्तम्, स्तनतापसूनत्वान्नलोऽपि शुष्को बिशपत्रस्येति भावः, क ? कुसुमास्तरणे, उताहो किमुज्झिता किं परित्यक्ता, अपि तु न । का ? विरहवल्लकिका वियोगवीणा, कया ? सुरयोषिताऽमररमण्या, कथम्भूता सती ? विगुणा त्रुटिततन्त्रीका, कथम्भूतया सत्या सुरयोषिता ? अन्यमनसाऽन्यचित्तया । अत्र वासनार्थः प्रदर्श्यते-चिरप्रोषितो भर्ता कदाऽऽगमिष्यति, कदा तं दृग्भ्यां द्रक्ष्यामि कदाऽतिदीर्घवियोगाग्निदग्धैः कटाक्षविक्षेपैरात्मपतिहृदयं जर्जरीकरिष्यामीति चिन्तार्दनावस्थाप्राप्तचिन्तयेत्यर्थः ॥१८॥

**मृगनाभिजं परिमलं द्विरदः करिदानगन्धमनुयाति हरिः ।**
**इह जन्तुरेवमपरोऽपि परं विनिहन्तुमेव समनुव्रजति ॥१९॥**

मृगेति–इहास्मिन्प्रदेशे द्विरदो हस्ती मृगनाभिजं कस्तूरिकाजातं परिमलमनुयात्यनुगच्छति । एवमुक्तप्रकारेण हरिः सिंहः करिदानगन्धमनुयाति । अपरोऽपि जन्तुः परमन्यं विनिहन्तुमनुव्रजति ॥१९॥

**सरसीह मज्जति करिण्यलिनां परिधिः कराग्रनिभृतः स्फुरति ।**
**जलदेवतार्थमिदमुद्गतवत्क्षणमातपत्रमिव बर्हमयम् ॥२०॥**

सरसीति–इहास्मिन्प्रदेशेऽलिनां भ्रमराणां परिधिः मण्डलं परिस्फुरति, कथम्भूतः ? कराग्रनिभृतः शुण्डाग्रस्थितः क्व सति ? करिणि गजे सरसि सरोवरे मज्जति ब्रुडति सति । उत्प्रेक्षते उद्गतवदिव ( उद्गतवत् उद्गतमिव ) किम् ? इदम् आतपत्रं छत्रम्, किमर्थम् ? जलदेवतार्थम्, कथम्भूतम् ? बर्हमयं पिच्छमयम्, क्षणं मुहूर्त्तमेकमिति शेषः ॥२०॥

---

इस ओर देवताओंके द्वारा बनायी गयी, नूतन तथा गीले आलतायुक्त पदचिह्नोंसे भूषित, पुष्पशय्या है । जो फूलके बाणोंसे व्याप्त तथा रक्तसे लाल होनेके कारण कामदेवके संग्रामकी भूमिके समान जगमगा रही है ॥१७॥

इस पुष्पशय्यापर स्तनोंकी उष्मासे सूखा नालयुक्त कमलपत्र ऐसा प्रतीत होता है जैसी कि विदेश गये प्रेमीकी चिन्तासे आकुलचित्त देवोंकी अप्सराके द्वारा छोड़ी गयी बिना तारकी विरहवीणा होती है ॥१८॥

कस्तूरी मृगकी नाभिसे उत्पन्न सुगन्धके पीछे हाथी चलता है, हाथी के मदजलकी गन्धका सिंह पीछा करता है, इस प्रकार इस अरण्यमें एक जन्तु दूसरे जन्तुको मारनेके लिए उसका पीछा करता है ॥१९॥

इस वनमें जब हस्तिनी तालाबमें गोता लगाती है तो उसकी सूँड़के अग्रभागपर स्थिर बैठे भौंरोंका छत्ता ऊपरको उड़ता है । ऊपर उड़ता यह वर्तुलाकार भौंरोंका झुंड उस समय ऐसा लगता है मानो मयूरपत्रमय छत्र ही जलदेवताके ऊपर तन गया हो ॥२०॥

---

१. मङ्ककमिव–द० ।

सबलाकिका नवतृणा जगती मृदु निर्झरं वहति वाति मरुत् ।
सविताप्यत्र विपिनैरिह किं जलदागमः सततसंनिहितः ॥२१॥

सबलाकिकेति—इहास्मिन्प्रदेशे वहति, का ? पृथ्वी जगती, कम् ? निर्झरम्, कथम् ? यथा मृदु मन्दम्, कथम्भूता ? सबलाकिका बलाकाभिः सह वर्त्तमाना पुनर्नवतृणा नवानि नूतनानि तृणानि यस्यां सा तथोक्ता, तथा वाति, कः ? मरुत्, तथा वृतस्तिरोहितः, कः ? असौ सविता सूर्यः, कैः ? विपिनैः कान्तारैः, अतः किं विद्यते जलदागमः प्रावृट्, कथम्भूतः ? सततसन्निहितोऽनवरतनिकटवर्त्तीति शेषः ॥२१॥

द्विपदन्तपत्रमदमौक्तिकवद्दधतः श्रवोभुजगलं शबरान् ।
करिणां न केवलमसून्मनुवे हरतोऽमुतः सकलसारमपि ॥२२॥

द्विपेति—इह केवलं मनुवे जानेऽहम्, कान् ? शबरान् किरातान्, किं कुर्वतः सतः ? दधतः, किम् ? श्रवोभुजगलं कर्णबाहुकण्ठम्, कथम्भूतम् ? द्विपदन्तपत्रमदमौक्तिकवत् । अत्रेदं तात्पर्यम्—दन्तिदन्तपत्रं कर्णयोः, मदं भुजकक्षयोः, मौक्तिकानि गले । हरतोऽपि मनुवे, कान् ? असून्प्राणान्, केषाम् ? करिणाम् सकलसारम्, क ? अमुतोऽमुष्मिन्प्रदेश इति शेषः ॥२२॥

अभिषेचकं निपतता हरिणा पुरतः क्रमेण पदयोर्द्विरदः ।
स्थितवानिहोन्नमितकुम्भकरः क्षणमङ्कुशेन विनिरुद्ध इव ॥२३॥

अभिषेचकमिति—इहास्मिन्प्रदेशे स्थितवान्, कोऽसौ ? द्विरदो हस्ती, क इवोत्प्रेक्षितः ? अंकुशेन विनिरुद्ध इव, कथम् ? क्षणं मुहूर्त्तमेकम्, कथम्भूतः सन् ? उन्नमितकुम्भकरः, केन् ? निपतता हरिणा सिंहेन, केन् ? पदयोः क्रमेण चरणयोः फालेन, कथम् ? पुरतः, कथं निपतता ? अभिषेचकं पुच्छमूलं लक्षीकृत्येति शेषः ॥२३॥

तरवो न सन्त्यफलिनो न लताः कुसुमोज्झिता न विरतस्रुतयः ।
सरितोऽलिहंसशुककोकिलकध्वनिवर्जितोऽत्र न परोऽस्ति रवः ॥२४॥

तरव इति—अत्रेह प्रदेशे तरवो वृक्षा अफलिनः फलरहिता न सन्ति, तथा लताः कुसुमोज्झिताः प्रसूनशून्या न सन्ति, तथा सरितो नद्यः विरतस्रुतयः जलनिर्झरोज्झिता न सन्ति, तथा परोऽन्यो रवो ध्वनिरलिहंसशुककोकिलध्वनिवर्जितः भ्रमरादिशब्दवर्जितो नास्ति ॥२४॥

इह भान्ति मण्डपभुवः सलताः सवितर्दिका गिरिपतत्सलिलाः ।
वनदेवताभिरपदिश्य मिथः पथिकान्प्रपा इव शुचौ रचिताः ॥२५॥

---

इस वनकी भूमिपर धीरे-धीरे बहते झरनोंके तुषारयुक्त हवा बहती है, सर्वदा सारस उड़ते रहते हैं, नूतन कोमल दूब उगती रहती है तथा ऊँचे-ऊँचे वृक्षोंके कारण सूर्य छिपा रहता है अतएव ऐसा लगता है कि यहां बारहों महीना वर्षा ऋतु रहता है ॥२१॥

मेरा विचार है कि इस वनमें हाथियोंके दन्तपत्रोंको कानोंमें पहिने, मदको दोनों भुजाओंमें आत्मसात् किये तथा मस्तकके मुक्ताओंको गलोंमें धारण किये हुए भीलोंने हाथियोंके केवल प्राण ही नहीं लिये हैं अपितु उनकी समस्त सारभूत सम्पत्ति ( वस्तुएँ ) भी हर ली है ॥२२॥

इस वनमें सामनेसे ही पूँछके हिस्सेको लक्ष्य करके उछलते हुए सिंहके पंजोंका बचाव करनेकी दृष्टिसे हाथी गण्डस्थलों तथा सूंडको तानकर क्षणभर वैसा ही जमके खड़ा रहता है जैसा कि महावतके अंकुशके संकेतपर निश्चल हो जाता है ॥२३॥

इस प्रदेशमें ऐसे वृक्ष नहीं हैं जिनपर फल न आते हों, सब लताएँ ऐसी हैं जो फूलती हैं, एक भी नदी ऐसी नहीं है जिसकी धार टूट जाती हो तथा भौंरा, हंस, शुक, कोकिल, आदिकी मधुर कूजके सिवा दूसरी ध्वनि नहीं सुनायी पड़ती है ॥२४॥

इहेति–इह प्रदेशे लताः लताभिः सह वर्त्तमानाः मण्डपभुवः भान्ति, कथम्भूताः ? सवितर्दिकाः वेदिकासहिताः, पुनः गिरिपतत्सलिला गिरिभिः पतत्सलिलं यासु ताः क्षोणीधरप्रक्षरज्जलाः, का इव ? पथिकानध्वगान् अपदिश्योद्दिश्य शुचौ ग्रीष्मे वनदेवताभिः मिथः परस्परं रचिताः प्रपाः पानीयशालिका इव ॥२५॥

**पतितस्तरोः शकुनिविष्टिचितः शबरैरितोऽर्कशपथक्रियया ।**
**उपयुक्तमुक्तसिततण्डुलकैरवभाति कीर्ण इव पर्णचयः ॥२६॥**

पतित इति–इतोऽस्मिन्प्रदेशे तरोः वृक्षात् पतितः शकुनिविष्टिचितः विहङ्गमामेध्ययुक्तः पर्णचयः पत्रसमूहोऽवभाति शोभते, क इव ? शबरैः कर्त्तृभिरुपयुक्तमुक्तसिततण्डुलकैरुपयोगीकृतोज्झितश्वेततण्डुलसमूहैः कीर्ण इव, कया ? अर्कशपथक्रियया सूर्यार्चा–(र्चा) विधिना ॥२६॥

**कुसुमं धनुर्मधुलिहोऽस्य गुणः शुककूजितं समरतूर्यरवः ।**
**मदनस्य साधनमिदं प्रचुरं सुलभं न साध्यमिह तद्विपिने ॥२७॥**

कुसुममिति–इह विपिनेऽस्मिन्कान्तारे मदनस्य कन्दर्पस्य यत इदं साधनं विद्यते, कथम्भूतम् ? प्रचुरम्, पुनः सुलभं सुप्रापम्, तद्यथा कुसुमं धनुर्जायते, मधुलिहो भ्रमरा अस्य धनुषो गुणो जायते, तथा शुककूजितं कीरध्वनिः समरतूर्यरवः रणवाद्यशब्द इति साधनम्, तत्तस्मात् साध्यं सुलभं न, अपि तु सुलभमेवेति काकुः[1] ॥२७॥

**त्रिदिवेच्छया व्रतमिहत्यजनैः क्रियते न मुच्यत इदं दिविजैः ।**
**तदिदं वनं दिवमवैमि दिवं शतशीर्णकल्पतरुशोषहताम् ॥२८॥**

त्रिदिवेति–इहत्यजनैरिहसम्भूतैर्जनैः त्रिदिवेच्छया व्रतं क्रियते विधीयते, त्रिवर्गाणामन्योन्यव्याघातोज्झितत्वाद्यथावृत्तिकेन धर्मार्थकामाचरणलक्षणेन धर्मेण दीव्यते गम्यते प्राप्यत इति यः प्रदेशः स त्रिदिवस्तस्येच्छया, तथा न मुच्यते न परित्यज्यते, किम् ? इदं वनम्, कैः ? दिविजैः देवैः, तत्तस्मादवैमि जानामि, किम् ? इदं वनम्, काम् ? दिवं स्वर्गम्, तथाऽवैमि, काम् ? दिवम्, कथम्भूताम् ? शतशीर्णकल्पतरुशोषहतां शतशीर्णाश्च ते कल्पतरवस्तेषां शोषस्तेन हताम्, इदमैतिह्यमत्र, इह वने नन्दनायमानकल्पकेलिसुखं प्रपन्नेषु देवेषु दिव्यसुखं मन्यमानेषु सत्सु मनुष्याणामिव सुधापानसन्तृप्तमानसतया प्रसिद्धानां फलादिभक्षणाभावात् सफलानुयोगत्वात्कल्पतरुभिरेवमेव शीर्यते स्मेति भावः ॥२८॥

---

यहाँपर लताओंसे घिरी हुई, मध्यमें वेदीसे युक्त तथा पर्वतोंसे उतरती छोटी-छोटी जलधाराओंसे शोभित मंडप-भूमियाँ हैं। वे ऐसी लगती हैं—मानो वनदेवताओंने पथिकोंकी सुविधाकी दृष्टिसे परस्परमें विचार करके ग्रीष्मऋतुके लिए पियाऊएँ स्थापित कर दी हैं ॥२५॥

इस ओर वृक्षोंसे घिरी तथा पक्षियोंकी बीटसे व्याप्त पत्तोंकी राशि वैसी प्रतीत होती है जैसी कि भीलोंके द्वारा की गयी सूर्यकी पूजाके उपयोगमें आये और पूजा-समाप्तिपर इधर-उधर बिखेर दिये गये तण्डुल लगते हैं ॥२६॥

पुष्पराशि रूपी धनुष, भ्रमर पंक्ति रूपी उसकी ज्या तथा शुक, आदिकी कूजरूपी युद्ध-भेरियोंकी ध्वनि ये सब कामदेवकी समरयात्राकी साधन-सामग्री इस वनमें प्रचुर मात्रामें सुलभ है किन्तु समस्या यही है कि कोई जेय नहीं है ॥२७॥

यहाँ उत्पन्न मनुष्य स्वर्गकी इच्छासे व्रत, नियमादि का पालन करते हैं और अपनी रमणीयताके कारण यह वन स्वर्गके देवों-द्वारा कभी भी नहीं छोड़ा जाता है। अतएव मैं इस वनको स्वर्गीय नन्दनवन ही समझता हूँ। और सोचता हूँ स्वर्गका नन्दनवन अनुपयुक्त फलोंसे लदे वृक्षोंके कारण नष्ट हो रहा होगा ॥२८॥

---

1. अत्रातिशयोक्तिः–प०, द० ।

**इति सङ्कथां निशमयन्सुहृदः स निशामयन्सपदि तत्पदयम् ।**
**समराघवक्रमधुराजगती रतिमाप येन समवाप शिलाम् ॥२९॥**

इतीति—समवाप प्राप्तवान्, कोऽसौ ? सोऽयं लक्ष्मणः, काम् ? शिलाम्, किं कुर्वन् ? निशमयन् शृण्वन्, काम् ? सङ्कथां वार्त्ताम्, कस्य ? सुहृदः हनूमतः, कथम् ? इत्युक्तप्रकारेण, किं कुर्वन् ? निशामयन् पश्यन्, किम् ? पदार्थसार्थम्, येन लक्ष्मणेन कृत्वा आप, का ? जगती पृथ्वी, काम् ? रतिम्, कथम्भूता सती ? समराघवक्रमधुरा रघूणामयं राघवः राघवश्चासौ क्रमश्च राघवक्रमः राघवक्रमस्य धुरा राघवक्रमधुरा, समा प्राञ्जला राघवक्रमधुरा यस्याः सा तथोक्ता ।

भारतीयपक्षे—समवाप, कोऽसौ ? सोऽयं विष्णुः, काम् ? शिलाम्, किं कुर्वन् ? निशामयन्, काम् ? सङ्कथां परस्पराकुटिलभाषणम्, कस्य ? सुहृदो भीमस्य, कथम् ? इत्युक्तप्रकारेण, किं कुर्वन् ? निशामयन् पश्यन्, किम् ? तत्तत्प्रसिद्धं वस्तुजातम्, किमाप अपि तु न प्राप्तवती, का ? समराघवक्रमधुराजगतिः अघवत्पापवत् वक्रोऽघवक्रः समरे सङ्ग्रामेऽघवक्रः समराघवक्रः स चासौ मधुश्च समराघवक्रमधुस्तस्य राजगतिः समराघवक्रमधुराजगतिरघवत्समरक्रूरमधुराज्यमित्यर्थः, काम् ? रतिम्, केन ? येन विष्णुनेति ॥२९॥

**ऋषिकोटिभीत इति जन्यभिया स्वगले निबध्य मदनेन नदीम् ।**
**प्रविविक्षुणा खलु कुतश्चिदियं न शिलाहृतेति कलितं हरिणा ॥३०॥**

ऋषीति—न आहृता अपि त्वाहृता आनीतेत्यर्थः का ? इयं शिला, केन ? मदनेन रतिपतिना, कुतः ? कुतश्चित्, कथम् ? खलु निश्चयेन, कथम्भूतेन ? प्रविविक्षुणा प्रवेष्टुं कर्त्तुमिच्छता, काम् ? नदीम्, किं कृत्वा ? पूर्वं निबध्य काम् ? शिलाम्, क्व ? स्वगले, कया ? जन्यभिया जनापवादभयेन, कथमिति ? ऋषिकोटिभीत इति, हरिणा लक्ष्मणेन । भारतपक्षे—नारायणेन ॥३०॥

**प्रभविष्यतः कलियुगाद्भयतो न खलूपगोप्य भुवि धर्मनिधिम् ।**
**यतिभिः शिलोपरिकृतेयमिति प्रवितर्कितं हलधरेण तदा ॥३१॥**

प्रेति—तदा तस्मिन्काले प्रवितर्कितं हलधरेण रामेण कथम् ? इति न कृता, अपि तु कृतैव, का ? इयं शिला, कैः ? यतिभिः, कथम् ? उपरि, कथम् ? खलु निश्चयेन, किं कृत्वा ? पूर्वमुपगोप्य, कम् ? धर्मनिधिम्, कस्याम् ? भुवि, कस्मात् ? भयतो भयात्, कस्माद्भयम् ? कलियुगात् कलिकालात्, कथम्भूतात् ? प्रभविष्यतः भाविनः । भारतपक्षे—हलधरेण बलभद्रेण ॥३१॥

**हरिणा जिनाभिषवणोन्मनसा जनताविदूर्यमुपपादयितुम् ।**
**निकटाच्च पाण्डुकशिलागपतेः खलु साहृतेत्यवहितं हरिभिः ॥३२॥**

---

मित्र हनूमानकी उक्त सुन्दर चर्चाको सुनता हुआ तथा उन-उन रमणीय पदार्थोंको देखता हुआ वह लक्ष्मण अनायास ही कोटि-शिलापर पहुँच गया था जिसके द्वारा संतुलित रघुवंशियोंके चरणोंकी आधार पृथ्वीको प्रसन्नता हुई थी [मित्र भीमकी निष्कपट समीचीन उक्त बातें सुनता हुआ तथा उन-उन वास्तविकताओंको समझता हुआ श्रीकृष्ण कोटिशिलापर पहुँच गये थे जिसके कारण युद्धमें होने वाले पापोंके कारण क्रूर-आचरण दैत्य मधुके राज्यको प्रसन्नता नहीं हुई थी ॥२९॥

इस वनमें तपलीन करोड़ों ऋषियोंसे डर, लोकापवादकी आशंकासे कामदेवके द्वारा तो कहींसे यह शिला इसलिए लायी गयी होगी कि इसे गलेमें बाँधकर वह नदीमें डूब जायगा ऐसी कल्पना हरि लक्ष्मण अथवा कृष्णके मनमें आयी थी ॥३०॥

उस समय राम अथवा बलरामके मनमें यह विचार भी आया था कि भविष्यमें बलपूर्वक आने वाले कलियुगके भयसे धर्मकी निधिभूत इस शिलाको भूमिके भीतर छिपाके रख दिया गया था किन्तु यतियोंने इसे भूमिके ऊपर कर दिया है ॥३१॥

हरिणेति–अवहितं प्रतीतिमानीतम्, कैः ? हरिभिः सुग्रीवादिभिर्वानरेन्द्रैः, कथम् ? इति नाहुता, अपि त्वाहूता, का ? पाण्डुकशिला, केन ? हरिणा इन्द्रेण, किमर्थमाहुता ? उपपादयितुम्, किम् ? जनताविदूर्यं जनानां समूहो जनता, आविदूर्यं सामीप्यमित्यर्थः जनताया आविदूर्यं जनताविदूर्यम्, कथम्भूतेन हरिणा ? जिनाभिषवणोन्मनसा जिनाभिषेकोत्कण्ठितचित्तेन, कस्मादाहुता ? अगपतेर्मेरोः निकटात्समीपात्, किं कर्त्तुम् ? उपपादयितुम्, कथम् ? खलु निश्चयेनेति। भारतपक्षे–हरिभिर्यादवैः ॥३२॥

**उपवीणयन्दृषदि सिद्धपदं निलयान्निलिम्पनिवहो निरगात्।**
**न महः क्षणं विषहते स्म हरेर्बलवत्तरोऽस्ति बलिनोऽप्यथवा ॥३३॥**

उपेति–निरगान्निर्गतवान्, कोऽसौ ? निलिम्पनिवहः देवसमूहः, कस्मात् ? निलयात्स्वकीयस्थानात्, किं कुर्वन् ? उपवीणयन् वीणयोपगायन्, किम् ? सिद्धिपदं जिनेश्वरयशः, अथवा रागद्वेषपरित्यागादात्मस्वरूपोपलब्धिं प्राप्तानां यतीनां कन्दर्पदर्पविजयलक्षणां सिद्धिम्, कस्याम् ? दृषदि शिलायाम्, तथा न विषहते स्म सोढुं न क्षमते स्म, कोऽसौ ? निलिम्पनिवहः किम् ? महस्तेजः, कस्य ? हरेर्लक्ष्मणस्य, कथम् ? क्षणं मुहूर्त्तमेकम्, युक्तमेतत्, अस्ति कः ? बलवत्तरो बलीयान्, कस्मात् ? बलिनः। अथवा कस्य ? बलिनः। भारतपक्षे–हरेर्नारायणस्य, शेषं प्राग्वत् ॥३३॥

**गजगण्डघट्टितमदच्छुरितां गजशङ्कया मुनिशिलां नखरैः।**
**विलिखन्रसन्नभिपतञ्छरभः शरणं व्यगाहत गुहागहनम् ॥३४॥**

गजेति–व्यगाहत प्राविक्षत, कः ? शरभः शार्दूलः, किम् ? शरणम्, किम् ? गुहागहनं गुहा च गहनञ्च गुहागहनम्, दरीमुखमित्येके व्याकुर्वन्ति। किं कुर्वन् ? विलिखन्नुत्किरन्, काम् ? मुनिशिलां कोटिदृषदम्, कैः ? नखरैर्नखैः, कया ? गजशङ्कया गजभ्रान्त्या, कथम्भूतां सतीम् ? गजगण्डघट्टितमदच्छुरितां करिकपोलसङ्घर्षमदजलविलिप्ताम्, किं कुर्वन् ? रसन् गर्जन्, पुनः किं कुर्वन् ? अभिपतन् सम्मुखं गच्छन्निति ॥३४॥

**तमुदीक्ष्य शैलमुपयन्रभसा ववृधे स्वयं स भुवनाभ्यधिकम्।**
**करकन्दुकाद्रिमिमतीव लघुं पुरुषोत्तमोऽतिपरुषोऽजगणत् ॥३५॥**

तमिति–ववृधे वृद्धिं गतवान्, कोऽसौ ? स पुरुषोत्तमो लक्ष्मणः, कथम् ? स्वयमात्मना, कथं यथा भवति ? भुवनाभ्यधिकम्, किं कुर्वन् ? उपयन् समीपं गच्छन्, कथम् ? रभसा औत्सुक्येन, किं कृत्वा ? पूर्वमुदीक्ष्यावलोक्य, कम् ? तं शैलं कोटिशिलानामधेयं भूधरम्। तथा अजगणत् अमंस्त, कः ? पुरुषोत्तमः, कम् ? गिरिम्, कथम्भूतम् ? लघुम्, कथम् ? अतीव अतिशयेन, कस्मात् ? करकन्दुकात् हस्तकन्दुकात्,

---

सुग्रीवादि वानरवंशी अथवा यादव राजाओंको यही विश्वास हुआ था कि श्रीजिनेन्द्रदेवका अभिषेक करनेके लिए उत्सुक इन्द्रके द्वारा पर्वतराज सुमेरुके ऊपरसे लायी गयी यह पाण्डुकशिला ही है, जो कि नरलोककी जनताके समीप करनेकी दृष्टिसे लायी गयी है ॥३२॥

स्वर्गवासी देव लोग वीणाके ऊपर सिद्ध परमेष्ठीकी स्तुतिको गाते हुए अपने अपने स्वर्गीय विमानोंसे निकले थे किन्तु इस ( सिद्ध ) कोटि-शिलापर उपस्थित हरि लक्ष्मण अथवा कृष्णके तेजको एक क्षण भी न सह सके थे। ठीक ही है श्रेष्ठ बली हरिसे अधिक बलवान् भी कोई हो सकता है ॥३३॥

हाथीके गण्डस्थलसे बहते मदजलसे लिपी हुई कोटिशिलापर हाथीकी आशंकासे उछलकर आया सिंह, नखोंसे उसे खरोंच कर शरणभूत गुफा अथवा घने वनमें चला जाता है ॥३४॥

उस पर्वतको देखकर ही बड़े वेगके साथ उसके निकट पहुँचते हुए अत्यन्त कठोर

कथम्भूतः सन् पुरुषोत्तमोऽजगणत् ? अतिपरुषोऽतिशयेन कठोरः । भारतपक्षे-पुरुषोत्तमो नारायणः । शेषं सुगमम् ॥३५॥

**जघनं निबध्य वसनेन घनं विनियम्य केशनिचयं शिरसि ।**
**भुवमुत्खनंश्चरणपार्ष्णितलैः स चचाल मल्ल इव वल्गु नदन् ॥३६॥**

जघनमिति-चचाल चलति स्म, कोऽसौ ? स लक्ष्मणः । भारतपक्षे-स विष्णुः, क इव ? मल्ल इव, किं कुर्वन् ? वल्गु नदन् मधुरं गर्जन्, पुनः किं कुर्वन् ? उत्खनन्नुल्लिखन्, काम् ? भुवं वसुन्धराम्, कैः कृत्वा ? चरणपार्ष्णितलैः, किं कृत्वा ? विनियम्य दृढं नियन्त्र्य, कम् ? शिरसि मस्तके केशनिचयम्, किं कृत्वा ? पूर्वं निबध्य नियन्त्र्य, किम् ? जघनं नितम्बं कटिप्रदेशम्, केन ? वसनेन वस्त्रेण, कथं यथा भवति ? घनं गाढमिति ॥३६॥

**पदघातजातदरि मुक्तधरं स धराधरं सुकृतवान्कृतवान् ।**
**विजहाति वा बलवता निहतः श्लथमण्डलः किल न कः पृथिवीम् ॥३७॥**

पदेति-कृतवान् विहितवान्, कोऽसौ ? स विष्णुः, कम् ? धराधरं शैलम्, कथम्भूतम् ? मुक्तधरं मुक्ता धरा येन तम्, कथं यथा भवति ? पदघातजातदरि पदघातेन जाता दरी यस्मिन्मोचनकर्मणि तत्तथोक्तं यथा, कथम्भूतः स विष्णुः ? सुकृतवान्, वाऽथवा, युक्तमेतत्, किल लोकोक्तौ, श्लथमण्डलो भूत्वा को न पृथिवीं विजहाति, अपि तु सर्वोऽपि परित्यजति, कथम्भूतः सन् ? निहतः, केन ? बलवता बलिनेति ॥३७॥

**स दरीमुखेन नतकुब्जतनुः प्रविशन्नधस्पदममुष्य गिरेः ।**
**समवैमि दर्शितवराहगतिर्गतवान्वराह इति नाम तदा ॥३८॥**

स इति-समवैमि जानेऽहं तदा तस्मिन्काले गतवान्, कोऽसौ ? स विष्णुः, किम् ? नामाख्याम्, कथमिति ? वराह इति, कथम्भूतः सन् ? दर्शितवराहगतिः प्रकटितदंष्ट्रिवृत्तिः, किं कुर्वन् सन् ? प्रविशन्, किम् ? अधः पदमधोभागम्, कस्य ? अमुष्य अस्य गिरेः, केन ? दरीमुखेन कथम्भूतो भूत्वा ? नतकुब्जतनुः नता चासौ कुब्जा सङ्कुचिता तनुर्यस्य सः ॥३८॥

**उरसा निपीड्य भुजयोर्द्वितयं परितः प्रसार्य परिवार्य शिलाम् ।**
**समुदक्षिपद्वरविवाहशिलामिव गोमिनीं परिणिनीषुरसौ ॥३९॥**

उरसेति-समुदक्षिपदुन्नीतवान्, कोऽसौ ? असौ विष्णुः, काम् ? शिलाम्, कामिव ? वरविवाह-

---

पुरुषोत्तम लक्ष्मण अथवा कृष्ण अपने आप ही सारे विश्वसे भी अधिक सोत्साह हो गये थे । तथा वह शिला उनको हाथकी गेंदसे भी बहुत छोटी प्रतीत हुई थी ॥३५॥

परिधान वस्त्रके द्वारा कमर तथा जाँघोंको कसकर, माथेपर बालोंको जकड़कर बाँधके, भूमिको पैरोंके तलुओंसे खोदता हुआ तथा मधुर मधुर बड़बड़ाता हुआ वह लक्ष्मण अथवा कृष्ण कोटिशिलाकी ओर बढ़ा आ रहा था ॥३६॥

विशाल पुण्यके स्वामी लक्ष्मण अथवा कृष्णने चरणोंके आघातसे ही फटते हुए उस पर्वतको भूमिसे अलग कर दिया था । उचित ही है क्योंकि जिसकी आधारभूमि शिथिल हो जाय तथा प्रबल विरोधीके द्वारा आक्रान्त हो तो कौन ऐसा है जो उखड़ न जाय [ जिस राजाका अपना सामन्तमण्डल दुर्बल अथवा उदासीन हो तथा प्रबल शत्रुके प्रहार हो रहे हों वह भी अपने राज्यसे च्युत हो जाता है ] ॥३७॥

शरीरको मोड़कर कुब्जेकी तरह गुफामेंसे इस कोटिशिलाके पर्वतके नीचेके भागमें घुसते हुए विष्णु ( लक्ष्मण तथा कृष्ण )ने यतः सूकरकी चालका प्रदर्शन किया था अतएव इसी समयसे इनका भी नाम वराह पड़ गया होगा ऐसा मैं समझता हूँ ॥३८॥

दोनों भुजाओंको पूरा फैला कर छातीसे चिपकाकर कोटिशिलाको उठाकर इस

शिलामिव, कथम्भूतः ? गोमिनीं लक्ष्मीं परिणिनीषुः परिणेतुमिच्छुः, किं कृत्वा ? समुदक्षिपत् ? परिधार्य सामस्त्येन धृत्वा, किं कृत्वा ? पूर्वं प्रसार्य, किम् ? भुजयोर्बाह्वोः द्वितयं युगम्, कथम् ? परितः सामस्त्येन पुनर्निपीड्य, केन ? उरसा वक्षसा ॥३९॥

कृतपाणिपीडनविधिः प्रथमं पुरुषोत्तमेन समुदूढतनुः
विरराज कोटिकशिला भयतः परिकम्पिता नववधूरिव सा ॥४०॥

कृतेति–विरराज शुशुभेतराम्, काऽसौ ? सा कोटिशिला, कथम्भूता सती ? पुरुषोत्तमेन विष्णुना समुदूढतनुः समुद्धृतमूर्त्तिः, पुनः कृतपाणिपीडनविधिः, कथम् ? प्रथमम्, पुनरपि कथम्भूता ? भयतः परिकम्पिता, केव विरराज ? नववधूरिव, कथम्भूता ? समुदूढतनुः, केन ? पुरुषोत्तमेन नरप्रधानेन सम्भोगचातुरीचतुरेण, पुनः प्रथमं कृतपाणिपीडनविधिः विहितपरिणयनविधाना ॥४०॥

परितः पतद्भुजगपङ्क्तिरसौ गलितान्त्रजालजटिलेव बभौ ।
परिभिन्ननिर्झरजला हरिणा विधृतानिलेन घनमूर्त्तिरिव ॥४१॥

परित इति–असौ कोटिशिला बभौ । केव ? गलितान्त्रजालजटिलेव च्युतान्त्रमालाजटावलम्बिनीवेत्यर्थः, कथम्भूता सती ? पतद्भुजङ्गपंक्तिः क्षरत्सर्पश्रेणिः, कथम् ? परितः सामस्त्येन, पुनः परिभिन्ननिर्झरजला स्रवन्निर्झरपानीया, पुनः हरिणा विधृता, केव ? अनिलेन विधृता घनमूर्त्तिरिव मेघमूर्त्तिरिव ॥४१॥

दिवि दुन्दुभिः प्रणिननाद दिवः कुसुमाञ्जलिः प्रणिपपात तथा ।
तमुदीक्ष्य विस्मयमिवोच्चलितास्तरवोऽपि पुष्पमभितश्चकरुः ॥४२॥

दिवीति–दिवि गगने दुन्दुभिः देवतूर्यं प्रणिननाद ध्वनितवान्, तथा कुसुमाञ्जलिः पुष्पवृष्टिः दिवः गगनात् प्रणिपपात, तथा तरवो वृक्षाः अपि अभितः सामस्त्येन पुष्पं चकरुः विक्षिप्तवन्तः । अत्र जात्यपेक्षयैकवचनम् । क इवोत्प्रेक्षिताः, तं विष्णुम् उदीक्ष्य विलोक्य विस्मयमाश्चर्यम् उच्चलिता इव ॥४२॥

द्विषतां भयेन सुहृदां प्रमुदा द्युनिवासिनामतिशयेन हरेः ।
अपि साहसैरभवदुद्धृषितं ननु वस्त्वनेकविधमेकविधम् ॥४३॥

द्विषतामिति–अपिशब्दः समुच्चये । द्विषतां शत्रूणां भयेन उद्धृषितं रोमाञ्चितम् अभवत् जातम्,

---

लक्ष्मण अथवा कृष्णने कोटिशिलाको उसी प्रकार उठा दिया था जैसे लक्ष्मीके साथ विवाह करनेको उद्यत विष्णुने विवाहशिलाको उठाया था ॥३९॥

पुरुषोत्तम लक्ष्मण अथवा कृष्णकी भुजाओं-द्वारा कसके दबायी गयी, और गोदमें उठायी गयी वह कोटिशिला काँपती हुई [ पाणिग्रहण होनेके बाद पहिले-पहिले आलिंगन की गयी अतएव भयसे काँपती हुई ] नव वधूके समान सुशोभित हुई थी ॥४०॥

निकलकर चारों ओर भागते हुए साँपोंके गुच्छोंके कारण यह कोटिशिला ऐसी लगती थी मानो इसकी आँतें ही फैल गयी हैं। लक्ष्मण अथवा कृष्णके द्वारा उठानेसे सब तरफ फूटकर बहते झरनोंके पानीके कारण वह शिला वायुसे उड़ाये गये मेघके समान प्रतीत होती है ॥४१॥

मूर्तिमान आश्चर्यके समान बढ़ते हुए लक्ष्मण अथवा कृष्णको देखकर स्वर्गमें देवोंकी दुन्दुभियां गरज उठी थीं, आकाशसे पुष्पवृष्टि हो पड़ी थी तथा वृक्षोंने भी स्वयमेव सर्वत्र पुष्पोंको बिखेर दिया था ॥४२॥

आतंकके कारण शत्रुओंके रोम खड़े हो गये थे, हर्षातिरेकमें मित्रोंका शरीर पुलकित हो उठा था, आश्चर्यकी अतिने स्वर्गवासी देवोंको रोमांच ला दिया था तथा अपने साहसकी

तथा सुहृदां प्रमुदा आनन्देन, तथा द्युनिवासिनां देवानाम् अतिशयेन आश्चर्येण, तथा साहसैधैर्यैः हरेः विष्णोः, युक्तमेतत्, ननु अहो जायते, किम् ? वस्तु एकविधं सदनेकविधमिति ॥४३॥

**अवलोक्य तं कलकलं मुमुचुर्दिशि खेचरा जितशिलोद्धरणम् ।**
**सहधर्ममानितनया विततं प्रविजेष्यसे रिपुमपीति जगुः ॥४४॥**

अवेति—खेचराः सुग्रीवादयो विद्याधराः कलकलं कोलाहलं दिशि मुमुचुः, किं पूर्वं कृत्वा ? तं लक्ष्मणं जितशिलोद्धरणं जितं शिलाया उद्धरणं येन तं अवलोक्य, कथम्भूताः ? सहधर्ममानितनयाः सह युगपत् परस्परव्यभिचारितायाः परित्यागात् धर्मेण विनयलक्षणेन मानितो नयो नीतिः गृहाश्रमलक्षणो येषां ते तथोक्ताः, अथवा धर्मेण शिष्टपरिपालनदुष्टनिग्रहलक्षणेन मानितो नयो नीतिर्येषां ते 'शिष्टानां प्रतिपालनं दुष्टानां निग्रहो राज्ञां धर्मो न तु शिरोमुण्डनं, जटाधारणं तीर्थात्तीर्थान्तरगमनं चे'ति वचनात् । अपिशब्दोऽत्र समुच्चयार्थः । तथा जगुरुक्तवन्तः, कथम् ? इति विततम् अनवरतं विजेष्यसे, कः ? त्वम्, कम् ? रिपुं रावणम्, कथम् ? सह एकहेलया ।

भारतीयपक्षे—¹धर्ममानितनयाः धर्मस्य पाण्डुनरेन्द्रस्य मानिनः मानवन्तः गर्विष्ठाः तनयः पुत्राः पाण्डवाः रिपुं प्रविजेष्यसे इति जगुः । शेषं समम् ॥४४॥

**प्रतिरोप्यतां तदियमत्र शिला भवितासि शत्रुकुलनिर्दलनः ।**
**प्रतिशुश्रुवानिति वचः सुहृदां समतिष्ठिपत्पुनरिमां स हरिः ॥४५॥**

प्रतिरोप्यतामिति—प्रतिशुश्रुवान् अङ्गीकृतवान्, किं ? सुहृदां वचो वचनम्, कथम् ? इति, तत्तस्मात् प्रतिरोप्यतां स्थाप्यताम्, का ? इयं शिला, क ? अत्रास्मिन् स्थाने, यतो भवितासि, कः ? कथम्भूतः ? शत्रुकुलनिर्दलनः रिपुवंशावमर्दी, पुनः पश्चात् समतिष्ठिपत् प्रतिरोपयामास, कः ? स हरिर्लक्ष्मणः, काम् ? इमां शिलाम्, भारतपक्षे—हरिर्नारायणः ॥४५॥

**सरसीजलप्लवहिमस्तमसौ द्विपदानसौरभमथानुभवन् ।**
**मृगनाभिगन्धमपि गन्धवहः सभयं वनेचर इवाभिययौ ॥४६॥**

सरसीति—अभिययौ सम्मुखं गतवान्, कः ? असौ गन्धवहो वायुः, कम् ? तं विष्णुम्, कथम् ? सभयं यथा, कथम्भूतः गन्धवहः ? सरसीजलप्लवहिमः जलाशयपयःपूरशीतलः, किं कुर्वन् ? अनुभवन्,

---

लीनतासे स्वयमेव लक्ष्मण तथा कृष्ण भी प्रफुल्लित थे । इस प्रकार एक ही वस्तुने अनेक रूप धारण किये थे ॥४३॥

सफलतापूर्वक कोटिशिलाका उद्धरण करते हुए उस लक्ष्मणको अथवा कृष्णको देखकर आकाशचारी देवों और विद्याधरोंने दशों दिशाओंको जयके कोलाहलसे गुंजा दिया था, धर्मपूर्वक नीति-मार्गका पालन करनेके कारण [ धर्मराज पाण्डुके स्वाभिमानी पुत्रोंके साथ ] निश्चित ही आप शत्रुओंको पूर्ण रूपसे जीतेंगे यह घोषणा की थी ॥४४॥

आप निश्चित ही शत्रु-कुलका सर्वनाश करेंगे अतएव इस शिलाको फिर यहाँ रख दीजिये । लक्ष्मण अथवा कृष्णने स्वर्गवासियोंके इन वचनोंको स्वीकार कर लिया था और कोटिशिलाको फिर यथास्थान रख दिया था ॥४५॥

जलाशयोंके जलप्रवाहके स्पर्शके कारण शीतल, हाथियोंके मदजलकी सुगन्धिसे

---

१. मुमुचुः, के ? खेचराः देवाः, कम् ? कलकलम्, कस्याम् ? दिशि, कलकलाऽपेक्षयाऽत्र वीप्सा सम्भाव्यते । तेनायमर्थो लभ्यते दिशि दिशि । किं कृत्वा ? अवलोक्य, कम् ? तं विष्णुम्, कथम्भूतं ? जितशिलोद्धरणम्, अपि तथा धर्मं'—प०, द० ।

किम् ? द्विपदानसौरभं द्विरदमदामोदम् , अपिशब्दः समुच्चयं सूचयति तथा मृगनाभिगन्धं कस्तूरीपरिमलम् , क इव ? वनेचर इव भिल्ल इव, यथा वनेचरस्तं विष्णुम् अभियाति । अन्यत्समम् ॥४६॥

उत्खाततरोपणमिदं निजमेव पुंसां न्याय्यं व्रतं तदनुपालय पालनीयम् ।
इत्यग्रजस्य वचनं प्रतिमान्य तुष्टस्तुष्टाव सिद्धपदपंक्तिमसावुपेन्द्रः ॥४७॥

उत्खातेति—उपेन्द्रो लक्ष्मणोऽग्रजस्य रामस्य वचनं प्रतिमान्य अङ्गीकृत्य तुष्टो हृष्टः सन् सिद्धपदपंक्तिं सिद्धं पदं येषां ते सिद्धपदाः तेषां पंक्तिं मुक्तश्रेणीं तुष्टाव स्तौति स्म । कथं वचनम् ? इति, उत्खाततरोपणम् उन्मूलितप्रत्यवस्थापनमेव व्रतं पालनीयम् , कथम्भूतम् ? निजमात्मीयम् , केषाम् ? पुंसां पुरुषाणाम् , पुनः कथम्भूतम् ? न्याय्यं न्यायादनपेतं तत् अनुपालय । भारतपक्षे—उपेन्द्रो विष्णुः, अग्रजस्य बलभद्रस्येति[1] ॥४७॥

योऽधः स्थितोऽशोकतरोरभासीत्तद्वृक्षमूलीयमहाव्रतस्य ।
फलं यतिभ्यः प्रथयन्निवार्हन्वन्द्यः सुराणां स पुनः पुनातु ॥४८॥

य इति—सः अर्हन् पुनातु पवित्रीकरोतु, कथम्भूतः ? सुराणां देवानां पुनः वारं वारं वन्द्यः स्तुत्यः । पुनः कथम्भूतः ? अशोकतरोः पिण्डीद्रुमस्य अधः अधोभागे स्थितः, किं कुर्वन्निव ? यतिभ्यः फलं प्रथयन्निव, यः अभासीत् रेजे । कस्य फलम् ? तद्वृक्षमूलीयमहाव्रतस्य, वृक्षस्य मूलं हितं यस्य स वृक्षमूलीयः, स चासौ वृक्षमूलीयश्च तद्वृक्षमूलीयः तस्य महाव्रतं तस्य लोकप्रसिद्धस्य वृक्षमूलनिवासिनो मुनिगणस्य महाव्रतमित्यर्थः[2] ॥४८॥

बोधाम्भोधौ यः समाधीन्दुवृद्धे सिद्धेरुच्च्यं कर्तुमिच्छन्निवर्द्धिम् ।
निन्ये मान्यं साधु रत्नत्रयं नः सिद्धः सिद्धां कार्यसिद्धिं करोतु ॥४९॥

बोधेति—करोतु विदधातु स सिद्धो मुक्तात्मा, काम् ? कार्यसिद्धिं, कार्यं मोक्षलक्षणम् , सिद्धिः प्राप्तिः ज्ञप्तिर्वा, कार्यस्य सिद्धिः कार्यसिद्धिस्ताम् , केषाम् ? नोऽस्माकम् , कथम्भूतां कार्यसिद्धिम् ? सिद्धां पूर्वापरप्रमाणबाधापरित्यागाद्युक्तियुक्तचेतसां पुंसां प्रतीतिशिखरिशिखरमारूढाम् । यो निन्ये नीतवान् , किम् ? रत्नत्रयं सम्यग्दर्शनज्ञानचारित्रस्वभावम् , काम् ? ऋद्धिं वृद्धिम् , क ? बोधाम्भोधौ, बोधः अवगमविगमसन्माज्ञानातिशयः स बोधाम्भोधिः तस्मिन् केवलज्ञानसमुद्रे, कथम्भूते ? समाधीन्दुवृद्धे क्रोधादिचतुष्टयजनितचित्तकालुष्यपरित्यागाद्यदात्मनः प्रसन्नता स समाधिः, स एवेन्दुः तेन वृद्धे, कथम्भूतं रत्नत्रयम् ? साधु साधूनां मोक्तुमिच्छूनां योग्यत्वात्साध्वित्यभिधीयते । अथवा आत्मीयदोषैः परित्यक्तत्वात्साधु । पुनः कथम्भूतम् ? मान्यं

---

व्याप्त तथा कस्तूरी मृगकी नाभिके गन्धसे सुगन्धित पवन उस लक्ष्मण अथवा कृष्णके सामने भयके कारण भीलके समान धीरे-धीरे चल रहा था ॥४६॥

आदर्श पुरुषोंका यह अपना न्यायोचित तथा सब प्रकारसे पालने योग्य व्रत है कि जिसे उखाड़ दिया है उसकी पुनःस्थापना कर दें अतएव आप भी इसका पालन करिये। ज्येष्ठ भाई राम या बलरामकी इस सम्मतिको उपेन्द्रने स्वीकार कर लिया था और बड़े संतोषके साथ सिद्धपरमेष्ठीकी चरणपंक्तिकी स्तुति की थी ॥४७॥

समवशरणमें अशोक वृक्षके नीचे विराजमान होनेसे दर्शनीय तथा अनन्त सुख रूपी मोक्षके मूलभूत महाव्रतोंके सुफलको यतियोंको देता हुआ सदृश वह अर्हन्त परमेष्ठी हमारा वन्द्य है । वही देवोंको भी पवित्र करें ॥४८॥

कषाय परित्यागसे उत्पन्न चित्तकी निर्मलतामय समाधि रूपी चन्द्रमाके द्वारा ज्वारको प्राप्त केवलज्ञानरूपी समुद्रमें जिसने अमूल्य सम्यग् दर्शन-ज्ञान—चरितमय रत्नत्रयकी

---

१. वसन्ततिलकावृत्तम् । २. उपजातिवृत्तम् ।

सुरोरगनरेन्द्राणां पूज्यम्, किं कुर्वन्निव रत्नत्रयं हृदि बिभ्रे। इच्छन्निव, किं कर्तुम्? कर्तुं विधातुम्, किम्? कर्ण्यं भूषणम्, कस्याः? सिद्धेः मुक्तिललनाया इति ॥४९॥

तथाचार्यं चर्यापरिणतमुपाध्यायमखिल-
श्रुतोपाध्यायं तं बहुविधतपःसाधनपरम्।
स्तुवे साधुं साधु स्थितिजननिरोधव्यतिकरं
सदा पश्यत्प्राहुस्त्रितयमिदमेव त्रिपुरुषम् ॥५०॥

तथेति–तथा द्वयोरर्हत्सिद्धयोराशीरूपतया स्तवनप्रकारेण स्तुवे स्तवीमि, कम्? आचार्यं सूरिम्, कथम्भूतम्? चर्यापरिणतं चर्याज्ञानदर्शनचरणतपोवीर्याचाराः पञ्च, चर्याभिः परिणतस्तं चर्यापरिणतं पञ्चाचारेषु अज्ञानवासनावासितान्तःकरणतया जलतैलवदुपर्युपरि वर्त्तमानं जनं परिणामयंतमात्मस्वरूपोपलब्धिलक्ष-मित्यर्थः। तथा स्तुवेऽहम्, कम्? उपाध्यायं पाठकम्, कथम्भूतम्? अखिलश्रुतोपाध्यायं समस्तागमस्योपदेष्टारम्, तथा स्तुवेऽहम्। कम्? तं साधुं संसारसागरसंसरणसरागपरिणामबहिर्मुखत्वादन्तर्मुखाकारतयाऽऽत्मानमवलोकमानः तद्रूपतया परिणमन् बहिर्भवेषु संयोगतामापन्नेषूदासीनतामवलम्बमानः साधुरभिधीयते। कथम्भूतं साधुम्? बहुविधतपःसाधनपरं बहुविधं बाह्याभ्यन्तरप्रकारम्, बहुविधं च तत्तपश्च बहुविधतपस्तत्साधनं च हेतुः हेयं हेयरूपतयोपादेयमुपादेयतया विवेचकं ज्ञानं साधनमित्युच्यते, बहुविधतपश्च साधनञ्च बहुविधतपःसाधने, ते परे परमोत्कर्षं प्राप्ते यस्य स तथोक्तस्तम्, अतः कारणात् प्राहुर्वदन्ति, के? विद्वज्जनाः, किम्? तदिदं त्रितयम्, किमेव प्राहुः? त्रिपुरुषं त्रयाणां पुरुषाणां समाहारस्त्रिपुरुषं हरिहरहिरण्यगर्भम्, किं कुर्वत्? पश्यत् अवलोकमानम्, कम्? स्थितिजननिरोधव्यतिकरम्, स्थितिः ध्रौव्यम्, जन उत्पादः, निरोधो व्ययः, स्थितिश्च जनश्च निरोधश्च स्थितिजननिरोधास्तेषां व्यतिकरः सम्बन्धो यस्य पदार्थसार्थस्य तत्तथोक्तम् उत्पादव्ययध्रौव्यात्मकं सदित्यर्थः। कथं यथा भवति? साधुपूर्वापरप्रमाणबाधाविषयतायाः परित्यागादात्मप्रतीतिविषयमन्दिरं यथा, कथम्? सदा सर्वकालम्, अत्र तात्पर्यमभिधीयते, प्रबोधकत्वाद्ब्रह्मार्गान्मार्गेष्वारोपकाच्छीलात् प्रच्यवमानानां शीले प्रत्यवस्थाप्यत्वाद्विनेयानां कारुण्यबुद्ध्याप्रतिपालकः स्यात्तस्य तथाविविधतपसा विविधकर्मभस्मीकरणात्साधुः हरोऽभिधीयते, कषायदैत्यानां क्षयकारकत्वात्तस्येति शेषः[1] ॥५०॥

इत्युच्चकैः स्तुतिशतं विरचय्य विष्णु-
र्नामालिखन्सुरगणैर्जहसे शिलायाम्।
द्वीपाम्बुराशिकुलपर्वतदेवलोक-
लोकान्तरेषु लिखितं किल केन वेति ॥५१॥

इतीति–जहसे हसितः, कः? विष्णुः, कैः? सुरगणैः देवसमूहैः, किं कुर्वन्? शिलायां दृषदि नाम आलिखन् उत्किरन्, किं कृत्वा? पूर्वं विरचय्य कृत्वा, किम्? स्तुतिशतम्, कथम्? उच्चकैरतिशयेन,

भलीभाँति वृद्धि, मुक्तिरूपी वल्लभाके आभूषण बनानेके लिए की है वह सिद्ध परमेष्ठी हमारी अनन्त कार्यसिद्धि अर्थात् मोक्षके साधक हों ॥४९॥

ज्ञान, दर्शन, चरित्र, तप-वीर्य पंचाचारके आचरणमें आचार्य परमेष्ठीको, समस्त शास्त्रोंके समीचीन उपदेशक उपाध्याय परमेष्ठीको, तथा अनेक प्रकारके बाह्य तथा अभ्यन्तर तपकी साधनामें लीन साधु परमेष्ठीकी भी स्तुति करता हूँ। ध्रौव्य-उत्पाद-व्ययकी प्रक्रियाको सदा भलीभाँति समझनेवाली यह त्रिपुटी ही वास्तव ब्रह्मा-विष्णु-महेश त्रिपुरुष हैं ॥५०॥

इस प्रकार प्रगाढ़ श्रद्धापूर्वक सैकड़ों स्तुतियां करनेके बाद लक्ष्मण अथवा कृष्ण

---

1. -त्मामवलम्बी मुनिः सा–ध०, द०। 2. शिखरिणीवृत्तम्।

कथम् ? इत्युक्तप्रकारेण, तद्यथा किलेतिशब्द[1]ऽप्याश्चर्ये खेदे वा, केनेति शब्दोऽनुयोगार्थो ग्राह्यः वा अथवा केन लिखितं किम् ? नाम, केषु द्वीपाम्बुराशिकुलपर्वतदेवलोकलोकान्तरेषु द्वीपं समुद्रसमृद्धनगरपुरपत्तनादि, अम्बुराशयः समुद्राः, कुलपर्वताः उदयास्तमयभूधरादयः देवलोकः अमरावतीपुरी, लोकान्तरं मनुष्यलोकः, इतरेतराश्रयो द्वन्द्वः, तानि तथोक्तानि तेषु सुरगणानां प्रहासवचनमिदमिति' ॥५१॥

इत्थं हिरण्यकशिपूदयपक्षपाती
नारायणः पथि बभूव निवर्तमानः ।
सिद्धाभिपूजनविशेषविवृद्धतेजाः
श्रीवर्धनं जयकरं विनयं निराहुः ॥५२॥

इति श्रीधनञ्जयकविविरचिते राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये लक्ष्मणवासुदेवयोः कोटिशिलोद्धरणकथनो नाम द्वादशः सर्गः ॥१२॥

इत्थमिति–बभूव जज्ञे, कोऽसौ ? नारायणो विष्णुर्लक्ष्मणः, कथम्भूतः ? निवर्त्तमानो व्याघुटन्, क ? पथि मार्गे, पुनः कथम्भूतः ? हिरण्यकशिपूदयपक्षपाती हिरण्यं काञ्चनम्, कशिपू ग्रासाच्छादने, उदयः अभ्युदयः, हिरण्यं च कशिपू च उदयश्च हिरण्यकशिपूदयाः तेषां पक्षपातोऽस्यास्तीति सः तथोक्तः, बन्दिभ्यो वंशस्तुतिकरणेन कनकग्रासाच्छादनविभूतीनां दातेति भावः । पुनः कथम्भूतः ? सिद्धाभिपूजनविशेषविवृद्धतेजा आदावेव तेजस्वी सिद्धाभिपूजनाद्विशेषेण वृद्धं तेजो यस्य स तथेति, कथम् ? इत्युक्तप्रकारेण, युक्तमेतन्निराहुर्वदन्ति, के ? विद्वज्जनाः, कम् ? विनयं प्रश्रयम्, कथम्भूतम् ? जयकरम्, पुनः श्रीवर्द्धनमिति ।

भारतीये–इत्थमुक्तप्रकारेण, सिद्धाभिपूजनविशेषविवृद्धतेजा भूत्वा नारायणो निवर्त्तमानः, पथि बभूव, कथम्भूतः सन् ? हिरण्यकशिपूदयपक्षपाता हिरण्यकशिपुर्नाम दैत्यराजस्तस्योदयपक्षं पातयतीत्येवंशीलः स तथोक्तः, हिरण्यकशिपोः प्राणहर्तेत्यर्थः । अन्यत्समम् ॥५२॥

इति श्रीनिरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदी नाम दधानायां टीकायां लक्ष्मणवासुदेवकोटिशिलोद्धरणकथनं द्वादशः सर्गः ॥१२॥

---

शिलापर नाम लिखते हुए देवोंके द्वारा देखे गये थे । आश्चर्य है ! क्योंकि द्वीप, जलनिधि, कुलाचल, अमरपुरी, अथवा लोकान्तरमें कब किसने अपना नाम लिखा है ॥५१॥

सम्पत्ति (हिरण्य) सुख सामग्री (कशिपू) तथा समृद्धि (उदय) के पक्षका समर्थक लक्ष्मण अथवा हिरण्यकशिपु नामके दैत्यके उत्कर्षका समाप्तिकर्ता कृष्ण सिद्धशिला पर सांगोपांग सिद्ध परमेष्ठीकी पूजाके कारण लौटता हुआ मार्ग में अद्‌भुत रूपसे बढ़े तेजके स्वामी नरनायक हुये थे । क्योंकि विद्वज्जन भगवान्‌की विनयको लक्ष्मीका पोषक तथा विजयका कर्ता कहते हैं ॥५२॥

निर्दोष विद्याभूषणभूषित पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती श्रीमान् पण्डित विनयचन्द्र गुरुके प्रशिष्य, देवनन्दिके शिष्य, सकलकलाचातुर्य-चन्द्रिकाके चकोर नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें लक्ष्मण-वासुदेव कोटिशिलोद्धरण कथन नामक द्वादश सर्ग समाप्त ।

---

१. प्रश्नार्थो–प०, द० । २. वसन्ततिलकावृत्तम् ।

# त्रयोदशः सर्गः

स श्रीशैलोदीर्णबलेन प्रजिहानः स्थित्यादौत्यमथायं निरूढं हरिणोक्तः ।
वैदेह्यर्थं योजयतैको व्यवसायं तद्दूरक्षः स्थानमरातेरभियातः ॥१॥

स इति—सः श्रीशैलो हनूमान् अभियातः, उद्दिश्य गतवान्, किम् ? तत् आ विद्वदङ्गनाप्रसिद्धं स्थानं लङ्काख्यं पुरम्, कस्य ? अराते रावणस्य, कथम्भूतम् ? दूरक्षः, दुष्टानि रक्षांसि राक्षसा यत्र तत्, कथम्भूतोऽभियातः ? एकः एकाकी, पुनः कथम्भूतः ? हरिणा लक्ष्मणेन उक्तः, किं कुर्वता ? व्यवसायं निश्चयं योजयता प्रेरयता, किमर्थम् ? वैदेह्यर्थं विदेहानगरी तस्याम्भवा, अथवा विदेहो राजा तस्यापत्यं स्त्री वैदेही तदर्थम् सीतानिमित्तमित्यर्थः, किं कुर्वाणः ? प्रजिहानः प्राप्नुवन्, किं तत् ? त्यन्नाम हनूमानित्यभिधानम्, कथम्भूतम् ? निरूढम् आबालगोपालविख्यातम्, क्व ? स्थित्यादौ उत्पत्तिकालमारभ्य, कथम्भूतेन हरिणा ? अदीर्णबलेन पुष्टसामर्थ्येन ।

भारतीयः—नाम अभियातः, कोऽसौ ? स एकः श्रीशैलः श्रीशैलनामधेयः कश्चित् पुमान्, किम् ? तल्लोकप्रसिद्धं स्थानं राजगृहाख्यं पुरम्, कस्य ? अरातेर्जरासंधनामधेयस्य शत्रोः, किं कुर्वन् ? दौत्यं दूतकर्म प्रजिहानः, कथम्भूतं दौत्यम् ? स्थित्या निरूढं रूढिमत्, कथम्भूतः सन् ? हरिणा नारायणेन उक्तः, कथम्भूतेन हरिणा ? अदीर्णबलेन प्रौढप्रौढिमता पुनः कथम्भूतेन ? वै स्फुटं देह्यर्थं पुरुषार्थं व्यवसायमुद्यमं योजयता, कथम्भूतः श्रीशैलः ? दूरक्षो दुःखेन रक्षितुं शक्य इति[1] ॥१॥

दुर्गं राष्ट्रं तीर्थमरण्यं व्रजमायज्ञानञ्शत्रोश्चारमबुद्धः स्वयमन्यैः ।
स स्वीकुर्वन्कृत्यमकृत्यं व्युपजापैः स्थाने स्थानं स्वप्नमपीच्छन्प्रयतोऽभूत् ॥२॥

दुर्गमिति—स श्रीशैलः प्रयतः प्रयत्नपरः अभूदजनिष्ट, किं कुर्वन् ? आयन् आगच्छन्, किं तत् ? दुर्गं तथा राष्ट्रं तथा तीर्थं तथा अरण्यं तथा व्रजं घोषम्, किं कुर्वन् ? शत्रोः रिपोः चारं गतिं जानन्, कथम्भूतः ? अन्यैरपरैः स्वयमात्मना अबुद्धः अज्ञातः, किं कुर्वन् ? कृत्यं भेद्यम् अथवा अकृत्यमभेद्यममात्यादिकं व्युपजापैः सामादिभिः प्रयोगैः स्वीकुर्वन् उररीकुर्वन्, पुनः किं कुर्वन् ? स्थाने निरुपद्रवे प्रदेशे स्थितिं तथा स्वप्नमपि निद्रां चेच्छन् ॥२॥

अध्वान्तेऽसौ चेतसि वैरं प्रतिबन्धञ्ज्ञाता नीतेः संप्रतिमातामहतापम् ।
कुर्वन्धैर्येणावजितं तद्रिपुजातं साम्नायोज्य स्वामिनि सर्वंसहमेयः ॥३॥

---

वैदेहीके उद्धारके लिए अपने पूर्ण पुरुषार्थका प्रयोग करते हुए, प्रकृष्ट सामर्थ्यवान लक्ष्मणके द्वारा कहे गये, वृष्टिके प्रारम्भसे ही त्यत् ( हनूमान ) नामके विख्यात धारक वह पवनसुत दुष्ट राक्षसोंसे भरे शत्रु रावणकी पुरीको अकेले ही चल दिये थे [ पुरुषार्थके लिए पूर्ण प्रयत्नशील प्रबल बलशाली कृष्णके द्वारा प्रेरित कोई एक श्रीशैल नामक सज्जन परिस्थितियोंके कारण अत्यन्त नियमबद्ध दूतके कार्यके भारको लेकर अत्यन्त अरक्षित शत्रु जरासंधकी राजधानी राजगृहको चल दिये थे ] ॥१॥

वह किले, राष्ट्र, घाटों या तीर्थों, वनों, आभीर-पल्लियों को पार करता जाता था। शत्रुके गुप्तचरोंकी गतिविधिपर दृष्टि रखता था तथा शत्रुओंके लिए वह अज्ञात था, फोड़ने योग्य अथवा स्वामिभक्त शत्रुके लोगोंको साम, आदिके उपायोंसे वशमें करता हुआ, सुरक्षित स्थानपर रुकता तथा सोता हुआ वह श्रीशैल अपने दूत कर्ममें पूर्णरूपसे जुट गया था ॥२॥

---

1. सर्गेऽस्मिन्मत्तमयूरं वृत्तम् ।

अध्वान्त इति-संप्रति असौ श्रीशैलः अञ्जनासूनुः हनूमान् ऐयः गतवान्, किं कुर्वन् ? तत् जगद्विख्यातं रिपुजातं शत्रुसमूहं स्वामिनि रामे सर्वंसहं सर्वं सहत इति सर्वंसहम् आज्ञासहिष्णुं कुर्वन् विदधत्, किं कृत्वा ? पूर्वम् आयोज्य सम्बध्य, केन सह ? साम्ना सान्त्वेन प्रयोगेण, कथम्भूतं सत् ? अवजितम्, केन कृत्वा ? धैर्येण पौरुषेण तथा कुर्वन् मातामहतापं महेन्द्रराजस्य अञ्जनासुन्दरीतातस्य पश्चात्तापम्, क ? अध्वान्ते मार्गमध्ये, कथम्भूतः ? नीतेः ज्ञाता, किं कुर्वन् ? वैरं प्रतिबध्नन्, मम माता गर्भिणी सती निर्दयेनानेन महेन्द्रेण मन्दिरान्निर्घाटितेति वैरम्, क्व ? चेतसि मनसीति ।

भारतीय पक्षः—ऐयः प्राप्तवान्, कः ? असौ श्रीशैलनामधेयो दूतः कम् ? आपम् आपोऽस्मिन्देशे सन्तीत्यापः, तं सजलप्रदेशम्, केन ? महता गरिष्ठेन धैर्येण, किं कुर्वन् ? तद्रिपुजातम् अवजितं संतर्जितं सत् साम्ना पूर्वम् आयोज्य स्वामिनि विष्णौ सर्वं सहं कुर्वन्, कथम्भूतः श्रीशैलो दूतः ? संप्रतिमाता वर्त्तमानकालपरिच्छेदकः निश्चयवानित्यर्थः, पुनः नीतेर्ज्ञाता, पुनः किं कुर्वन् ? अध्वान्ते निर्मले चेतसि वैरं प्रतिबध्नन् ॥३॥

अव्यालोलङ्कायमानो यश ओजो वाञ्छन्नुद्यन्नीतिविदार्यप्रियवेषः ।
प्रेप्सुः शालं राजगृहं तं समतीतश्चक्रे लङ्कामाकुलवृत्तिं परमाजौ ॥४॥

अव्यालोलमिति—स हनुमान् लङ्कां लङ्कासुन्दरीनामधेयां वनमालिनः पुत्रीं परम् अत्यर्थम् आकुलवृत्तिम् आजौ संग्रामे चक्रे चकार, कथम्भूतः ? शालं प्राकारं समतीतः अतिक्रान्तः, किं कृत्वा ? पूर्वं विदार्य्य भङ्क्त्वा, कथम्भूतः सन् ? तत् विख्यातं राजगृहं राजमन्दिरं प्रेप्सुः प्राप्तुमिच्छुः, पुनः कथम्भूतः ? प्रियवेषः सतामाकारभूतः, पुनः अव्यालोऽदुष्टः सुहृदय इत्यर्थः, किं कुर्वन्, अयमानो गच्छन्, काम् ? लङ्कां लङ्कानामधेयां नगरीम्, किं कुर्वन् ? वाञ्छन्, किम् ? यशः तथा ओजः क्षात्रं तेजः तथा उद्यन् प्राप्नुवन् काम् ? नीतिं स्वं स्वमाचारम् लोका नीयन्ते प्राप्यन्ते यया सा नीतिः ताम् ।

भारतीयः—हे विदार्य्य विदाम् आर्य हे विद्वज्जनानां मध्ये गुणगणसमाश्रय श्रेणिक चक्रे कृतवान्, कः ? स श्रीशैलो दूतः, कम् ? परं शत्रुम्, कथम्भूतम् ? कामाकुलवृत्तिम् अभिलाषेणाकुलवृत्तिम्, क्व ? आजौ संग्रामे, कथम्भूतः ? समतीतो लङ्घितवान्, कम् ? तं सजलप्रदेशम्, पुनः शालं प्रेप्सुः, किं कुर्वन् ? राजगृहम् उद्यन् गच्छन् पुनः कामयमानोऽभिलपन्, किम् ? अव्यालोलं स्थिरतरं यशः तथा ओजः तथा नीतिम्, अलं वाञ्छन् ॥४॥

दारुप्राकारोऽयमुताहो रथकक्ष्या किंवाश्रीयं वारिधिवेला परिखा श्वित् ।
सौधा आलोल्लासितधूमाः किमु मेघाः श्वेता नीलान्किं सवमन्तीतीति शशङ्के ॥५॥

मार्गमें आये मातामह महेन्द्रराजके प्रति मन ही मन वैर भावको पुष्ट करता हुआ नीतिशास्त्र का पंडित वह हनुमान दृढ़ताके द्वारा ही पराजित शत्रुराजा समूह को साम के प्रयोग करने के पश्चात् अपने स्वामी रामके प्रति सर्वथा आज्ञाकारी बनाता हुआ चला आरहा था [ निर्मल चित्तमें वैरकी गांठ बांधता हुआ, नीतिज्ञ, सर्वोत्तम अनुमान कर्ता, अपने असीमित धैर्यके द्वारा ही पराजित शत्रुओंको साम नीति द्वारा स्वामी कृष्णका पूर्ण अनुयायी बनाता हुआ उस प्रदेशमें पहुँचा था जो जलबहुल है ॥३॥

लंकापुरीको जाते हुये निष्कपट शिष्ट, कीर्ति और प्रतापके इच्छुक, उत्कृष्ट नीतिके ज्ञाता, शिष्ट तथा प्रिय वेषधारी तथा युद्धमें परकोटोको लांघ कर सर्वविदित राजभवनमें घुसनेके लिए उद्यत उस हनुमानने वनमालीकी पुत्री लंकासुन्दरीको अत्यन्त चंचल चित्त कर दिया था [ अत्यन्त स्थायी ( अव्यालोल ) यश और तेजकी अभिलाषा करता हुआ, समर्थ नीति व्यवहारका इच्छुक, प्रिय वेष श्रीशैल इस जलमय प्रदेशको पार करके परकोटेको लांघकर राजगृहमें प्रवेश कर रहा था । तथा उसने शत्रुको युद्धके लिए अत्यन्त लालायित कर दिया था ॥४॥

दार्विति–उताहो अयं दारुप्राकारः, अहो रथकटया रथसमूहः, किं वाश्वीयम् अश्ववृन्दम्, किं वा वारिधिवेला, इवत् किं वा इयं परिखा, किमु अहो किमिमे सौधाः गृहाः, कथम्भूताः ? जालोल्लासितधूपाः गवाक्षोद्गीर्णधूपधूमाः, किं वमन्ति किमुद्गिलन्ति, के ? मेघाः, कान् ? नीलाम्मेघान्, कथम्भूताः सन्तः ? श्वेताः शुभ्रा इति शशङ्के स इति ॥५॥

**निर्बद्धोच्चैरावतमुच्छीकरसेकं दृष्ट्वास्योच्चैरावणतुङ्गद्विपशालम् ।**
**जाता चेतस्यम्बुदबन्दीगृहशङ्का पुण्योपात्ता किं प्रभुशक्तिर्न करोति ॥६॥**

निर्बद्धेति–जाता, का ? अम्बुदबन्दीगृहशङ्का मेघानां कारागृहभ्रान्तिः, क्व ? चेतसि । कस्य ? अस्य हनूमतः, कथम् ? उच्चैरतिशयेन, किं कृत्वा ? पूर्वं दृष्ट्वा आलोक्य, किम् ? रावणतुङ्गद्विपशालं द्विपानां शाला द्विपशालं हस्तिशालं तुङ्गं च द्विपशालं तुङ्गद्विपशालं रावणस्य तत् तुङ्गद्विपशालं रावणतुङ्गद्विपशालम्, कथम्भूतम् ? उच्छीकरसेकम्, ऊर्ध्वं शीकराणां शुण्डोन्मुक्तजलकणानां सेको यत्र तदुच्छीकरसेकं पुनर्निर्बद्धोच्चैरावतम् उच्चश्चासावैरावत उच्चैरावतः निर्बद्धः उच्चैरावतो यत्र तन्निर्बद्धोच्चैरावतम्, युक्तमेतत्, पुण्योपात्ता प्रभुशक्तिः किं न करोति ? अपि तु सर्वं करोत्येव ।

भारतीयः–जाता, का ? अम्बुदबन्दीगृहशङ्का, क्व ? अस्य श्रीशैलनाम्नो दूतस्य चेतसि, किं कृत्वा ? पूर्वं दृष्ट्वा, किम् ? उच्चैरावणतुङ्गद्विपशालम् उच्चोन्नता ऐरावणवत्तुङ्गाः ये द्विपास्तेषां शाला यत्र तत्, कथम्भूतम् ? उच्छीकरसेकम्, पुनर्निर्बद्धोच्चैरावतम्, इरावत्यां भवा ऐरावता हस्तिनः, उच्चाश्च ते ऐरावताश्च उच्चैरावताः निर्बद्धा आलानिता उच्चैरावता यत्र तत्, शेषं पूर्ववत् ॥६॥

**दृष्ट्वा दम्यान्शृङ्खलबन्धेन किशोरानेवं ह्येतैः संप्रति पीडामपि नीतैः ।**
**दम्यन्तेऽन्ये स्वाम्युपकारैर्न तु नाथा जात्यस्येत्थं वृत्तिरुदात्तेति स मेने ॥७॥**

दृष्ट्वेति–मेने अमंस्त, कोऽसौ ? सः, कथम् ? इति दम्यन्ते, के कर्मतापन्नाः ? अन्ये शत्रवः, कैः कर्तृभिः ? एतैः किशोरैः, कथम् ? एवं स्वदमनप्रकारेण, कैः कृत्वा ? स्वाम्युपकारैः, कथम् ? संप्रति सांप्रतम्, कथम् ? हि स्फुटम्, कथम्भूतैरपि ? दम्यन्ते पीडां नीतैरपि, केन कृत्वा ? शृङ्खलबन्धेन, किं कृत्वा पूर्वं मेने सः ? दृष्ट्वा, कान् ? किशोरान् अश्वबालकान्, कथम्भूतान् ? दम्यान्, कथम् ? इत्थमनेन प्रकारेण न तु ते पुनर्दम्यन्ते, के ? नाथाः प्रभवः, कैः ? एतैः, युक्तमेतत्, जायते, का ? वृत्तिर्वर्तनम्, कस्य ? जात्यस्य जातिसमुद्भवस्य, कथम्भूता ? उदात्ता उत्कटा ॥७॥

**उद्यत्कक्षा गोपुरशालध्वजमाला मत्तालम्बालम्बनशाला समृदङ्गाः ।**
**तस्याधावत्तुङ्गतुरङ्गावबभासे राजन्यानां कन्दुकभूमिर्नगरी वा ॥८॥**

---

क्या यह लकड़ीका परकोटा है या रथोंकी विशाल पंक्ति है ? क्या यह अश्वसेना है या समुद्रका तट है अथवा परिखा है ? जालियोंसे धुआं निकालते हुए विशाल भवन हैं अथवा श्वेत मेघ नील नील जलराशिका वमन कर रहे हैं ? इस प्रकारसे वह सन्देहमें पड़ गया था ॥५॥

रावणकी ऊँची हस्तिशालामें ऐरावतके समान हाथी बँधे थे तथा वे अपनी सूँड़ोंसे जलबिन्दु बरसा रहे थे। इसको देखकर ही हनुमानको मन ही मन ऐसा लगा था कि वह मेघोंका कारावास है। पूर्व पुण्यसे प्राप्त प्रभुता क्या नहीं करती है [ इरावतीमें उत्पन्न तथा सूँड़से पानी उछालते हुए ऐरावत हाथी सदृश बड़े बड़े हाथियोंकी शाला ( उच्चैरावणतुंगद्विपशाला ) को देखकर दूत श्रीशैलको मनही मन ऐसा······है ] ॥६॥

साँकलोंमें बाँधकर वशमें किये गये तथा सिखाये गये बच्चा घोड़ोंको देखकर उस हनुमान या श्रीशैलके मनमें यह विचार हुआ था—इस समय इस प्रकारसे कष्ट दिये जानेपर भी स्वामीका कार्य करनेके लिए तत्पर इन घोड़ोंके द्वारा बादमें शत्रु भी इसी प्रकार पराजित किये जायँगे। फलतः यह उदात्त परम्परा इनकी जातिका ही गुण है ॥७॥

उद्यदिति–अवबभासे प्रतिभासते स्म, का ? कन्दुकभूमिः कन्दुकैः क्रीडा क्रियते यस्यां भूमौ सा कन्दुकभूमिः, केषाम् ? राजन्यानां राजपुत्राणाम्, कस्य ? तस्य हनूमतः श्रीशैलनाम्नो दूतस्य च, उद्यत्कक्षा गोपुरप्राकारयोरन्तर्भूमिः कक्षा उद्यन्ती कक्षा यस्याः सा पुनः गोपुरशालध्वजमाला गोपुरशालेषु ध्वजमाला यस्यां सा, पुनः मत्तालम्बालम्बनबाला मत्तालम्बानाम् आलम्बनं यस्यां ताः मत्तालम्बालम्बनाः मत्तालम्बालम्बना बाला यस्यां सा तथोक्ता, अवष्टम्भनकाष्ठावष्टम्भमुग्धाङ्गनेत्यर्थः, पुनः समृदङ्गा समर्दला पुनः आधावत्तुङ्गतुरङ्गा आधावन्तः तुङ्गाः तुरङ्गा यस्यां सा, केव ? नगरीव, विशेषणानि पूर्ववत् ॥८॥

**यत्रोद्वेगे मूर्छति शोकेनयमस्त्री तस्थौ दुःस्थं चाशुभवानीशसमेत्या ।**
**त्यक्त्वालङ्का राज्यविभोगं धनदोऽपि द्वेषी कारागारमसौ तन्निचचाये ॥९॥**

यत्रेति–निचचाये ददर्श, कः ? असौ हनुमान्, किम् ? तत् लोकप्रसिद्धं कारागारं बन्दीगृहम्, यत्र कारागारे तस्थौ स्थितवती यमस्त्री छाया नामधेया कृतान्तभार्या, कथम् ? दुस्थं दौस्थ्यं यथा, क्व ? उद्वेगे सति, कीदृग्विधे ? मूर्छति वृद्धिं याति, केन ? शोकेन शुचा, चकारः समुच्चयार्थः, तथा तस्थौ, का ? भवानी गौरी दुःस्थमिति क्रियाविशेषणम्, कथम्भूता ? ईशसमेत्या ईशानयुक्ता ; क सति ? उद्वेगे, किं कुर्वति ? मूर्छति, केन ? शोकेन, कथम् ? आशु शीघ्रम्, तथा तस्थौ, कः ? असौ धनदोऽपि द्वेषी, कथम् ? दुःस्थम्, किं कृत्वा ? पूर्वं त्यक्त्वा अपाकृत्य, कम् ? अलकाराज्यविभोगम् अलकानगरी तस्या राज्यविभोगं राज्यानुभवनम् । विन्दुच्युतकं, "यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् । नानुस्वारविसर्गौ च चित्रभंगाय सम्मतौ" इति वचनात् ।

भारतीये–असौ दूतः तत् कारागारं निचचाये ददर्श, यत्र कारागारे तस्थौ, कः ? द्वेषी शत्रुः, कथं यथा भवति ? अनयम् अन्याय्यप्रवेशम्, कथं यथा भवति ? दुःस्थं क्षुत्पिपासादिजनितबाधायां सत्यामन्नादीनामप्राप्तौ तदभिलाषमित्यर्थः, क्व सति ? शोके किं कुर्वति ? मूर्छति विदधति, तथा शोकादुद्वेगे च सति, कथम्भूतः सः ? अशुभवान्, कथम्भूतोऽपि सन् ? धनदोऽपि धनं ददातीति धनदः, अपिशब्दात् बन्धनात्पूर्वं स्थूलदातेत्यर्थः, किं कृत्वा ? पूर्वं त्यक्त्वा विहाय, किम् ? अलङ्काराज्यविभोगम् अलङ्काराः कङ्कणकुण्डलादिविभूषणानि, आज्यवयः षोडशवार्षिकाः कमनीयकामिन्यः, भोगः [1]कुङ्कुमकर्पूरचन्दनादिलक्षणः, अलङ्काराश्च आज्यवयश्च भोगश्च अलङ्काराज्यविभोगम्, कया ? ईशसमेत्या स्वामिसंगत्या जरासन्धादभिभवेनेत्यर्थः, पुनः कथम्भूतः ? असौ शस्त्रवान्, उक्तं च "सम्भोगकाकसा नित्यं घनपीनपयोधरा । षोडशाब्दा तु या नारी बुधैराज्यविरुच्यते" ॥९॥

---

दूतको राजपुत्रोंके गेंद खेलनेकी भूमि नगरीके समान ही सुन्दर लगी थी । क्योंकि प्रवेश द्वार और सीमा (परकोटा) पर ध्वजा तथा मालाएं लगी थीं, गोपुरके पासकी भूमि (कक्षा) विस्तृत थी, छज्जेके सहारेकी लकड़ियोंपर भी स्त्रियाँ खुदी थीं, मृदंग बज रहे थे तथा घोड़े लगातार इधर-उधर दौड़ रहे थे ॥८॥

इस हनुमानने रावणके कारागारको देखा था जिसमें विपत्तिमें पड़े ( अशुभवान् ) पतिके पास आकर यमकी पत्नी भावोद्वेगमें शोकके कारण मूर्छित हो जाती थी । तथा रावणका शत्रु कुबेर भी [1]अलकापुरीके राज्यके भोगोंको छोड़कर अत्यन्त कष्टकारक परिस्थितियोंमें पड़ा था [श्रीशैलने जरासंधका वह कारागार देखा था जिसमें जरासंधके सामने पड़नेका साहस ( भवानीके पति शिवजीकी पूजा ) करनेके कारण ही शत्रुलोग शीघ्र ही आभूषण, षोडशी युवतियाँ तथा समस्त भोगोंसे वंचित होकर बड़े कष्टसे रहते थे । पहिले पर्याप्त सम्पत्ति भेंट करनेपर भी अन्याय पूर्वक पकड़े गये ये शस्त्रसन्नद्ध राजा लोग अनुताप और शोकसे मूर्छित हो जाते थे] ॥९॥

---

१. कर्पूरकाश्मीरकम्बूनादिलक्षण–प०, द० ।

**सारङ्गाढ्यं संगतसत्त्वैरथयुक्तं रम्यं राजच्छत्रवितानैर्बहुफेनैः ।**
**बद्धोत्सेधं नीरविशालं नृपमार्गं गच्छन्गङ्गासागरसङ्गं स्मरति स्म ॥१०॥**

सारङ्गेति—स दूतः गङ्गासागरसंगं स्मरति स्म सुरसरित्सरित्पतिसङ्गमम् अचिन्तयत्, किं कुर्वन् ? गच्छन् अयमानः, कम् ? नृपमार्गं राजपदवीम्, कथम्भूतम् ? सारङ्गाढ्यं गजेन्द्रसमृद्धम्, पुनः रथयुक्तं स्यन्दनसमन्वितं पुनः रम्यं रमणीयम्, कैः ? संगतसत्त्वैः सं समीचीनं न्यायमार्गानुयायि गतं गमनं येषां ते संगताः संगताश्च ते सत्त्वाश्च संगतसत्त्वास्तैः नीतिमार्गानुसारिभिः प्राणिभिः शिष्टजनैरित्यर्थः, पुनः बद्धोत्सेधं बद्ध उत्सेधो यत्र स बद्धोत्सेधस्तं विरचितशोभमित्यर्थः, कैः ? राजच्छत्रवितानैः नरेन्द्राणामातपत्रसमूहैः अथवा छत्राणि च वितानानि च छत्रवितानानि राजन्ति च तानि छत्रवितानानि राजच्छत्रवितानानि तैः शोभमाना तपवारणचन्द्रोपकैरित्यर्थः, कथम्भूतैः ? बहुफेनैः फेनकल्पैः डिण्डीरपिण्डसदृशैरित्यर्थः, शुभ्रत्वाच्छत्राणां वितानानां च, पुनरपि कथम्भूतं राजमार्गम् ? नीरविशालं निर्गतो रविर्यस्मात् स नीरविः नीरविः शालो यत्र स नीरविशालः तं निर्गतसूर्यप्राकारं शालस्योच्चशृङ्गैर्गगनमार्गविलुप्तत्वाद्बहिःस्थितदिनकरमित्यर्थः, अथशब्दः प्रकारान्तरसूचकः, कथम्भूतं गङ्गासागरसङ्गम् ? सारङ्गाढ्यं चातकाढ्यम्, पुनः कथम्भूतम् ? सङ्गतसत्त्वैः मिलितमीनमकरादिजीवैः युक्तम्, पुनः रम्यं मनोहरम्, पुनः राजच्छत्रवितानैः राजत् छत्रवत् वितानं येषां तैः, बहुफेनैः प्रचुरडिण्डीरैः बद्धोत्सेधम्, पुनः कथम्भूतम् ? नीरविशालं नीरवीनां जलविहङ्गमानां शालो यत्र तम् ॥१०॥

**सांध्यं रागं रत्नमयूखैर्विदधानं क्षीराम्भोधेः सैकतमुद्यन्मकरीकम् ।**
**सैंहं पीठं निर्जयदास्थायुकमुच्चैरक्षोभीतं मागधसेव्यं व्यलुलोकत् ॥११॥**

सांध्यमिति—स हनूमान् तं रावणं व्यलुलोकत् अपश्यत्, कथम्भूतम् ? रक्षोभीतं रक्षोभिः परिवारितम्, पुनः मागधसेव्यं वन्दिनामास्तोतव्यम्, पुनः सैंहं सिंहानामिदं सैंहं पीठमासनं सिंहासनमित्यर्थः, आस्थायुकम् आस्थितम्, कथम्भूतं पीठम् ? उच्चैः उन्नतम्, किं कुर्वाणम् ? रत्नमयूखैः कृत्वा सांध्यं संध्याभवं रागं विदधानम्, पुनः क्षीराम्भोधेः दुग्धसमुद्रस्य सैकतं सिकतामयप्रदेशं निर्जयत् न्यक्कुर्वाणम्, कथम्भूतं सत् ? उद्यन्मकरीकम् उद्यन्त्यो मकर्यो यत्र तत् ।

भारतीयः—स दूतः मागधसेव्यं मागधानां क्षत्रियविशेषाणां सेव्यं तं जरासन्धं व्यलुलोकत्, कथम्भूतो दूतः ? अक्षोभी निःक्षोभः, कथम् ? उच्चैरतिशयेन, कथम्भूतं जरासंधम्, सैंहं पीठम् आस्थायुकम्, अन्यत् समम् ॥११॥

**दीर्घन्यस्तं हस्तमधिष्ठायुकमीषत् पीठीबद्धालाननिषण्णद्विपशोभम् ।**
**भूभृच्चूडाकोटिषु पादं निदधानं रागाक्रान्तं भानुमिवोच्चैरुदयस्थम् ॥१२॥**

कुलकेन व्याख्यास्यामः, दीर्घेति—स हनूमान् तं रावणमवोचत्, कथम्भूतम् ? अधिष्ठायुकम् अवष्टभ्योपविष्टम्, कम् ? हस्तम्, कथम्भूतम् ? दीर्घन्यस्तं दीर्घे न्यस्तः दीर्घन्यस्तस्तम्, कथम्भूतं रावणम् ? ईषत्पीठीबद्धालाननिषण्णद्विपशोभम् ईषत्पीठ्यां वेदिकायां पूर्वं निबद्धः पश्चादालाननिषण्णः स चासौ द्विपश्च तस्येव

---

हाथियोंसे व्याप्त, यथास्थान बँधे सिंहादि प्राणियोंसे सुन्दर, रथोंसे युक्त, घने फेनके समान राजाओंके छत्रोंके कारण चँदोवा युक्त पक्के बने लम्बे ऊँचे तथा पानीसे धुले राजमार्गसे जाते हुए हनुमान या श्रीशैलको गंगा तथा समुद्रके संगमकी याद आयी थी [ संगम भी चातकोंसे व्याप्त है, एकत्रित मीनादि प्राणियोंसे रम्य होता है, सुन्दर छत्रोंके समान फेन राशिसे युक्त तथा गहरा और जलचर पक्षियोंके गतागतसे युक्त होता है ] ॥१०॥

सब तरफ जड़े हुए रत्नोंकी किरणोंसे संध्याकी लालिमाको फैलाते हुए, उछलती हुई मकरियोंसे युक्त क्षीरसागरके सैकतके विजेता, उन्नत सिंहपीठपर विराजमान, राक्षसोंसे घिरे तथा बन्दियोंके द्वारा प्रशंसित रावणको हनूमानने देखा था [ – क्षोभहीन स्थिर तथा मगध देशके लोगोंसे सेवित उस जरासंधको श्रीशैलने देखा था ] ॥११॥

शोभा यस्य तम् अथवा ईषत्पीठीबद्धालानानिषण्णद्विपशोभमित्यादि क्रियाविशेषणम् , अत्र तात्पर्यार्थोऽयं सभायामुभये पार्श्वेऽपीषत्पीठीबद्धालाननिषण्णेषु मदवशात्स्वशिरोविधूयमानेषु द्विपेषु विषये गतागतं विदधानया कर्णमैत्रीं प्राप्तया भ्रूवल्लरीं ललाटशिखरं नयन्त्या दृश्या तरलनिरीक्षणाज्जनितशोभं यथा भवति, कथम्भूतं रावणम् ? उदयस्थम् उदयं प्राप्तम्, पुनः रागाक्रान्तम्, पुनः कथम्भूतम् ? भूभृच्चूडाकोटिषु नरेन्द्रमुकुटशिखरेषु पादं निदधानं स्थापयन्तम् , कमिव ? भानुमिव, सूर्यं यथा, कथम्भूतं भानुम् ? उदयस्थम् उदयगिरिशिखरगतम् , पुनः रागाक्रान्तं पुनः पादं किरणम् , जात्यपेक्षयैकवचनम् ; भूभृच्चूडाकोटिषु शिखरिशिखरेषु निदधानम् । भारतपक्षे—जरासन्धम् ॥१२॥

**स्त्रीणां शुक्लैः सामिकटाक्षैः सहपातं संगच्छद्भिश्चामरभारैः कृतशोभम् ।**
**कल्लोलानां मीनविलासैर्मिलितानां नुन्नं वेलाशैलमिवाब्धेः समवायैः ॥१३॥**

स्त्रीणामिति—कथम्भूतम् ? चामरभारैः प्रकीर्णकसमूहैः कृतशोभं कृता शोभा यस्य तम्, कथम्भूतैः ? स्त्रीणां शुक्लैः धवलैः सामिकटाक्षैः अर्द्धनेत्रापाङ्गैः सह पातं संगच्छद्भिः पतनं प्राप्नुवद्भिः, कमिव ? वेलाशैलमिव, कथम्भूतैः ? अब्धेः समुद्रस्य मीनविलासैः मत्स्यक्रीडनैः मिलितानां कल्लोलानां तरङ्गाणां समवायैः समूहैः नुन्नं प्रतिहतम् ॥१३॥

**श्रीवाग्देव्योर्वक्षसि वाचि स्थितिमत्योः कण्ठे हारं वास्तुकसीमेव वहन्तम् ।**
**मुक्तामालां मन्मथदोलामिव लोलां बिभ्राणाभिर्वारवधूभिः परिविष्टम् ॥१४॥**

श्रीवाग्देव्योरिति—पुनः कथम्भूतम् ? वारवधूभिर्विलासिनीभिः परिविष्टं परिवेष्टितम्, किं कुर्वन्तीभिः ? मुक्तामालां मौक्तिकदाम बिभ्राणाभिः दधानाभिः, कथम्भूताम् ? लोलां चञ्चलाम् , कामिव ? मन्मथदोलामिव रतिपतिहिन्दोलकमिव, किं कुर्वाणम् ? वहन्तं धरन्तम् , कम् ? हारम् , क्व ? कण्ठे ग्रीवायाम् , कामिव ? वास्तुकसीमेव[1], वसतिमर्यादामिव, कयोः ? श्रीवाग्देव्योः लक्ष्मीसरस्वत्योः, कथम्भूतयोः ? स्थितिमत्योः, क्व ? वक्षसि उरसि, वाचि वाण्यामिति क्रमेण ॥१४॥

**एवं वाक्यं विष्टरविष्टस्तमवोचद्यत्रानुक्तं नापि दुरुक्तं स मनोज्ञः ।**
**कालान्तेऽपि क्षोभमगच्छन्गुरुसत्त्वः पारावारः सोऽयमपूर्वश्चिरदृष्टः ॥१५॥**

एवमिति—स हनूमान् रावणं प्रति एवं वक्ष्यमाणप्रकारेण वाक्यमवोचत्—यत्र वाक्ये नास्ति किम् ? अनुक्तम् अथवा नाप्यस्ति, किम् दुरुक्तम्, चिरदृष्टः, कः ? सोऽयं रावणः कथम्भूतः ? अपूर्वः पारावारः, एवंविधः पारावारोऽपि भवति, कथम्भूतः सन् ? गुरुसत्त्वः स्थूलनक्रमकरादिजीवः, रावणः किंविशिष्टः ? गुरुसत्त्वः गुरु गरिष्ठं सत्त्वं पुरुषधर्मो यस्य सः, किं कुर्वन् ? अगच्छन् । कम् ? क्षोभम् , क्व सति ? कालान्तेऽपि सति प्रलयकालेऽपि, पुनः मनोज्ञः परिचितोपलक्षकः, पुनः विष्टरविष्टः आसनोपविष्टः ।

हाथको नीचे लटकाकर सिंहासनकी पीठपर सहारा लेकर बैठे रावणकी शोभा वैसी ही थी जैसी कि वेदीपर बाँधे गये और बादमें खूँटे (बाँधनेका स्तम्भ) के सहारे बैठे हाथीकी होती है। विकासको प्राप्त तथा सीताकी आसक्तिसे व्याप्त यह राजाओंके मुकुटोंपर भी [ उदयाचलपर आगत अरुणोदययुक्त तथा पर्वतोंके शिखरोंपर किरणें डालते ] सूर्यके समान चरणोंको रखता था ॥१२॥

सुन्दरियोंके आधे खुले नेत्रोंसे गिरते धवल कटाक्षोंके साथ-साथ ढुरते हुए चमरोंकी कान्तिसे उसकी शोभा ऐसी बढ़ गयी थी, जैसीकी तटवर्ती पर्वतकी उस समय होती है जब मछलियोंके झुण्डोंकी क्रीड़ायुक्त एक साथ उठती हुई लहरें उससे टकराती हैं ॥१३॥

क्रमशः वक्षःस्थल तथा वाणीमें निवास करती लक्ष्मी और सरस्वतीके निवासोंकी सीमा रेखाके समान कण्ठमें हार पहिने हुए और कामदेवके हिंडोलेके समान चंचल मुक्तामाला धारिणी वेश्याओंसे वह घिरा हुआ था ॥१४॥

---

१. सीमन्शब्दस्य स्त्रीत्वात् द्वितीयायां चिन्त्यमिदम् ।

भारतपक्षे—स दूतोऽवोचत् । शेषं समम् । कुलकम् ॥१५॥

**वृत्तस्कन्धः पत्रसमृद्धः शुचिशाखस्त्वं यैर्दृष्टः कामफलानां वितरीता ।**
**सन्निध्यातः कल्पतरुस्तैर्न च यैस्तैः प्रज्ञाचक्षुर्विक्रमशीलः परिपाता ॥१६॥**

वृत्तेति— दृष्टः , कः ? त्वं भवान् , कैः ? यैः पुरुषैः, कथम्भूतः ? वितरीता दाता, केषाम् ? कामफलानाम् , पुनः शुचिशाखः शुचयो निर्लाञ्छनाः शाखाः सोदरोदरजादयो यस्य सः, पुनः पत्रसमृद्धः प्रोत्तुङ्गतुरङ्गमादिवाहनाढ्यः, पुनः वृत्तस्कन्धः वृत्तौ स्कन्धौ यस्य स तथोक्तः, सन्निध्यांतोः दृष्टः, कः ? कल्पतरुः कल्पवृक्षः, कैः ? तैः पुरुषैः, कथम्भूतः कल्पतरुः ? शुचिशाखः शुचयोऽगुणगोचराः शाखा यस्य सः, पुनः पत्रसमृद्धः पलाशसम्भृतः, पुनः वृत्तस्कन्धः वर्त्तुलबुध्नः तथा न दृष्टः, कः ? त्वम् , कैः ? यैः पुरुषैः न दृष्टः, कः ? कल्पतरुः, कैः ? तैः पुरुषैः, पुनरपि कथम्भूतस्त्वम् ? प्रज्ञाचक्षुः, पुनरपि कथम्भूतः ? विक्रमशीलः, पुनरपि कथम्भूतः ? परिपाता प्रतिपालकः ॥१६॥

**सर्वस्यास्मिञ्जन्मनि जातस्य जनस्य द्वेषो दोषे प्रेमगुणे चेति निसर्गः ।**
**दुष्यो गुण्यः स्याच्च स येनाचरितेन प्रायस्तद्वेवेक्ति न कश्चित् कुरुते वा ॥१७॥**

सर्वस्येति—अस्मिन् जन्मनि इह संसारे, जातस्योत्पन्नस्य सर्वस्य समस्तस्य जनस्य दोषे द्वेषो जायते गुणे च प्रेम प्रीतिः जायते इति निसर्गः स्वभावः, च पुनः येनाचरितेन दोषगुणरूपेण दुष्यः दोषवान् तथा गुण्यो गुणवांश्च स्यात् तद् दोषगुणस्वभावानां चरितं कश्चित् प्राणी प्रायः बाहुल्येन न वेवेक्ति न जानाति वा अथवा न कुरुते । अन्तःपातिनो नञोऽप्युभयार्थावलोको दरीदृश्यते; काकनयनगोलकवत् डमरुकमणिवच्च, तस्योभयार्थावलोकात् । अत्र प्रस्तुतप्रक्रमो ज्ञेयः । उभयत्र व्याख्या समा ॥१७॥

**अर्थान् प्राणान् स्वान् विनयन्ते गुणहेतोस्तत्तद्वद्भ्यस्तद्यदि दत्त्वा गुणिनः स्युः ।**
**छेदः कोऽयं तद्व्रज सीतोपनयेन श्रीसम्पत्त्योः स्थावरभूतां गुणवत्ताम् ॥१८॥**

अर्थानिति—विनयन्ते [1]विनयं कुर्वन्ति, के ? जनाः, कान् ? अर्थांस्तथाप्राणांश्च, कथम्भूतान् ? स्वान् स्वकीयान्, किमर्थं विनयन्ते ? गुणहेतोर्गुणानां निमित्तम्, तत्ततः यदि चेत्स्युर्भवेयुः, के ? गुणिनः, किं कृत्वा ? पूर्वं दत्वा वितीर्य, किम् ? तदर्थादि, केभ्यः ? तद्वद्भ्यो गुणिभ्यः, कोऽयं छेदः केयं हानिः स्यात् । तत्तस्मात्

मृत्युकाल आ जानेपर भी प्रकृतिमें स्थिर, महान् पराक्रमी, तथा मनकी बातोंका ज्ञाता अतएव लोकोत्तर समुद्र [ प्रलयकालमें भी शान्त, बड़े-बड़े जन्तुओंसे भरा ] के तुल्य आसनपर बैठे रावण अथवा जरासंधको हनूमान अथवा श्रीशैलने देरतक देखा था। इसके उपरान्त उसको ऐसे वचन कहे थे जिनसे न तो कुछ छूटता ही था और न जो अशिष्ट रीतिसे कहे ही गये थे ॥१५॥

मित्रादि राजाओंके चक्रसमूह युक्त, तुरंग आदि वाहन (पत्र) से समृद्ध, पवित्र बन्धु-बान्धवोंसे शोभित, तथा यथेच्छ फलोंके दाता आपको जिन्होंने देखा है वे अनायास ही कल्पवृक्षका स्मरण करते हैं। और जिन्होंने गोल तने युक्त, पत्तोंसे हराभरा, पुष्ट डालोंसे विशाल तथा अभिलाषाओंका पूरक कल्पवृक्ष देखा है उन्होंने विवेकरूपी नेत्रधारी, स्वभावसे ही पराक्रमी तथा प्रतिपालक आपको नहीं सोचा है ॥१६॥

इस संसारमें उत्पन्न समस्त प्राणी विशेषकर मनुष्योंकी प्रकृति ही यह है कि दोषोंसे विमुख होते हैं और गुणोंसे प्रीति करते हैं। किन्तु जिस आचरणके द्वारा दोषभाजन होते हैं अथवा गुण-गृह होते हैं उसको प्रायः कोई भी नहीं सोचता है और न आचरण ही करता है ॥१७॥

गुणोंकी प्राप्तिके लिए अपनी सम्पत्ति तथा प्राणोंको भी समर्पण कर देते हैं, यदि गुणियोंको अर्थ या प्राण देकर स्वयं गुणी हो जाते हैं तो आपकी ही कौन-सी यह हानि है ?

1. व्ययं कुर्वन्ति—प०, द० ।

कारणात् व्रज गच्छ, कः ? त्वम्, काम् ? गुणवत्ताम्, केन कृत्वा ? सीतोपनयेन जानकीसमर्पणेन, कथम्भूतां गुणवत्ताम् ? स्थावरभूतां स्थिरस्थितिकारणम्, कयोः ? श्रीसंपत्त्योः श्रीः हिरण्यमण्यादिस्वभावा, संपत्तिर्गोमहिष्यादिस्वभावा श्रीश्च सम्पत्तिश्च श्रीसंपत्ती तयोः। भारतीये–सीतोपनयेन भूमिप्रदानेन। शेषं समम्॥१८॥

**मृत्वा जीवित्वैव च यस्मिन्गुणमेयात्तस्मिन्मर्तुं जीवितुमिच्छेद्गुणगृह्यम्।**
**प्राहुः संपद्व्यापदमस्माद्वनमुच्चैरामो ही नो नायत पाण्डुप्रभवोऽर्यः॥१९॥**

मृत्वेति–एयात् प्राप्नुयात्, कः ? प्राणी, कम् ? गुणम्, किं कृत्वा ? पूर्वं मृत्वा जीवित्वा च, कस्मिन् ? यस्मिन्नेव कार्ये, इच्छेत् वाञ्छेत्, कः ? प्राणी, किं कर्त्तुम् ? मर्त्तुं जीवितुं च, कस्मिन् ? तस्मिन्नेव कार्ये, प्राहुर्वदन्ति, के ? नीतिमन्तो जनाः, किम् ? संपद्व्यापदम् सम्पच्च व्यापच्च अत्र सन्तिः प्रत्ययः, कं प्राहुः ? गुणगृह्यं गुणग्राहकं जनम्, अस्मात् कारणात् ही कष्टं नोऽस्माकम् अर्यः स्वामी रामः उच्चैरतिशयेन वनं नायत नायासीत्, कथम्भूतः ? पाण्डुप्रभवः प्रशस्तजन्मा। इदं व्याख्यानं काका व्याख्येयम्।

भारतीयः–नायत, कः ? पाण्डुप्रभवः युधिष्ठिरः, कथम्भूतः ? नोऽस्माकम् अर्यः पुनः आमः आर्द्रहृदयः, उच्चैस्तरां ही कष्टम्। अत्र पूर्वार्द्धगतं व्याख्यानं बोध्यम्॥१९॥

**मन्दोदर्यामिच्छसि चित्तव्यतिपातं न्याय्यं त्वं वैभीषणमुक्तं न शृणोषि।**
**नाद्याप्युच्चैः किञ्चिदतीतं तव कार्यं गत्वा विष्णुं तं प्रभविष्णुं वरिवस्य॥२०॥**

मन्दोदर्यामिति–इच्छसि, कः ? त्वम्, कम् ? चित्तव्यतिपातम् अप्रेमतया चेतोऽन्यत्र नेतुम्, कस्याम् ? मन्दोदर्यां मन्दोदरीनामधेयायां पट्टमहिष्याम्। अत्रान्यायप्रवृत्त्या परकलत्रासक्ततया प्रगलितप्रेमपरम्परां मन्दोदरीं कर्त्तुमिच्छसीति भावः। तथा न्याय्यं न्यायादनपेतं विभीषणस्येदं वैभीषणम् उक्तं वचनं न शृणोषि नाकर्णयसि। अद्यापि सांप्रतमपि उच्चैः महत् तव कार्यं नातीतं न गतम्, कथम्भूतम् ? किञ्चिदपि, अतः कारणात् त्वं प्रभविष्णुं प्रभवनशीलं तं विष्णुं लक्ष्मणं गत्वा वरिवस्य नमस्कुरु।

भारतीयः–इच्छसि, कः ? त्वम्, कम् ? चित्तव्यतिपातं चित्तं प्रपातयितुम्, कस्याम् ? दर्यां गुहायाम्, कथम्भूतस्त्वम् ? मन्दः हेयोपादेयविकलः, तथा न शृणोषि, कः ? त्वम्, किम् ? उक्तम्, कथम्भूतम् ? भीषणं भयावहम्, कथम्भूतं सत् ? न्याय्यम्, कथम् ? वै स्फुटम्, अद्याप्युच्चैः कार्यं किञ्चित् नातीतम्, कस्य ? तव भवतः, अतस्त्वं गत्वा प्रभविष्णुं तं विष्णुं वासुदेवं वरिवस्य॥२०॥

**इत्युक्तेऽस्मिन्पादमुपात्तं मणिपीठात् प्रापय्योरुं सव्यगतासिस्थितदृष्टिः।**
**न्यस्यन्नक्ष्णोरिन्द्रियवर्गं सकलं तु क्षोभात्कायं कोपविवृत्तिं गमयन्नु॥२१॥**

---

जो सीताको वापस करके [ पाँच ग्राम भूमि पाण्डवोंको दिलाकर ] चिरस्थायी लक्ष्मी और वैभव संयुक्त गुणीपनेको प्राप्त हो॥१८॥

जिस कार्यके करनेपर मरके अथवा जीवित रहकर गुणोंकी प्राप्ति होती हो, गुणोंका लोभी उसकी पूर्तिमें मरने अथवा जीनेकी अभिलाषा करता है क्यों कि नीतिमान् गुणोंकी प्राप्तिको सम्पत् और विपरीतको विपत्ति कहते हैं। इसी कारणसे हमारा पूज्य विमल वंशमें उत्पन्न राम वनमें आया है [पाण्डुराजसे उत्पन्न और अत्यन्त सहृदय युधिष्ठिर वनमें आया है] ॥१९॥

हे रावण ! तुम पटरानी मन्दोदरीसे अपने चित्तको हटाना चाहते हो। और भाई विभीषणके द्वारा कहे गये न्यायपूर्ण वचनोंको नहीं सुनते हो। आज भी तुम्हारा कोई कर्म पूर्ण रूपसे नहीं बिगड़ा है। जा करके अत्यन्त प्रभावशाली रामकी शरण ग्रहण करो [ हे मन्द बुद्धि जरासंध ! क्या गुफामें जाकर दिन बितानेकी मनमें है? जो तुम न्यायोचित भीषण सत्य पर कान नहीं देते हो। आज भी·········कृष्णको प्रणाम करो ] ॥२०॥

सभ्रूयुग्मं वैरविरुद्धं घटयन्नु स्विद्यन्क्रोधक्वाथितलावण्यरसो नु ।
रुद्धः स्थित्वाधोरणमुख्यैर्द्विरदो नु प्रोचे विष्णोरित्यरिरग्निं विवमन्नु ॥२२॥युग्मम् ।

द्विः । इत्युक्ते सभ्रूभङ्गमिति–प्रोचे प्रकर्षेणोक्तवान्, कः ? अरी रिपुः, कस्य ? विष्णोः लक्ष्मणस्य, रावण इत्यर्थः, कथम् ? इति वक्ष्यमाणापेक्षया, क्व सति ? अस्मिन्नुक्ते, कथम् ? इति उक्तप्रकारेण, किं कृत्वा ? पूर्वं प्रापय्य नीत्वा, कम् ? पादं चरणम्, कं नीत्वा ? ऊरुम्, कथं पादम् ? अपात्तम् आकृष्टम्, कस्मात् ? मणिपीठात् रत्नमयपादविष्टरात्, कथम्भूतः ? सव्यगतासिस्थितदृष्टिः सव्ये दक्षिणपार्श्वे गतः प्राप्तो योऽसिः खड्गः तत्र स्थिता दृष्टिर्लोचनं यस्य सः, किं कुर्वन् ? न्यस्यन्नु आरोपयन् इव, कम् ? इन्द्रियवर्गं स्पर्शनरसन-घ्राणश्रोत्रसंदोहम्, कयोर्न्यस्यन् ? अक्ष्णोर्लोचनयोः, कथम्भूतमिन्द्रियवर्गम् ? सकलं समस्तम्, सकलशब्दात् मनसोऽपि ग्रहणम्, नु शब्दोऽत्र इवार्थः । किं कुर्वन् ? गमयन्नु प्रापयन्निव, कम् ? कायं शरीरम्, काम् ? कोपविवृत्तिम्, कस्मात् ? क्षोभात्, नुशब्दोऽत्र वितर्कार्थाभिधायकः, किं कुर्वन्नु ? घटयन्नु विरचयन्निव, किम् ? वैरविरुद्धं भ्रूयुग्मम्, अत्र वैरवशाद् भ्रूयुगलं ललाटशिखरं नयन्निति भावः । पुनः किं कुर्वन् ? स्विद्यन् स्वेदजलं मुञ्चन्, पुनः कथम्भूतः ? क्रोधक्वाथितलावण्यरसः कोपोत्कलितलावण्यरसः, किं कृत्वा पूर्वं प्रोचे ? स्थित्वा स्थितो भूत्वा, कथम्भूतः सन् ? अनुरुद्धः, कैः ? रणमुख्यैः सुभटैः क्षत्रियकुमारैः, कथम् ? अधः, किं कुर्वन् ? विवमन्नु उद्गिलन्निव, कम् ? अग्निम्, क इव अनुरुद्धः ? द्विरदो नु यथा गजेन्द्रोऽनुरुध्यते, कैः ? आधोरणमुख्यैः हस्तिपकाग्रणीभिः ।

भारतीये–प्रोचे, कः ? अरिः वासुदेवस्य जरासन्ध इत्यर्थः । इतिशब्दोऽत्र वक्ष्यमाणार्थसूचकः, क्व सति प्रोचे ? अस्मिन्नुक्ते, कथम् ? इति उक्तप्रकारेण । शेषं पूर्ववत् ॥२२॥

प्राणान्कृत्वान्यत्र कथंचित्तव कायं केनाप्यन्येनाविशतैतद्यदि वोक्तम् ।
भाषा नैषा ते ननु मत्तस्य विलापं श्रुत्वा मद्यस्यैष न तस्येत्यविचार्यम् ॥२३॥

प्राणानिति–न स्यात्, का ? एषा भाषा, कस्य ? ते तव । यदि चेदुक्तम्, किम् ? एतत्, केन ? त्वया । वा अथवा उक्तम्, किम् ? एतत्, केन ? केनाप्यन्येन, केनचित्तवापरेण स्वामिना, किं कुर्वता सता ? आविशता प्रविशता, कम् ? कायं शरीरम्, कस्य ? तव, कथम् ? कथञ्चिन्महता कष्टेन, किं कृत्वा ? पूर्वं कृत्वा विधाय, कान् ? प्राणान्, क्व ? अन्यत्र, असून्विहायेत्यर्थः, युक्तमेतत्, सोपस्कारतया व्याख्यायते । ननु अहो अविचार्यं स्यात् वचः, कस्य ? तस्य पुंसः यो ब्रूते, कथम् ? इति, न स्यात्, कः ? एष प्रलापः, कस्य ? मद्यस्येति, किं कृत्वा पूर्वं ब्रूते ? श्रुत्वा आकर्ण्य, कम् ? विलापं प्रलापम्, कस्य ? मत्तस्येति । अत्र तावत्तव स्वामी मदिरायते तदनुशीलनान्मत्तो भूत्वा त्वं यदृच्छया प्रब्रवीषीति भावः ॥२३॥

यद्यप्युक्तं दूतमवध्यं हृदि कृत्वा पत्युः पातश्चेतसि चिन्त्यः स तथापि ।
काकोलूकं क्रीडदरण्ये भयमुक्तं मत्वा गच्छेत्कस्तदजस्रं शववित्तम् ॥२४॥

---

इस प्रकारसे दूतके द्वारा कहे जानेपर मणिमय चौकीपरसे उठाये गये पैरको जाँघके ऊपर रखते हुए, बाँयी तरफ लटकती तलवारके ऊपर दृष्टि डालते हुए, समस्त इन्द्रियोंके समूहको केवल दोनों आँखोंमें डालते हुए, क्षोभके कारण पूरे शरीरमें क्रोधका पूर फैलाते हुए, दोनों भृकुटियोंको वैरके कारण वक्र करते हुए, क्रोधकी अग्निमें पके लावण्यके रसके समान पसीनेसे युक्त, प्रधानोंके द्वारा युद्धसे रोके गये अतएव आवेशमें नीची गर्दन किये बैठे ( प्रधान महावतोंके द्वारा वशमें किये गये ) हाथीके समान राम तथा कृष्णके शत्रु रावण–जरासंधने आगको उगलनेके समान कठोर वचन कहे थे ॥२१–२२॥

किसी प्रकार अपने प्राणोंको कहीं छिपाकर तुम्हारे शरीरमें प्रवेश पाये किसी दूसरे ने यह सब कहा है यह तुम्हारी भाषा नहीं है। यदि उस मत्तकी बोली सुनकर यह कहा गया है तो मदिराका विकार होनेके कारण यह अविचारणीय ही है ॥२३॥

यदीति–यद्यपीदमुक्तम्, अनेन तथापि चिन्त्यः, कः ? स पातो विनाशः, कस्य ? पत्युः स्वामिनः, क्व चिन्त्यः ? चेतसि मनसि, किं कृत्वा पूर्वं चिन्त्यः ? कृत्वा विधाय, कम् ? दूतम्, कथम्भूतम् ? अवध्यम्, क्व ? हृदि हृदये, युक्तमेतत्, कः ? गच्छेत् अपितु न कोऽपि, किम् ? तदरण्यम्, कथम्भूतम् ? शवविसं कुथितमृतकपूतिगन्धव्याप्तम्, किं कृत्वा ? पूर्वं मत्वा ज्ञात्वा, किम् ? काकोलूकं काकाश्च उलूकाश्च काकोलूकम्, कुर्वन् ? क्रीडन्, क्व ? यस्मिन्नरण्ये, कथम्भूतं सत् ? भयमुक्तं निर्भयम्, कथम् ? अजस्रम् अनवरतमिति । अत्र तावत्स्वत्स्वामी शवायते, पूतिगन्धवत्त्वजनितोऽहमिति प्रत्ययवशात्त्वयापि काकोलूकायितम् । अतएव यदृच्छालापिनि कोपः सतामनुचित इति भावः ॥२४॥

**न न्यूनानां भीतिरनूनादिति तस्मात्तत्किं नान्येषामपि मान्याद्भयमस्ति ।**
**भृङ्गस्याङ्गक्षोभसहोऽन्यं मदमुज्झन्सर्वाङ्गीणं मुञ्चति हस्ती किमहत्वा ॥२५॥**

नेति–नास्ति, का ? भीतिः, केषाम् ? न्यूनानां बलहीनानाम्, कस्मात् ? अनूनात् अधिकबलात्, कथम् ? इति हेतोः तद्भयं किं नास्ति ? अपि त्वस्त्येव, केषाम् ? अन्येषामपि समबलानामपि, कस्मात् ? तस्मात् अनूनात् समस्तानां जनानां मान्यात् पूज्यात्, युक्तमेतत्, किं मुञ्चति परित्यजति ? अपितु न, कः ? हस्ती दन्ती, कम् ? अन्यं प्राणिनम्, किं कृत्वा ? पूर्वम् अहत्वा अप्राणव्ययीकृत्य अन्यं प्राणिनं हत्वा मुञ्चतीत्यर्थः । किं कुर्वन् ? सर्वाङ्गीणं मदम् उज्झन्, पुनः कथम्भूतः ? भृङ्गस्य भ्रमरस्य अङ्गक्षोभसहः ॥२५॥

**योऽलङ्कर्मीणोऽपि स एवं न विवक्षुर्नूनं कालत्राकृतकायस्तव नाथः ।**
**स्वामिस्थानीयेन विरुद्धः स मयामा भूमेरन्तर्गच्छति भीरुः किमिदानीम् ॥२६॥**

य इति–न स्यात्, कः ? स प्राणी, कथम्भूतः ? विवक्षुः वक्तुमिच्छुः, कथम् ? एवं प्रकारेण, यः प्राणी स्यात्, कथम्भूतोऽपि ? अलङ्कर्मीणोऽपि, अलङ्कर्मणेऽलङ्कर्मीणः सर्वकार्यसमर्थोऽपीत्यर्थः । नूनमिति शब्दो निश्चयार्थाभिधायक उत्प्रेक्षाभिधायकोऽप्यस्ति, द्वयोरपि ग्रहणम् । इदानीं सम्प्रति किं गच्छति ? कः ? स नाथः स्वामी, कम् ? अन्तर्मध्यम्, कस्याः ? भूमेः पृथ्व्याः, कस्य नाथः ? तव, कथम्भूतः सन् ? मयाऽमा सार्द्धं विरुद्धः विपरीतः पुनः भीरुस्त्रस्तः पुनः कालत्राकृतः कालायान्तकाय देयः निहितः कायः शरीरं येन स तथोक्तः, अत्र "देये त्रा च" [ शा० ३।४।६२ ] इति त्रा प्रत्ययः, केन सह ? स्वामिस्थानीयेन स्वपरिवारसमूहेनेति[1] ॥२६॥

**श्रुत्वा भग्नान्दूत विचेतीकृतवृत्तीन्नाज्ञासीद्वा संप्रति जातो यदि वासौ ।**
**कस्मिन्कोऽयं केशवनामा पतितः किं न प्रस्तीमे मज्जति युद्धेऽसृजि बालः ॥२७॥**

श्रुत्वेति–हे दूत स भवत्स्वामी रणरमणे विचेतीकृतवृत्तीन् हेयोपादेयविवेकविकलान् स्वपरसामर्थ्यपरिज्ञानशून्यानित्यर्थः । विपक्षान् भग्नान् श्रुत्वा न अज्ञासीत् न प्रतिबुद्धः, यदि वा संप्रति जातोऽसौ कस्मिन्निति

---

यद्यपि दूत अवध्य होता है तथापि उसके कथनको मनमें रखकर उसके स्वामीके विनाशका पूर्ण चित्तसे विचार करना ही चाहिये । क्योंकि जहाँ काक और उल्लू खेलते हों तथा सर्वत्र शव तथा पीप व्याप्त हो उस वनमें कौन व्यक्ति निडर होकर जायगा ॥२४॥

तुच्छोंको महापुरुषोंसे भय नहीं रहता इसीलिए क्या दूसरों ( समान या शत्रु ) को भी मान्य पुरुषोंसे नहीं डरना चाहिये ! सारे शरीरसे मदजलको बहाता तथा भौंरोंकी रेलपेलको भी सहता हुआ हाथी दूसरे अवज्ञाकारीको बिना मारे छोड़ता है ? ॥२५॥

जो तुम्हारा स्वामी सब कार्य करनेमें समर्थ है वह इस प्रकारसे बोलकर निश्चित ही अपना शरीर कालकी बलि बनाता है । उसके स्वामी होने योग्य मेरे साथ विरोध करके वह भीरु अब देखते-देखते ही पृथ्वीसे समाप्त हो जायगा ॥२६॥

हे दूत ! मेरे प्रहारोंसे मूर्छित किये गये तथा सर्वथा उन्मूलित शत्रुओंकी कथा सुनकर भी तुम्हारे स्वामीने मुझे नहीं जाना है । अथवा यदि यह अभी उत्पन्न हुआ है तो कहाँ?

---

1. रामस्य कृष्णस्य वा प्रभुप्रभविष्णुना स्वामितुल्येन वेति रुचिरतरोऽर्थः ।

प्रभो ! कोऽयं केशवनामा, अथवा किन्न मज्जति बुडति स बालः, क ? असृजि रुधिरे, कथम्भूते ? प्रस्तीमे द्रवीभूते, कथम्भूतः सन् ? युद्धे रणे पतितः ॥२७॥

**स व्यात्युक्षीं नाडिविमुक्तैं रुधिरौघैरन्त्रस्रग्भिर्व्यत्यभिताडीमपशब्दैः ।**
**कृत्वा व्याक्रोशीं च यमस्य द्विजदोलामिच्छत्यारोढुमकालेऽपि वसन्तम् ॥२८॥**

स इति—सोऽयं भवत्स्वामी अकालेऽपि अप्रस्तावेऽपि यमस्य कृतान्तस्य द्विजदोलां दंष्ट्रान्तरालदोलाम् आरुरोढुमिच्छति, कम् ? वसन्तम्, किं कृत्वा ? पूर्वं कृत्वा विधाय, काम् ? व्यात्युक्षीं परस्परासेचनम्, कैः कृत्वा ? रुधिरौघैः, कथम्भूतैः ? नाडिविमुक्तैः धमनीनिःसृतैः तथा कृत्वा, काम् ? व्यत्यभिताडीम् अन्योन्यहननम्, काभिः कृत्वा ? अन्त्रस्रग्भिः अन्त्रमालाभिः, तथा च कृत्वा, काम् ? व्याक्रोशीं परस्पराभिशपनम्, कैः कृत्वा ? अपशब्दैरिति ॥२८॥

**इति स मरुतः शक्त्यास्तोकः (कः) पदं पृथुसंपदः**
**शमनिरतया वृत्या श्रेयस्तरां स्वपतेः श्रियम् ।**
**परिणमयितुं दूतोऽवोचत्प्रसह्य रिपुक्षिपां**
**स न हि सचिवः स्वामिस्वार्थं भनक्ति भरेषु यः ॥२९॥**

इतीति—हि० स मरुतः वायोस्तोकः पुत्रो हनूमान् दूतः अवोचत्, किं कर्तुम् ? स्वपतेः स्वस्वामिनो रामस्य श्रेयस्तरां कल्याणवतीं श्रियं लक्ष्मीं परिणमयितुं वर्द्धयितुम्, किं कृत्वा ? पूर्वं प्रसह्य, काम् ? रिपुक्षिपां शत्रोरधिक्षेपम्, कया ? शमनिरतया उपशमसक्तया वृत्या, कथम् ? इति उक्तप्रकारेण, पुनः कथम्भूतः ? पदं स्थानम्, कस्याः ? शक्त्याः सामर्थ्यस्य, कथम्भूतायाः शक्त्याः ? पृथुसंपदः पृथ्वी संपत् यस्याः सकाशात् तस्याः, युक्तमेतत्, हि स्फुटं स सचिवो न स्यात् यः स्वामिस्वार्थं भनक्ति, केषु सत्सु ? भरेषु, केषाम् ? शत्रूणां दुर्वचसामित्यध्याहार्यं पदमिति ।

भारतीयपक्षे—समरुतः समं रुतं यस्य स तथोक्तः उच्चनीचयोः परित्यागेन हृदयङ्गमवचनः पुनः शक्त्या स्वबलेन अस्तोकः पुष्टः पुनः संपदः पृथु गरिष्ठं पदम् । अन्यत् समम्[1] ॥२९॥

**दशाननोद्दीपनमात्रहेतोस्तत्सज्जरासंधरयाहतस्य ।**
**दीपस्य गेहे स्फुरतस्तवापि स्नेहच्युतस्य ज्वलनं कियद्वा ॥३०॥**

दशेति—हे दशानन हे रावण, वाऽत्रावधारणार्थः, कियत् कियत्कालमेव तज्ज्वलनं स्यात्, कस्य ?

---

यह केशव नामका कौन है ? क्या यह बाल ( मूर्ख ) बहते हुए युद्धके रुधिरमें गिरकर डूब नहीं जायगा ॥२७॥

नाडियोंसे निकले रुधिरपूरकी होली, आंतोंरूपी मालाओंकी छीना झपटी तथा अपशब्दोंकी बकझक करके असमयमें ही यमके दांतोंरूपी झूलेपर चढ़कर तुम्हारा स्वामी वसन्त मनाना चाहता है [ वसन्तोत्सवमें पिचकारीसे रंग फेंका जाता है, मालाओंसे एक दूसरेको मारा जाता है, गालियां देते हैं और झूला झूलते हैं ] ॥२८॥

इस प्रकारके शत्रुके आक्षेपोंको अत्यन्त शान्तिनिष्ठ स्वभावके द्वारा सहन करके पवनञ्जयके पुत्र और अपनी सामर्थ्यके कारण विशाल राज्यलक्ष्मीके पात्र हनुमानने अपने स्वामी रामकी [स्वपतेः] कल्याणकारी सम्पत्तिके विकासके लिए उत्तर दिया था। क्योंकि वह सच्चा सचिव नहीं है जो शत्रुके दबावमें अपने स्वामीके स्वार्थको भूल जाय। [ अथवा एक लहजा मिष्टभाषी, अपने बलसे विशाल तथा विशाल सम्पत्तिके स्वामी इनने अपने स्वामी कृष्णकी...] ॥२९॥

हे रावण ! शत्रुको उत्तेजित करनेमें समर्थ, पृथ्वीके द्वारा अनादृत फलतः स्नेहसे

---

1. हरिणीवृत्तम् ।

दीपस्य, तथा तवापि, कथम्भूतस्य तव ? स्नेहच्युतस्य प्रीतिरहितस्य नितरां कठोरहृदयस्येत्यर्थः । किं कुर्वतः सतः ? स्फुरतः विजृम्भमाणस्य, क ? गेहे मन्दिरे, कथम्भूतस्य ? आहतस्य व्यापारितस्य, कया ? धरया भूम्या, सज्जरासम् इति क्रियाविशेषणं सीदति क्लेशं करोतीति "सत्सु द्विषः" [ जै० सू० २।२।५९ ] इति क्विप्, सद् द्वेषः, रायतीति रः "आतः कः" [ जै० सू० २।२।३ ] रः शब्दः, असनम् आसः, सदो जातः सज्जः, सज्जश्चासौ रश्च सज्जरः, सज्जरस्य आसो यत्र ज्वलनकर्मणि तत् सज्जरासं द्वेषप्रभवशब्दाक्षेपम्, पुनरपि कथम्भूतस्य ? उद्दीपनमात्रहेतोः उद्दीपनमात्रमेव हेतुर्यस्य तस्य दैवविजृम्भणमात्रकारणस्येत्यर्थः । दीपस्य कथम्भूतस्य ? स्नेहच्युतस्य तैलरहितस्य, किं कुर्वतः ? स्फुरतः, क ? गेहे, पुनः कथम्भूतस्य ? सज्जरासंधराहतस्य जराया अस्तोन्मुखताया मन्दतेजसां परिणतेः आसन्धः आ सामस्त्येन योगो यस्य स जरासन्धः जरासन्धश्चासौ रयश्च जरासन्धरयः, सन् सत्तामात्रः, संश्चासौ जरासन्धरयश्च सज्जरासन्धरयः, सज्जरासन्धरयेण आहतः सज्जरासन्धरयाहतस्तस्य तथोक्तस्य तैलक्षयवशाच्छिखाप्रकम्पवद्वेगेन कटाक्षितस्येत्यर्थः, पुनः दशाननोद्दीपनमात्रहेतोः वर्तिकामुखे प्रज्वलनमात्रहेतोरिति ।

भारतीये—हे जरासन्ध कंसमातुल, कियद्वा कियत् कालमेव तत्तत्समीचीनं ज्वलनं निरवद्यतया विजृम्भणं स्यात्, कस्य ? दीपस्य तवापि, किं कुर्वतः ? स्फुरतः, क ? गेहे, कथम्भूतस्य ? स्नेहच्युतस्य पुनः रयाहतस्य आतुरवृत्त्या सविक्षेपमूर्त्तेः, पुनः दशाननोद्दीपनमात्रहेतो दैवावस्थायां प्रथमप्रारम्भे विजृम्भणमात्रकारणस्येत्यर्थः । दीपस्य विशेषणानि प्राग्वत्[1] ॥३०॥

**अपि दूरमपैष्यती प्रदेशं यदि वा विश्रमितुं त्वयि स्थिता ।**
**न वधूं वरलिप्सया व्रजन्तीमिव लक्ष्मीमवरोद्धुमर्हसि त्वम् ॥३१॥**

अपीति—यदि वा स्थिता ? का ? वधूः, किं कर्त्तुम् ? विश्रमितुं श्रमं स्फोटयितुम्, क ? त्वयि विषये, किं कुर्वती सती ? अपैष्यती अतिक्रमिष्यती, कम् ? प्रदेशम्, कथम्भूतम् ? दूरमपि, तर्हि नार्हसि न योग्यो भवसि, कः ? त्वम्, किं कर्त्तुम् ? अवरोद्धुं नियन्त्रयितुम्, काम् ? तां वधूं सीताम्, कथम्भूताम् ? लक्ष्मीम्, रूपकमेतत्, किं कुर्वन्ती ? व्रजन्ती, कयेव ? वरलिप्सया इव रामं प्राप्तुमिव ।

भारतीयः—यदि वा स्थिता, का ? लक्ष्मीः, किं कर्त्तुम् ? विश्रमितुम्, क ? त्वयि, किं कुर्वती सती ? अपैष्यती, कम् ? प्रदेशम्, कथम्भूतमपि ? दूरमपि, तर्हि नार्हसि, कः ? त्वम्, किं कर्त्तुम् ? अवरोद्धुम्, काम् ? तां लक्ष्मीम्, किं कुर्वन्तीम् ? व्रजन्तीम्, कया ? वरलिप्सया नारायणं प्राप्तुमिच्छया, कामिव व्रजन्तीम् ? वधूमिव ॥३१॥

---

वंचित और अपने ही घरमें माननीय तुम्हारा ; सत्य पक्षकी जीर्णताका मूलाधार यह क्रोधका आवेश [ स्पष्ट निर्वाणके लक्षणों और वेगसे युक्त, तैलहीन, केवल वर्तिकामें जलते तथा भभकते ] दीपकके समान कबतक चलेगा ?

अन्वय—जरासंध ! दशाननोद्दीपनमात्रहेतोः रयाहतस्य गेहे स्फुरतः स्नेहच्युतस्य तव दीपस्य वा तत् ज्वलनं कियद्वा ?

हे कंसके मामा जरासंध ! भाग्यकी प्रारम्भिक अवस्थाके कारण प्रकर्षको प्राप्त, किन्तु आतुरतासे विक्षिप्त, अपने ही भवनमें दिखाई देती और प्रजाके प्रेमसे वंचित तुम्हारी यह वृद्धि अब कितने दिन चलेगी ॥३०॥

यद्यपि इस समय तुम्हारे श्रमको व्यर्थ करनेके लिए यहाँ रुकी हुई है तथापि रामकी वधू सीता दूर देशको जायगी ही । अतएव अपने वर रामसे मिलनेकी इच्छासे जाती हुई इस लक्ष्मीके समान वधूको अपने अन्तःपुरमें ले जाना तुम्हें उचित नहीं है [ हे जरासंध ! यदि राज्यलक्ष्मी विश्राम करनेके लिए आज तुम्हारे पास रुकी है तथापि दूर प्रदेशको जायगी ही । वर कृष्णकी प्राप्तिके लिए जाती हुई इस वधूके समान लक्ष्मीको रोकना तुम्हें शोभा नहीं देता है ] ॥३१॥

---

1. उपजातिः वृत्तम् ।

उक्तेन पौनःपुनिकेन किं वा वेलामिवोर्वीं प्रलयाम्बुराशेः ।
चमूं विकर्षन्तमवेक्षमाणः स्वप्ने हरिं पश्यसि तं समक्षम् ॥३२॥

उक्तेनेति—वा अथवा किं प्रयोजनम्, केन ? पौनःपुनिकेन उक्तेन पुनः पुनर्भवेन द्विरुक्तेनेत्यर्थः, पश्यसि, कः ? त्वम्, कम् ? तं हरिं लक्ष्मणं समक्षमिति क्रियाविशेषणं प्रत्यक्षं यथा भवतीत्यर्थः, किं कुर्वाणस्त्वम् ? अवेक्षमाणः अवलोकमानः, कम् ? हरिं लक्ष्मणं नारायणं च, क्व ? स्वप्ने, किं कुर्वन्तम् ? विकर्षन्तम्, काम् ? चमूं सेनाम्, कथम्भूताम् ? उर्वीं गरिष्ठाम्, कामिव ? प्रलयाम्बुराशेर्वेलामिव । उभयत्र समन्यत्[1] ॥३२॥

समातुलानीतनयैः स्वबन्धुभिः प्रभो जयत्येष निहत्य ते बलम् ।
समेध्यलङ्कारचितं पुरस्तव स्थिरं मनश्चेत्कुरुदेशमीशिता ॥३३॥

समेति—हे प्रभो जयति, कः ? एष लक्ष्मणः, किं कृत्वा ? स्वबन्धुभिः विभीषणादिभिरात्मबान्धवैः सह ते तव बलं सैन्यं निहत्य, कथम्भूतैः ? समातुलानीतनयैः साधारणतया निरुपद्रवतया च सर्वासां प्रजानां प्रतिपालकत्वात्समं यथा भवति तथा शत्रुभिर्न तुल्यत्वेनोपमीयते इत्यतुलं यथा सममतुलम् आनीतो निश्चितो नयो यैस्ते समातुलानीतनयास्तैस्तथोक्तैः, हे मेध्य पवित्र ! चेद्यदि ईशिता ऐश्वर्येणानुभविष्यति, कः ? स लक्ष्मणः, कम् ? देशं जनपदम्, कथम् ? पुरोऽग्रतः, कस्य ? तव, तदा कुरु विधेहि, किम् ? मनश्चेतः, कथम्भूतम् ? स्थिरं निश्चलम्, पुनः कथम्भूतं सत् ? लङ्कारचितं लङ्कायां मन्दमन्दवातवशाद्दोलायमानैः शुभ्रांशुकोपलक्षितध्वजै रत्नमयैस्तोरणवद्भिः प्रासादैरनन्यशोभां प्राप्ता ममेयं पुरीति कृत्वा विहितं मनः स्थिरं कुर्विति भावः

भारतीयः—प्रभोजयति ग्रासयति, कः ? एष नारायणः, किम् ? बलं सैन्यम्, कस्य ? ते तव, कैः कृत्वा ? स्वबन्धुभिर्बलभद्रादिभिरात्मबान्धवैः, कथम्भूतैः ? समातुलानीतनयैः मातुलानीपुत्राः युधिष्ठिरादयः तत्सहितैः, किं कृत्वा पूर्वं प्रभोजयति ? निहत्य प्रध्वंस्य तथा ईशिता, कः ? स चक्रपाणिः, कम् ? कुरुदेशं कुरुजाङ्गलनामधेयं जनपदम्, चेदस्ति, किम् ? मनः, कथम्भूतम् ? स्थिरम्, कस्य ? तव भवतः, कथम्भूतं सत् ? कारचितं कारः कामचारः, तेन चितं पुष्टम्, कथम् ? अलमत्यर्थम्, तदा समेधि सम्यक् प्रकारेण भव, पुरः पुरत इति[2] ॥३३॥

नयस्यावद्यस्य व्यपनयमुखेन स्तुतिकृतौ
जनस्यापि क्षान्तिर्भवति वसतिस्तस्य भविता ।
कथंकारं व्रीडां पतसि पतिदेवत्यचरिते
सुरापाने मौनव्रतमिव वदेतत्प्रहसनम् ॥३४॥

नेति—भवति जायते, का ? क्षान्तिः क्षमा, कस्य ? जनस्यापि, कस्यां सत्याम् ? स्तुतिकृतौ स्तवन-

---

बार-बार कहने से क्या लाभ है ? प्रलयकालके समुद्रकी वेलाके समान विनाशक विशाल सेनाको बढ़ाते हुए हरिको स्वप्नमें देखते हुए तुम अब उनको साक्षात् सामने देखोगे ॥३२॥

लक्ष्मणके समान निरुपम तथा नीतिमार्गके प्रतिपालक अपने साथियोंके द्वारा वह तुम्हारे ऐसे प्रभुकी सेनाका संहार करके विजय प्राप्त करेगा । यदि वह तुम्हारे सामने ही इस देशका स्वामी होनेवाला है तो हे बलि (मेध्य) भूत ! लंकामें आसक्त अपने मनको स्थिर करो [बलभद्रादि भाइयों और पाण्डवादि मामाके पुत्रों द्वारा कृष्ण; अपनेको प्रभु मानने वाले तुम्हारी सेनाको काटकर-विजय प्राप्त करेगा और कुरुजांगल देशका स्वामी बनेगा । यदि अत्यन्त मनमानी करनेसे ढीठ तुम्हारा मन स्थिर है तो उसके सामने बढ़ो ] ॥३३॥

निराकरण करनेके रूपसे पापाचरणमें लीन लोगोंकी चर्चा करनेपर भी सुननेवालोंको

---

१. उपजातिः वृत्तम् । २. वंशस्थवृत्तम् ।

क्रियायाम्, केन कृत्वा स्तुतिकृतिः स्यात्? व्यपनयमुखेन निराकरणद्वारेण, कस्य व्यपनयमुखेन? नयस्य, कथम्भूतस्य? अवद्यस्यावद्यबहुलत्वादवद्यस्तस्यावद्यस्य प्रचुरपापोत्पत्तिकारणस्येत्यर्थः। भविता भविष्यति, पतिदेवत्यचरिते व्रीडां विहाय [पतिदेवत्यचरिते] पतसि चेत्तदेतत्प्रहसनं स्यात् तव, किमिव? सुरापाने सुरास्वादने मौनिव्रतमिव इति[1] ॥३४॥

**अन्तर्बहिः संप्रति कालरात्रौ तवोद्यतायां हरिशस्त्रपातैः।**
**लब्धश्चिरस्येति तनोतु तिर्यग् ज्योत्स्नामकालेऽपि यमाट्टहासः ॥३५॥**

अन्तरिति–तनोतु, कोऽसौ? यमाट्टहासः, काम्? ज्योत्स्नाम्, क? अकालेऽपि अप्रस्तावेऽपि, कथम्? तिर्यक्, कथम्भूतः सन्? लब्धः, कथम्? चिरस्येति चिरेणेतिकालेन, कैः कृत्वा लब्धः? हरिशस्त्रपातैः लक्ष्मणमुक्तमार्गणगणैः, कस्यां सत्याम्? कालरात्रौ, कथम्भूतायाम्? उद्यतायामुत्पन्नायाम्, कस्य? तव, कथम्? अन्तर्बहिः, कथम्? संप्रति साम्प्रतमेव।

भारते–हरिशब्देन नारायणः[2] ॥३५॥

**इत्युक्त्वासौ तस्य विरागं प्रकृतीनां**
**नानाभाषावेषलिपिज्ञैरवसर्पैः।**
**ज्ञात्वा हस्तेकृत्य समस्तं पुरिकृत्यं**
**तस्याः पारं प्राप्य च रम्यं वनमागात् ॥३६॥**

इतीति–नानाभाषावेषलिपिज्ञैः नानाभाषाः करपल्लव्यादयः, नानावेषाः कौलिकमौतिकाद्याकाराः; नानालिपयः कार्णाटकद्रमिलान्ध्राङ्गवङ्गदेशोद्भववर्णानां पङ्क्त्या विन्यासाः; नानावेषाश्च भाषाश्च लिपयश्च नानाभाषावेषलिपयः ताः जानन्ति तैः, तस्य रावणस्य प्रकृतीनां स्वाम्यमात्यादीनां सङ्घानां विरागं च विशिष्टमनुरागं ज्ञात्वा इति पूर्वोक्तप्रकारेण उक्त्वा च पुरि लङ्कायां समस्तं निखिलं कृत्यं करणीयं हस्तेकृत्य स्वाधीनं विधाय तस्या लङ्कायाः पारं पर्यन्तं प्राप्य असौ हनूमान् रम्यं पल्लवितकुसुमितफलितविविधवनस्पतिशाखान्तरोपविष्टमत्तमयूरकोकिलालापसुन्दरं वनमागादागतवान्।

भारतीये–असौ दूतः। तस्य जरासन्धस्य। तस्याः राजगृहनगर्याः। शेषं समम्[3] ॥३६॥

**उपवनमभिरामवल्लभां स वनजनेत्ररुचिं निरूपयन्।**
**स्वपतिगुणविशेषरञ्जितामुपलभते स्म सतीं वचोहरः ॥३७॥**

उपवनमिति–स वचोहरो हनूमान् रामवल्लभां जानकीम् उपलभते स्म ददर्श, कथम्भूताम्? वनजने-

---

शान्ति हो जाती है तथा अनीतिमानका निर्वाह हो जाता है किन्तु लोकलाज छोड़कर यदि देवता स्वरूप नृपति ही अनाचरण करने लगें तो कैसे चलेगा। उस अवस्थामें तुम्हारा यह हँसना मदिरा पीकर मौनव्रत धारण करनेके समान है ॥३४॥

हरि लक्ष्मण अथवा कृष्णजीके सतत शस्त्र प्रहारके द्वारा अब तुम्हारे अन्तरंग और बाहर, दोनोंमें ही कालरात्रि फैल जानेपर बहुत समय बाद आया यमका अट्टहास ही असमयमें बिजलीका प्रकाश करे ॥३५॥

इस प्रकारसे रावण अथवा जरासंधको कहकर तथा विविध भाषाओं, वेषों और लिपियोंके ज्ञाता गुप्तचरों द्वारा उसकी प्रजाकी उदासीनता अथवा विमुखताको भाँपकर अपने पूरे कर्तव्यको मुट्ठीमें करके उस दूतने लंका अथवा राजगृह नगरके एक किनारे जाकर सुन्दर वनमें प्रवेश किया था ॥३६॥

इस वनके आसपास सर्वत्र देखते हुए उस निर्भय दूत हनुमानने कमलके समान सुन्दर

---

१. शिखरिणीवृत्तम्। २. वंशस्थवृत्तम्। ३. मत्तमयूरवृत्तम्।

अरुचिं वनजस्येव नेत्रयो रुचिर्यस्याः सा तां कमलदललोचनामित्यर्थः, पुनः स्वपतिगुणविशेषरञ्जिताम् स्वपतेर्गुणविशेषाः शौर्यादयस्तै रञ्जितां रामस्य गुणैराह्लादितामित्यर्थः, पुनः सतीम् , किं कुर्वन्नुपलेभे ? अभिनिर्भयं यथा उपवनं निरूपयन्नवलोकमानः ।

भारतीयः—हे अभिराम श्रेणिक, स वचोहरः श्रीशैलनामा दूतः कांचिद्दुलभां कामिनीम्, उपकमते स्म निरीक्षां चक्रे, कथम्भूताम् ? वनजनेत्ररुचिम् ! वनजमिव नेत्रे वनज नेत्रे तयो रुचिर्यस्यास्ताम्, आकर्णान्तविश्रान्तनेत्रां पुनः स्वपतिगुणविशेषरञ्जितां 'चक्रवर्त्तिगुणविशेषैरानन्दितां, पुनः सतीम् अतिसमीचीनाम् अङ्गेषूपाङ्गेषु च सम्पूर्णलक्षणोपलक्षितामित्यर्थः । किं कुर्वन् ? उपवनं निरूपयन् ।' अन्यत्तुल्यम् ॥३७॥

**पथिपथि परिरक्षतो दिगन्तान्दशमुखरागवतो वनान्तपालान् ।**
**उपशमफलया स विद्यया तां नयविदवोचन् मोहयन्नितीदम् ॥३८॥**

पथीति—नयवित् नीतिज्ञः स वचोहरो हनूमान् इदमेतत् इति वक्ष्यमाणप्रकारेण तां सीताम् अवोचत् उक्तवान्, किं कुर्वन् ? वनान्तपालान् वनमाल्यादीन् उद्यानपालकान् उपशमफलया उपशम एव फलं यस्याः सकाशात्तया विद्यया मोहयन् मोहं नयन्, कथम्भूतान् ? दशमुखरागवतः दशमुखे रागो विद्यते येभ्य (येषां) ते तान् रावणानुरागिणः पुनः पथिपथि दिगन्तान् दिशां सीम्नः परिरक्षतः ।

भारतीये—स वचोहरः तां कामिनीम् अवोचत्, कथम्भूतः ? नयवित् व्यवहारमार्गप्रवीणः, कथम्भूतान् वनान्तपालकान् ? दश दशसंख्योपेतान् पुनः मुखरागवतः मुखेष्वारक्तिमानं दधानानित्यर्थः[1] ॥३८॥

**तवैव संदर्शनसंकथाः कथास्त्वयि प्रसक्ताः श्रुतयो दिवानिशम् ।**
**त्वयैव वाञ्छाः सहवासतत्परा विना त्वदुर्वीपतिरुन्मनायते ॥३९॥**

तवेति—तवैव कथाः वार्त्ताः प्रवर्त्तन्ते, कथम्भूताः ? सन्दर्शनसंकथाः, सन्दर्शनं संकथयन्तीति ताः अवलोकनसूचिन्य इत्यर्थः तथैव त्वयि प्रसक्ताः त्वत्सम्बन्धविषयाः श्रुतयः आकर्णनानि प्रवर्त्तन्ते । तथा त्वयैव सहवासतत्पराः एकत्रावस्थानसम्बन्धिन्यो वाञ्छाः दिवानिशं यथा तथा प्रवर्त्तन्ते त्वद्विना त्वया विना उर्वीपतिः रामः उन्मनायते खेदमनुभवति

भारतीये—उर्वीपतिर्गरुडध्वजः । शेषं सुगमम् ।[4] ॥३९॥

**सुनिचितमपि शून्यमाभासते परिजनविभवोऽपि सैकाकिता ।**
**अरुचिरभवदस्य लक्ष्मीमुखे त्वदनभिगमनेन रिक्तं मनः ॥४०॥**

---

नेत्रवती और अपने पति रामके विशेष गुणोंकी स्मृतिमें प्रसन्न रामकी प्राणप्यारी सती सीताको देखा था [ हे अभिराम श्रेणिक ! राजगृहके वनको देखते हुए उस श्रीशैल दूतने कमलनयनी, सती और द्वारकाधीश कृष्णके गुणोंपर मुग्ध सुन्दरीको देखा था ] ॥३७॥

प्रत्येक मार्गपर दशों दिशाओंसे रक्षामें निरत रावणपर अनुरक्त वनके रक्षकोंको निष्क्रिय करनेवाली विद्यासे मूर्छित करके नीतिशास्त्रके पण्डित हनुमानने सीताजीसे यह कहा था [ दशों दिशाओंसे आगत प्रत्येक वर्गकी रक्षामें नियुक्त ऊपरसे ही जरासंधके भक्त वनरक्षकोंको शान्त करनेमें समर्थ अपनी कुशलतासे वशमें करके उस व्यवहारज्ञ श्रीशैलने उस कृष्णपर मुग्ध नायिकासे कहा था ] ॥३८॥

तुम्हारे देखनेका वर्णन करनेवाली ही कथायें होती हैं, दिन-रात तुम्हारे सम्बन्धकी ही चर्चायें सुनता है और तुम्हारे सहवासकी ही कामना करता है तथा हे सती ! पृथ्वीपति राम अथवा कृष्ण तुम्हारे बिना उदास रहते हैं ॥३९॥

---

१. चक्रपाणिः—प. द. १.२. अपरवक्त्रम् वृत्तम् तल्लक्षणम्—"अयुजि ननरला गुरुः समेव नमपरवक्त्रमिदं ततो जरौ ।" [वृ. र. ४।९] । ३. पुष्पिताग्रावृत्तम् । ४. वंशस्थवृत्तम् ।

सुनिश्चितमिति–स्थानं शून्यम् आभासते वस्तु वृत्या न तु शून्यम्, कथम्भूतमपि ? सुनिश्चितमपि संभृतमपि, तथा साप्येकाकिताऽऽभासते यः परिजनविभवः परिवारजनसम्पत्, तथा अभवत्, का ? अरुचिर-प्रीतिः, क्व ? लक्ष्मीमुखे, कस्य ? अस्य नरपतेः रिक्तं मनो वर्त्तते, केन ? त्वदनभिगमनेन तवानभिगमनेन त्वया सह सम्भोगव्यापारमन्तरेणेत्यर्थः[1] ॥४०॥

**अनुरहसमुपैति मन्त्रं मुहुः परमपि परिवृत्य नाथेत सः ।**
**असुषु वसुषु च व्ययं व्यश्नुते सपदि तव कृते न किं तत्कृतम् ॥४१॥**

अन्विति–उपैति प्राप्नोति, कः ? स रामः, कम् ? मन्त्रं गुप्तभाषणम्, कथम् ? अनुरहसम् एकान्ते जन-कोलाहलोज्झिते प्रदेशेऽपीत्यर्थः । तथा नाथेत याचेत अनेन मार्गेण गच्छन्ती मत्तमतङ्गजगामिनी मन्मनो-हारिणी मैथिली भवद्भिर्दृष्टा न वेति पृच्छेदित्यर्थः, कम् ? इरं मार्गगामिनं जनम्, अपिशब्दात् अत्र भेरुण्ड-विहङ्गमचक्राङ्गचकोरसर्पत्सर्पादीनां ग्रहणम् । किं कृत्वा पूर्वं नाथेत ? परिवृत्य, कथम् ? मुहुर्वारंवारम्, तथा-चोक्तं–"भो भो भुजङ्ग तरुपल्लवलोलजिह्व बन्धूकपुष्पदलसन्निभलोहिताक्ष । पृच्छामि ते पवनभोजन कोम-लाङ्गी काचित्त्वयात्र शरदिन्दुमुखी न दृष्टा ॥" तथा व्यश्नुते, कः ? स रामः, कम् ? व्ययम्, केषु ? असुषु प्राणेषु वसुषु च द्रव्येषु, कथम् ? सपदि शीघ्रम्, हे सुन्दरि अनेन प्रकारेण तत् किं न कृतम् अपितु सर्वमेव कृतम्, कथम् ? कृते निमित्ते, कस्य ? तवेति ।

भारतपक्षे–स नरेन्द्रः । परमपि इतरमपि जनम् । शेषं सुगमम् ॥४१॥

**सुहृदयमसुदेयं प्रेम मेऽन्योन्ययोगात्सहजमुपकरिष्यत्यायतं हन्त यस्मिन् ।**
**स्वयमुपनयमानं तत्कदाभाविताहग्दिनमनुदिनमेवं ध्यायति त्वां नरेन्द्रः ॥४२॥**

सुहृदयमिति–हन्त अहो तद्दिनं कदा कस्मिन् काले भावि भविष्यति, कथम् ? तादृक् तादृशं पुनः उपनयनमानं प्रढौकमानम्, कथम् ? स्वयमात्मना, यस्मिन् दिने उपकरिष्यति, किं कर्म ? सुहृदयं कर्म, किम् ? प्रेम, मे मम, कस्मात् ? अन्योन्ययोगात् परस्परसम्बन्धात्, कथम्भूतं प्रेम ? असुदेयम् असवः प्राणा देया यत्र तत्तथोक्तम्, पुनः कथम्भूतम् ? सहजं नैसर्गिकं पुनः आयतं दीर्घम्, एवमुक्तप्रकारेण नरेन्द्रो रामः त्वां ध्यायति स्मरति, कथम् ? अनुदिनं प्रतिदिनम् । भारतपक्षे–नरेन्द्रो विष्णुः । शेषं सुगमम्[2] ॥४२॥

**सेनां विष्णोरथरथमयीं धीरकाकुत्स्थनादां**
**नागैर्व्याप्तामिह समकरैर्दिग्गतैरीक्षितासे ।**
**कल्पान्ताब्धिप्लुतिमिव महाभीममत्स्यध्वजौघां**
**संगन्तासे त्वमचिरमतस्तेन पत्येश्वरेण ॥४३॥**

---

लोगोंसे परिपूर्ण भी उसे शून्य-सा लगता है, विभव और परिजनोंसे घिरे रहनेपर भी वह अपनेको एकाकी समझता है, सम्पत्ति और सुखोंसे (लक्ष्मी सहवाससे कृष्णको) इसे अरुचि हो गयी है तथा तुम्हारे वियोगसे इसका मन खाली हो गया है ॥४०॥

एकान्त मिलते ही अपने आपसे बोलता है, बारम्बार घूम-फिर कर दूसरोंसे तुम्हारे विषयमें पूछता है, क्षण भरमें ही अपनी सम्पत्ति तथा प्राणोंसे भी विरक्त हो जाता है। हे देवि ! वह कौन-सा कार्य है जो राम अथवा कृष्णने तुम्हारे विरहमें न किया हो ॥४१॥

'प्राण देकर भी पालनीय, स्वाभाविक और अपरिमित मेरा प्रेम एक दूसरेके सहवास के द्वारा जिस दिन मेरे हृदयको तृप्त करेगा' हाय वह दिन किस वेलामें अपने आप आयगा ? इस प्रकार नारायण प्रतिदिन तुम्हारा ही ध्यान करता है ॥४२॥

---

१. प्रमुदितवदना वृत्तम् । तल्लक्षणम् "प्रमुदितवदना भवेन्नौ ररौ ।" [वृ. र. ३।५२] ।
२. मालिनीवृत्तम् ।

सेनामिति—हे क्षामोदरि विष्णोर्लक्ष्मणस्य इहास्मिन् प्रदेशे रथरयमयीं स्यन्दनवेगेन निर्वृतां सेनां वाहिनीं त्वम् ईक्षितासे द्रक्ष्यसि, कथम्भूताम् ? धीरकाकुत्स्थनादां धीरः काकुत्स्थस्य नादः यस्यां ताम् अक्षोभरामध्वनिम्, पुनः समकरै सह मया शोभया वर्त्तन्त इति समाः, समाः करा येषां तैः सशोभशुण्डादण्डैः दिग्गतैः दिक्षुप्रसृतैः नागैर्गजैः व्याप्तां, पुनः कथम्भूताम् ? महाभीममत्स्यध्वजौघां गरिष्ठभयानकमीनाकारालम्बसमूहाम्, कामिवेक्षितासे ? कल्पान्ताब्धिप्लुतिमिव कल्पान्तकालजलधिप्रवमिव, कथम्भूताम् ? रथरयमयीं रथस्येव रयो रथरयो स हेतुर्यस्यास्ताम्, पुनः धीरकाकुत्स्थनादां कुर्वसुधा, ताम् आ आकु, आकु तिष्ठति आकुत्स्थः वसुन्धरां व्याप्य-स्थित इत्यर्थः, धीरं च कं च धीरकं निस्तरङ्गजलं गम्भीरजलमित्यर्थः, धीरकः आकुत्स्थो नादो यस्यां सा तथा ताम् अतलस्पर्शिजलवशान्मेदिनीव्यापिघोषामित्यर्थः पुनः नागैर्हस्तिभिः व्याप्ताम्, कथम्भूतैः ? समकरैः सह मकरैर्जलचरजीवविशेषैर्वर्त्तन्त इति तैस्तथोक्तैः । अत्र मकराणां साहचर्याज्जलनागानां ग्रहणम् । पुनः कथम्भूतैः ? दिग्गतैः दिक्षु प्रवृत्तैः, पुनः कथम्भूताम् ? महाभीममत्स्यध्वजौघाम्, भीमाश्च मत्स्या महान्तश्च ते भीमाश्च ते मत्स्याश्च महाभीममत्स्याः, (ते) ध्वजा इव ओघेषु जलप्रवाहेषु यस्यां ताम्, अतः कारणात् अचिरं शीघ्रं त्वं तेन पद्मेश्वरेण रामेण संगन्तासे संगमिष्यसे ।

भारतीये—हे कृशोदरि ! त्वं विष्णोः दामोदरस्य रथमयीं वेगमयीं सेनाम् ईक्षितासे, कथम्भूतां सेनाम् ? धीरकाकुत्स्थनादां काकुर्वक्रोक्तिः तस्यां तिष्ठतीति काकुत्स्थः धीरः काकुत्स्थो नादो यस्यां ताम्, पुनः कथम्भूताम् ? महाभीममत्स्यध्वजौघाम्, भीमो वृकोदरश्च मत्स्यो विराटश्च भीममत्स्यौ तयोर्ध्वजौघ आलम्बपंक्तिः महान् भीममत्स्यध्वजौघो यस्यां ताम्, अथ विष्णुसेनादर्शनानन्दरसादनन्तरं पद्मेश्वरेण पद्मायाः ईश्वरेण संगन्तासे । अतः अस्मात् प्रदेशात् अन्यत्सर्वं प्राग्वत् ? ॥४३॥

**इतीदमभिधाय तां नयपरोऽयमाश्वासयन्प्रदाय नृपमुद्रिकासमुपलक्षितं प्राभृतम् ।**
**मुदायत पतिं रिपोः कुलधनं जयन्तं विधोस्तथैति हि कृतार्थवक्रमुपपौर्णमासं महः ॥४४॥**

इति श्रीद्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
हनुमन्नारायणवृत्ताभिगमनो नाम त्रयोदशः सर्गः ॥१३॥

इतीति—आयत आयातवान्, कोऽसौ ? अयं हनूमान्, कम् ? पतिं रामं पत्युः समीपमागत इत्यर्थः, कया ? मुदा हर्षेण, किं कुर्वन् ? आश्वासयन् धीरयन्, काम् ? तां जानकीम्, किं कृत्वा ? पूर्वम्, प्रदाय दत्वा, किम् ? प्राभृतमुपायनम्, कथम्भूतम् ? नृपमुद्रिकासमुपलक्षितम्, किं कृत्वा ? पूर्वमभिधाय उक्त्वा,

आप यहाँपर रथोंके वेगसे युक्त, सुन्दर शुण्डाधारी समस्त दिशाओंमें फैले हाथियों-से पूर्ण, अत्यन्त भयानक मत्स्य चिह्नयुक्त ध्वजाओंसे छायी तथा काकुत्स्थ रामकी गम्भीर ध्वनिसे चालित अतएव प्रलय समुद्रके पूर तुल्य [प्रलयपूर भी रथके वेगसे चलता है, पानी गहरा होता है, उसका शोर समस्त पृथ्वीमें होता है, दिशा दिशामें मकर तथा नाग होते हैं, भीषण मछलियाँ ध्वजाकी तरह पानीपर उछलती हैं] विष्णुकी सेनाको देखेंगी और शीघ्र ही उस प्रभु पद्मके साथ आपका मिलन होगा ।

*अन्वय—विष्णोः रथमयीं धीरकाकुत्स्थनादां समकरैः दिग्गजैः नागैः व्याप्तां महाभीम-मत्स्य-ध्वजौघां कल्पान्ताब्धिप्लुतिमिव ईक्षितासे अतः तेन पद्मेश्वरेण त्वमचिरात् संगन्तासे ।*

अत्यन्त वेगशालिनी, भटोंकी व्यंगोक्तियोंके नादसे युक्त, समानतासे कर ग्रहीता प्रधान नागवंशी राजाओंसे परिपूर्ण, महान् भीम तथा मत्स्यराज विराट्की ध्वजाओंसे शोभित फलतः प्रलयकालीन समुद्रके पूर तुल्य कृष्णकी सेनाको देखोगी और इस स्थान पर ही तुम्हारा उनसे मिलन होगा ॥४३॥

उक्त प्रकारसे यह सब कहकर राजा रामकी मुन्दरीके रूपमें भेंट देकर उस सीताको

---

१. मन्दाक्रान्ता वृत्तम् । तल्लक्षणञ्च "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" [ वृ० र० ३।९४ ] ।

किम् ? इदमेतत्, कथम् ? इति उक्तप्रकारेण, कथम्भूतो हनूमान् ? नयपरः नयं पिपर्त्तीति सः, नीतेः पालक इत्यर्थः, कथम्भूतं पतिम् ? जयन्तं पराभवन्तम्, किम् ? रिपोः कुलधनं कुलं च धनं च कुलधनम् अथवा कुलमेव धनम्, तथा हि स्फुटम् ऐति आगच्छति, किं कर्त्तृ ? महस्तेजः कृतार्थवक्त्रं कृतार्थस्य वक्त्रं रामस्य वदनम्, कस्य ? विधोश्चन्द्रस्य, कथम्भूतं महः ? उपपौर्णमासं पौर्णमासीसमीपोद्भवम् ? कस्मात् ? अञ्जनानन्दनवदनोद्गीर्णजनकतनयाकुशलकिंवदन्तीश्रवणादिति योज्यम् ।

भारतीये–हे कृतार्थ कृतपुण्य ! हे नृप–श्रेणिक ! तथा तेनैव प्रकारेणायत प्राप्तवान् कोऽसौ ? अयं श्रीशैलनामधेयो दूतः, कम् ? पतिं चक्रपाणिम्, किं कुर्वन्तम् ? रिपोः कुलधनं जयन्तम् अभिभवन्तम्, किं कृत्वा ? प्राभृतं प्रदाय, कथम्भूतम् ? मुद्रिकासमुपलक्षितं मुद्रैव मुद्रिका अत्रैवकारोऽवधारणार्थोऽवगम्यते, तेनायमर्थः–यादवानां कुलक्रमायाता लक्ष्मीः मुद्रा गरुडमुद्रा वा ग्राह्या तया समुपलक्षितं मुद्रामुद्रितमित्यर्थः, किं किं कुर्वन् ? उद्यानस्थां कांचित् कामिनीम् आश्वासयन्, किं कृत्वा ? पूर्वमभिधाय च, किम् ? इदमेतत् कथम् ? इत्युक्तप्रकारापेक्षया, कथम्भूतो दूतः ? नयपरः नीतिनिष्ठः, यथा येन प्रकारेण ऐति, किं कर्त्तृ ? महः किमेति ? वक्त्रं वदनम्, कस्य ? नृपतेः, कथम्भूतम् ? उपपौर्णमासम्, विधोरिन्दोः, कथम् ? हि स्फुटमिति[1] ॥४४॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य पट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिका-चकोरेण नेमिचन्द्रेण विरचितायां द्विःसन्धानकवेर्धनञ्जयस्य राघवपाण्डवीया-परनाम्नः काव्यस्य पदकौमुदी नामदधानायां टीकायां हनुमन्नारायण-दूताभिगमनो नाम त्रयोदशः सर्गः ॥१३॥

---

ढाढ़स बँधाता हुआ वह नीतिमार्गका पालक दूत अपने स्वामीके पास वापस आगया था। स्वामी राम अथवा कृष्ण भी शत्रुओंके वंश तथा वैभवको जीतनेमें समर्थ थे तथा [ दूतसे वल्लभाके समाचार सुनकर ] उनके मुख पूर्णमासीके चन्द्रमाके समान कान्तियुक्त हो उठे थे ॥४४॥

इति निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती श्रीमान् पण्डित विनयचन्द्र गुरुके शिष्य, देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र-द्वारा विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें हनुमन्नारायणदूताभिगमन नामका त्रयोदश सर्ग समाप्त।

---

१. पृथ्वी छन्दः, तल्लक्षणम्–"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः [वृ. इ० ३-१-९१] ।

# चतुर्दशः सर्गः

**श्रीपार्थः सपदि हरिस्तथा सरामः सुग्रीवः सदसि समं प्रभाविराटः ।**
**निश्चित्य प्रकृतिषु शक्तिमभ्यमित्रं व्युत्तस्थुः प्रलयदवानला इवामी ॥१॥**

श्रीपार्थ इति—अमी एते भूपालाः अभ्यमित्रं शत्रुं लक्ष्यीकृत्य व्युत्तस्थुः अभ्युत्थिताः, क इवोत्प्रेक्षिताः ? प्रलयदवानला इव कल्पान्तकालवह्नय इव, किं कृत्वा ? पूर्वं निश्चित्य आत्मप्रतीतिमानीय, काम् ? शक्तिं सामर्थ्यम्, केषु विषये ? प्रकृतिषु सप्तसु स्वाम्यमात्यादिस्वभावासु, के ते भूपाला इति दर्शयन्नाह—व्युत्तस्थौ, कः ? हरिर्लक्ष्मणः, कथम्भूतः ? श्रीपार्थः श्रियं पाति श्रीपाः, श्रीपा अर्था यस्य सः श्रीपार्थः लक्ष्मीरक्षणपरायणप्रयोजनवान्, पुनः[१] प्रभाविराटः प्रभावी राटो यस्य सः प्रभाविराटः सप्रभावध्वनिः मयि सुग्रीवे करे करवालं गृहीतवति रणरङ्गे न मां प्रति कस्यचित् क्षत्रियकुमारस्य सम्मुखं स्थातुं शक्तिरस्ति इति गर्जिगर्जिमद्ध्वनिरित्यर्थः । क ? सदसि सभायां सरामः रामसहितः सुग्रीवः व्युत्तस्थौ ।

भारतीये—व्युत्तस्थुः, के ? अमी नरेन्द्राः । कथम् ? अभ्यमित्रम्, क इवोत्प्रेक्षिताः ? प्रलयदवानला इव, कृत्वा पूर्वं व्युत्तस्थुः ? निश्चित्य, काम् ? शक्तिम्, कासु ? प्रकृतिषु, क ? सदसि, के ते नरेन्द्राः ? इतिप्रकटयति—व्युत्तस्थौ श्रीपार्थः श्रियोपलक्षितः पार्थः श्रीपार्थः लक्ष्म्योपलक्षितोऽर्जुनः, कथम् ? सपदि शीघ्रम्, तथा व्युत्तस्थौ, कः ? स हरिः चक्रपाणिः, किं विशिष्टः ? सरामः बलभद्रसहितः पुनः सुग्रीवः शोभना ग्रीवा यस्य सः पुनः समं प्रभाः समं सम्यक् प्रकृष्टा भा यस्य सः, प्रकृष्टप्रतापवानित्यर्थः, तथा व्युत्तस्थौ, कोऽसौ ? विराट इति ॥१॥

**स्कन्धस्था मदकरिणः प्रयाणभेरी दध्वान प्रतिसमयं निहन्यमाना ।**
**अत्युच्चं पदमधिरोप्य मान्यमारान्न्यक्कारं क इह परैः कृतं सहेत ॥२॥**

स्कन्धेति—मदकरिणः मत्तमातङ्गस्य स्कन्धस्था प्रतिसमयं क्षणं क्षणं प्रतिनिहन्यमाना ताड्यमाना सती प्रयाणभेरी दध्वान ध्वनितवती । युक्तमेतत् परैरन्यैर्दुर्जनैः कृतं विहितं न्यक्कारं कः सहेत, कथम् ? आरात्

स्वामि, अमात्यादि सातों अपनी प्रकृतियोंकी शक्तिका सभामें निश्चय करके रामसे संयुक्त लक्ष्मीका रक्षक हरि (लक्ष्मण) तथा शोभायुक्त प्रतापके कारण दारुण सुग्रीव, शत्रुके विरुद्ध प्रलयकालीन दावानलके समान चल दिये थे [ स्वामी···राजसभामें विचार करके लक्ष्मीका स्वामी अर्जुन, बलभद्रयुक्त कृष्ण तथा सुन्दर ग्रीवाधारी वैभव तथा प्रतापके लिए ख्यात विराटराज तुरन्त शत्रुके विरुद्ध···थे ] ॥१॥

मदोन्मत्त हाथीके कन्धेपर रखी तथा प्रतिक्षण बजायी गयी युद्ध-यात्राकी भेरी जोरोंसे गर्ज उठी थी। निकटमें ही खूब ऊँचे तथा मान्य स्थानपर रखकर शत्रुके द्वारा बजाये गये नगाड़ेकी कौन उपेक्षा कर सकता है। सर्वथा सम्मानयुक्त अत्यन्त उन्नत स्थानपर

---

१. -जनवानित्यर्थः कथम् ? सपदि शीघ्रम्, तथा व्युत्तस्थौ, कः स रामः राघवः, कथम् ? सपदि तथा व्युत्तस्थौ, कः ? स सुग्रीवः किष्किन्धनगराधिपः, कथम्भूतः ? प्रभाविराटः प्रभावी राटो यस्य सः प्रभाविराटः सप्रभावध्वनिः, मयि सुग्रीवे कालकरालं करवालं रणाङ्गणे गृहीतवति सति साम्प्रतं न कस्यचित् क्षत्रियकुमारस्य सम्मुखे स्थातुं शक्तिरस्तीति गर्जिगर्जिमद्ध्वनिरित्यर्थः क सदसि सभायाम् कथम् ? समं युगपदिति शेषः ।···भारती—प० द० ।

२. सर्गेऽस्मिन् प्रहर्षिणी वृत्तम् ।

पश्चात्, क ? इहास्मिन् लोके, किं कृत्वा ? पूर्वमधिरोप्य नीत्वा, कम् ? मान्यं जनम्, किमधिरोप्य ? अत्युच्चं पदं स्थानम् ॥२॥

**आरावं दिशि दिशि तं निशम्य तस्या रोमाञ्चैः परिहृषितैस्तनुर्नृपाणाम् ।**
**अम्भोदप्रथमरवोत्थरत्नसूचिः संरेजे स्वयमिव सा विदूरभूमिः ॥३॥**

आरावमिति–नृपाणां राज्ञां तनुः रोमाञ्चैः रोमाङ्कुरैः संरेजे शुशुभेतराम्, कथम्भूतैः ? परिहृषितैः अत्यानन्दसमुत्थितैः, किं कृत्वा ? पूर्वं तस्याः प्रयाणभेर्याः दिशि दिशि प्रतिदिशम् आरावं ध्वनिं निशम्य श्रुत्वा, कैव संरेजे ? यथा सा लोकप्रसिद्धा विदूरभूमिः विदूरो नामपर्वतः तस्य भूमिः, कथम्भूता ? अम्भोदप्रथमरवोत्थरत्नसूचिः, अम्भोदस्य मेघस्य प्रथमरवात् उत्था उत्पत्तिर्यासां ताः रत्नसूचयो यस्यां सा, कथम् ? स्वयमात्मनेति ॥३॥

**रागादेः सह वसतोऽपि तापवृत्तेर्यः स्वस्मिन्नवधिरहो न कस्यचित्सः ।**
**भूपानां रिपुमभिपश्यतामिवोग्रं यत्कोपे स्फुरति रसान्तरं न जज्ञे ॥४॥**

रागादेरिति–अहो आश्चर्यं कस्यचित् कस्यापि न स्यात्, कः ? स योऽवधिः सीमा, कस्य ? रागादेः अविद्याधर्मस्य, कथम्भूतस्य ? तापवृत्तेः तापः वृत्तिर्यस्य सः तस्य, किं कुर्वतः ? सहवसतोऽपि एकत्रावस्थानवतोऽपि, क ? स्वस्मिन्नात्मनि, अतएव कारणात् न जज्ञे न जातम्, किं तत् ? रसान्तरम् एकस्मात् रसादपरो रसो रसान्तरं यत् स्फुरति विजृम्भते, क सति ? कोपे, कथम्भूतम् ? यद्रसान्तरम् उग्रं सोढुमशक्यम्, केषाम् ? भूपानां नृपाणाम् ? कथम्भूतानामिव ? रिपुं शत्रुम् अभि सामस्त्येन पश्यतामिव निरीक्षमाणानामिव ॥४॥

**सारङ्गैः कृतमणिमण्डनैर्विगाढा साश्वासा प्रतिदिशमुन्नमत्स्यदामा ।**
**सामन्तैः पथि चलिता चमूः पयोधेर्वेलेव प्रबलमदध्वनन्मरुद्भिः ॥५॥**

सारङ्गैरिति–अदध्वनत् ध्वनितवती, का ? सा चमूः, कथम् ? प्रबलं प्रकृष्टबलं यथा, कथम्भूता सती ? चलिता, क ? पथि मार्गे, कथम् ? अमा सार्द्धम्, कैः ? सामन्तैः, पुनः कथम्भूता ? उन्नमत्स्यदा उच्चलद्वेगा, कथम् ? प्रतिदिशं दिशं दिशं प्रति, पुनः साश्वा अश्वैः सह वर्तमाना पुनः सारङ्गैर्मतङ्गैर्विगाढा व्याप्ता कथम्भूतैः सारङ्गैः ? कृतमणिमण्डनैः कृतं मणीनां मण्डनं येषां तैः । केवादध्वनत् ? पयोधेः समुद्रस्य वेलेव, कथम्भूता सती ? पथि मार्गे चलिता, कथम् ? यथा भवति प्रबलं प्रौढप्रौढि यथा भवति तथा पुनरुन्नमत्स्य-

---

स्थापित करके बादमें शत्रुके द्वारा सामने ही की गयी अवज्ञाको कौन सहन कर सकता है ] ॥२॥

समस्त दिशाओंमें प्रयाणभेरीके उस घोषको सुनकर परम आनन्दसे उठे रोमाञ्चके द्वारा राजा लोगोंकी काया वैसी ही शोभित हुई थी; जिस प्रकारसे वर्षारम्भमें मेघोंकी प्रथम गर्जनाको सुनते ही अपने आप निकले रत्नके अंकुरोंसे युक्त विदूर-पर्वतकी भूमि होती है ॥३॥

मनमें प्रबल सन्तापका भाव होने पर किसी भी व्यक्तिको उसके साथ ही अपने आत्मामें रहनेवाले राग आदि भावोंकी सीमापर अनुभव नहीं होता है उसी प्रकार शत्रुको सामने खड़ा देखते हुए राम तथा कृष्णके अनुयायी राजाओंको क्रोध आ जानेके कारण दूसरे प्रबल रसोंका अनुभव ही नहीं हो रहा था ॥४॥

मणियोंके आभूषणोंसे सुसज्जित हाथियोंसे व्याप्त, घोड़ोंसे पूर्ण, वेगके साथ प्रत्येक दिशामें बढ़ती हुई और मार्गमें सामन्त राजाओंके द्वारा संचालित वह राघव-पाण्डव सेना आंधीके द्वारा उठायी गयी समुद्रकी लहरोंके समान [ समुद्रवेला भी वातकपूर्ण, मणितुल्य

श्यामा उन्नं केशं प्रापितं मत्स्यानां मीनानां दाम माला यस्यां सा तथोक्ता, कैः ? तैः प्रसिद्धैः मरुद्भिर्वातैः, कथम् ? यथा भवति सामं सार्द्धं यथा भवति, पुनः साश्वासा आश्वासैः जलप्रवेशैः सह वर्त्तमाना सा, कथम् ? प्रतिदिशं दिशं दिशं प्रति पुनः सारङ्गैश्चातकैः विगाढा कथम्भूतैः कृतमणिमण्डनैः मणयः सूक्ष्मसूक्ष्मा जलबिन्दवोऽभिधीयन्ते, शब्दानामनेकार्थत्वात्तेषां मण्याकरत्वाद्वा कृतं मणीनां मण्डनं यैस्तैरिति ॥५॥

**आनीलं द्विपमधिरुह्य रामभद्रः श्वेतोऽब्दं मिहिर इवासितं निरैयः ।**
**सिन्दूरद्युतिरचितं स पीतवासाः कृष्णोऽभ्रं जलद इवारुणं तडित्वान् ॥६॥**

आनीलमिति—रामभद्रो राघवः निरैयः निर्जगाम, किं कृत्वा ? पूर्वमानीलं सर्वाङ्गश्यामं द्विपं गजमधिरुह्य, क इव ? मिहिर इव यथा [1]मेघोऽसितं नीलमब्दं मेघमधिरुह्य (निर्गच्छति) कथम्भूतः मिहिरः ? श्वेतः शुभ्रः । अत्र तात्पर्यमुपन्यस्यते, घनसमयनिवृत्तौ सत्यां शरत्समयस्य प्रवृत्तौ सत्यां गगनप्रवृत्तस्य नीलनीरदाधिरूढस्य जलरिक्तोदरस्य शुभ्रा[2]भ्रस्य शोभां नीलगजाधिरूढो रामो निर्गमनसमये बभार । तथा निरैयः, कः ? पीतवासा लक्ष्मणः, किं कृत्वा ? पूर्वमधिरुह्य, किम् ? अभ्रम्, कथम्भूतम् ? सिन्दूरद्युतिरचितम्, क इव ? जलद इव, यथा जलदो निर्गच्छति, किं कृत्वा ? पूर्वमधिरुह्य, किम् ? अभ्रम्, कथम्भूतम् ? अरुणम् आरक्तम्, कथम्भूतः जलदः ? कृष्णः पुनस्तडित्वान् विद्युद्युक्तः । अत्र भावो विभाव्यते दिनेशस्य निष्क्रान्तौ संध्यायाश्च प्राप्तौ सत्यां गगनतटगमनोन्मुखारुणाभ्रमधिरूढस्य तडिद्युक्तस्य कृष्णस्य जलदस्य शोभां सिन्दूरद्युतिरचितगजेन्द्राधिरूढो लक्ष्मणः पीतांशुकपरिधानो निर्गमनसमये बिभराम्बभूवेति भावः ।

भारतपक्षे—रामभद्रो रेवतीरमणः । पीतवासा नारायणः ॥६॥

**ये कुन्त्यां जननमिता विभासयन्तो राजानः पथिषु नभः सदाञ्चितेन ।**
**धाम्ना ते ननु चतुरङ्गसेनयोच्चैः प्रासादिस्थितियुतया स्म संचरन्ते ॥७॥**

य इति—ननु अहो संचरन्ते स्म निर्जग्मुः, के ? ते राजानः, कथम् ? उच्चैः, कया सह ? चतुरङ्गसेनया हस्त्यश्वरथपदातिपूतनया, कथम्भूतया ? प्रासादिस्थितियुतया प्रासादीनि प्रास आदिर्येषां शस्त्राणां तानि प्रासादीनि, कुन्त-सेल्ल-भल्लि-तीरी-तोमर-यष्टि-मुद्गर-शक्ति-चक्रादीनि तेषां स्थित्या युता तया किं, कुर्वन्तः ? ये त्यां तां प्रसिद्धां कुं पृथिवीं धाम्ना तेजसा पथिषु मार्गेषु विभासयन्तः, केषां धाम्ना ? नभःसदां विद्याधराणां सुग्रीवप्रभृतीनाम्, कथम्भूतेन धाम्ना ? चितेन पुष्टेन, कथम्भूताः, राजानः ? जन-नमिताः जन-नमस्कृताः इति ।

भारतीये—ननु अहो संचरन्ते स्म, के ? ते लोकविख्याताः राजानः, केषु ? पथिषु, कया सह ? तुरङ्गसेनया हयवाहिन्या, कथम्भूतया ? उच्चै श्रा पृ पालनपूरणयोरित्यस्य धातोः प्रयोगः पूरणं पृ० विच् प्रत्ययान्तः विचः, सर्वापहारीनाशः, पालना रक्षणम्, पूरणं भरणपोषणादि, उच्चैः पृर्यस्या सा उच्चैःपृस्तया उच्चैःप्रा

---

उछलते जलबिन्दुयुक्त, भँवरोंसे ( आश्वास ) भीषण, और सब तरफ उछलती मछलियोंकी माला से भूषित होती है ] जोरोंसे गर्ज रही थी ॥५॥

गहरे काले हाथीपर चढ़कर श्वेत वस्त्रधारी राम तथा बलराम युद्धके लिए निकलते थे । घन श्याम मेघोंके ऊपरसे उदित सूर्यके समान, पीताम्बरधारी तथा विद्युत ( के समान अस्त्र )-धारी लक्ष्मण तथा कृष्ण सिन्दूरसे सजाये गये अतएव लाल हाथीपर जाते हुए ऐसे लगते थे जैसा सन्ध्याकी लालीमेंसे उड़ता बिजलीयुक्त मेघ लगता है ॥६॥

जनताके द्वारा मान्य, सुग्रीव, आदि विद्याधरोंके द्वारा पुष्ट अपने तेजके द्वारा पूर्ण पृथ्वीको प्रकाशित करते हुए वे रामके पक्षके राजा लोग हस्ति-अश्व-रथ-पदाति चारों प्रकारकी प्रास, कुन्त आदि शस्त्रोंसे सुसज्जित सेनाके साथ मार्गमें चले जा रहे थे ।

महारानी कुन्तीसे उत्पन्न, देवताओंके द्वारा भी मान्य अपनी शरीर कान्तिसे शोभाय-

---

1. 'मार्तण्ड' इति समुचितोऽर्थः—सं० ।
2. शुभ्रभास्करस्य—सं० ।

अतीवरक्षणभरणपोषणयेत्यर्थः, अथवा उच्चैः प्राः इति विशेषणं राज्ञाम्, कथम्भूतास्ते राजानः ? उच्चैःप्रा पृङ् व्यायाम इत्यस्य रूपं प्रियते इति प्रः, अक्प्रत्ययः, उच्चै प्रो येषां ते उच्चैःप्राः उच्चैर्व्यायामवन्तः शस्त्राभ्यास-कृतश्रमाः पुनः कथम्भूतया ? सादिस्थितियुतया अश्वारोहाधिष्ठितया, (क) उच्चैः प्रासादिस्थितियुतया उच्चैः प्रासादाः सन्ति येषां ते उच्चैःप्रासादिनः सप्तभूमिगृहस्वामिनः[1] उच्चैःप्रासादिनामिव या स्थितिः तया युतया एतेन सेनायां गुदुदुरपटमण्डपादिसमृद्धिरम्भधायि, ये राजानः कुन्त्यां कुन्तीविषये जननं जन्म इताः प्राप्ताः युधिष्ठिरादयः इत्यर्थः, कथम्भूताः ? धाम्ना शरीरेण तेजसा विभासयन्तः शोभमानाः, कथम्भूतेन धाम्ना ? अञ्चितेन लोकप्रशस्येन पुनः नभःसदा नभसि सीदतीति तेन गगनविजृम्भमाणेनेत्यर्थः ॥७॥

**शौर्यान्तस्थिति विषमाभयादवोत्थं वैराटं चतुरगकुञ्जरप्रधानम् ।**
**सौमित्र्याहितरति संयदुत्कपीनं गत्वैक्यं जगदिव तद्बलं चचाल ॥८॥**

शौर्येति—चचाल चलति स्म, किम् ? तद्बलम्, तेषां बलं तद्बलम्, किमिव चचाल ? जगदिव, किं कृत्वा ? पूर्वमैक्यं गत्वा, कथम्भूतम् ? संयदुत्कपीनं संयति संग्रामे उत् उच्चैः कपीनाम् इनः अधिपो यत्र तत्, अथवा संयदुत्कपयः इना प्रभवो यत्र तत् संग्रामोत्कटमर्कटनायकमित्यर्थः, पुनः सौमित्र्याहितरति सुमित्राया अपत्यं पुमान् सौमित्रिः लक्ष्मणः तेन आहिता रतिर्यत्र तत् पुनः वैराटं वैरम् अटति वैराटं वैरगामि, पुनः कथम्भूतम् ? चतुरगकुञ्जरप्रधानं चतुरं गच्छन्तीति चतुरगाः, चतुरगाः कुञ्जराः प्रधाना यत्र तत् पुनः दवोत्थं दवाग्निसमुत्पन्नम्, कया ? विषमाभया तीव्रतरदीप्त्या पुनः शौर्यान्तस्थिति क्षात्रधर्मोररीकृतस्थिति ।

भारतीये—तद्बलं सैन्यं चचाल, कथम्भूतम् ? संयदुत्कपीनं संयते रणाय उत्कैः उत्कण्ठितैः पुंभिः पीनं पुष्टं निरन्तरम्, पुनः सौमित्र्याहितरति सौमित्र्ये सौहार्दे आहिता रतिर्येन तत् समीचीनमित्रत्वारोपिता शक्तीत्यर्थः, पुनः शौर्यान्तस्थिति शूरो वसुदेवः शूरस्यापत्यं शौरिः नारायणः तेन अन्ता स्थितिर्यस्य तत्, पुनः विषमाभयाद-वोत्थं विषमाभा ये यादवस्तेभ्य उत्था यस्य तत्, तीव्रतरप्रतापवद्भ्यो यादवेभ्य उत्पन्नम् तथा चचाल वैराटं बलं विराटो नाम नरेन्द्रस्तस्येदं वैराटम् कथम्भूतम् ? तुरगकुञ्जरप्रधानं हयकरिसनाथीकृतमित्यर्थः ॥ ८ ॥

**उत्कीर्णैरिव विधुभिर्मुखैस्तमालप्रारोहैरिव चिहुरैर्दृशां विलासैः ।**
**कुर्वद्भिः सर इव सोत्पलं दिगन्तं तद्देव्यः प्रसमचरन्त दन्तिनीभिः ॥९॥**

उत्कीर्णैरिति—प्रसमचरन्त भासयन्तो गताः, काः ? तद्देव्यः तेषां पूर्वोक्तानां, राज्ञां महिष्यः तदन्तः-पुरसीमन्तिन्यः, काभिर्दन्तिनीभिः किं प्रसमचरन्त ? दिगन्तमाशान्तम्, कैः कृत्वा ? मुखैराननैः, कैरिवोत्प्रे-क्षितैः ? विधुभिरिव चन्द्रैरिव, कथम्भूतैः ? उत्कीर्णैः उल्लिखितैः, पुनः कैः प्रसमचरन्त ? चिहुरैः कुटिलकेश-

---

मान वे पाण्डव राजा मगधके मार्गपर चले जा रहे थे, निश्चित ही यह सेना रक्षण करनेमें अग्रणी अश्वारोहियोंसे घिरी थी ॥७॥

पराक्रमके परम श्रद्धालु, असाधारण प्रतापके कारण दावानल तुल्य, व्यूह रूपसे चलती मुख्य हस्तिसेना युक्त, युद्धमें शिरोमणि वानरोंके राजाओंसे पूर्ण सुमित्राके पुत्र लक्ष्मणमें एक निष्ठ, फलतः एक सूत्र बद्ध होकर शत्रुके ऊपर बढ़ती हुई वह सेना संसारके समान प्रयाण कर रही थी ।

लोकोत्तर प्रतापी यादवोंसे बनी, मुख्य रूपसे अश्वों और हस्तिमय विराट राजाकी सेना सहित, पारस्परिक मित्रताके भावकी प्रगाढ़ताके कारण सर्वथा एकरूप, युद्धके प्रेमी भटोंसे परिपूर्ण तथा शूर कुलमें उत्पन्न वासुदेव द्वारा नियन्त्रित वह सेना क्या चली थी अखिल विश्व ही मगधपर टूट पड़ा था ॥८॥

खोदकर बनाये गये चन्द्रोंके तुल्य सुन्दरमुखी, तमालके गाढ़ अंकुरों सदृश केश-धारिणी, नेत्रोंके विलास द्वारा समस्त दिशाओंको विकसित कमलयुक्त तालाबोंके समान

---

1. सप्तक्षण गृहा—प० द०

पाशैः कै रिव ? तमालप्ररोहैरिव, सुगममेतत्, पुनः कै रुपचरन्त ? दृशां लोचनानां विलासैः कटाक्षविक्षेपैः, कथम्भूतैः दृशां विलासैः ? दिगन्तं सोत्पलं सकुवलयं सर इव सरोवरमिव कुर्वद्भिर्विदधद्भिः ॥ ९ ॥

**उत्कार्तस्वररुचयोऽपि सौम्यभावा भामिन्यः सहजघनाः कुचोदिताङ्ग्यः ।**
**मेघालीष्विव करिणीषु दिव्यरुच्या लालित्यात्तडित इवाभवन्स्फुरन्त्यः ॥१०॥**

उत्कार्तस्वर इति—भामिन्यः अभवन्संजाताः, कथम्भूताः ? सौम्यभावाः प्रसन्नतयाशान्तरूपाः, कस्मात् ? लालित्यात् मनोहरत्वात्, किं कुर्वन्त्यः ? करिणीषु भासमानाः पुनः उत्कार्तस्वररुचयोऽपि निष्टप्तकाञ्चनभासोऽपि गौरवर्णकान्तयः इत्यर्थः, पुनः सहजघनाः पुनर्दिव्यरुच्याः मनोहराभरणाः पुनः कुचोदिताङ्ग्यः कुचाभ्यां स्तनाभ्यामुदितम् उन्नतम् अङ्गं यासां ताः कुचोदिताङ्ग्यः, का इव का वाऽभवन् भामिन्यः ? मेघालीषु तडित इव, यथा मेघालीषु स्फुरन्त्यः तडितो भान्ति, कथम्भूताः ? सौम्यभावाः, कस्मात् ? लालित्यात् मनोज्ञत्वात् कस्याः लालित्यम् ? दिव्यरुच्याः मनोहरदीप्तेः, पुनः उत्कार्त्तस्वररुचयोऽपि उत्क उत्कटः आर्त्तः भयानकः स्वरः शब्दो यत्र सा रुचिर्यासां ताः निखिलजननयनकम्पनकारिणी विद्युतः स्फूर्त्तिः रुचिरभिधीयते, पुनः सहजघनाः सहजाः सह सार्द्धं जाता घना मेघा यासां ताः, पुनः कुचोदिताङ्ग्यः कौ भुवि चोदितं प्रेषितमङ्गं शरीरं याभिस्ताः ॥१०॥

**उन्नेतुं तपनवितापमङ्गनानां छन्नाभिर्मणिमयकम्बलैर्बृषीभिः ।**
**शोणाभिर्बभुरधिरूढसांध्यरागा गच्छन्त्यस्ततय इवाम्बुदां करिण्यः ॥११॥**

उन्नेतुमिति—करिण्यः बृषीभिः करिकम्बलैः बभुः, कथम्भूताभिः ? शोणाभिर्लोहिताभिः पुनः मणिमयकम्बलैः छन्नाभिर्झम्पिताभिः, का इव ? अम्बुदां मेघानाम्, क्विबन्तमिदं रूपम् 'आतो धातोः' इत्यनेन सूत्रेणाकारलोपः । ततय इव श्रेणय इव पुनः अधिरूढसान्ध्यरागा अधिरूढः सांध्यो रागो याभिस्ताः, किं कर्त्तुम् ? तपनवितापं सूर्यातपम् उन्नेतुं निराकर्त्तुम्, कासाम् ? अङ्गनानां राज्ञीनाम् ॥११॥

**मायूरं गतमुत नौप्लवं गतानां वाहानां पथि परतोऽधिरोपिताभिः ।**
**बालाभिः कुचभुजपीडिता युवानस्तद्भूयः स्थपुटदरीषु यानमीषुः ॥१२॥**

मायूरमिति—युवानः तरुणाः स्थपुटदरीषु नीचोच्चभूमिगर्त्तासु तद्यानं शिविकाम् (यात्राम्) ईषुः वाञ्छन्ति स्म, कथम् ? भूयो वारंवारम्, कथम्भूताः सन्तो युवानो वाञ्छन्ति स्म ? कुचभुजपीडिताः स्तनबाहुकदर्थिताः, काभिः ? बालाभिः तारुण्यरसकूपिकाभिः तरुणीभिः, कथम्भूताभिः ? अधिरोपिताभिः, क्व ? परतः पृष्ठे, केषाम् ? वाहानां वाजिनाम्, कथम्भूतानाम् ? गतानां प्रासानाम्, किम् ? गतं गमनम्, कथम्भूतम् ? मायूरं मयूराणामिदं मायूरम्, उत अथवा गतानाम्, कम् ? नौप्लवं यानपात्रगमनम्, क्व ? पथि अध्वनि ॥१२॥

---

धनाती और हथिनियोंपरकी जाती हुई दोनों सेनाओंकी रानियोंकी छटा ही निराली थी ॥९॥

तपाये हुए सोनेके समान कान्तिमती होकर भी अत्यन्त सौम्यशीला, सुन्दर समान जंघाधारिणी, स्तनोंके उभारयुक्त, रानियाँ मेघपंक्तिके तुल्य हस्तिनियोंमें भी अपने अलौकिक लालित्यके कारण विजलीके समान शोभित हो रही थीं [विद्युत भी मेघोंके साथ उत्पन्न होती है, कर्कश भयानक कड़क करती है, असाधारण चमक होती है, करिणीके समान काली मेघालिमें अपने ज्योतिपुंजसे चमकती है तथा पृथ्वीकी ओर वज्र रूपसे गिरती है ] ॥१०॥

रानियोंके ऊपर आती धूपको रोकनेके लिए मणि जटित कम्बलोंसे ढकी हुई, गेरू आदिकी शृंगार-सज्जाके कारण लाल लाल फलतः उड़ती मेघपंक्ति के समान जाती हुई हथिनियोंकी शोभा हुई थी [ मेघपंक्ति भी सूर्यके आतपको रोक लेती है, मणि आदिके उत्पादक जलराशिसे पूर्ण होती है, सन्ध्याकी लालिमाके चढ़नेपर लाल हो जाती है ] ॥११॥

मोरके समान उड़ते अथवा नौकाके समान सरपट जाते घोड़ोंकी पीठपर बैठायी गयी फलतः आगे बैठे युवकको कुचों और भुजाओंसे जोरसे जकड़ती हुई तरुणियोंके कारण वे बार-बार यही इच्छा करते थे कि सरल मार्गसे न आया जाय ॥१२॥

**आत्मैव स्वयमवधार्यते कथंचिद्दुर्वारः परिणतमण्डलः प्रतापी ।**
**नामेति व्यभिचरितं तदातपत्रैः पूषास्तं गत इव न त्विषं पुपोष ॥१३॥**

आत्मेति—नाम अहो व्यभिचरितम्, कैः? तदातपत्रैः नरेन्द्रघर्मवारणैः कथमिति? अवधार्यते निश्चीयते, कः? आत्मा स्वरूपम्, केन? सूर्येणेत्यध्याहार्यं च, कथम्? स्वयमेव आत्मनैव, कथचिन्महता कष्टेन, भवामि, कोऽसौ? अहम्, कथम्भूतः? प्रतापी प्रतापवान् परिणतमण्डलः पुनः दुर्वारो दुःखेन वरीतुं शक्य इत्यतएव प्रयाणसमये पूषा सूर्यः त्विषम् आतपं न पुपोष न पुष्णाति स्म, क इवोत्प्रेक्षिते? अस्तं गत इव ॥१३॥

**निःशेषोऽप्यधिवृषि बद्धचित्रचिह्नो मातङ्गस्तुरगतरङ्गभाजि तुङ्गः ।**
**नौसंघः समभिपतन्महाकराग्रं सेनाब्धाववतरदुच्चकर्णधारः ॥१४॥**

निःशेष इति—मातङ्गो हस्ती सेनाब्धौ सैन्यसमुद्रे अतरत् तरति स्म, अत्र जात्यपेक्षयैकवचनम्, कथम्भूते सेनाब्धौ? तुरगतरङ्गभाजि वाजिकल्लोलाश्रिते, कथं यथा भवत्यतरत्? सम अभिपतन् महाकराग्रम् ऊर्ध्वीभवन्-महाशुण्डाग्रम्, कथम्भूतोऽपि मातङ्गः? निःशेषोऽपि समस्तोऽपि बद्धचित्रचिह्नः नियमितविविधध्वजः, कथं यथा भवति? अधिवृषि प्रतिशम्बकम्, पुनः कथम्भूतः? तुङ्गः उच्चः पुनः उच्चकर्णधारः उच्चैः कर्णवर्त्ति-कः इत्यर्थः। उपमार्थो दर्श्यते—क इवातरत् मातङ्गः? नौसंघ इव यथा निःशेषोऽपि प्रवहणसमूहस्तरति, क? समुद्रे, कथम्भूते? तुरगतरङ्गभाजि, कथम्भूतो नौसंघः? उच्चकर्णधारः उच्चैर्नियामक इति। अन्यत् समम् ॥१४॥

**यद्दूरं निकटतरं हयाः समीयुर्नेदीयो यदतिययुः क्षणाद्दवीयः ।**
**दूरस्थं यदसुलभं तदाप्तुकामस्तत्प्राप्तं त्यजति नवप्रियो हि लोकः ॥१५॥**

यदिति—समीयुः संजग्मुः हयाः अश्वाः, किं तत्? निकटतरं समीपतरं स्थानम्, यत् विद्यते किम्? दूरम्। अतिययुरतिशयेन गताः किं तत्? दवीयो दूरतरं स्थानम्, कथम्? क्षणात् क्षणमात्रेण, यद्विद्यते, किम्? नेदीयो निकटतरम्, युक्तोऽयमर्थः, हि यस्मात् कारणात् त्यजति, कः? लोको जनः, किम्? तद्वस्तु, कथम्भूतम्? यत् संप्राप्तं लब्धम्। कथम्भूतो लोकः? नवप्रियः नवं प्रियं यस्य सः, पुनः आप्तुकामः लब्धुकामः, किम्? तद्वस्तु, कथम्भूतम्? यत् दूरस्थं पुनः कथम्भूतम्? असुलभं दुर्लभम्। अथवा असुभिर्लभ्यते असुलभं प्राणाः सुलभाः वस्त्विदं दुर्लभं चेति मनसि कृत्वा प्राणान् दत्वा गृह्यत इत्यर्थः ॥१५॥

**वध्रीभिर्विमथितमग्र्यपश्चिमाभिः स्वेदाम्भः सितरुचि फेनिलं हरीणाम् ।**
**रूप्यस्य स्फुरदिव मण्डनं चकाशे केषां वा श्रमफलमुन्नतिं न धत्ते ॥१६॥**

---

सेनामें जाते छत्रोंने थोड़ी सी भूल की थी। उनके कारण अस्तको प्राप्तके समान सूर्यका प्रताप पुष्ट नहीं हो सका था। अपितु पूर्ण रूपसे बढ़ा अपना गोलाकार होनेपर भी प्रतापी तथा आज्वल्यमान सूर्य अपने आपको भी किसी तरह समझ पाता था ॥१३॥

रंग-बिरंगी और चिह्नोंयुक्त ध्वजाओंसे शोभित, श्रेष्ठ महावतोंसे परिचालित, लम्बी सूड़ोंको आगे फटकारते ऊँचे-ऊँचे समस्त हाथी अश्वोंरूपी तरंगोंसे भरे सेना समुद्रमें वर्षा-कालीन नौकाओंके समूहके समान कूद पड़े थे [ वर्षाकालीन समुद्रमें भी लहरें तेजीसे चलती हैं, बड़े-बड़े ग्राह उछलते रहते हैं तो भी विविध पालोंसे युक्त, कर्णधारों द्वारा खेयी गयी, पतवार चलाती और ऊँची-ऊँची समस्त नौकाएँ चलती हैं ] ॥१४॥

दौड़ते हुए घोड़े दूर जो पदार्थ थे उन्हें निकटतरके समान पा जाते थे और जो बहुत दूर थे उनमें भी निकटस्थोंके समान आगे निकल जाते थे। ठीक ही है, क्यों कि नूतनका प्रेमी संसार सरलतासे अप्राप्य तथा दूरस्थको प्राप्त करना चाहता है और जो प्राप्त है उसको छोड़ देता है ॥१५॥

वाग्रीभिरिति—चकाशे शुशुभे किम्? स्वेदांभो घर्मजलम्, केषांम्? हरीणामश्वानाम्, कथम्भूतं सत्? विमथितमालोडितं सत्, काभिः? वर्ध्रीभिः चर्मयष्टिभिः, कथम्भूताभिः? अग्रपश्चिमाभिः अग्रभवाभिः पश्चाद्भवाभिश्चेत्यर्थः, पुनः कथम्भूतं घर्मजलम्? सितरुचि श्वेतदीप्ति पुनः फेनिलं संजातफेनम्, किं कुर्वन् चकाशे? स्फुरद्दीप्यमानम्, किमिव? रूप्यस्य रजतस्य मण्डनमिव, युक्तमेतत् वा श्रमफलं केषाम् उन्नतिं न धत्ते, अपितु सर्वेषामपीति ॥१६॥

**मातङ्गप्रभृतिपदाभिघातधूतः संप्राप्य प्रसरमितस्ततोऽपि पांसुः।**
**आरुक्षन्नृपतिशिरः समुद्धतत्वान्नीचस्य स्थितिरियमद्भुतं न किंचित् ॥१७॥**

मातङ्गेति—पांसुः रेणुः नृपतिशिरः आरुक्षत् आरुरोह, किं कृत्वा? पूर्वम् इतस्ततोऽपि यत्र तत्रापि प्रदेशे प्रसरं व्याप्तिं सम्प्राप्य, कथम्भूतः? मातङ्गप्रभृति पदाभिघातधूतः, मातङ्गप्रभृतीनां गजेन्द्रादीनां चतुरङ्गसैन्यानां पदाभिघातेन धूतः मातङ्गादिचरणक्षोदोत्क्षिप्तः, युक्तमेतद्द्वयं स्थितिः स्यात्, कस्य? नीचस्य, कस्मात्? समुद्धतत्वात्, अतएव किंचिदद्भुतं न ॥१७॥

**संतप्तस्तपनमरीचिभिः कटाभ्यां नागानां मदगुरुणाग्रपल्लवेन।**
**क्षुण्णोऽपि भ्रमरगणः स्थितोऽनुकर्णं छाया यत्पदमपि सा वरं न तूष्णम् ॥१८॥**

संतप्तेति—भ्रमरगणः द्विरेफसमूहः, अनुकर्णं श्रवणयोः पश्चात् क्षुण्णोऽपि क्षोभं नीतोऽपि स्थितः, केन? मदगुरुणा अग्रपल्लवेन कर्णाग्रभागेन कथम्भूतः? तपनमरीचिभिः दिनकृत्किरणैः संतप्तः, काभ्यां क्षोभं नीतः सन्? नागानां दन्तिनां कटाभ्यां कपोलाभ्याम्, युक्तमेतत्, छायापि यत् पदं विद्यते सावरं स्यान्न तूष्णमिति ॥ १८ ॥

**कायस्य त्वचि कठिनस्य कर्कशायां निर्यातुं विकलमपास्य तप्तमनास्यात्।**
**सूत्कारस्रुतकरशीकराः कराग्रैरन्तस्थं ववमुरिव द्विपाः श्रमाम्भः ॥१९॥**

कायस्येति—द्विपाः हस्तिनः कराग्रैः शुण्डाग्रैः श्रमाम्भः श्रमजलं ववमुरिव वमन्ति स्मेव, कथम्भूतम्, अन्तःस्थम्, किं कृत्वा? पूर्वमास्याद्वक्त्रात् विकलमसमर्थं तप्तं श्रमाम्भः अपास्य अपाकृत्य किं कर्तुम्? नियतिम्, कस्याम्? कायस्य त्वचि शरीरस्य चर्मणि, कथम्भूतस्य? कठिनस्य कर्कशस्य, कथम्भूतायां त्वचि? कर्कशायां निष्ठुरायाम् कथम्भूताः सन्तो द्विपाः? सूत्कारस्रुतकरशीकराः सूत्कारवशात्प्रस्यन्दितशुण्डानिष्ट्यूतजलकणाः इत्यर्थः ॥ १९ ॥

**उच्छ्वासाद्विविधभरं लघुं वहन्तः किं न्यूनं किमधिकमित्यधीश्वराणाम्।**
**सत्कारं निजनियतं च कर्म कार्मा मध्यस्थाः समतुलयन्निवाध्वनीनाः ॥२०॥**

---

आगे तथा पीछे चलती हुई चाबुकोंके द्वारा मथे गये समान, अत्यन्त धवल तथा झागयुक्त घोड़ोंका बहता पसीना वैसा ही शोभित हुआ था जैसा जगमगाता चाँदीका आभूषण लगता है [ उचित ही है, क्योंकि ] ऐसा कौन है? परिश्रमके फलस्वरूप जिसकी उन्नति न हुई हो ॥१६॥

हाथी, आदि वाहनोंके चलने ( पैर मारने ) से उठी धूल पहिले तो इधर, उधर सर्वत्र फैल गयी थी। इसके बाद ऊपर उड़ने ( उद्धत होने ) के कारण राजाके शिरके भी ऊपर पहुँच गयी थी। इसमें आश्चर्य ही क्या है? क्योंकि नीचकी स्थिति ही यही है ॥१७॥

सूर्यकी किरणोंके द्वारा तपाया गया तथा हाथियोंके बहते मदजलसे भींगनेके कारण भारी कानके अगले भागके द्वारा सताया गया भी भौंरोंका समूह कानके पीछे बैठा हुआ था। उचित ही है—थोड़ी-सी भी छाया भली होती है, गर्मी नहीं ॥१८॥

प्रकृत्या कठोर देहकी अत्यन्त कर्कश चमड़ीसे पसीनेको निकालनेमें असमर्थ हाथी शरीरके भीतर भरे उष्ण स्वेद जलको मुखसे निकालकर, 'सू' 'सु' करनेमें सूँड़से निकलते जलके बिन्दुओंके बहानेसे सूँड़से ही उगल रहे थे ॥१९॥

उच्छ्वासादिति—समतुलयन्निव सम्यक् प्रकारेण तुलयन्ति स्मेव, के ? कार्माः कर्मणि नियुक्ताः कार्माः कार्यवाहाः पुरुषाः, कम् ? सत्कारं सम्मानम् , केषाम् ? अधीश्वराणां स्वामिनाम्, तथा समतुलयन्निव च, के ? कार्याः, किम् ? कर्म, कथम्भूतम् ? निजनियतं कर्मणोर्मध्ये किं न्यूनं स्यात् किमधिकं स्यात् इति, कथम्भूताः सन्तः ? मध्यस्थाः सत्कारकर्मणोरित्यध्याहार्यम् , पुनः कथम्भूताः ? अध्वनीनाः अध्वानमलङ्गामिनः, किं कुर्वन्तः ? विविधभरं कार्यभारं वहन्तः, कथम्भूतम् ? उच्छ्वसात् आयासवशात् नासाद्वारेणवायुविमोचनात् लघुम् ॥ २० ॥

**सेनैवं विरचितपार्थवाजिवेगादिक्ष्वाकुस्थितिविधिना यशो निधित्सुः ।**
**प्रस्थानात्प्रभृति पृथग्विधा निवेशान्नात्रुट्यज्जलनिधिगामिनी धुनीव ॥२१॥**

सेनेति—सेना निवेशात् प्रभृति स्थितियोग्यप्रदेशं मर्यादीकृत्य प्रस्थानात् प्रयाणकम् प्रदेशात् नात्रुट्यत् न त्रुटतिस्म, केव ? धुनीव नदी यथा, कथम्भूता ? जलनिधिगामिनी, कथम्भूता सेना पृथग्विधा विविधा, पुनः कथम्भूता ? निधित्सुर्निधातुमिच्छुः, किम् ? यशः, कस्मात् ? एवं ? विरचितपार्थवाजिवेगात्, एवमिति शब्दोऽङ्गीकारे वर्त्तते, तस्य सतामवश्यंभावितत्वात् एवमेवमित्यङ्गीकारेण कृत्वा विरचितं पार्थवं यस्मिन् स एवंविरचितपार्थवः अङ्गीकारविहितपृथुत्वः, आजौ वेगः आजिवेगः संग्रामोत्सुकत्वमित्येवं विरचितपार्थवश्चासावाजिवेगश्च, एवं विरचितपार्थिवाजिवेगस्तस्मात्, केन ? इक्ष्वाकुस्थितिविधिना इक्ष्वाकूणां रामलक्ष्मणादीनां स्थितिविधिः इक्ष्वाकुस्थितिविधिस्तेन, इक्ष्वाकूणामाज्ञयेति ।

भारतीयः—सेना नात्रुट्यत्, कस्मात् ? निवेशात्, कथम् ? प्रभृति, कस्मात् ? प्रस्थानात् कथमेव एवमुक्तप्रकारेण, केव ? धुनीव, यथा धुनी न त्रुट्यति, कस्मात् निवेशात् उत्पत्तिस्थानमादिकृत्वा स्थितियोग्यप्रदेशं मर्यादीकृत्य न त्रुट्यतीत्यर्थः । कथम्भूता सती ? जलनिधिगामिनी, कथम्भूता सेना ? पृथग्विधा विविधा, पुनः कथम्भूता ? यशोनिधित्सुः, कासु ? दिक्षु आशासु, केन ? आकुस्थितिविधिना कुम् आ आकु, आकोः स्थितिः आकुस्थितिः तस्या यो विधिः तेन, पृथ्वीं व्याप्यावस्थानविधानेनेत्यर्थः, पुनः विरचितपार्थवाजिवेगा, पार्थोऽर्जुनः, पार्थस्य वाजी पार्थवाजी, विरचितः पार्थवाजिनो वेगो यया सा तथोक्ता ॥२१॥

**वीभत्सं रणरुचिरङ्गदोर्जितश्रीराशंसुर्जितपरभूमिपावनिश्च ।**
**भीमोघस्थितिरिपुदुर्धरं स्वरूपं पौरस्त्यां धुरि गतिमापतां ध्वजिन्याः ॥२२॥**

द्वि० वीभत्समिति—आपतां प्राप्तवन्तौ, कौ ? अङ्गदः पावनिश्च हनूमान् एतौ, काम् ? गतिम्, कथम्भूताम् ? पौरस्त्यां पुरो भवा पौरस्त्या ताम् अग्रभवामित्यर्थः, कस्याः ? ध्वजिन्याः सेनायाः धुरि, कथम्भूतोऽङ्गदः पावनिश्च ? रणरुचिः रणे संग्रामे रुचिः प्रीतिर्यस्य सः, पुनः अर्जितश्रीः पुनः भीमो भयानकः

---

अपनी महाप्राणता अथवा लम्बी साँस रोककर नाना प्रकारके भारोंको अनायास ही ले जाते हुए विहंगी (कावर) धारक कुशलतापूर्वक मार्गको पार करते हुए, स्वामियोंके सम्मान और अपनेपर आये दायित्व; इन दोनों (कौन बड़ा है और कौन कम है) को मध्यस्थके समान तौलते हुए समान लगते थे ॥२०॥

इक्ष्वाकुके वंशधरोंकी आज्ञासे युद्धकी त्वराकी विशालता ( पार्थव + आजिवेगात् ) से परिपूर्ण नाना प्रकारकी राघव सेना विजयके यशकी प्रतिष्ठा करनेके लिए नदीके समान समुद्रकी ओर बढ़ती हुई भी प्रारम्भसे लेकर लक्ष्य पर्यन्त चली गयी थी बीचमें कहीं भी टूटी नहीं थी [ अर्जुनके घोड़ोंके वेगसे ( पार्थ + वाजि ) समस्त पृथ्वीको आक्रान्त करके ( आ-कु-स्थिति-विधिना ) दिशाओंमें अपनी कीर्ति स्थापित करनेके लिए चतुरंग पाण्डव सेना समुद्रगामिनी नदीके समान स्कन्धावारसे लेकर युद्धस्थली पर्यन्त अखण्ड रूपसे फैली थी ] ॥२१॥

युद्धके प्रेमी, रौद्ररसकी प्रशंसा करनेमें लीन, लक्ष्मीके निधान, शत्रुओंकी भूमिके विजेता और भयके कारण स्वयमेव निरुत्साहको प्राप्त शत्रुओंके लिए युद्धमें दुर्धर अंगद

पुनः आशंसुः श्लाघमानः, किम्? बीभत्सं रौद्रं स्वरूपम्, कथं स्वरूपम्? जितपरभूमि जिता परेषां शत्रूणां भूमिर्येन तत् पुनः अघस्थिति अघस्य स्थितिर्येषु अघेनोपलक्षिता स्थितिर्येषां वा ते अघस्थितयः ते च ते रिपवश्च अघस्थितिरिपवस्तेषां दुर्द्धरं पापस्थितिमनुष्याणां दुःखेन धर्तुं शक्यमिति, अथवा भीमोघस्थितिदुर्धरं भिया भयेन मोघा निष्फला स्थितिर्येषां ते भीमोघस्थितयः भीमोघस्थितयश्च ते तथोक्तास्तेषां दुर्द्धरस्तम्।

भारतीये—आप प्राप्तवान्, कः? भीमो वृकोदरः, काम्? तां गतिम्, कथम्भूताम्? पौरस्त्याम्, कस्याम्? धुरि, कथम्भूतः? गदोर्जितश्रीः गदया ऊर्जिता श्रीर्येन सः पुनः जितपरभूमिपावनिः जितापरभूमिपानां शत्रुनृपाणाम् अवनिः पृथ्वी येन अभिभूतेतरनरेश्वरभूमिरित्यर्थः। पुनः बीभत्समर्जुनं श्लाघमानः कथम्भूतमर्जुनम्? रणरुचिरं रणः रुचिरः प्रीत्युत्पादको यस्य सः तम्, अथवा रणे रुचिं प्रीतिं राति गृह्णातीति तं पुनः अघस्थितिरिपुदुर्द्धरं पापस्थितीनां रिपूणां दुःखेन धर्तुं शक्यम्, पुनः कथम्भूतम्? स्वरूपं स्वस्य आत्मनो रूपं यस्य स तम्, कस्याम्? ध्वजिन्यां धुरि इति ॥२२॥

**तत्पार्श्वे गतधृतिमत्स्यदेशमाढ्यं भुञ्जानोऽनलसहितः सुखं प्रतस्थे।**
**पञ्चालोचितविषयप्रभुश्च सैन्यं बिभ्राणः सवसुयशोविलासिनीलः ॥२३॥**

तत्पार्श्वे इति—स लोकविख्यातो नीलः नीलनामधेयो विद्याधरचक्रवर्त्ती प्रतस्थे, किं कुर्वाणः? तत्पार्श्वे तस्या ध्वजिन्याः पार्श्वे हनुमदङ्गदपार्श्वे वा सैन्यं बिभ्राणो धरन्, कथम्भूते तत्पार्श्वे? गतधृतिमत्स्यदे-गतधृतिरस्यास्तीति गतधृतिमान् गतधृतिमान् स्यदो यस्य तस्मिन् गमनधरणवद्वेगे इत्यर्थः, कथम्भूतं सैन्यम्? वसुयशोविलासि वसुयशोभ्यां द्रव्यश्लोकाभ्यां विशेषेण लसतीत्येवंशीलं तत्, किं कुर्वाणः? शमाढ्यम् उपशमप्रधानं सुखं भुञ्जानोऽनुभवन्, कथम्भूतो नीलः? नलसहितः नलनामधेयेन राज्ञा संयुतः, पुनः पञ्चालोचितविषयप्रभुः पञ्चालाः क्षत्रियाः तेषाम् उचिता ये विषया भोगास्तेषां प्रभुः स्वामीः अथवा पाञ्चालो देशः, पञ्चाल एव उचितो योग्यो विषयो येषां ते पञ्चालोचितविषयाः पञ्चालदेशोद्भवाः क्षत्रियास्तेषां प्रभुः।

भारतीये—प्रतस्थे, कः? राजा, किं कुर्वाणः? मत्स्यदेशं वैराटदेशं भुञ्जानः, कथम्भूतम्? आढ्यं समृद्धम् कथं यथा भवति? सुखं यथा; एतेन विराटनामधेयो नरेन्द्रश्चचालेति लब्धम्, किं कुर्वाणः? तत्पार्श्वे तस्याः पार्श्वे सैन्यं बिभ्राणः, कथम्भूते तत्पार्श्वे? गतधृति गतं धरति गतधृत् तस्मिन्, कथम्भूतो विराटः? अनलसहितः अलसाः मन्दाः न अलसाः अनलसाः उद्योगिनस्तेषां हितः, अथवा अनलसाः सकलकलाकुशलाः हिताः अमात्यादयः पुरुषा यस्य सः पुनः, पञ्चालोचितविषयप्रभुः आलोचिताः सकललोकप्रतीताः, विषयाः इष्टस्रग्वनिताचन्दनादयः, आलोचिताश्च ते विषयाश्च, आलोचितविषयाः, पञ्च च ते आलोचितविषयाश्च पञ्चालोचितविषयास्तेषां प्रभुः शृङ्गाररसरसिक इत्यर्थः तथा चोक्तं "रससज्जेन यो रीतेर्विदधाति सुवर्णताम्, स कविः स नरेन्द्रश्च वन्द्यः कस्य न जायते", पुनः कथम्भूतः? सवसुयशोविलासिनीलः वसु द्रव्यम्, यशो वर्णः, विलासिन्यः सुन्दर्यः, इला मेदिनी एतैः सह वर्त्तते सः तथोक्तः ॥२३॥

---

और पवनसुत रामकी सेनाके आगे-आगे चले जा रहे थे [ अपनी गदाके कारण अधिक शोभायमान, शत्रु-पक्षसे मिले राजाओंकी भूमिका विजेता, पापके गर्तमें पड़े शत्रुओं कौरवोंके द्वारा रोके जानेके लिए अत्यन्त कठिन और युद्धके लिए आतुर अर्जुन ( बीभत्स ) की प्रशंसामें लीन भीम कृष्णकी सेनाके आगे चल रहा था ] ॥२२॥

शान्तिकालके विशाल सुखोंका भोक्ता, सम्पत्ति और कीर्तिके द्वारा शोभित, सबकी चर्चाके विषय पाँचों इन्द्रियोंके भोगोंका स्वामी ( पञ्च-आलोचित-विषय-प्रभुः ) तथा विशाल सेनाका नेता वह नील भी यात्राके आयासको सहनेमें समर्थ रथपर ( गतधृति मत्स्यदं ) चढ़कर नलके साथ उन अङ्गद और हनुमानके पार्श्वमें चल रहा था [ धन, कीर्ति, कामिनी और भूमिकी अपेक्षा परिपूर्ण, आलससे दूर और हितैषी, सम्पन्न मत्स्य देशका सुखसे भोग करता तथा पाञ्चाल और संलग्न देशोंका भी राजा विराट सेना लेकर आक्रमण सहनेमें समर्थ पाण्डव सेनाके पार्श्वमें चल रहा था ] ॥२३॥

**तन्मध्यं हरिकुलनायकैरनेकैरामोदस्फुटसितचन्दनोचिताङ्गः।**
**दुर्वृत्तं विजहदसज्जनार्दनोऽसौ भूपार्थक्षतशमनोद्यतो जगाहे ॥२४॥**

तन्मध्यमिति—जगाहे गाहते स्म, कोऽसौ ? असौ रामो राघवः, किम् ? अद एतत्तन्मध्यं तस्या ध्वजिन्या मध्यम्, कैः सह ? हरिकुलनायकैर्वानरसमूहस्वामिभिः। कथम्भूतैः ? अनेकैर्नानाविधैः, किं कुर्वन् ? दुर्वृत्तं दुःशीलत्वं विजहत्। कथम्भूतो रामः ? स्फुटसितचन्दनोचिताङ्गः स्फुटसितः सुग्रीवः चन्दनश्चन्दननामधेयो नृपः तयोरुचितम् अङ्गं यस्य सः तथोक्तः, अत्र रामशरीरस्य सुग्रीवचन्दनयोः आरक्षकत्वं प्रतिपादितम्, कथम्भूतः ? असज्जनार्दनः असतो जनानर्दयतीति असज्जनार्दनः रिपुप्रध्वंसक इत्यर्थः। पुनः भूपार्थक्षतशमनोद्यतः भूपानां यः अर्थः क्षात्रधर्मः तस्य यत् क्षतं लोपः तस्य शमने उद्यतः भूपार्थक्षतशमनोद्यतः, अद इत्यत्र विसर्गभूतस्य सकारस्य स्फुटपदसकारस्य लोपो द्रष्टव्यः "शरो शरि स्वे" [ जै० सू० ५।४।१३९ ] इत्यनेन सूत्रेण सकारलोपप्रतिपादितत्वात्।

भारतीये—जनार्दनो नारायणः तन्मध्यं तस्या ध्वजिन्या मध्यं जगाहे, कैः सह ? हरिकुलनायकैः समुद्रविजयादिभिर्नरेन्द्रैः, किं कुर्वन् ? असौ खल्वसत् असमीचीनं क्षत्रियकुमारैर्निन्दितं दुर्वृत्तं विजहत् परित्यजन्, कथम्भूतो जनार्दनः आमोदस्फुटसितचन्दनोचिताङ्गः, आमोदेन स्फुटं यत् सितचन्दनं तस्योचितमङ्गं यस्य स परिमलप्रवक्तव्यश्वेतश्रीखण्डयोग्यशरीर इत्यर्थः, पुनः भूपार्थक्षतशमनोद्यतः भुवः पृथिव्याः पार्थानां पाण्डवानां क्षतशमने उद्यतः ॥२४॥

**मदोत्तमाद्रेयबलेभसारे भागेऽपरे सर्पति जाम्बवेऽस्मिन्।**
**द्वीपेऽन्विते राजभिरप्रसह्यैः ससर्प वेलेव चमूः पयोधेः ॥२५॥**

मदेति—ससर्प जगाम, का ? चमूः सेना, क्व ? अस्मिन् द्वीपे, अत्र केव ससर्प चमूः ? पयोधेः वेलेव, अस्मिन् द्वीपे, क्व सति चमूः ससर्प ? अपरे पश्चिमे पाश्चात्ये भागे, पुनः कथम्भूते ? जाम्बवे जाम्बवस्यायं जाम्बवः तस्मिन् जाम्बवक्षत्रियसम्बन्धिनि पुनः मदोत्तमाद्रेयबलेभसारे मदोत्तमाः मदप्रधानाः आद्रेयाः अद्रिजाताः ये बलेभाः सैन्यगजाः तैः सारे पुनः सर्पति विजृम्भमाणे पुनः राजभिर्नरेन्द्रैः अन्विते युक्ते, कथम्भूतैः राजभिः ? अप्रसह्यैः सोढुमशक्यैः।

भारतीये—चमूः ससर्प, क्व ? जाम्बवे जम्ब्वा इदं जाम्बवं तस्मिन् जम्बूपलक्षिते द्वीपे, केव ? पयोधेः वेलेव क्व सति चमूः ससर्प ? भागे, कथम्भूते ? अपरे पश्चिमे, किं कुर्वति सति ? सर्पति, पुनः कथम्भूते ? मदोत्तमाद्रेयबलेभसारे मदोत्ताः मदक्लिन्नाः त्रिगण्डैर्मदजलप्रवाहिण इत्यर्थः, ये माद्रेययोर्माद्रीपुत्रयोर्नकुलसहदेवयोर्बलेभाः तैः सारे। अन्यत्समम्[1] ॥ २५ ॥

---

अनेक वानरवंशी राजाओंके साथ उस सेनाके बीचमें श्रीराम जा रहे थे, सुग्रीव ( स्फुटसित ) और चन्दन इनके अंग-रक्षक थे, स्वयं ये दुराचारके त्यागी थे और दुष्टोंके विनाशक थे तथा क्षात्र धर्मपर आये प्रहारका वारण करनेके लिए कटिबद्ध थे [ अनेक यादववंशी राजाओंसे घिरे, पृथ्वी और पाण्डवोंके साथ हुए अन्यायका प्रतीकार करनेको उद्यत जनार्दनने राजविद्या ( असौ ) के प्रतिकूल ( असत्, ) निन्द्य आचरणको छोड़कर उस सेनाके केन्द्रको सम्हाला था। उनके पूरे शरीरपर श्वेत चन्दनका लेप हो रहा था जिसकी सुगन्ध सर्वत्र फैल रही थी ] ॥२४॥

सामना करनेके लिए अशक्य राजाओंसे युक्त, पर्वतोंमें उत्पन्न ( आद्रेय ) मदोन्मत्त उत्तम हाथियोंके कारण सुपुष्ट जामवन्तकी पीछे चलती हुई सेना इस लंकाद्वीपपर उसी तरह बढ़ गयी थी जैसे समुद्रकी लहरें बढ़ आती हैं [ सामना मदजलसे गीले ( मदोत्त ) माद्रीसुतों ( माद्रेय ) की हस्ति-सेनासे सबल पाण्डव सेना इस जम्बूद्वीपके अपर भागमें उसी तरह हैं ] ॥२५॥

---

१. उपजातिवृत्तम्।

**एवं नानाक्षत्रियवर्गैः पृतनाग्रे सालङ्कान्तं रौप्यमिवैतैः सह सालम् ।**
**वेलापातश्वेततरङ्गं जलराशिं तं सारम्भोगाङ्गमवापन्नृपतिश्च ॥२६॥**

एवमिति–सा पृतना सेना लङ्कान्तं लङ्कासमीपवर्तिनं सालं प्राकारम् अवापत् प्राप्तवती, कमिव ? रौप्यं रजतनिर्माणमिव, कथम् ? अग्रे प्रथमं कथम् ? एतैः नाना क्षत्रियवर्गैः सह, कथम् ? एवमुक्तप्रकारेण, तथा अवापत् प्राप्तवान्, कः ? नृपतिश्च रामः, कम् ? तं जलराशिं समुद्रम्, कथम्भूतम् ? वेलापातश्वेततरङ्गम्, सुगममेतत्, तथावापत्, कः ? नृपतिः, किम् ? भोगाङ्गं भोगः सक्रुद्भुज्यते इति भोगः भोगस्याङ्गमिति भोगाङ्गं ताम्बूलकुसुमचन्दनादि, कथम्भूतम् ? सारं प्रधानमिति ।

भारतीयः पक्षः–अवापत्, का ? पृतना सेना, कम् ? जलराशिम्, कथम् ? अग्रे प्रथमम्, अग्रे इति विभक्तिप्रतिरूपकमव्ययपदम्, कैः सह ? एतैः नानाक्षत्रियवर्गैः, कथम् ? अलमत्यर्थम्, कथम्भूतं जल-राशिम् ? गाङ्गं गङ्गाया अयं गाङ्गस्तम्, पुनः कथम्भूतम् ? वेलापातश्वेततरङ्गम्, कमिव ? रौप्यं रजतमयं सालमिव पुनः कान्तं मनोहरं तथा चावापत् नृपतिर्जनार्दनः, कम् ? जलराशिम्, कथम् ? अलमत्यर्थम्, कथम्भूतः जनार्दनः ? सारम्भः साटोपः[1] ॥२६॥

**चिरानवस्थाननियोगखिन्नमेकस्थमत्यायतमापगौघम् ।**
**यथाम्बुराशिं ध्वजिनीरजोभिः श्यामायमानं ददृशुर्बलानि ॥२७॥**

चिरेति–बलानि सैन्यानि अम्बुराशिं समुद्रं ददृशुः निरीक्षाञ्चक्रिरे, कथम्भूतम् ? ध्वजिनीरजोभिः सेनारेणूत्करैः श्यामायमानम्, कमिवोत्प्रेक्षितम् ? यथापगौघं सरित्समूहमिव, कथम्भूतम् ? एकस्थमेकत्रवि-श्रान्तम्, पुनः चिरानवस्थाननियोगखिन्नं बहुतरकालपर्यटनव्यापारेण श्रान्तं पुनः अत्यायतं दीर्घतरम् ।

भारतीये–ददृशुः, कानि ? बलानि, कम् ? अम्बुराशिं जलसमूहम्, कथम्भूतम् ? आपगौघम् आपगा-नामोघः आपगौघः आपगौघस्यायमापगौघस्तम्, कथम्भूतं ददृशुः ? ध्वजिनीरजोभिः श्यामायमानं पुनः अत्यायतम्, कमिवोत्प्रेक्षितम् ? एकस्थं यथा एकत्र विश्रान्तमिव । शेषं सुगमम्[2] ॥२७॥

**दिदृक्षुराद्यन्तमिव प्रमाणं पूर्वापरं वा प्रथमाभिषङ्गात् ।**
**समुद्रतीरञ्जितसर्वलोका सेनापगां व्याप्तवती बलेन ॥२८॥**

द्विः । दिदृक्षुरिति–आप प्राप्तवती, का ? सेना, किम् ? समुद्रतीरं जलधितटम्, कथम्भूता ? व्याप्तवती, काम् ? गां पृथिवीम्, केन कृत्वा ? बलेन रामचन्द्रेण, कथम्भूता सती ? जितसर्वलोका, सुगममेतत्, केवो-

---

विविध वंशोंके क्षत्रिय राजाओंसे परिपूर्ण यह रामकी सेना उक्त प्रकारसे, किनारेपर अपनी श्वेत तरंगोंको फेंकते हुए लंकाके पासके अतएव चाँदीके परकोटाके समान समुद्रके पास पहिले पहुँच गयी थी तथा राजा भी भोगके प्रधान साधनको प्राप्त हुआ था [ " यह पाण्डव सेना अत्यन्त सुन्दर, किनारे पर धवल लहराते अतएव चाँदीके परकोटाके सदृश गंगाकी जलराशिके पास सबसे पहिले पहुँची थी । और इसके बाद सजधजके साथ राजा जनार्दन भी पहुँचे थे ] ॥२६॥

राघव-सेनाने अत्यन्त विस्तृत तथा सेनाके चलनेसे उड़ी धूलके कारण काले-काले समुद्रको देखा था । मानो चिरकालतक घूमते रहनेके कारण थकी नदियोंकी विपुल जल-राशि ही एक स्थानपर रुक गयी थी [ पाण्डव सेनाने···काले मगधकी नदियोंके समूहको देखा था जो चिरकालतक भटकते रहनेके कारण खिन्न, अतएव एक जगहपर थमी जल-राशिके तुल्य लगता था ] ॥२७॥

पहिले-पहिले पहुँचनेके कारण आदि और अन्त अथवा आगा और पीछा देखनेकी

---

१. मत्तमयूरवृत्तम् । २. उपजातिवृत्तम् ।

प्रेक्षिता ? दिदृक्षुर्द्रष्टुमिच्छुरिव, किम् ? प्रमाणं प्रकृष्टं मानं प्रमाणम्, कथम्भूतम् ? आद्यन्तम् आदिश्च अन्तश्च आद्यन्तौ आद्यन्तौ यस्य तदाद्यन्तं वाथवा पूर्वापरं पारम्पर्यतया प्रसिद्धं प्रमाणं दिदृक्षुरिव, कस्मात् ? प्रथमाभिषङ्गात् प्रथमसम्बन्धात् ।

भारतीयः—व्याप्तवती, का ? सेना, काम् ? आपगां नदीं गङ्गाम्, कथम्भूता समुद्रती ? रञ्जितसर्वलोका आनन्दिताखिलविश्वा, केन कृत्वा ? बलेन सामर्थ्येन बलभद्रेण वा पुनः समुद्रतिः मुदि रतिः मुद्रतिः सह मुद्रत्या वर्त्तते इति समुद्रतिः हर्षरत्या सह वर्तमाना पूर्वार्द्धं पूर्वोक्तव्याख्यानविषयं बोधव्यम् ॥२८॥

**समुद्रं हा न्यायं विदधदहितस्यापिहितधीः**
**स नीलाभोगङ्गां व्युदतरदवन्विष्णुरखिलम् ।**
**गतं खेलं कुर्वद्बलमपि तथा वानरमयं**
**रजस्त्वेकं चम्वाः सलिलधिनिषिद्धं निववृते ॥२९॥**

द्विः । समुद्रमिति—हा कष्टं व्युदतरत् व्युत्तीर्णवान्, स विष्णुर्लक्ष्मणः, कम् ? समुद्रम्, कथम्भूतम् ? नीलाभोगं नील आभोगो यस्य तम्, किं कुर्वन् ? विदधत् कुर्वन्, किम् ? न्यायं नीतिम्, कथम्भूतो विष्णुः ? हितधीः हितं सुखं तत्कारणं च, हिते धीर्यस्य स हितधीः, कस्यापि ? अहितस्यापि शत्रोरपि अथवा विदधत् कुर्वन्, किम् ? हान्यायं हानेः आयं प्रध्वंसस्य प्राप्तिम् । अहितस्य रिपोः, कथम्भूतोऽपि ? हितधीरपि उपकारनिष्ठबुद्धिरपीत्यर्थः, किं कुर्वन् ? अवन् रक्षन्, काम् ? गां मेदिनीम् तथागतं, किमपि ? बलमपि, कुर्वत्, किम् कुर्वत् ? अलं विभूषाम्, क ? खे गगने, कथम्भूतं बलम् ? वानरमयं वानरा हेतुर्यस्य तद्वानरमयं पुनः अखिलं तु पुनः निववृते निवृत्तम्, किम् ? एकं रजः कस्याः ? चम्वा : सेनायाः, कथम्भूतं सन्निवृत्तम् ? सलिलधिनिषिद्धमिति ।

भारतीयः—व्युदतरत्, कः ? स विष्णुर्नारायणः, काम् ? गङ्गां सुरसरितम्, किं कुर्वन् ? विदधत्, कम् ? न्यायं नीतिम्, कस्य ? अहितस्य शत्रोः, किं कुर्वन्नपि ? अवन्नपि, कम् ? न्यायं नीतिम्, क ? आत्मनीतिसंयोज्यम्, कथम्भूतो विष्णुः ? नीलाभः श्यामलकायकान्तिः पुनः हितधीः हितेष्वव्यभिचारिषु धीर्यस्य स हितधीः, पुनः कथम्भूतः ? समुद्रंहाः, मुत् हर्षः रंहो वेगः मुदो रंहः मुद्रंहः सह मुद्रंहसा वर्त्तते इति समुद्रंहाः, अथवा व्युदतरत् गङ्गां स विष्णुः किं कुर्वन् ? विदधत् कुर्वन्, किम् ? आयं संयोगम्, कया सहः ? हान्या विनाशेन, कस्य ? अहितस्य विपक्षस्य, किं कुर्वन् ? अवन् रक्षन्, कम् ? समुद्रम्, रः ध्वनिः, सह मुदा वर्त्तते इति समुत् समुच्चासौ रश्च समुद्रः तं समुद्रं सानन्दरवमित्यर्थः, क ? आत्मनीत्यध्याहार्यम्, कथम्भूतः सन् ? अपिहितधीः अनावृतमतिः ज्ञानावरणीयकर्मसंयोगवियोगात् सकलशास्त्रप्रवीणबुद्धिरित्यर्थः तथा गतम्, किम् बलमपि. कथम्भूतम् ? नरमयम्, वा इवार्थे, तेनोपमार्थो लभ्यते, किं कुर्वदिव गतम् ? कुर्वदिव,

इच्छासे ही, अपने सामर्थ्यके द्वारा समस्त पृथ्वीको आक्रान्त करती, विश्व-विजयिनी वह सेना समुद्र-तटपर पहुँच गयी थी [ ···इच्छासे ही, नारायणकी उपस्थितिके कारण सानन्द और अनुरक्त, तथा समस्त लोकको प्रसन्न करती उस सेनाने गंगा नदीको व्याप्त कर लिया था ] ॥२८॥

शत्रुके भी कल्याण करनेका इच्छुक, न्यायका कर्ता तथा पृथ्वीकी रक्षामें तत्पर लक्ष्मण नीली नीली शोभामय समग्र सागरको पार कर गये थे । और वानरोंकी सेना भी आकाशमें (खे) पूर्ण रूपसे चलती हुई पार हो गयी थी । समुद्रके जलसे शान्त अतएव रोकी गयी सेनाकी धूल ही केवल लंका जाते जाते लौट आयी थी [शत्रुके लिए विनाशक संयोग (हान्याय) का कर्ता, समस्त आनन्दमय प्रसंगोंका रक्षक, बुद्धिमत्ताके लिए ख्यात (अपिहितधीः) तथा नील कान्तिके धारक उस विष्णुने गंगाको पार कर लिया था । और

कम् ? खेलं क्रीडाम्, कथम्भूतं बलम् ? अखिलं समस्तं तु पुनः निववृते, किम् ? एकं रजः, कस्याः ? चम्वाः, कथं सत् ? सलिलधिनिषिद्धमिति[1] ॥ २९ ॥

तद्वानेयद्विपमदमरुद्भ्रान्तचित्तं कथञ्चित्
भूतावेशाद्भ्रमदिव शिरो धुन्वदाधोरणानाम् ।
तीरोपान्तप्रहितनयनं हास्तिकं वारि तीर्णं
गन्तुं सेतुः कृत इव घटाबद्धमक्षौहिणीनाम् ॥३०॥

तदिति–तीर्णम्, किम् ? हास्तिकं हस्तिसमूहः, किं तीर्णम् ? वारि जलम्, कथम्भूतं सन् ? घटाबद्धम्, क इवोत्प्रेक्षितम् ? सेतुरिव, कथम्भूतः ? विहितः, किं कर्त्तुम् ? गन्तुम्, कासाम् ? अक्षौहिणीनां सेनानाम्, कथम्भूतं हास्तिकम् ? तीरोपान्तप्रहितनयनं तटसमीपप्रेरितलोचनम्, किं कुर्वत् ? धुन्वत् कम्पयत्, किम् ? शिरो मस्तकम्, केषाम् ? आधोरणानां हस्तिपकानाम्, किं कुर्वत् ? भ्रमत्, कस्मादिव ? भूतावेशादिव ग्रहावेशादिव, कथम्भूतावेशोऽजनिष्ट ? कथञ्चित् केनचित्प्रकारेण, पुनः कथम्भूतम् ? तद्वानेयद्विपमदमरुद्भ्रान्तचित्तं वने भवा वानेयाः वानेयाश्च ते द्विपाश्च वानेयद्विपाः तस्य समुद्रस्य वानेयद्विपास्तेषां मदमरुता भ्रान्तं चित्तं यस्य तत्तथोक्तं समुद्रवनभवेभमदामोदवायुसंमोहितचेत इत्यर्थः[2] ॥ ३० ॥

वाजी वायुमयं जवं जवमयं चित्तं स चेतोमयं
देहं बिभ्रदिवाखिलोऽपि चटुलोऽप्यारोढुरेवाशये ।
काये चैक्यमुपेयिवानिव वशादर्णः समुत्तीर्णवान्
दम्यं नाम विवर्तते दमयितुः शीलेन कालान्तरे ॥३१॥

वाजीति–समुत्तीर्णवान्, कः ? स वाजी अश्वः, अत्र जात्यपेक्षयैकवचनम्, किम् ? अर्णो जलम्, कस्मात् ? वशात्, कस्यैव ? आरोढुरेव अश्ववारस्यैव, कथम्भूतः ? अखिलोऽपि पुनः चटुलोऽपि चञ्चलोऽपि, क इवोत्प्रेक्षितः ? ऐक्यम् अभेदम् उपेयिवानिव प्राप्तवानिव, क्व ? आशये हृदये काये शरीरे च, कस्यैव ? आरोढुरेव, किं कुर्वन्निव ? वायुमयम् अनिलनिर्माणं जवं वेगं बिभ्रदिव धरन्निव तथा चित्तं मनः जवमयं वेगनिर्माणं बिभ्रदिव तथा बिभ्रदिव, कम् ? देहम्, कथम्भूतम् ? चेतोमयं मनोनिर्माणम्, युक्तमेतत्, नाम अहो विवर्त्तते परिणमति, किम् ? दम्यं वस्तु, दमयितुः शिक्षासमर्थस्याचार्यस्य शीलेन कौशल्यगुणेन, क्व ? कालान्तरे[3] समयान्तरे ॥ ३१ ॥

प्राप्तव्योमासङ्गमोघं रथानां सव्येष्टास्तेऽनादिचक्रभ्रमेण ।
मुक्ताशं संसारपारं सुखं तं भव्यं सन्मार्गा इव स्मानयन्ति ॥३२॥

---

प्रयाणको खेल समझती वह पुरुष सेना भी पार हो गयी थी केवल······गंगाके द्वारा रोका धूलिपुञ्ज ही इस पार रह गया था] ॥२९॥

जंगली हाथियोंके मदजलसे वासित गंधके कारण कुछ कुछ मत्त अतएव भूतावेशके प्रभावके समान महावतोंके शिरोंको हिलाते हुए, उस किनारेकी भूमिपर दृष्टि गड़ाये और पानीको पार करके व्यूह-रचनासे चलते हाथियोंका समूह ऐसा लगता था; मानो सेनाके आनेके लिए पुल ही बना दिया हो ॥३०॥

पूरीकी पूरी चंचल अश्वसेनाका वेग वायुके समान था, चित्त वेगमय था, शरीर चित्तमय था तथा चित्त और शरीर एक-मेक हो जानेके कारण वह अश्वारोहियोंकी प्रेरणासे जलराशिको पार कर गयी थी। उचित ही है शिक्षार्थी या विनेय समय बीतनेपर शिक्षक या आचार्यके शीलसे प्रभावित होता है ॥३१॥

---

१. शिखरिणीवृत्तम्। २. मन्दाक्रान्तावृत्तम्। ३. शार्दूलविक्रीडितम् वृत्तम्।

प्राप्तेति–आनयन्ति स्मानीतवन्तः, के ? ते सव्येष्ठाः सारथयः, कम् ? तमोघं समूहम्, केषाम् ? रथानाम्। केन कृत्वा ? अनादिचक्रभ्रमेण नास्त्यादिर्यस्य स अनादिः आदेरपेक्षायाम् अन्तस्यापि ग्रहणं निरपेक्षाभावविषयत्वात् सापेक्षत्वाच्च सर्वपदार्थसार्थानाम् इति, चक्राणां भ्रमः चक्रभ्रमः अनादिश्चासौ चक्रभ्रमश्च अनादिचक्रभ्रमः तेन कथं यथा भवति ? मुक्ताशंसं मुक्तप्रशंसम्, कथं यथा भवतीत्यानीतवन्तः ? सुखं यथा कथम्भूतं मोघम् ? प्राप्तव्योमासङ्गं प्राप्तो व्योम्नः आकाशस्य आसङ्गः सम्बन्धो येन सः तु पुनः सारपारं सारो रेणूत्करः लोहं वासारः पारः पर्यन्ते यस्य स सारपारः तं सारपारं पुनः भव्यं रम्यम्, क इवानयन्ति स्म ? सन्मार्गा इव यथा सन्मार्गाः सम्यग्दर्शनज्ञानचारित्रलक्षणाः आनयन्ति, कम् ? भव्यं धर्मनिष्ठं जनम्, कमानयन्ति ? संसारपारं भवतटम्, कथं यथा भवति ? सुखम्, केन कृत्वा ? अनादिचक्रभ्रमेणेपार्जिततीव्रकर्मोपशमवशात् द्रव्यक्षेत्रकालभावचतुष्टयस्य लब्ध्या इत्यर्थः, कथम्भूतं भव्यम् ? प्राप्तव्योमासङ्गम् उमया सङ्गः कीर्तिसंयोगः प्राप्तश्च उमासङ्गो यस्य तं पुनः मुक्ताशं मुक्ता आशा येन तं परित्यक्तबाह्यव्यापारम्[1] ॥ ३२ ॥

**कर्णश्रुतिं गच्छति तूर्यनादे ध्वजेषु दृष्टिं पुरतः स्पृशत्सु ।**
**मोहं गतानीव चिरं विजज्ञुः कथंचिदात्मावसथं बलानि ॥३३॥**

कर्णेति–विजज्ञुः जानन्ति स्म, कानि ? बलानि, कम् ? आत्मावसथं स्वकीयां वसतिम्, कथम् ? कथञ्चित् महता कष्टेन, कथम् ? चिरं बहुतरकालेन, कथम्भूतानीवोत्प्रेक्षितानि बलानि ? मोहं गतानीव, क सति ? तूर्यनादे कर्णश्रुतिं कर्णरन्ध्रमार्गं गच्छति सति, केषु सत्सु ? ध्वजेषु आलम्बेषु[2] पुरतोऽग्रतः दृष्टिं स्पृशत्सु[3] ॥३३॥

**तदेव गाम्भीर्यमदः प्रमाणमगाधता सैव तदायतिश्च ।**
**चमूरशेषा विततानुकूलं सा नद्यधीनप्रतिमेव रेजे ॥३४॥**

तदेव इति–द्विः। तदेव गाम्भीर्यमस्ति तथा अद एतत् एव प्रमाणमस्ति, तथा सैवागाधताऽस्ति, तथा तदायतिश्च तद्दैर्घ्यं चास्तीति कृत्वा रेजे भाति स्म, का ? सा चमूः सेना, कथम्भूता सती ? वितता प्रसृता, कथम् ? अनुकूलं प्रतितटम्, पुनः कथम्भूता ? अशेषा समस्ता, केव रेजे चमूः ? नद्यधीनप्रतिमेव नदीनामधीनः नद्यधीनः नद्यधीनस्य प्रतिमा नद्यधीनप्रतिमा समुद्रमूर्त्तिरिवेत्यर्थः।

भारतीय–नद्यधीनप्रतिमेव नद्या अधीना नद्यधीना नद्यधीना चासौ प्रतिमा च नद्यधीनप्रतिमा सेव गङ्गायत्तमूर्त्तिरिवेत्यर्थः। शेषं सुगमम् ॥ ३४ ॥

**विचित्ररत्नप्रतिभाविशालं राजालयं राजकमभ्युपेत्य ।**
**रामाननालोकगतादराक्षं पार्थक्षतं रोद्धुमनोऽवतस्थे ॥३५॥**

---

सतत प्रचलित चक्रोंकी गतिके द्वारा विस्तृत आकाशमें व्याप्त धूलि पुंजके बाहर ले जाकर प्रशंसनीय ढंगसे सारथि लोग रथोंकी पंक्ति सुखसे ठीक रास्तेपर वैसे ही बढ़ाये लिये जा रहे थे जैसे कल्याणकारी तथा स्पृहणीय रत्नत्रय रूपी मोक्षमार्ग, लोकमें साध्यभूत लक्ष्मीके मोहके कारण निष्फल-अनादि कालसे चले आये संसार-समुद्रके उस पार, आशा-पाशसे रहित भव्य जीवको भेज देता है ॥३२॥

वाद्योंके आरावसे कानोंके छेद भर जाने से तथा आगेसे आँखोंपर ध्वजाओंके पड़ जानेके कारण सेनाकी टुकड़ियां मूर्च्छाको प्राप्तके समान बहुत देरसे अपने-अपने निवासको पहिचान सकी थीं [मूर्च्छित व्यक्ति भी कानोंपर वाद्य बजानेसे तथा आँखोंमें शीतल पदार्थादि लगानेपर बड़ी कठिनाईसे आत्मचैतन्यको प्राप्त होता है] ॥३३॥

वह परिपूर्ण और किनारे, किनारे दूरतक फैली राघव अथवा पाण्डव सेना समुद्र अथवा गंगा नदीकी मूर्तिके समान सुशोभित हो रही थी क्योंकि इसकी गहरायी, (शक्तिकी सीमा) विस्तृत संख्या, अथाहपना (गुप्तता) तथा विस्तार समुद्र या गंगाके तुल्य ही थे॥३४॥

---

1. शालिनीवृत्तम्। 2. अवलम्बेषु–म०, द०। 3. उपजातिवृत्तम्।

# षोडशः सर्गः

ततः समीपे नवमस्य विष्णोः श्रुत्वा बलं संभ्रमदष्टमस्य ।
क्रुधा दशन्नोष्ठमरिं मनःस्थं गाढं जिघत्सन्निव संनिगृह्य ॥१॥

तत इति—द्विः । कुलकेन व्याख्यास्यामोऽधुना । ततो रामपाण्डवप्रयाणानन्तरं निरैयो निर्गतवान्, रावणः किं कुर्वन्निव ? जिघत्सन्निव ग्रसितुमिच्छुरिव कम् ? अरिं शत्रुम्, कथम्भूतम् ? मनःस्थम्, किं कृत्वा ? पूर्वं सन्निगृह्य निपीड्य, कथम् ? गाढमत्यर्थम्, किं कुर्वन् ? क्रुधा कोपेन ओष्ठं दशन् खादन् पुनः किं कृत्वा निरैयः ? अष्टमस्य अष्टानां सङ्ख्यापूरणोऽष्टमः तस्याष्टमस्य विष्णोर्लक्ष्मणस्येत्यर्थः, बलं सैन्यं श्रुत्वा आकर्ण्य कथम्भूतस्य ? नवमस्य नवा नूतना मा लक्ष्मीर्यस्य तस्य अथवा अस्य विष्णोः बलं किं विशिष्टम् ? नवम् अपूर्वम् किं कुर्वत् ? संभ्रमत् पर्यटत्, क्व ? समीपे निकटे । अथ भारतीयः—सोऽयं जरासन्धो राजा निरैयो निरगमत्, किं कृत्वा ? अस्य विष्णोर्नारायणस्य बलं श्रुत्वा, कथम्भूतस्य ? नवमस्य नवानां सङ्ख्यापूरणो नवमः तस्य, क्व ? समीपे कथम्भूतम् ? सम्भ्रमदष्टं संभ्रमग्रस्तम्, शेषं प्राग्वत् ॥१॥

तद्दंशभीताधररागसङ्गादिवारुणाक्षस्तदुपाश्रयेण ।
पिङ्गयोर्भ्रुवोरुद्गतधूमराजिर्नभ्राडिवेन्द्रायुधमध्यकेतुः ॥२॥

तद्दंशेति—कथम्भूतो रावणः ? अरुणाक्षः अरुणे अक्षिणी यस्य स तथोक्तः कस्मादिव ? तद्दंशभीताधररागसंगादिव तस्य रावणस्य दंशस्तद्दंशस्तद्दंशभीश्चासावधरश्च तद्दंशभीताधरस्तस्य यो रागस्तस्य संगात् संबन्धादिव, पुनः कथम्भूतः ? उद्गतधूमराजिः उद्गता धूमराजिर्यस्य सः समुत्पन्नधूमश्रेणिः, कयोर्मध्ये ? पिङ्गयोर्भ्रुवोः केन ? तदुपाश्रयेण तयोरक्ष्णोर्लोचनयोर्य उपाश्रयस्तेन क इव ? नभ्राडिव मेघ इव कथम्भूतो नभ्राट् ? इन्द्रायुधमध्यकेतुः इन्द्रायुधस्य मध्ये केतुर्यस्य सः ॥२॥

हस्तं कृपाणे हृदयं स्थिरत्वे दृष्टिं सपत्ने च समादधानः ।
सदात्मतन्त्रोऽप्युदितस्य मन्योरालुच्यमानाङ्ग इव स्यदेन ॥३॥

हस्तमिति—कथम्भूत इव ? मन्योः क्रोधस्य स्यदेन वेगेन आलुच्यमानाङ्ग इव आह्रियमाणशरीर इव, कथम्भूतस्य ? उदितस्य उत्पन्नस्य, कथम्भूतोऽपि ? आत्मतन्त्रोऽपि स्वायत्तोऽपि, कथम्भूतोऽपि ? सदात्मतन्त्रोऽपि सन्त आत्मतन्त्रा यस्य स तथोक्तः, कथम् ? सदा सर्वकालम्, किं कुर्वाणः ? कृपाणे खड्गे हस्तं करं समादधानः आरोपयन् तथा स्थिरत्वे स्थैर्ये हृदयं दृष्टिं सपत्ने शत्रौ च ॥३॥

---

समुद्र पार करनेके बाद लंकामें बढ़ती हुई आठवें विष्णु ( लक्ष्मण ) की नूतन सेनाके निकट आ पहुँचनेका समाचार सुनकर रावणने [ गंगा पार करनेके बाद राजधानीके निकट पहुँची और भयके साथ देखी गयी नौवें विष्णु ( श्रीकृष्ण ) की सेनाका सन्देश मिलते ही जरासन्धने ] क्रोधसे ओठ चबा लिये थे । मानो मनमें बैठे शत्रु राम या कृष्णको जोरसे ओठोंमें बन्द करके मार डालना चाहता था ॥ १ ॥

रावण अथवा जरासन्ध, 'कहीं मुझे चबा न जाये', इस भयसे ओठोंकी लाली आँखोंमें पहुँच गयी थी । क्रोधसे जलती आँखोंके निकट होनेके कारण भृकुटियाँ धूम्ररेखाके समान तन गयी थीं । तथा नेत्रोंकी झाँकी बिना बादलोंके चमकती बिजलीमें धूम्रकेतुके समान लगती थी ॥ २ ॥

---

१. सर्गेऽस्मिन् उपजातिवृत्तम् ।

**अलङ्घितव्योमगधार्यभूमिं प्रियामिवाशंसुरयं स राजा।**
**चित्तेन लङ्कामवशात् प्रकोपव्याजं वहन्राजगृहान्निरैयः ॥४॥**

अलङ्घितेति–सोऽयं राजा रावणः, कस्मात् ? राजगृहात् राजमन्दिरात्, किं कुर्वन् ? वहन् धरन्, कम् ? प्रकोपव्याजं प्रकोपाक्षेपम्, कस्मात् ? अवशात् पारतन्त्र्यात्, कथम्भूतः ? आशंसुः प्रशंसन्, काम् ? लङ्काम्, केन ? चित्तेन, कामिव ? प्रियामिव, कथम्भूतां लङ्काम् ? अलङ्घितव्योमगधार्यभूमिं व्योम गच्छन्तीति व्योमगाः विद्याधराः अलङ्घितास्च ते व्योमगास्च अलङ्घितव्योमगाः अलङ्घितव्योमगैर्धार्या भूमिर्यस्यास्ताम्, अजेयैः खेचरैर्ध्रियमाणावनिमित्यर्थः। हे मगधार्य, मगधाः क्षत्रियाः अर्यः स्वामी मगधानामर्य्यः अथवा मगधो देशस्तस्यार्यः तस्य सम्बोधनं क्रियते हे मगधार्य श्रेणिक ? सोऽयं राजा जरासन्धो निरैयः कस्मात् ? राजगृहात् राजगृहनगरात् किं कुर्वन् ? वहन् किम् ? अनलमग्निम्, कथम्भूतम्, प्रकोपव्याजं क्रोधरूपम्, केन ? चित्तेन, कथम्भूतः ? आशंसुः, काम् ? प्रियाम्, कामिव भूमिमिव कथम्भूतो जरासन्धः ? अलङ्घितव्यः अजय्य इत्यर्थः ॥४॥

**समागधैर्योऽनुगतः सहायैरक्षोदवैराकुलिताखिलाशः।**
**रणाजिरं विश्वजगद्विनाशं यमः स्वयं कर्तुमिवावतीर्णः ॥५॥**

समागधैरिति—अवतीर्णो रावणः, किं कर्तुमिव ? रणाजिरं कर्तुमिव विधातुमिव, कथम्भूतम् ? विश्वजगद्विनाशं विश्वानि च तानि जगन्ति तेषां विनाशो यत्र तत्, कथम्भूतः ? यमः कालप्रायः, कथम् ? स्वयमात्मना, पुनः कथम्भूतः ? समागधैर्यः मां लक्ष्मीं गच्छति प्राप्नोतीति मागं मागं च तद्धैर्यं च मागधैर्यं सह मागधैर्येण वर्तते इति समागधैर्यः पुनरपि कथम्भूतः ? अनुगतो युक्तः, कैः ? सहायैः मित्रैः, पुनः आकुलिताखिलाशः आकुलिता अखिला आशा येन स तथोक्तः व्याप्तीकृतसमस्तदिक्कः, कैः सहायैः ? रक्षोदवैः रक्षांस्येव दवाः रक्षोदवास्तै राक्षसदावानलैरिति। भारतीयः पक्षः—स जरासन्धः स्वयमात्मना यमोऽवतीर्णः कथम्भूतः सन् ? अक्षोदवैराकुलिताखिलाशः क्षोदो विकारः न क्षोदो यस्य तदक्षोदम् अक्षोदं च तद्वैरं च अक्षोदवैरं तेनाकुलिता अखिलाशा येन तथोक्तः। अथवा अः नारायणः आत् क्षोदो यस्य तदक्षोदं वीराणां समूहो वैरं अक्षोदं च तद्वैरं च अक्षोदवैरं तेनाकुलिता अखिला आशाः समस्ता अभिलाषा यस्य सः योऽनुगतमागधैः मगधदेशोद्भूतैः क्षत्रियैः शेषं सुगमम् ॥५॥

---

रावण या जरासन्धका हाथ तलवारपर जा पहुँचा था, मनने स्थिरता या दृढ़ता पायी थी और आँखें शत्रुपर जमी हुई थीं। इस तरह वह आत्म-नियन्त्रणमें था, तो भी भभकते क्रोधके कारण अपने ही शरीरको नोचता-सा लगता था ॥ ३ ॥

ऐसे राजा रावणने लंकाकी मन-ही-मन सराहना की थी क्योंकि यह आकाशगामी विद्याधरोंसे रक्षित थी—अथवा आकाश-गामियों-द्वारा शासित विद्याधर लोक भी इस लंकाकी महिमाको नहीं पा सकता था। किन्तु अपनी बेबशीको क्रोधके रूपमें प्रकट करता हुआ वह राजमहलसे चला था [ ऐसे राजा जरासन्धने मागध आर्योंकी भूमि ( मगध देश ) की अन्तरंगसे वैसी सर्वांग प्रशंसा की थी जैसी कोई कामके वश होकर अपनी प्रियतमाकी करता है। तथा क्रोधाविष्ट होकर उसने राजगृहनगरीसे प्रयाण किया था ] ॥ ४ ॥

धैर्यधारी लक्ष्मीकी प्राप्तिमें सार्थक ( मा-ग ) सहायक, रावणके पीछे चल रहे थे और राक्षसोंकी सेनारूपी दावानलने समस्त दिशाओंको संकटसे व्याप्त कर दिया था। लगता था कि रणभूमिके रूपमें अखिल विश्व और तीनों लोकोंको विनाशकी लीला-भूमि बनानेके लिए स्वयं यमराज ही स्वर्गसे उतर कर आया है [ जरासन्धके पीछे अनुगत एवं सहायक

**सङ्ग्रामरङ्गं शवनृत्यरम्यं सुराः समागच्छत पश्यतेति ।**
**निमन्त्रणायेव निकाय्यमेषामापूर्य तूर्यं विरुतं विचक्रे ॥६॥**

सङ्ग्रामेति—तूर्यं विरुतं विचक्रे विशेषेण कृतवत्, किं कृत्वा ? पूर्वमेषां सुराणां निकाय्यं मन्दिरमापूर्य संस्कृत्य, कस्मादिव ? निमन्त्रणायेव, कथमिति कृत्वा दर्शयति हे सुराः हे देवाः समागच्छत पश्यत निरीक्षध्वं यूयम्, किम् ? संग्रामरङ्गम्, कथम्भूतम् ? शवनृत्यरम्यं प्रेतनर्तनपेशलम् ॥६॥

**शुद्धं निसर्गेण कलङ्कबद्धमङ्गं म्रदीयः कठिनं मनः स्वम् ।**
**बहिस्तदन्तर्युधि कुर्वतीव भ्रेजे नृपाणां समितिः सवर्मा ॥७॥**

शुद्धमिति—नृपाणां समितिः समूहः भ्रेजे बभौ, कथम्भूता ? सवर्मा सकवचा, किं कुर्वतीवोत्प्रेक्षिता ? बहिर्बाह्यं सत्तदङ्गमन्तर्मध्ये कुर्वतीव विदधतीव, कथम्भूतम् ? म्रदीयः मृदुतरम्, पुनरपि कथम्भूतम् ? शुद्धं निर्मलम्, केन ? निसर्गेण स्वभावेन, पुनरपि कथम्भूतम् ? स्वमात्मीयं तथा कुर्वतीव, किं तत् स्वम् ? मनः, कथम् ? बहिर्बाह्यम्, कथम्भूतं सत् ? अन्तः आन्तरम् अन्तर्गतमित्यर्थः, पुनः कथम्भूतम् ? कठिनं निष्ठुरम्, पुनरपि कथम्भूतम् ? कलङ्कबद्धं पापयुक्तम्, केन ? निसर्गेण स्वभावेन पुनरपि क्व कुर्वतीव ? युधि रणे ॥७॥

**रथो वरूथस्य हयस्य वाजी गजः करेणोः पदिकः पदातेः ।**
**दुर्मन्त्रितं ध्यानमिवात्मबिम्बं स्वस्यैव संनद्धमिवाग्रतोऽभूत् ॥८॥**

रथ इति—रथो वरूथस्याग्रतोऽभूद् बभूव, वाजी हयस्याग्रतोऽभूत्, गजः करेणोः हस्तिनोऽग्रतोऽभूत् तथा पदिकः पदातेरग्रतोऽभूत्, रथादिसर्वं किमिवोत्प्रेक्षितम् ? दुष्टो मन्त्रः स जातोऽस्येति दुर्मन्त्रितं ध्यानमिव तथात्मबिम्बमिव सन्नद्धं स्वस्यैवाग्रतोऽभूदित्युत्प्रेक्षितं चेति ॥८॥

**राज्ञां सरेणुः कलुषस्वभावो रोषोद्गतश्वास इवाशु मूर्तः ।**
**सेने निषेधन्निव मध्यमापत्प्रायः क्षतं नेच्छति पांशुलोऽपि ॥९॥**

राज्ञामिति—सरेणुः सारक्षतं रजः मध्यम् आपत् । किं कुर्वन्निव ? सेने ध्वजिन्यौ निषेधन्निव वारयन्निव, कथम् ? आशु शीघ्रम्, क इवोत्प्रेक्षितो ? राज्ञां नरेन्द्राणां मूर्तः कलुषस्वभावो रोषोद्गतः श्वास इवेति, सुगमम्. युक्तमेतत्, प्रायो बाहुल्येन पांशुलोऽपि क्षतं नेच्छतीति विशेषः ॥९॥

---

**मागध राजन्य चल रहे थे और विकारसे परे, श्री विष्णु कृष्णके वैरके कारण उसकी सब आशाएँ धुँधली हो गयी थीं तो भी विश्व और तीनों लोकोंको प्रलय पूरमें झोंकनेको उद्यत कालके समान जरासन्ध पाण्डव सेनाकी ओर बढ़ा जा रहा था ] ॥ ५ ॥**

**रणकी तुरईका तार-गम्भीर आराव देवलोकमें भी व्याप्त हो गया था । मानो वह उन्हें निमन्त्रण दे रहा था—'हे देवताओं' आओ । और नाचते हुए योद्धाओं, धड़ों और शिरोंके कारण कुतूहलपूर्वक देखने योग्य इस युद्धरूपी संहार नाटकको देखो' ॥ ६ ॥**

**कवच धारण करके युद्धमें उतरे युयुत्सु राजाओंकी लम्बी-लम्बी कतारें देखनेपर लगता था कि स्वभावसे ही शुद्ध और कोमल अपने अन्तस्तल और शरीरको कवचके बहाने बाहरसे कठोर और मलिन दिखानेका प्रयत्न कर रहे हैं ॥ ७ ॥**

**रथके आगे रथ जा रहा था, वाजीके आगे हय बढ़ा जा रहा था, हथिनीको पिछाड़कर हाथी चल रहा था और पदाति पदातिसे आगे निकलनेका प्रयत्न कर रहा था । इस प्रकार समस्त सेना उस कुध्यानके समान थी जिसमें खोटे मन्त्रका जाप होनेसे [इष्ट देवताका साक्षात्कार न होकर] अपना ही समग्र प्रतिबिम्ब सामने आ जाता है ॥८॥**

साक्षादलङ्घ्यो दिवसो नु सोऽयं सृष्टेरियत्तावधिरेष कश्चित् ।
आशाः समूहन्निव राजलोकः संनह्यति स्म प्रतिकेशवस्य ॥१०॥

साक्षादिति—नु अहो साक्षात् परमार्थतः सोऽयं कश्चित् कश्चन किमलङ्घ्यो दिवसः संहारदिवसः, किमेष इयत्तावधिः कस्याः ? सृष्टेरिति, किं कुर्वन्निव ? समूहन्निव, वितर्कयन्निव, काः ? आशा दिशः, स राजलोकः संनह्यति स्म सन्नहनं करोति स्म, कस्य ? प्रतिकेशवस्य प्रतिनारायणस्येति ॥१०॥

तमूर्जसारावणिमव्यपेतौ दुर्योधनं क्रोधपराक्रमौ तौ ।
दृष्ट्वा दधानं पुलकात्तमङ्गं रागेण भीत्याप्यभवद्ध्वजिन्योः ॥११॥

तमिति—अभवत् संजातम्, किम् अङ्गम्, कथम्भूतम् ? पुलकात्तं रोमाञ्चगृहीतम्, कयोः ? ध्वजिन्योः सेनयोः, केन ? रागेण प्रीत्या तथा भीत्या भयेनापि, किं कृत्वा ? पूर्वं दृष्ट्वाऽवलोक्य, कम् ? तं लोकप्रसिद्धं रावणिं रावणस्यापत्यं पुमान् रावणिः इन्द्रजित् तं तथोक्तम्, कथम्भूतम् ? दुर्योधनं योद्धुमशक्यम् किं कुर्वाणं सन्तम् ? दधानं धरन्तम्, कौ ? तौ लोकोत्तरौ क्रोधपराक्रमौ, कथम्भूतौ ? अव्यपेतौ अपरित्यक्तौ, केन ? ऊर्जसा बलेन। अत्र स्वसेनाया रागेण परसेनाया भीत्या पुलकात्तमङ्गमभूदिति भावः। भारतीयपक्षे—रागेण भीत्यापि ध्वजिन्योः पुलकात्तमङ्गमभूत्, किं कृत्वा ? पूर्वं दृष्ट्वा कम् ? तं लोकप्रसिद्धं दुर्योधनं तन्नामधेयं राजानम्, किं कुर्वाणम् ? अरौ शत्रौ तौ लोकोत्तरौ क्रोधपराक्रमौ दधानम्, कथम्भूतौ ? अणिमव्यपेतौ अणोर्भावः अणिमा तेन व्यपेतौ अणुत्वपरित्यक्तौ प्राचुर्ययुक्तावित्यर्थः ॥११॥

नमस्यया संप्रति कुम्भकर्णं बलिं नवं संयुगभूतकेभ्यः ।
प्रदातुमुद्यन्तमिवारिरूपं दुःशासनं वीक्ष्य जनश्चकम्पे ॥१२॥

नमस्ययेति—जनो लोकः संप्रति अधुना कुम्भकर्णं कुम्भकर्णनामानं रावणभ्रातरं वीक्ष्यावलोक्य, किं कुर्वाणमिवोत्प्रेक्षितम् ? संयुगभूतकेभ्यः संग्रामभूतसमूहेभ्यः बलिं प्रदातुमुद्यन्तमिव, कया ? नमस्यया नमसि तेन, कथम्भूतम् ? नवं नूतनम्, किं बलिं दातुम् ? अरिरूपम् अरीणां रूपम् अरिरूपं शत्रुशरीरम् अथवा अरय एव रूपं यस्य बलेः तमरिरूपं बलिम्, कथम्भूतं कुम्भकर्णम् ? दुःशासनं तीव्राज्ञम्। भारतीयः पक्षः—चकम्पे, कोऽसौ ? जनः, कथम् ? संप्रति, किं कृत्वा ? पूर्वं वीक्ष्य, कम् ? दुःशासनं दुःशासननामानं राजानं दुर्योधनानुजम्, कीदृशम् ? कुम्भकर्णं कुम्भको नाम हस्ती कुम्भकः ऋणं यस्य स कुम्भकर्णः तं कुम्भकर्णं कुम्भकस्य स्वामिनमित्यर्थः ॥१२॥

---

युद्धके लिए तत्पर राजाओंके दूषित मनकी अथवा क्रोधसे निकले श्वासकी मूर्तिके समान धूलिपुंज शीघ्र ही दोनों सेनाओंके बीचमें उमड़ आया था। मानो वह इन्हें लड़नेसे रोक रहा है, क्योंकि पापी ( धूलिमय ) भी बहुधा मार-काटको पसन्द नहीं करता है ॥९॥

'क्या यह वही दिन है जिसका जान-बूझकर भी अतिक्रमण नहीं किया जा सकता है ? अथवा सृष्टि आज तक ही रहनी है' यह सोचकर प्रतिनारायण लक्ष्मण अथवा कृष्णके अनुयायी राजाओंका समूह कवच पहनकर तैयार होने लगा था ॥ १० ॥

निरर्थक न जानेवाले क्रोध तथा पराक्रमसे विभूषित और अपने बलके कारण भीषण युद्धकर्ता रावणके पुत्र ( रावणि ) इन्द्रजीतको देखकर दोनों सेनाओंकी देह प्रीति तथा भयके कारण रोमांचित हो उठी थी। [ शत्रुपर ( अरौ ) पूर्णरूपसे तथा पूरी शक्तिके साथ बरसनेवाले क्रोध और पराक्रमके स्वामी उस राजा दुर्योधनको देख कौरव सेना प्रीतिसे तथा पाण्डव सेना आशंकाके कारण पुलकित हो उठी थी ] ॥ ११ ॥

तब युद्धके समस्त देवताओंको नमस्कार करके शत्रुरूपी नूतन बलि चढ़ानेके लिए तैयार और नियन्त्रण करनेके लिए कठोर रावणके भाई कुम्भकर्णको देखकर लोग काँप

न कानि कुम्भासुरभावमाजौ दुर्मर्षणं दूरमभिद्रवन्तम् ।
रुषात्मशङ्कामगमन्निरीक्ष्य प्रजातमुच्चैर्भुवना नितान्तम् ॥१३॥

नेति—कानि भुवनानि आत्मशङ्कां नागमन् न गच्छन्ति स्म अपितु सर्वाणि भुवनानि आत्मशङ्कां जग्मुरिति भावः। कथम् ? उच्चैरतिशयेन, कथं यथा भवति तान्तं कष्टम्, किं कृत्वा ? पूर्वं निरीक्ष्य, कम् ? कुम्भासुरभावं कुम्भासुरो नाम रावणस्य मण्डलिकस्तस्य भावम्, किं कुर्वन्तम् ? अभिद्रवन्तं विजृम्भमाणम्, क्व ? आजौ संग्रामे, कथं यथा भवति ? दूरं विप्रकृष्टम्, कथम्भूतं कुम्भकर्णम् ? दुर्मर्षणं दुःसहं पुनः रुषा कोपेन प्रजातं समुत्पन्नं तथा, का प्रजा आत्मशङ्कां नागमत् अपितु सर्वेत्यर्थः, कथम् ? नितान्तम् अतिशयेन, किं कृत्वा ? पूर्वं निरीक्ष्यावलोक्य, कम् ? तं कुम्भासुरभावम्, कथम्भूतम् ? आतम् आ सामस्त्येन अतो ज्ञातं यस्य स आतस्तम् आतं सविवेकम् अत सातत्यगमन इत्यस्य धातोः प्रयोगेऽच्प्रत्ययान्तः "सर्वे गत्यर्थाः धातवो ज्ञानार्थे बोद्धव्याः" इति वचनात्, पुनः कथम्भूतम् ? दूरमभिद्रवं दुःखेन रमन्ते दूरमा दुर्विलासिनः पुरुषाः दूरमान् भिनत्तीति दूरमभित् दूरमभित् रवो यस्य स तं तथोक्तम्, कथम्भूतम् ? रुषा कोपेन दुर्मर्षणम् ? कथम्भूता प्रजा ? उच्चैर्भुवना उच्चैर्भुवनं यस्याः सा। भारतीयः पक्षः—कानि भुवनानि आत्मशङ्कां नागमन् अपि तु सर्वाणीत्यर्थः, कथं यथा भवति ? नान्तम्, कथम् ? उच्चैरतिशयेन, किं कृत्वा ? पूर्वं निरीक्ष्य, कम् ? दुर्मर्षणं दुर्मर्षणनामानं दुर्योधनस्य लघुभ्रातरम्, किं कुर्वन्तम् ? अभिद्रवन्तम्, काम् ? कुं पृथिवीम्, कया ? रुषा कोपेन कथं यथा भवति ? प्रजातं प्रजानामातो यस्मात् स प्रजातस्तं प्रजातं लोकानां सन्ततं पलायनं यस्मात् इत्यर्थः, कथं यथा भवति ? दूरं कथम्भूतम् ? आजौ युधि भासुरभावं दीप्तस्वरूपम् ॥१३॥

आकृष्टचापं द्रुतमुक्तबाणं कुलोचिताकर्णमसौ जयश्रीः ।
उत्काकुमारीचरणं विहाय भीतेव गन्तुं परवासमासीत् ॥१४॥

आकृष्टेति—जयश्रीः परवासं प्रोषितत्वं गन्तुं संजाता आसीत्, केवोत्प्रेक्षिता प्रोषितेव, किं कृत्वा ? पूर्वं विहाय परित्यज्य, किम् ? मारीचरणं रावणमातुलसङ्ग्रामम्, कथम्भूतम् ? आकृष्टचापम् आकर्षणविषयीकृतधनुष्कम् कथं यथा भवति ? आकर्णं कर्णपर्यन्तं पुनः द्रुतमुक्तबाणं शीघ्रमुत्कलितशरम्, कथं यथा भवति ? उत्काकु काकुरभिप्रायसूचकं वचः उदिता काकुर्यत्र बाणमोचनकर्मणि तद्यथा, वेध्यनामपूर्वकमित्यर्थः, कथम्भूता जयश्रीः ? कुलोचिता निजभुजप्रतापवह्निं प्रदीपयितुं शत्रूणां कुं पृथ्वीं लान्ति गृह्णन्तीति कुला वीराः, वीरभोग्या वसुन्धरेति श्रुतेः, तेषामुचिता योग्येत्यर्थः। भारतीयः—आसीत्, काऽसौ ? जयश्रीः किं विशिष्टा सती ? उत्का उत्सुका, किं कर्तुम् ? गन्तुम्, कम् ? परवासं परमन्दिरम्, केव ? भीतेव किं

उठे थे [············कुम्भक नामके हाथीपर सवार (कुम्भक-ऋणं) दुर्योधनके भाई दुःशासनको सामने देखकर·········] ॥ १२ ॥

अन्वय–उच्चैर्भुवना का प्रजा नितान्तमातं दूरमभिद्रवं, रुषा दुर्मर्षणं तं निकुम्भासुरभावं निरीक्ष्य आत्मशंकां नागमन् ।

निकुम्भासुरकी सर्व साधारणमें ख्यात और अत्यन्त दूर प्रदेशमें क्रीड़ा करते लोगोंको भी डरानेवाली गर्जना को सुनकर तथा क्रोधके कारण असह्यरूपसे तीव्र निर्दय प्रवृत्तिको देखकर किस समृद्ध देशकी जनता ऐसी थी जो अपने भविष्यकी चिन्तामें न पड़ गयी हो ।

अन्वय—कानि भुवनानि उच्चैः तान्तं, कुं दूरमभिद्रवन्तं, रुषा प्रजातं आजौ भासुरभावं दुर्मर्षणं निरीक्ष्य आत्मशंकां नागमन् ।

दूर-दूर तक पृथ्वीको आक्रान्त करनेवाले क्रोधसे उद्दीप्त तथा युद्धमें ही अत्यन्त प्रसन्न एवं प्रभावक दुर्योधनके अनुज दुर्मर्षणको देखकर पृथ्वीके कौन-से ऐसे भाग थे ? जो अत्यन्त कष्टकर, अपने अनिष्टकी कल्पनासे न काँप उठे थे ॥ १३ ॥

कृत्वा ? पूर्वं विहाय, कम् ? कर्णं कर्णनामधेयं नरेन्द्रं दुर्योधनगृह्यम्, कथम्भूतं सन्तम् ? कुमारीचरणं कुमार्याः सकाशात् चरणं प्रवर्त्तनं जन्म यस्य तम् "कन्या कुमारीति श्रुतेः, पुनः कथम्भूतम् ? आकृष्टचापं आकृष्टं चापं येन तम् पुनः द्रुतमुक्तबाणं द्रुतं मुक्ताः बाणा येन तम्, कथम्भूता जयश्रीः ? कुलोचिता वंशयोग्या, अत्रभावोऽप्युपन्यस्यते-कुलीना [ हि ] कामिनीव जयश्रीः स्ववंशलाञ्छनभीत्या लोकदूष्यं कन्यापुत्रं विहाय सत्पुरुषमन्दिरं गन्तुमुत्कासीदिति सम्बन्धः। अथवा आकृष्टचापं द्रुतमुक्तबाणं कर्णनरेन्द्रं विहाय असौ खङ्गविषये च कुमारीचरणं कन्याव्रतं च विहाय भीतेवोत्का जयश्रीः परवासं गन्तुमासीदिति शेषः ॥१४॥

**कुर्वन्स्वरं हस्त उदारवृत्तिं स कं प्रहस्तः सहसारणेन।**
**दीप्रांशुकस्तत्र जयद्रथोऽयं रिपुं प्रकुप्यन्नवशं चकार ॥१५॥**

( चतुरर्थकः )

कुर्वन्निति—सोऽयं हस्तः हस्तनामधेयो राजा कं रिपुं वशं न चकार, अपि तु सर्वम्; किं कुर्वन् ? स्वरं विदधत्, कथम्भूतम् ? उदारवृत्तिम्, किं कुर्वन् ? रणेन युद्धेन सहसा शीघ्रं प्रकुप्यन् सन्, कथम्भूतो हस्तः ? प्रहस्तः प्रकृष्टौ हस्तौ यस्य सः, आजानुप्रलम्बकर इत्यर्थः, पुनः दीप्रांशुकः उज्ज्वलवस्त्रः पुनः जयद्रथः जयन् रथो यस्य सः, क्व ? तत्र रणे, एकः पक्षः, तथा सोऽयं प्रहस्तः प्रहस्तनामधेयो राजा प्रकुप्यन् सन् कं रिपुं वशं न चकार, अपि तु सर्वम्, किं कुर्वन् ? सारणेन गमनेन सह सार्द्धं उदारवृत्तिं कुर्वन्, कस्मात् ? स्वरंहस्तः आत्मवेगात्, कथम्भूतः प्रहस्तः ? दीप्रांशुकः पुनः जयद्रथः, क्व ? तत्र तस्यामुदारवृत्ताविति, द्वितीयः पक्षः, तथा सोऽयं शुकः शुकाभिधानो नरेन्द्रः कं रिपुं वशं न चकार अपि तु सर्वम्; किं कुर्वन् ? प्रकुप्यन्, क्व ? तत्र रिपौ, पुनः किं कुर्वन् काम् ? उदारवृत्तिम्, कथम्भूताम् ? दीप्रां तेजस्विनीम्, कस्मात् ? प्रहस्तः प्रहसनं प्रहः, क्विप् रूपम्, प्रकृष्टं हास्यमित्यर्थः; तस्मात् प्रहस्तः प्रहसनात्, कथम्भूतात् ? स्वरंहस्तः स्वं द्रव्यम् रंहो वेगः, स्वस्य रंहो यस्मिन्स्तत्तथोक्तं तस्मात्, कथम्भूतः ? जयद्रथः, इति तृतीयः पक्षः, अथ चतुर्थो भारतीयः—सोऽयं जयद्रथो जरासंधगृह्यो नरेन्द्रः प्रकुप्यन् सन् कं रिपुं वशं न चकार अपि तु सर्वमकरोदेवेत्यर्थः, कथम्भूतः ? दीप्रांशुकः दीप्राः अंशवः किरणा यस्यासौ दीप्रांशुः सूर्यः कं तेजः, तदुक्तं "ब्रह्मात्मवाततेजस्सु कायस्वर्गशिरोजले। सुखेऽर्थेषु दशस्वेव कः शब्दोऽप्यत्र वर्त्तते इति" दीप्रांशोरिव कं यस्य सः यस्य जयद्रथस्य हस्तो नोदार नोदयं प्राप्तवान् ? अपि तूदारैव, किं कुर्वन् ? कुर्वन् काम् ? वृत्तिं व्यापारम् केषु ? कं प्रहस्तः कं प्रहसन्तीति क्विप् कंप्रहसस्तेषु कंप्रहस्सु, कंप्रहस्स्वेकंप्रहस्तः "दृश्यतेऽन्यतोऽपि [ जै. सू. ४।१।७९ ]" इति सूत्रनिर्दिष्टत्वात् तस्, वक्रोक्तितया हास्यं कुर्वाणेषु पुरुषेषु इत्यर्थः कस्मात् वृत्तिं कुर्वन् स्वरंहस्त स्वस्यात्मनो वेगः स्वरंहस्तः "कायास्तसै [ जै. सू. ४।१।७३ ] इति सूत्रनिर्दिष्टत्वात् तस् कथम्भूतः ? सहसा सह युगपत् स्यतीति वित् ( विच् ) सहसा हिंस्रः क्व ? रणे, रणं विहायान्यत्र हिंस्रो न भवतीति भावः ॥१५॥

---

शत्रुको व्यंग्य-वचन कहते हुए शीघ्रतासे कान तक पूरे रूपसे खींचे गये धनुषसे बरसाये गये बाणोंसे व्याप्त भारीचके युद्धको छोड़कर, डरी हुई-सी विजय-लक्ष्मी पर ( परमात्मा ) श्रेष्ठ पुरुष रामके आश्रयमें चली गयी थी, क्योंकि लक्ष्मी पृथ्वी ( कु ) के विजेता ( लाति ) वीरोंकी ही भोग्य ( उचित ) है।

अन्वय—आकृष्टचापं, द्रुतमुक्तबाणं, कुमारीचरणं कर्णं विहाय असौ उत्का कुलोचिता जयश्रीः भीतेव परवासं गन्तुमासीत्।

धनुषको पूरा खींचकर शीघ्रतासे बाण बरसानेमें निपुण और कुमारी कुन्तीसे उत्पन्न राजा कर्णको छोड़कर कुल मर्यादाकी प्राप्तिके लिए उत्कण्ठित जयश्री धर्मसन्तति पाण्डवोंकी ओर चल दी थी ॥ १४ ॥

उस युद्धमें रणके प्रसंगसे उग्र स्वरसे ललकारते, प्रबल रूपसे हाथोंको फटकारते और क्रोधसे उद्दीप्त आजानुबाहु राजा शुकने अकस्मात् ही किस शत्रुको वशमें नहीं कर

**संरम्भिणाशान्तनवेन मुक्तः क्षोभेण भूरिश्रवसाम्बरेण ।**
**स्वयंभुवा वाग्गुरुणा न सोढः स सिंहनादः कृतवर्मणा च ॥१६॥**

( पञ्चार्थकः )

पञ्चकृत्व:, संरम्भिणेति—स सिंहनादो न सोढः, कया ? भुवा भूम्या क्षोभेण कृत्वा यः सिंहनादो मुक्तः, केन ? संरम्भिणा मेघनादेन रावणपुत्रेण, कथम्भूतेन ? आशान्तनवेन आशान्ते दिगन्ते नवः स्तुतिर्यस्य स तथोक्तस्तेन सर्वदिक् प्रसिद्धेनेत्यर्थः पुनः कथम्भूतेन वरेण उत्तमेन, केषां मध्ये ? भूरिश्रवसां प्रचुरयशसाम्, कथं यथा भवति ? स्वयम् अयो भाग्यवहो विधिः शोभनोऽयो यस्मिन् कर्मणि तत्स्वयम् पुनः कथम्भूतेन ? वाग्गुरुणा वचनगरिष्ठेन पुनः कथम्भूतेन कृतवर्मणा विहितसन्नाहेन, इत्येकः पक्षः, तथा स सिंहनादो न सोढः, केन कर्त्रा ? भुवा न सोढः कथम् ? स्वयमात्मना क्षोभेण कृत्वा यः सिंहनादो भूरिश्रवसा भूरिश्रवोऽभिधानेन कुम्भकर्णपुत्रेण युक्तः, कथम्भूतेन ? संरम्भिणा राभस्यवता पुनः कथम्भूतम् ? शान्तनवेन शान्तश्चासो नवश्च शान्तनवस्तेन शान्तनवेन उपशमवता यौवनवता चेत्यर्थः, पुनः कथम्भूतेन ? आम्बरेण अम्बरगतिराम्बरस्तेन तथोक्तेन पुनरपि गुरुणा गरिष्ठेन पुनः कृतवर्मणेति शेषः । अथ भारतीयः—स्वयम् आत्मना अम्बरेणाकाशेन भुवा भूम्या च सिंहनादो न सोढः, क्षोभेण कृत्वा यः सिंहनादो मुक्तः, केन ? शान्तनवेन गाङ्गेयेन, कथम्भूतेन ? संरम्भिणा औत्सुक्यवता, पुनः कथम्भूतेति ? भूरिश्रवसा प्रचुरयशसा पुनः गुरुणा पुनः कृतवर्मणा, तृतीयः पक्षः, तथा स्वयम्भुवा ब्रह्मणा न स सिंहनादः सोढः यो वा क्षोभेण कृत्वा सिंहनादो मुक्तः, केन कर्त्रा ? गुरुणा द्रोणेनाचार्येण, कथम्भूतेन ? संरम्भिणा पुनः आशान्तनवेन सर्वदिक्प्रसिद्धेन पुनः भूरिश्रवसां वरेण प्रचुरयशसां श्रेष्ठेन पुनः कृतवर्मणा, चतुर्थः पक्षः, तथा स्वयम्भुवा अयोनिजेन गुरुणा बृहस्पतिनापि स सिंहनादो न सोढः यः क्षोभेण कृत्वा सिंहनादो मुक्तः, केन कर्त्रा ? कृतवर्मणा कृतवर्माभिधानेन नरेन्द्रेण, कथम्भूतेन ? संरम्भिणा कोपयुक्तेन पुनः शान्तनवेन शान्तेषु जितेन्द्रियेष्वेव पुरुषेषु नवः स्तवनं यस्य तेन शान्तैरपि स्तुतेनेत्यर्थः पुनः भूरिश्रवसां वरेणेति शेषः, पञ्चमः पक्षः ॥१६॥

---

लिया था ? क्योंकि उसका रथ जिधर जाता था उधर ही विजय होती थी ।

अन्वय—प्रहस्तः स्वरंहस्त उदारवृत्ति कुर्वन्, दीप्रांशुकः, रणे स-हसा सोऽयं जयद्रथः प्रकुप्यन् कं रिपुं वशं न चकार ।

यद्यपि लोगोंके द्वारा हँसा गया था तथापि अपने वेगके साथ आगे-आगे बढ़कर उदार प्रकृतिका परिचय देता हुआ, प्रखरकिरण (सूर्य) के समान तेजस्वी और रणमें अकस्मात् ही संहारकर्ता, उस जयद्रथने कुपित होनेपर किस शत्रुको नहीं हरा दिया था ? ॥ १५ ॥

( प्रथम अर्थ ) महान् यशस्वियोंके अग्रणी मेघनाद ( संरम्भिन् ) की सिंहगर्जनाको किसीने भी नहीं सहा था, क्योंकि इसकी कीर्ति दिशाओंके अन्त तक फैली थी, इसके मारे पृथ्वी काँपती थी, इसके वचनोंमें सार था, और उस समय वह कवच धारण करके युद्धके लिए सन्नद्ध था ( द्वितीय अर्थ ) अत्यन्त वेगवान्, प्रकृतिसे अशान्त और युवक, बातका हठी और युद्धवेशमें उपस्थित खेचर पुत्र भूरिश्रवाकी रोषसे निकली हुँकारको स्वयम् रामने भी नहीं सहा था ।

( तृतीय अर्थ ) विश्वमें अत्यन्त विख्यात, वय तथा पदके कारण पितामह, कवचादिसे सुसज्जित तथा युद्धके प्रपंचमें प्रवीण भीष्म ( शान्तनव ) के द्वारा क्रोधावेगसे किये गये अनक्षरी युद्धघोषको पृथ्वी और आकाश भी स्वयं नहीं सम्हाल सके थे । ( चतुर्थ )

---

१. 'अशान्तश्चासौ नवश्च अशान्तनवस्तेन अशान्तनवेन औद्धत्यवतेति ।

२. अवाक् अनक्षरः शब्दभेदरहित इति यावत् सिंहनाद अध्यवसेयः ।

रथानिमेऽन्ये च समं नरेन्द्राः प्रपूरिताशानथवाजियुक्तान् ।
आपूरयन्ति स्म मनोरथांश्च किं नोद्यतानामुपपद्यते च (वा) ॥१७॥

रथानिति—आपूरयन्ति स्म, के ? इमे अन्ये च नरेन्द्राः, कान् ? रथान्, कथम् ? समं युगपत् प्रपूरिताशान् प्रपूरिता आशा दिशो यैस्ते तथोक्तास्तान् पुनः वाजियुक्तान् वा अथवा आपूरयन्ति स्म नरेन्द्राः कान् ? मनोरथान् कथम्भूतान् ? प्रपूरिताशान् प्रपूरिता आशा वाञ्छा यैस्तान् पुनः आजियुक्तान् सङ्ग्राम-युक्तान्, युक्तमेतत्, वा अथवा उद्यतानाम् उद्यतवतां पुंसां किन्नोपपद्यते किन्न जायते, अपि तु सर्वमप्युपपद्यते, इति शेषः ॥१७॥

स्वयं परान्ना(पुरा ना-)मयसीति भर्तुर्ज्या [1]स्त्रीर्नवोढेव पुरन्ध्रिवर्गैः ।
बलात्कृता राजभिरङ्गलग्ना वक्रस्य भूयो धनुषः खरस्य ॥१८॥

स्वयमिति—बलात्कृता दार्ढ्यं नीता, का कर्मतापन्ना ? ज्या मौर्वी, कथम् ? भूयः पुनः, कथमिति ? स्वयं पुरा नामयसि भर्तुरिति स्वामिनः स्वयमात्मना पुरा पूर्वं नम्रा भविष्यसि । कैर्बलात्कृता ? राजभिर्न-रेन्द्रैः, कथम्भूता सती ? अङ्गलग्ना, कस्य ? धनुषः, कथम्भूतस्य ? वक्रस्य पुनः खरस्य निष्ठुरस्य, केव बलात्कृता ? नवोढा नूतनपरिणीता स्त्रीव, कैः ? पुरन्ध्रिवर्गैः प्रौढमहिलाजनैः, कथमिति ? स्वयं पुरा नाम-यसि भर्तुरिति शेषं सुगमम् ॥१८॥

जीवाभिघातं कृतधर्मपीडं न्याय्येषु मार्गेषु निषक्तचित्ताः ।
ते सत्यसन्धाः सुधियोऽपि चक्रुर्यो यादृशः कर्म च तस्य तादृक् ॥१९॥

जीवेति—न्याय्येषु मार्गेषु निषक्तचित्ताः ते सत्यसन्धाः सत्यप्रतिज्ञाः सुधियोऽपि सन्तः जीवाभिघातं कृतधर्मपीडमिति विशेषणं चक्रुरिति, विरोधं परिहरति—न्याय्येषु मार्गेषु न्याय्याश्च ते इषुमार्गाश्च न्याय्येषु-मार्गास्तेषु शराणां मार्गेषु दृष्टिमुष्टिसन्धानव्याजेषु दत्तचेतस्का इत्यर्थः, पुनः सत्यसन्धाः सत्यं सन्दधते बाणान्

---

युद्धके लिए तैयार, दिगन्त विख्यात, महान् यशस्वियोंमें श्रेष्ठ तथा कवचधारी द्रोणाचार्य ( गुरु ) के मुखसे निकली रोषके कारण अस्पष्ट सिंहगर्जनाको कृष्ण ( स्वयम् ) भगवान्‌ने भी सहन नहीं किया था। ( पंचमार्थ ) अत्यन्त कुपित तथा उत्तेजित, यशस्वियोंके प्रमुख, शान्त पुरुषोंके द्वारा स्तुत कृतवर्माके मुखसे निकली हुंकारको स्वयम् भगवान् तथा बृहस्पति ( गुरु ) ने भी नहीं सहा था ॥ १६ ॥

घोड़ोंसे युक्त समस्त दिशाओंमें व्याप्त रथोंपर पूर्वोक्त राजा तथा और दूसरे राजा लोग भी एक साथ बैठ गये थे। मानो युद्धमें लीन इनके अभिलषित मनोरथ ही पूर्ण हो गये थे। ठीक ही है, पुरुषार्थी पुरुषोंके लिए क्या नहीं प्राप्त होता है ? ॥ १७ ॥

टेढ़े तथा तीक्ष्ण धनुषके ऊपर राजाओं-द्वारा चढ़ायी गयी डोरीको उनकी पत्नियोंने इसलिए खूब कसा तथा कड़ा किया था कि नव-विवाहिता स्त्रीके समान वह उनके पतियोंके शत्रुओंको स्वयं झुका देगी [प्रौढ़ स्त्रियोंके द्वारा विमुख और रुष्ट पतिके पास भेजी गयी तथा जबरदस्ती उसकी देहसे चिपटी नव-विवाहिता बहू भी बादमें पतिको सर्वथा झुका लेती है ] ॥ १८ ॥

न्याय मार्गपर चलनेके लिए कृत-संकल्प और सच्चे प्रतिज्ञा पालक विवेकी पुरुषोंने भी धर्मकी विनाशक जीवहिंसा की थी [ विरोधाभास है। परिहार ] शस्त्रविद्या-सम्मत

---

1. स्त्री नवोढेव टीकासम्मतः पाठः। मूलपाठोऽपि ज्यापक्षे अस्त्रीः, नवोढापक्षे पदच्छेदेन योज्यः।

सत्यसन्धाः सुधियोऽपि दक्षाश्च कृतधर्मपीडं विहितचापकदर्थनं यथा भवति जीवाभिघातं प्रत्यञ्चाविस्फारं चक्रुः कृतवन्तः, युक्तमेतत्, यो यादृशः तादृगेव तस्य कर्म जायते, चकारोऽत्रावधारणे बोद्धव्योऽव्ययानामनेकार्थत्वात् ॥१९॥

उत्कर्ण्य मौर्वीनिनदं नृपाणां तनूलता कण्टकिताऽनुरागात् ।
उत्सेकतो वीररसैकसारादभूद्विरूढेव समं रिपूणाम् ॥२०॥

उत्कर्ण्येति—अनुरागादानन्दभरात् कण्टकिता सती तनूलता सममेव हेलयाऽभूत् संजाता, केषाम् ? नृपाणाम्, केव ? विरूढेव अङ्कुरितेव, कस्मात् ? उत्सेकतो गर्वात्, कथम्भूतात् ? वीररसैकसारात्, किं कृत्वा ? पूर्वं कण्टकिता तनूलता उत्कर्ण्य ऊर्ध्वकर्णं श्रुत्वा, कम् ? मौर्वीनिनदं ज्याध्वनितम्, केषाम् ? रिपूणामिति ॥२०॥

ज्याचक्ररुद्धं स्थितमङ्गमेव रवेरिवोच्चैः परिवेषभाजः ।
तेजो जगद्व्याप तु राजकस्य रोद्धुं परं ज्योतिरहो न शक्यम् ॥२१॥

ज्येति—स्थितमङ्गमेव, कथम्भूतम् ? ज्याचक्ररुद्धं मौर्वीमण्डलनियन्त्रितम्, कस्य ? राजकस्य नरेन्द्रसमूहस्य, कस्येव ? रवेरिव, यथोच्चैः परिवेषभाजो रवेरङ्गमेव स्थितं तु पुनर्व्याप व्याप्नोति स्म, किं कर्तृ ? तेजः, किं कर्म ? जगत् लोकम्, कस्य ? राजकस्य, कस्येव ? रवेरिव, यथा रवेस्तेजो जगद्व्याप्नोति, युक्तमेतत्, अहो परं निरुपमं ज्योतिः रोद्धुं न शक्यं स्यादिति शेषः ॥२१॥

घाताय कर्तुं द्विषतां प्रवीरैः शरोऽग्रमुक्तान्मनसो रथाच्च ।
प्रागभ्यमित्रोऽजनि पश्चिमोऽपि पश्चान्न शीघ्रः प्रथमोऽपि मन्दः ॥२२॥

घातायेति—अत्र चकारेण सम्भावनार्थो निवेद्यते। द्विषतां शत्रूणां घाताय कर्तुं प्रवीरैः सुभटैः रथात् मनसोऽप्यग्रमुक्तात् अभ्यमित्र्यः[1] शत्रुसम्मुखः सन् शरः प्राक् पूर्वोऽजनि, युक्तमेतत्, शीघ्रः पश्चिमोऽपि न पश्चात् स्यात् मन्दः प्रथमोऽपि न प्रथमः स्यात् इति शेषः ॥२२॥

---

शर संचालनकी विधि ( न्याय्य-इषुमार्गेषु ) में तल्लीन, तथा ठीक लक्ष्य (सन्ध) को साधते हुए सन्मति योद्धा धनुष ( धर्म ) को पूरा खींचते थे तथा ज्याको फटकारते थे। उचित ही है जो जैसा होता है उसका कर्म भी वैसा होता है ॥ १९ ॥

शत्रु राजाओंकी ज्याकी टंकारको सुनकर युद्ध वीर रसका उद्रेक होनेसे सपक्षी राजाओंके इकहरे शरीर एकाएक वैसे ही रोमांचित हो उठे थे जिस प्रकार घन-गर्जनाके साथ-साथ वृष्टिके सेकसे बेलें अंकुरित हो उठती हैं ॥ २० ॥

योद्धा राजाओंका तना हुआ उत्तम शरीर खिंची हुई ज्याके गोलेसे घिर गया था तथा उसका प्रताप सारे विश्वमें फैल गया था। अतएव वे परिवेशसे घिरे और संसारको प्रकाशित करते सूर्य-बिम्बके समान लगते थे। उचित ही है क्योंकि सर्वोपरि ज्योति या पराक्रमको कौन रोक सकता है ? ॥ २१ ॥

शत्रुओंपर प्रहार करनेके लिए महान् योद्धाओं-द्वारा छोड़ा गया बाण, अपनेसे पहले चले योद्धाके रथ और मनसे भी जल्दी शत्रुके सामने जा धमका था। उचित ही है बादमें चला वेगशाली भी पीछे नहीं रहता और पहले चला धीमा भी आगे नहीं जा पाता है ॥ २२ ॥

---

१. अभ्यमित्र्यः इति ट काव्यः पाठ उचितः।

अन्योन्यमुत्पीडयतोः सखीव ज्याधन्वनोर्मध्यमनुप्रविश्य ।
निवारयन्तीव युगं विदूरं तदायतेषुः पृथगाचकर्ष ॥२३॥

अन्योन्यमिति—आचकर्ष आकृष्टवती, का ? इषुर्बाणः, किम् ? तद् द्वितयं पृथक्, कथम्भूता सती ? आयता दीर्घा, किं कुर्वतीव ? निवारयन्तीव, किम् ? युगं युद्धम्, कथं यथा भवति तथा वि(दूरं)दूरतरम्, केव ? सखीव, किं कृत्वा ? अनुप्रविश्य, किम् ? मध्यम्, कयोः ? ज्याधन्वनोः मौर्वीचापयोः, किं कुर्वतोः ? उत्पीडयतोः कदर्थयतोः, कथम् ? अन्योन्यमितरेतरमिति ॥२३॥

परस्परं वेगितमाप्नुवन्तो न पेतुरुद्भिद्यशरा हयाश्च ।
तेऽन्योन्यसेनामुभयेऽप्यनाप्य स्वं श्लाघमाना इव तीक्ष्णभावम् ॥२४॥

परस्परमिति—ते उभयेऽपि द्वितयेऽपि शरा हयाश्च न पेतुः न पतिताः, किं कृत्वा ? पूर्वमनाप्याऽप्राप्य, काम् ? अन्योन्यसेनामितरेतरसैन्यम्, किं कृत्वा ? पूर्वमुद्भिद्य ऊर्ध्वं भित्त्वा, कथम् ? परस्परम्, किं कुर्वन्तः सन्तः ? आप्नुवन्तः, किम् ? वेगितम्, किं कुर्वन्त इव ? श्लाघमाना इव, कम् ? तीक्ष्णभावं स्वमात्मीयमिति शेषः ॥२४॥

इयत्तया वक्तुमहं न शक्तः स्यदानिषूणां युधि ये गिरिभ्यः ।
स्थवीयसोऽप्याशु विभिद्य नागानिबद्धकोपा इव रक्तरक्ताः ॥२५॥

इयत्तयेति—युधि सङ्ग्रामे, तेषामित्यध्याहार्यम्, इषूणां बाणानां स्यदान् वेगान् इयत्तया वक्तुं न शक्तोऽहम्, ये, इषवो निबद्धकोपा इव रक्तरक्ताः रक्तेन रुधिरेण रक्ताः शोणिता इत्यर्थः, बभूवुः, किं कृत्वा ? पूर्वं विभिद्य विशेषेण भित्त्वा, कान् ? नागान् हस्तिनः, कथम् ? आशु शीघ्रम्, कथम्भूतान् ? गिरिभ्यः पर्वतेभ्यः स्थवीयसः स्थूलतरानपि ॥२५॥

आस्येषु जिह्वा हृदयेषु हस्तानंसेषु शूराः श्रवणान् पृषत्कैः ।
समस्तभन्पुष्करिणां पिशाचान् स्तम्भेषु कीलैरिव मन्त्रसिद्धाः ॥२६॥

आस्येष्विति—शूराः भटाः पृषत्कैः बाणैः पुष्करिणां हस्तिनाम् आस्येषु मुखेषु जिह्वाः समस्तभन् कीलयामासुः, तथा हृदयेषु हस्तान् शुण्डादण्डान्, तथा अंसेषु स्कन्धेषु श्रवणान्, क इव ? मन्त्रसिद्धा इव, यथा मन्त्रिणः पिशाचान् कीलैः स्तम्भेषु संस्तभ्नन्तीति शेषः ॥२६॥

---

एक-दूसरेको परस्परमें पीड़ा देते हुए धनुष और ज्याके बीचमें आये हितैषी मित्रके समान लम्बे-लम्बे बाण ऐसे लगते थे मानो उन दोनोंके संघर्षको दूर करनेके लिए ही उन्हें अलग-अलग खींचकर रोक रहे थे ॥ २३ ॥

अपनी-अपनी तीक्ष्णता और उग्रताकी प्रशंसा करते हुए और प्रतिक्षण वेगको बढ़ाते हुएके समान वे दोनों अर्थात् योद्धाओंके बाण तथा घोड़े पक्ष और विपक्षकी सेनाओं तक बिना पहुँचे परस्परमें ही टकराकर नहीं गिर गये थे ॥ २४ ॥

उन बाणोंकी तेजी या गतिको नहीं कहा जा सकता है, जो युद्ध-भूमिपर आये और पहाड़ोंसे भी विशालकाय हाथियोंको पलक मारनेके समयमें ही छेदकर निकल जाते थे। और रक्तसे ऐसे लाल हो जाते थे, मानो तीव्र क्रोधसे ही भभक रहे हैं ॥ २५ ॥

वीर योद्धाओंने अपनी बाण-वर्षाके द्वारा हथिनियोंकी जीभोंको मुखोंमें, शुण्डा दण्डको छातीपर और कानोंको कन्धोंपर उसी तरह टाँक दिया था जिस प्रकार मन्त्रोंको जगानेवाले सिद्ध पुरुष कीलोंके द्वारा पिशाचोंको खम्भोंपर कीलित कर देते हैं ॥२६॥

**निर्याणभागेष्विषुभिर्विभिन्नास्तैरङ्कुशाकर्षनिबद्धशङ्काः ।**
**परावृतन् दूरमिभा न भीताः स्मरन्ति शिक्षां विधुरेऽपि धीराः ॥२७॥**

निर्याणेति—तैः शूरैः इषुभिः शरैः निर्याणभागेषु कुम्भस्थलप्रदेशेषु विभिन्ना इभा हस्तिनः दूरं यथा भवति तथा परावृतन् परावृत्ताः, कथम्भूताः सन्तः ? अंकुशाकर्षनिबद्धशङ्काः अङ्कुशैराकर्षणे निबद्धा शङ्का येषां ते, युक्तमेतत्, धीराः शूराः शिक्षां विद्योपादानं स्मरन्ति, क्व सत्यपि ? विधुरेऽपि कष्टेऽपि, न भीताः, त्रस्ताः पुरुषाः शिक्षां न स्मरन्तीति शेषः ॥२७॥

**व्यद्धुं परानानतपूर्वकायाः स्कन्धान्तयोस्तैर्विनिखातबाणाः ।**
**योधाः सतूणद्वितया इवासन् बध्नात्यनर्थोऽपि कुतश्चिदर्थम् ॥२८॥**

व्यद्धुमिति—योधाः धनुर्धराः तैः [1]विध्यद्भिः स्कन्धान्तयोरंसान्तरालयोः विनिखातबाणाः विनिखाता निहिता बाणा येषां ते तथोक्ताः सन्तः सतूणद्वितया इव सबाणधियुग्मा इव आसन् बभूवुः, कथम्भूताः ? परान् शत्रून् व्यद्धुं ताडयितुम् आनतपूर्वकायाः, युक्तमेतत्, कुतश्चित्पदार्थादनर्थोऽप्यर्थं बध्नातीति शेषः ॥२८॥

**तेषां धनुर्मण्डलितं यशो न द्विषो धरित्र्यामपतन्न बाणाः ।**
**पृष्ठे निषङ्गः स्थितवान्न कश्चिन्ननाम देहो हृदयं ननाम ॥२९॥**

तेषामिति—तेषां नरेन्द्राणां धनुः मण्डलितं कुटिलितं यशो न मण्डलितं सङ्कुचितमित्यर्थः, द्विषो धरित्र्याम् भूमौ अपतन् न बाणाः; वैरिणो मेदिन्यां पेतुः न तु शराः, पृष्ठे निषङ्गः बाणधिः स्थितवान् न कश्चित् शत्रुः, नाम अहो देहः कायः ननाम नम्रोऽभूत् न हृदयं ननामेति शेषः ॥२९॥

**ततो यदूनां बलमप्यवस्थां गतं हतं तैः परिवर्तते स्म ।**
**स्थिरासिकापेयमधिष्ठितानां तद्वारियादोभिरिवाम्बुधीनाम् ॥३०॥**

द्विः तत इति—ततो धीरवर्णनानन्तरं परिवर्तते स्म व्याघुटितम्, किम् ? तद्बलम्, केषाम् ? अधिष्ठितानाम् आश्रितानाम्, किं तत् ? कापेयं कपीनां भावः, कपिज्ञातेर्दण [ जै० सू० ३.४।११७ ] कपित्वं वानराणामित्यर्थः, कथम्भूतं बलम् ? स्थिरासि स्थिरा असयो यत्र तत् तथोक्तम्, यद्बलं गतम्, काम् ? ऊनां हीनाम् अपि अवस्थाम्, कथम्भूतम् ? तैः शत्रुभिर्हतं सत्, इव यथा अम्बुधीनां समुद्राणां यादोभिर्जलजन्तुभिर्हतं सत् ऊनाम् अवस्थां गतमपि वारि परिवर्तते इति शेषः ।

---

बाणोंकी मारके द्वारा गण्डस्थल फोड़ दिये जानेपर भी हाथियोंको अंकुशके खींचनेकी शंका हो जाती थी । फलतः डरे रहनेपर भी वे लौटकर दूर तक मार करते थे । उचित ही है, धीर व्यक्ति विपत्तिमें पड़ जानेपर भी क्या शिक्षाको याद नहीं करते हैं ? अपितु करते ही हैं और डरते नहीं हैं ॥२७॥

शत्रुओंको छेदनेके लिए शरीरके ऊपरी भागको आगेकी ओर झुकाये हुए योद्धाओंके कन्धोंपर प्रतिपक्षी योद्धा बाण गाड़ देते थे । तब वे ऐसे लगते थे मानो दोनों कन्धोंपर तूणीर लटकाये हैं । ठीक ही है कभी-कभी बुराईमें भी भलाई हो जाती है ॥२८॥

वीर योद्धाओंके धनुष खिचते-खिचते गोल हो गये थे किन्तु यश ज्योंका त्यों था । उनके शत्रु पृथ्वीपर लेट गये थे पर एक भी बाणने धरती नहीं छुई थी । पीठपर केवल तूणीर ही चढ़ा था कोई दूसरा छू भी नहीं पाया था । और शरीर अवश्य झुकता था किन्तु मनने आत्मसमर्पण नहीं ही किया था ॥२९॥

दृढ़ताके साथ तलवार चलाती हुई (स्थिरासि), जमकर लड़ते हुए सेनानायकों-

---

१. शत्रुभिः –प० ।

भारतीयः पक्षः—तद् यदूनां यादवानां बलं परिवर्तते स्म, कथम्भूतानाम् ? अधिष्ठितानाम्, कथम्भूतं बलम् ? स्थिरासिकापेयं स्थिरमासितुं पर्यायः स्थिरासिका सा अपेया परित्याज्या यस्य तन् तथोक्तम्। शेषं प्राग्वत् ॥३०॥

**तथा हरीणां कलहायमाना सेना मुखं दातुमपारयन्ती।**
**मुधातिसुप्ता बहुवासराणि क्षणं न वेश्येव ययौ न तस्थौ ॥३१॥**

द्विः तथेति—तथा तेनैव प्रकारेण हरीणां वानराणां सेना न ययौ न गता न च तस्थौ न स्थितवती, केव ? वेश्येव, कथम् ? क्षणं मुहूर्तमेकम्, कथं सती ? अतिसुप्ता अतिनिद्राणा सुरतासक्तेत्यर्थः, कानि ? बहुवासराणि प्रचुराणि दिनानि, कथम् ? मुधा एवमेव, कथम्भूता ? कलहायमाना कलहं कुर्वाणा पुनः मुखं दातुम् अपारयन्ती पराङ्मुखीभवन्ती।

भारतीयः—हरीणां यादवानां सेना। शेषं प्राग्वत् ॥३१॥

**तदाशशंसे रणभूमिरेषां प्राज्योचिताङ्गा पतिमात्तबाणा।**
**परासुमज्जातिकृतावलेपा पतिंवराभ्यङ्गविधिं गतेव ॥३२॥**

तदेति—तदा तस्मिन् काले रणभूमिः पतिं स्वामिनम् आशशंसे श्लाघते स्म, केषाम् ? एषां नरेन्द्राणाम्, कथम्भूता ? प्राज्योचिताङ्गा प्राज्यानि प्रचुराणि उचितानि योग्यानि अङ्गानि गजवाजिरथपदातिलक्षणानि यस्यां सा तथोक्ता, पुनः कथम्भूता ? आत्तबाणा गृहीतशराः, पुनः कथम्भूता ? परासुमज्जातिकृतावलेपा परासूनां शवानां मज्जा तया अतिकृतोऽवलेपोऽवलेपनं यस्याः सा, केव पतिमाशशंसे रणभूमिः ? पतिंवरेव विवाहोचिता कन्येव, कथम्भूता सती ? अभ्यङ्गविधिं मज्जनक्रियां गता, पुनः प्राज्योचिताङ्गा प्रकृष्टमाज्यं प्राज्यं प्रकृष्टं घृतं प्राज्यस्योचितमङ्गं (प्राज्यानि पूर्णविकसितानि उचितानि आनुपातिकानि अङ्गानि) यस्याः सा, पुनः आत्तबाणा ( पतित्वेन गृहीतकौमारहरः ) पुनः परासुमज्जातिकृतावलेपा परा सम्पूर्णलक्षणलक्षिता ( श्रेष्ठा ) या असुमतां जातिः प्राणिजातिः, तस्यां कृतोऽवलेपो गर्वो यया सा तथोक्ता ॥३२॥

---

की वह वानरसेना यद्यपि संख्याकी दृष्टिसे कुछ हीन (ऊना) अवस्थाको प्राप्त हुई थी तथापि शत्रुओंके द्वारा आघात होते ही फिर वैसे ही टूट पड़ी थी जैसे जलचर जन्तुओंकी उछल-कूदके कारण समुद्रका पानी चंचल हो उठता है [एक स्थानपर ठहरने (स्थिरासिका) की प्रकृतिसे दूर (अपेयं) अर्थात् अत्यन्त उद्योगी दृढ़ अनुगामी राजाओंकी यादवसेना विशेष अवस्थाको प्राप्त कर लेनेपर भी शत्रुओंके द्वारा प्रहार होनेपर दूसरी ओरसे वैसे ही चढ़ बैठी थी जैसे जलचर···चंचल हो उठता है] ॥३०॥

इस प्रकारसे युद्धमें लीन वानरसेना अथवा यादवसेना (हरीणां सेना ) शत्रुओंसे डटकर, सम्मुख-युद्ध करनेमें सफल हो सकी थी अर्थात् व्यूह-युद्ध कर रही थी। वेश्याके समान कई दिन तक न सो सकी थी और न क्षण-भरके लिए भी स्थिर ही रह सकी थी और न आगे बढ़ सकी थी (वेश्या भी विटसे कलह करती है, मुख छूने नहीं देती है, रातें जाग-जागकर बिता देती है और न भागती है और न क्षण-भर पास ही बैठती है) ॥३१॥

प्रचुर हस्ती, अश्व, रथ और पदाति सेनाके उपादेय अंगोंसे पूर्ण, बाणोंसे व्याप्त तथा मृत सैनिकोंकी चर्बीसे लिपी हुई फलतः विवाहके लिए उबटन लगाये वधूके समान रणभूमिने राजाओंके नायकोंकी प्रशंसा की थी [वधूके भी अंग पुष्ट, आनुपातिक रीतिसे पूर्ण विकसित तथा सुन्दर होते हैं। प्राणि-जगत्की श्रेष्ठ जाति (मनुष्य गति) को भी ऐसी सुन्दरीका तब गौरव होता है जब वह प्रेमीको पतिरूपसे स्वयं वरण करनेके लिए उबटन आदि लगाकर तैयार होती है] ॥३२॥

**स्थिराक्षरान्तं युधिशब्दपूर्वं नामप्रसिद्धं भुवनं समस्तम् ।**
**यस्य स्तुतेऽद्यापि विनामयुक्तं क्रुद्धः सरामो हि गतिर्नयस्य ॥३३॥**

द्वि: स्थिरेति—हि स्फुटं स रामो दाशरथिर्युधि सङ्ग्रामे क्रुद्धोऽपि सन् नयस्य नीतेर्गतिरासीत्, अद्यापि साम्प्रतमपि स्तुते स्तवीति, किं कर्तृ ? भुवनम्, कथम्भूतम् ? समस्तम्, किम् ? नाम, कस्य ? यस्य रामस्य कथं [ कथंभूतं प्रसिद्धं प्रकृष्टं सिद्धपरमेष्ठित्वं गतम् ] यथा भवति ? विनामयुक्तं विनामो युक्तो यत्र स्तवनकर्मणि तद्यथा भवति प्रणामोचितमित्यर्थः, कथं यथा भवति ? स्थिराक्षरान्तं न क्षरतीत्यक्षरो मोक्षः अन्तः अष्टगुणलक्षणो धर्मः अक्षरस्य अन्तः अक्षरान्तः, स्थिरोऽविचलः अक्षरान्तो यस्मात् स्तवनकर्मणस्तद्यथा भवति, कथं यथा भवति ? शब्दपूर्वम् शब्दो यशः, उक्तञ्च "शब्दः प्रपठ्यते सद्भिराविष्कारे गिरि ध्वनौ, यशस्येवाभिभाषायां शब्दशास्त्रविशारदै"—रितिशब्दः पूर्वो यस्मात् स्तवनकर्मणस्तद्यथा भवति । अत्र पूर्वं जगद्यद्याप्यस्थित्या नरेन्द्रनागेन्द्रविभूतिसुखसेवनानन्तरं पश्चात्तत्स्तवनान्मोक्षो भवितेति यथा मोक्षो भवतीति भावोऽभ्युपन्यस्तः ।

भारतीय: पक्षः—यस्य शत्रोः स नरेन्द्रः क्रुद्धः एतस्य प्राणापहारं करोमीति हृदयेऽत्यन्तया दुष्टपरिणामतया कुपितस्तस्य शत्रोः गतिर्नास्ति, केनोपायेन जीवामीति लक्षणावर्त्तना न विद्यते, कथम् ? हि स्फुटम्, कथम्भूतोऽपि सन् ? सरामोऽपि रः गम्भीरो ध्वनिः, आमः सार्द्रं चेतः उक्तञ्च—"आमो रोगे तथाऽपक्वे सार्द्रे चित्तेऽपि पठ्यते, रः शब्दः कोविदैर्यानि गम्भीरे च ध्वनाविति," सह रामाभ्यां वर्त्तत इति सरामः, यस्य नरेन्द्रस्य नाम अद्यापि समस्तं भुवनं स्तुते स्तौति, कथम्भूतं नाम ? स्थिराक्षरान्तं स्थिरमक्षरमन्ते यस्य नाम्नस्तथोक्तम्, पुनः कथम्भूतम् ? युधिशब्दपूर्वं युधिशब्दः पूर्वमादिर्यस्य तत् पुनः विनामयुक्तं षत्वणत्वयोर्विनाम संज्ञेयं, विनामेन षत्वेन युक्तं यत्तत्तथोक्तं पुनः प्रसिद्धं विख्यातं, [ अथवा प्रकृष्टा या साधुता तां गतम् ] युधिष्ठिरनामेति भावः ॥३३ ।

**स्वैरञ्जनानन्दनमाशुकारैर्भीमन्दमानम्रमरातिजातम् ।**
**कुर्वन्तमुद्यन्तमुदीक्ष्य सेन्द्रैर्विसिस्मिये खेऽधिगतैर्विमानम् ॥३४॥**

द्वि: स्वैरमिति—विसिस्मिये विस्मितम्, कैः ? सेन्द्रैः देवैः, कथम्भूतैः ? खे गगने विमानं[1] देवयानम् अधिगमैरधिष्ठितैः, किं कृत्वा ? अञ्जनानन्दनं हनूमन्तम् उदीक्ष्य निरीक्ष्य, कथम्भूतम् ? उद्यतम् उद्यमं कुर्वाणम्, पुन कथम्भूतम् ? स्वैः स्वीयैराशुकारैः शीघ्रकरणैः अरातिजातं शत्रुसमूहं भीमन्दं भयनिरुत्साहम् आनम्रञ्च कुर्वन्तं विदधतम् ।

आज समस्त संसार यश (शब्द) की गाथासे आरम्भ करके अविचल मोक्ष (अक्षर) की प्राप्ति पर्यन्त जिसके जीवनकी सब घटनाओं (नाम) की स्तुति करता है और परम सिद्धके (प्रसिद्ध) रूपमें प्रणाम (वि-नाम) करता है वही राम कुपित होकर भी इस युद्धमें नीतिमार्गके आचरणके आदर्श थे [जिसके नाममें पहले 'युधि' शब्द है और अन्तमें विनाम (षत्व) युक्त स्थिर ( ष्ठिर ) शब्द है और साधुताके अवतार ( प्रसिद्ध ) जिस युधिष्ठिरकी आज भी पूरा विश्व स्तुति करता है । इतना ही नहीं; जिसका हृदय करुणासे भींगा ( स-आम ) है तथा वाणी(र) गम्भीर है वह जिसपर कुपित हो जाता है उसका संसारमें निर्वाह (गति) नहीं है] ॥३३॥

अपने तीव्र आक्रमणोंके द्वारा अनगिनते (वि-मान) तथापि भयसे शिथिल (भी-मन्द ) शत्रुओंके समुदायोंको चरणोंमें झुकाता ( वि-नम्र ) हुआ तथा युद्धमें उत्साहपूर्वक तल्लीन अंजनानन्दन (हनुमान्) को देखकर आकाशमें आये इन्द्र तथा देवगण आश्चर्यमें

१. विगतं मानं प्रमाणं यस्मात् तदरातिजातम् ।

अधुना भारतीयः—विसिस्मिये, कैः ? खेऽधिगतैः खेऽधिगतं येषां तैः विद्याधरैः, कथम्भूतैः ? सेन्द्रैः इन्द्रयुतैः किं कृत्वा ? भीमं वृकोदरम् उद्यतम् उद्यमं कुर्वन्तम् उदीक्ष्य पुनः अरातिजातं स्वैरं स्वमात्मानमीरयतीति स्वैरस्तम्, कैः ? आशुकारैः, दमानम्रं दमेन आनम्रं कुर्वन्तम्, कथम्भूतं भीमम् ? जनानन्दनम् ? जनानानन्दयतीति जनानन्दनस्तम्, पुनः कथम्भूतम् ? विमानं विशिष्टो मानो गर्वो यस्य तं प्रकृष्टाहङ्कारमिति भावः ॥३४॥

**प्रभावितारातनयस्य वीर्यं कृताधिपार्थस्य निरूप्य भीताः ।**
**दत्तान्तराः पूर्वसरा बभूवुर्विपद्विरुद्धा इव बन्धुवर्गाः ॥३५॥**

द्विः प्रभावीति—बन्धुवर्गाः बन्धुसमूहाः भीताः सन्तः विपद्विरुद्धा इव बभूवुः संजाताः, कथम्भूताः ? पूर्वसराः अग्रेसराः, पुनः दत्तान्तराः दत्तावसराः, किं कृत्वा ? पूर्वं निरूप्यावलोक्य, किम् ? प्रभावि प्रभाववत्, तारातनयस्याङ्गदस्य वीर्यम्, कथम्भूतस्य ? कृताधिपार्थस्य कृतोऽधिपार्थो येन तस्य विहितराघवार्थस्येति शेषः ।

अथ भारतीयः—विपद्विरुद्धा इव विपदा विरुद्धास्ते तथोक्ता इव बन्धुवर्गाः भीमादि बान्धवसमूहा बभूवुः, कथं यथा भवति ? कृताधि विहितमानसपीडम्, कथम्भूताः ? पूर्वसराः पुरःसराः पुनः दत्तान्तराः पुनः भीताः भीः इता गता येषां ते भीताः विनष्टभयाः[1], किं कृत्वा ? पूर्वं पार्थस्यार्जुनस्य वीर्यं शक्तिं निरूप्यावलोक्य, कथम्भूतस्य ? प्रभावितारातनयस्य अरातीनामयमारातः स चासौ नयश्च आरातनयः प्रभावितो निश्चित आरातनयो येन तस्य तथोक्तस्य ॥३५॥

**वरूथिनीलङ्घनमन्यसैन्यं ज्वलत्प्रकोपानलमुत्पतन्तम् ।**
**दृष्ट्वा यमाकारमरिप्रजातं संहारमह्नाय भुवः शशङ्के ॥३६॥**

वरूथीति—त्रिः । अरिप्रजा भुवः पृथिव्याः संहारं शशङ्के शङ्कितवती, कथम् ? अह्नाय झटिति, किं कृत्वा ? अन्यसैन्यं परबलम् उत्पतन्तम् अभिगच्छन्तम् तं प्रसिद्धं नीलं नीलाभिधानं वा नरेन्द्रं दृष्ट्वा, कथम्भूतमन्यसैन्यम् ? घनं निबिडं पुनः वरूथि वरूथाः अस्मिन् सन्तीति वरूथि तद् रथगुप्तियुतम्

---

पड़ गये थे [सहज भावसे वेगके साथ किये गये गदाके प्रहारोंसे शत्रुओंके झुण्डोंको दमन करके गिराते (आनम्र) हुए, पाण्डव लोगों (जन) के आनन्दके कारण और अत्यन्त अहंकारी (वि-मानं) भीमको आगे बढ़ता देखकर आकाशचारी (विद्याधर) तथा उनके नायक आश्चर्यचकित रह गये थे] ॥३४॥

स्वामी रामके (अधिपस्य) इष्ट कार्य (अर्थस्य) को करते हुए ताराके पुत्र (तारा तनयस्य) अंगदके आश्चर्यकारक पराक्रमको देखकर भयभीत मित्र राजा भी विपत्ति कालमें मुख मोड़नेवालोंके समान आगे बढ़े चले जा रहे थे तथा अंगदकी विजयकी परिस्थिति पैदा कर रहे थे (विपत्ति कालमें अपने भी विरुद्ध हो जाते हैं, पहले ही साथ छोड़ देते हैं और सामना नहीं होने देते हैं) [शत्रु कौरवों (अराति) की राज तथा युद्ध नीति (नयस्य) को भी विफल करते हुए तथा उनके मनको आकुलता (आधि) में डालते हुए अर्जुनके पराक्रमको देखकर भीम, आदि पाण्डव भी, विपत्तिके ही विरुद्ध हो गये लोगोंके समान, युद्धमें आगे-आगे बढ़े जा रहे थे तथा अर्जुनको प्रगतिके अवसरको जुटा रहे थे। और भय (भी) तो उनसे दूर-दूर ही भागता-फिरता था (इतः) ] ॥३५॥

क्रोधकी अग्निसे तमतमाते हुए तथा मूर्तिमान् यमराज नीलको रथोंसे घिरी (वरूथि) तथा अभेद्य (घन) शत्रुओंकी सेनाके ऊपर टूटता देखकर रावणकी प्रजा

---

1. भीः इता गता येभ्यः निर्भयाः ।

कथम्भूतं नीलम् ? ज्वलत्प्रकोपानलं ज्वलन् प्रकोप एवानलो यस्य तं पुनः यमाकारं यमस्येवाकारो यस्य तम् इत्येकोऽर्थः, तथा अरिप्रजा नलं दृष्ट्वा नलाभिधानं वा नरेन्द्रं वीक्ष्य भुवः संहारं शशङ्के, कथम्भूता अरिप्रजा ? ज्वलत्प्रतापा, कथम्भूतम् अन्यसैन्यम् ? वरूथिनीलङ्घनं वरूथिनी सेना लङ्घते इति तथोक्तम्।

भारतीयः—अन्यसैन्यं कर्तृ शशङ्के शङ्कितवती, किं कर्मतापन्नम् ? संहारम्, कथम्भूतम् ? अरिप्रजातम् शत्रुसंभवम्, कस्याः ? भुवः, कथम् ? अह्नाय, किं कृत्वा ? यमाकारं यमस्य पुत्रत्वात् यमौ नकुलसहदेवौ तयोराकारं मूर्ति दृष्ट्वा, किं कुर्वन्तम् ? अन्यसैन्यं कौरवसैन्यम् उत्पतन्तम्। अन्यत् पूर्वसमम्। तृतीयोऽर्थः ॥३६॥

**स वानराणां पतिरुग्रसेनः किं वर्मणा स्यात्किल मर्मणेव।**
**[1]परादृगृहीतेन भियेति चित्रं संनद्धवान् संनहनं न भेजे ॥३७॥**

द्विः स इति—चित्रमाश्चर्यं स वानराणां पतिः सुग्रीवः सन्नहनं न भेजे, कथम्भूतः सन् ? सन्नद्धवान्, कथम् ? इति, किल लोकोक्तौ, वर्मणा सन्नहनेन किं स्यात्, कथम्भूतेन ? परादितरस्माद्‌गृहीतेन, कया कृत्वा ? भिया भयेन, केन ? मर्मणेव, कथम्भूतो वानराणां पतिः ? उग्रसेनः उग्रा सेनाऽस्य स तीव्रदण्ड इति शेषः।

भारतीयः—वाऽथवा स नराणां पतिः उग्रसेन उग्रसेनाभिधानो नरेन्द्रः सन्नहनं न भेजे। शेषं तुल्यम् ॥३७॥

**दिधक्षवे लोकमरातिसेनं संधुक्षमाणं द्रुपदेन तेन।**
**क्रोधाग्नयेऽकल्प्यत कोटिकल्पं भामण्डलेनोत्पतदार्कतेजः ॥३८॥**

द्विः। दिधक्षेति—तेन प्रसिद्धेन भामण्डलेन जानकीभ्राता नाकल्प्यत न कल्पितम् किम् ? अरातिसेनम् अरातीनां सेना अरातिसेनम्, कथम्भूतम् ? संधुक्षमाणम्, कस्मै ? क्रोधाग्नये कोपवह्नये, क्व ? द्रुपदे दारुस्थाने, कथम्भूताय क्रोधाग्नये ? दिधक्षवे, कम् ? लोकम्, किं कुर्वता सता भामण्डलेन ? उत्पतता, किम् ? अर्कतेजः सूर्यवर्चः, कथम्भूतमरातिसेनम् ? कोटिकल्पं कोटिप्रमाणम्।

---

सोचती थी कि अब शीघ्र ही संसारका भी संहार हो जायेगा ( यमके समान संहारकर्त्ता तथा समस्त सेना (वरूथिनी) के भेदन (लंघन) में समर्थ नल नामके राजाको शत्रुसेनाकी ओर बढ़ता देखकर, रावणके अकार्यके कारण क्रोधसे जलती (ज्वलत्प्रकोपा) उसकी प्रजा सोचती थी उसका ही नहीं अपितु विश्वका अन्त निकट है) [सेनाओंको परास्त (लंघन) करनेमें समर्थ, लपटें लेती क्रोधाग्निके समान उग्र, यमके समान भयानक आकृतिधारी (यमके आत्मज) अथवा युगल रूपसे उत्पन्न (यमाकार) नकुल और सहदेवको आक्रमण करते देखकर ही प्रतिपक्षी (अन्य) कौरव सेना अपने राज्यकी समाप्तिकी, उस कल्पनाको करके कांप उठी थी जो शत्रुओं पाण्डवोंके द्वारा होनेवाली था ॥३६॥

आश्चर्य है कि दुर्दम्य सेनाके स्वामी वानरोंके राजा सुग्रीवने [अथवा मनुष्यों (नराणां) के अधिपति (पति) उग्रसेनने] युद्धके लिए तैयार होकर भी कवच नहीं पहना था! वह कहता था कवचका क्या होगा ? शत्रुसे रंचमात्र भय न खानेवाला हृदय ही पर्याप्त है ॥३७॥

सूर्यके तेजसे भी अधिक प्रतापी सीताके भाई प्रसिद्ध भामण्डलने समस्त लोकको भस्मसात् करनेके लिए अत्यन्त प्रज्वलित अपनी क्रोधरूपी अग्निमें हवनकी लकड़ी

---

१. परात्-शत्रोः अगृहीतेन भिया मर्मणा शत्रुभययुक्तचेतसेति। इतरस्मादग्रहीतेनेति। सम्प्रदाने द्वितीया।

भारतीयः—तेन द्रुपदेन द्रुपदनाम्ना राज्ञा अरातिसैन्यं संयुज्यमानं नाकल्पतैव, कस्मै ? क्रोधाग्नये, कथम्भूताय ? दिवक्षवे, कम् ? लोकम्, किं कुर्वता सता ? उत्तरता उत्तेजयता, किम् ? अर्कतेजः, केन कृत्वा ? भामण्डलेन दीप्तिपरिवेषेण, कथम्भूतम् ? कोटिकल्पमिति शेषः ॥३८॥

**तीव्रोद्धवं क्रुद्धमनेकसैन्यं परासुषेणन्तमरिव्रजाय ।**
**निर्विज्य नित्यास्तमयात्कथंचिद्वैरोचनीदीप्तिरुपायतेव ॥३९॥**

द्विः तीव्रेति—वैरोचनी विरोचनस्येयं वैरोचनी, दीप्तिः तं लोकप्रसिद्धं सुषेणं सुषेणाभिधं राजानमुपायतेव परिणीतवतीव, किं कृत्वा ? पूर्वं निर्विज्य, कस्मात् ? नित्यास्तमयात् अनवरतास्तात्, कथम् ? कथंचिन्महता कष्टेन, कथम्भूतं सुषेणम् ? क्रुद्धम् , कस्मै ? अरिव्रजाय रिपुवर्गाय पुनः तीव्रोद्धवमुग्रगर्वं पुनः अनेकसैन्यं प्रचुरबलम्, कथम्भूता दीप्तिः ? परा उत्कृष्टा।

भारतीयः—वैरोचनो नाम कौरवगृह्यो राजा तस्येयं वैरोचनी दीप्तिरुपायतेव गतवतीव, कम् ? उद्धवं नारायणामात्यमुद्धवाख्यम् । किं कुर्वन्तम् ? अणन्तम् ऊर्जन्तम्, कस्मै ? अरिव्रजाय, कथम्भूताय ? परासुषे, 'असु क्षेपणे' इत्यस्य धातोः क्वसुप्रत्ययान्तः 'सर्वधातुभ्यः क्वसुकानौ वक्तव्याविति; निराकृतवत् इत्यर्थः, किम् ? अनेकसैन्यम्, कथम्भूतं एत् ? क्रुद्धम्, कथम्भूता दीप्तिः ? तीव्रा, या वैरोचनी दीप्तिः अयात् गतवती, कम् ? अस्तम्, किं कृत्वा ? पूर्वं निर्विज्य, कथम् ? कथंचित्, कथम्भूता ? नित्या परैरनभिभवनीयेति भावः ॥ ३९ ॥

**सज्जाम्बवः क्षोभणमभ्यगच्छन्न केवलं वारिधयोऽद्रयश्च ।**
**भिन्ना विदूरे विशिखैरमोघं तथा दुरन्तं विदुरस्य शस्त्रम् ॥४०॥**

सदिति—न केवलमभ्यगच्छन्, कोऽसौ ? सज्जाम्बवः, संश्चासौ जाम्बवः, सज्जाम्बवः जाम्बवाभिधानः सुग्रीवस्य मन्त्री, किम् ? क्षोभणम्, तथा अभ्यगच्छन्, किम् ? क्षोभणम्, के ? वारिधयः समुद्राः अद्रयः पर्वताश्च, कथम्भूताः सन्तः ? विशिखैर्बाणैर्विदूरे सङ्ग्रामे विभिन्नाः, तथा विद्वांसोऽस्य जाम्बवस्य अमोघं सफलं दुरन्तं दुर्द्धरं शस्त्रं विदुः जानन्ति, वारिध्यद्रिक्षोभणप्रकारेणेति ।

भारतीयः—न केवलं वारिधयः क्षोभणमभ्यगच्छन्, कथम्भूताः सन्तः ? सज्जाम्बवः सज्जमम्बु येषां ते तथोक्ताः, अद्रयश्च क्षोभणमभ्यगच्छन्, कथम्भूताः ? भिन्नाः, कैः ? विशिखैः बाणैः, तथा सति

(द्रु-पद) की जगह क्या कोटि संख्या प्रमाण शत्रुओंकी सेनाको नहीं झोंक दिया था ?

प्रताप-पुंज (भा-मण्डल) के द्वारा सूर्यके तेजको भी पछाड़नेमें समर्थ द्रुपद देशके राजाने (द्रुपदेन) शत्रु लोकको जलानेके लिए भभकती हुई क्रोधाग्निके कुण्डमें करोड़ों प्रमाण कौरव सेनाकी आहुति दे दी थी ॥३८॥

प्रतिदिन अस्त होनेवाले सूर्यसे विरक्त होकर सूर्यकी उत्कृष्ट दीप्ति, अत्यन्त प्रतापी वानर राजा सुषेणके पास किसी प्रकारसे चली ही गयी थी । यह सुषेण राजा भी (शत्रु समूहपर कुपित होनेके कारण) राम-रावण युद्धमें विशाल सेनाके साथ सम्मिलित हुआ था।

कौरव पक्षके राजा वैरोचनकी प्रखर दीप्तिने भगवान् कृष्णके अमात्य उद्धवको वरण कर लिया था । विशाल सेनाके अधिपति उद्धव भी तिरस्कारके पात्र शत्रु-समूहपर क्रुद्ध थे । यही कारण है कि वैरोचनकी स्थायी प्रतिष्ठा सदाके लिए लुप्त हो गयी थी ॥३९॥

राम रावण युद्धमें (विदूरे) केवल जामवन्त ही क्षुब्ध नहीं हुए थे अपितु इसके बाणोंसे छेदे गये पर्वत और समुद्र भी कांप उठे थे । क्योंकि इस जामवन्तके शस्त्र ऐसे ही (अद्भुत) विनाशक और लक्ष्यभेदी थे ।

महाभारतमें धृतराष्ट्रके अनुज विदुरके उतर आनेपर पानीसे लहराते समुद्रों और विशाल पर्वतोंमें भी बाण वर्षाके कारण केवल उथल-पुथल ही नहीं मच गयी थी, अपितु

अदुः रक्षन्ति स्म, के ? वारिवयः, कम् ? अन्तं स्वरूपं द्रवकाठिन्यलक्षणम्, रे शब्दः निकृष्टसम्बोधने, रे जना अविद्वान्सः । विद्वज्जना विदुर्जानन्ति, किम् ? शस्त्रम्, कथम्भूतम् ? अमोघम्, कस्य ? विदुरस्य विदुराभिधानस्य धृतराष्ट्रस्य लघीयसो भ्रातुरिति शेषः ॥ ४० ॥

**न सोढवैराधितरौद्रहेतिः स्थिरं तथैकं पदमन्यसेना ।**
**वैराटवीचारभयेन जाता गेहेष्विवाजिष्वपि कस्य गर्जः ॥ ४१ ॥**

नेति—न जाता, का ? अन्यसेना सोढवैराधितरौद्रहेतिः विराधितो विराधितनामधेयश्चन्द्रोदयनामधेयस्य विद्याधरस्य पुत्रः, विराधितस्येमा वैराधित्यः, सोढाः वैराधित्यः विराधसम्बन्धिन्यो रौद्राः तीव्रा हेतयो यया सा अन्यसेना । तथा एकं स्थिरं पदं नासीत्, केन ? वैराटवीचारभयेन, वैरमेवाटवी तस्यां यः चारः प्रवर्त्तनं तस्माद्भयं तेन, युक्तमेतत्, आजिष्वपि सङ्ग्रामेष्वपि कस्य गर्जो विद्यते अपितु न कस्यापि, केष्विव ? गेहेष्विव, यथा गेहेषु सर्वेषां जनानां गर्जो न तथाजिष्वपीति शेषः ।

अथ भारतीयः—न जाता, का ? अन्यसेना, कथम्भूता ? सोढवैरा, सोढं वैरं यया सा सोढवैरा, तथा न जाता अन्यसेना, कथम्भूता ? रौद्रहेतिः, तथा नाधित्त न धृतवती, का ? अन्यसेना, किम् ? स्थिरमेकं पदम्, केन ? वैराटवीचारभयेन वैराटः विराटाख्यो नरेशः, वीचारः आभिचारिकं कर्म, मारणमित्यर्थः, विराटसम्बन्धी[2] यो वीचारः तस्माद्भयं तेन । अन्यत्समम् ॥ ४१ ॥

**तं सत्यकोपाहतशत्रुमुच्चैरामन्दमारम्भगभीरनादः ।**
**विभीषणः सोऽग्रजवैरभीतः समेत्य नाथं प्रधनं ननाथ ॥४२॥**

द्विः तमिति—तं लोकप्रसिद्धं नाथं स्वामिनं रामं राघवं प्रधनं सङ्ग्रामं स विभीषणो रावणभ्राता ननाथ याचितवान्, कथम् ? उच्चैरतिशयेन, किं कृत्वा ? पूर्वं समेत्य आगत्य, कथम्भूतं रामम् ? सत्यकोपाहतशत्रुं सत्यश्चासौ कोपश्च सत्यकोपः अकृत्रिमक्रोधः, तेन हताः शत्रवो येन तम्, कथम्भूतः ? दमारम्भगभीरनादः विद्याभ्यासाय श्रमो दमः, दमस्यारम्भः दमारम्भः तस्मिन्[3] गभीरो नादो यस्य सः, पुनः अग्रजवैरभीतः रावणवैरात् त्रस्तः ।

---

इन्होंने जैसे-तैसे (तथा) अपने स्वरूप (अन्त) की रक्षा की थी (अदुः) । अहो प्रतापी विदुरके शस्त्रकी घातकताको किसने नहीं जाना था ? ॥ ४० ॥

शत्रु रावणकी सेना न तो (चन्द्रोदय विद्याधरके पुत्र) विराधके भीषण शस्त्रोंकी मारको सह सकी थी और न एक भी कदम जमकर लड़ सकी थी क्योंकि इससे शत्रुता करके वन-वन मारे फिरनेके भयसे वह व्याप्त थी । घरके समान युद्धमें भी किसी एककी ही हुंकार नहीं चलती है ।

विराट राजाके संहारके भयसे कांपती कौरव सेना न तो शत्रु (पाण्डवों)की मारको सम्हाल सकी थी, न भयंकर शस्त्रोंको सह सकी थी और न डटकर एक भी प्रतिरोध कर सकी थी । ठीक ही है युद्धमें भी घरके समान एक ही व्यक्तिकी नहीं चलती है ॥ ४१ ॥

अग्रज रावणकी शत्रुतासे भीत और विद्याभ्यास (दम) के सतत आरम्भके कारण गम्भीरतासे बोलते विभीषणने विश्व विख्यात प्रभु रामके पास आकर बड़े आग्रहके साथ युद्ध करनेकी प्रार्थना की थी क्योंकि वह जानता था कि रामका कोप सच्चा है और शत्रुओं-का संहार करेगा ।

---

१. वैरेण या अटव्यां चारः पलायनं तस्माद्भयेन व्याप्ता । २. वैराटाद् वीचारः तस्माद्भयं–प० । ३. तेन–ग० ।

भारतीयः—अपाहृतशत्रु तं नाथं युधिष्ठिरं प्रधनं सत्यकः सत्यकाभिधानः कौरवगृह्यो ननाथ, किं कृत्वा ? मन्दं समेत्य, कथम्भूतः ? उच्चैराः प्रचुरधनः पुनः आरम्भगभीरनादः आरम्भे गभीरो नादो यस्य सः, पुनः अग्रजवैः प्रधानवेगैः विभीषणः भयंकरः पुनः अभीतो निर्भयः ॥४२॥

**स एष संभूय समुद्यतात्मा विश्वोऽपि विश्वं भुवनं जिगीषुः ।**
**राजाप्यपेतो बहुशस्त्रपातो बभूव रागादिरिवात्मतन्त्रः ॥४३॥**

स इति—स एष विश्वोऽपि समस्तोऽपि राजा आत्मतन्त्रो बभूव सञ्जातः, किं कृत्वा ? पूर्वं संभूय मिलित्वा, कथम्भूतः ? समुद्यतात्मा पुनः विश्वं समस्तं भुवनं जगत् जिगीषुः जेतुमिच्छुः, पुनः अप्यपेतः अभिन्नः अपृथक् प्राप्त इत्यर्थः । कस्मात् ? रागात् रलोऽर्थेऽनुरागात् "इष्टे वस्तुनि प्रीतिः रागः" इति श्रुतेः, पुनः बहुशस्त्रपातः प्रचुरशस्त्रपातः, क इव आत्मतन्त्रो बभूव ? इरिव ः नारायणस्तस्यापत्यम्, इः कामः यथात्मतन्त्रः, कस्मात् ? रागात् इष्टे स्त्रवनितादिवस्तुनि प्रीतेः अथवा रागादिरिव अविद्योपप्लव इव, कथम्भूतः ? त्रपातः लज्जाया अप्यपेतः, कथम् ? बहुशो बहुकालमिति ॥ ४३ ॥

**अप्यङ्गसंवारकमङ्गरागं स मन्यमानः कवचं प्रविष्टान् ।**
**प्रागेव मन्ये शरणं प्रविष्टान् ध्यायंस्तनुत्रं कथमाददीत ॥४४॥**

अपीति—मन्येऽहं जाने स विश्वोऽपि राजा तनुत्रं कवचं कथम् आददीत अङ्गीकुर्यात्, किं कुर्वन् ? ध्यायन् चिन्तयन्, कान् ? कवचं प्रविष्टान् नरेन्द्रान्, कथम्भूतान् ? प्रागेव पूर्वमेव शरणं प्रविष्टान्, किं कुर्वाणोऽपि ? अङ्गरागम् अङ्गसंवारकम् अङ्गप्रच्छादकं मन्यमानोऽपि इति ॥ ४४ ॥

**चिरं निबद्धो नियमेन सोऽयं तीव्रासिधारव्रतबद्धचित्तः ।**
**कर्तुं यथेष्टं गुरुणा कथंचिदुपेक्षितः शिष्य इवोदियाय ॥४५॥**

चिरमिति—सोऽयं विश्वोऽपि राजा यथेष्टं स्वेच्छाचरणं कर्तुं विधातुमुदियाय उद्यमं कृतवान्, कथम्भूतः ? नियमेन वीरव्रतेन चिरं बहुतरकालं निबद्धः सन्निरुद्धः, कथम्भूतः ? तीव्रासिधारव्रतबद्धचित्तः असिधारेव व्रतम् असिधाराव्रतं तीव्रं च तदसिधाराव्रतं च तीव्रासिधाराव्रतं तेन बद्धं चित्तं येन स तथोक्तः,

---

प्रारम्भ (आरम्भ)से ही गम्भीरता पूर्वक बोलता, शत्रुओंकी पराजय करता, अपनी अत्यन्त (अग्र-) वेगशीलता (जवैः) के कारण भयंकर तथा निर्भय (अभीतः) उस सत्यकि नामके राजाने धीरेसे (मन्दं) धर्मराज युधिष्ठिरके पास जाकर घोर संग्राम करनेकी प्रार्थना की थी ॥४२॥

इस प्रकार यह पूरा राजवर्ग अपने आप ही उत्साहपूर्ण होकर पूरेके पूरे संसारको जीतनेकी इच्छासे नाना प्रकारके शस्त्रोंको चलाता हुआ मिल करके एकमेक हो गया था । तथा अपने-अपने स्वामीकी भक्तिके कारण कामदेव (नारायणके पुत्र 'ई' काम) के समान आत्मनिर्भर हो गया था [त्रिभुवनजयी, मनोभव और राजतन्त्र (बन्धन) से मुक्त कामदेव भी, उत्पन्न होते ही बहुधा आसक्तिके कारण लोकलाज (त्रपातः) को छोड़कर मनमानी (आत्मतन्त्र) करता है] ॥ ४३ ॥

शरीरके लेपको भी कवचके भीतर घुसा शरीरका दूसरा आवरण समझनेके कारण उक्त समस्त राजवर्ग तनुत्रको क्यों धारण करता ? क्योंकि इसका मन पहले ही शरणमें आये लोगोंकी कल्पनामें लीन हो गया था ॥ ४४ ॥

तीक्ष्ण धार युक्त तलवारके चलानेके लिए कृत-संकल्प और लम्बे अरसेसे युद्धके नियमोंके पालक, गुरुके द्वारा उपेक्षित शिष्यके समान राजवर्गकी मनमानी करनेकी हिम्मत

पुनरपि कथम्भूतः ? कथंचिन्महता कष्टेन गुरुणा उपेक्षितः, क इव ? शिष्य इव, यथोदियाय शिष्यः, किं कर्तुम् ? कर्तुम्, किम् ? यथेष्टम्, कथम्भूतः ? उपेक्षितः, केन ? गुरुणा, कथम् ? कथंचित्, पुनः कथम्भूतः ? नियमेन परिमितकालेन व्रतेन निबद्धः निरुद्धः पुनस्तीव्रासिधाराव्रतबद्धचित्तः, असिधारेव व्रतम् असिधाराव्रतं तीव्रे असिधाराव्रते बद्धं चित्तं येन स तथोक्तः ॥ ४५ ॥

**आस्थायुकः स्यन्दनमन्तरिक्षमापातुकस्तोयनिधेरशेषः ।**
**विपक्षयुद्धान्यभिलाषुकोऽयं वेलोद्यतो ग्राह इवावभासे ॥४६॥**

आस्थायुक इति—अयम् असौ अशेषः समस्तो राजा स्यन्दनं रथम् आस्थायुक अधितिष्ठन् आवभासे शुशुभे, कथम्भूतः ? अन्तरिक्षं गगनम् आपातुकः आपतन्नुत्प्लवमान इत्यर्थः, विपक्षयुद्धानि शत्रुरणानि अभिलाषुकोऽभिलषन्, क इव ? ग्राह इव, यथा जलचरविशेषः, कथम्भूतः ? वेलोद्यतः वेलोच्छलितः, कस्य ? तोयनिधेः समुद्रस्य, कथम्भूतो ग्राहः ? स्यन्दनं प्रवाहम् आस्थायुकः पुनः अन्तरिक्षम् आपातुकः पुनः विपक्षयुद्धानि अभिलाषुकः ॥ ४६ ॥

**भ्रूभङ्गमात्रेण परस्य भङ्गं ज्याघातमात्रेण नृपाभिघातम् ।**
**ते चक्रुरारोपितचापचक्राः स्वायासतन्त्रं हि जयं निराहुः ॥४७॥**

भ्रूभङ्गमात्रेणेति—ते नरेन्द्राः परस्य शत्रोः भङ्गं तेजोभिभवं भ्रूभङ्गमात्रेण चक्रुः कृतवन्तः, नृपाभिघातं राजहननं ज्याघातमात्रेण मौर्वीविस्फारमात्रेण चक्रुः कृतवन्तः । कथम्भूताः ? आरोपितचापचक्राः कुण्डलीकृतशरासनसमूहाः, युक्तमेतत्, हि यस्मात् कारणान्निराहुर्निर्वदन्ति, के ? विद्वज्जनाः, कम् ? जयम्, कथम्भूतम् ? स्वायासतन्त्रम् आत्मप्रयत्नाधीनमिति ॥ ४७ ॥

**स्थिते समर्थे सति दक्षिणाङ्गे वामोऽङ्गभावः प्रथमोऽग्रगोऽभूत् ।**
**अकल्पभूयोपनतं विनेतुं जन्ये व्यवस्यन्निव जन्यमेषाम् ॥४८॥**

स्थित इति—एषां राज्ञां वामोऽङ्गभागः प्रथमोऽग्रगोऽभूत्, क्व सति ? दक्षिणाङ्गे समर्थे स्थितेऽपि सति, किं कुर्वन्निव ? व्यवस्यन्निव निश्चिन्वन्निव, किम् ? जन्यं वामोऽयमिति प्रतिकूलोऽयमिति जनापवादं विनेतुं स्फोटयितुम्, क्व ? जन्ये सङ्ग्रामे, कथम्भूतं जन्यम् ? अकल्पभूयोपनतं न कल्पस्य भावोऽकल्पभूयमसंकल्पत्वं तेन प्रवृत्तमिति ॥ ४८ ॥

---

बड़ी मुश्किलसे पड़ी थी [चिरकालसे नियमोंके पालक और असिधारा व्रतके लिए अभ्यस्त शिष्यकी भी गुरुके द्वारा स्वतन्त्र कर दिये जानेपर भी स्वैराचार करनेकी हिम्मत नहीं पड़ती है] ॥४५॥

रथोंके ऊपर आरूढ़, आकाशमें उड़ते हुएके समान तथा शत्रुपक्षसे युद्ध करनेके लिए अत्यन्त उत्सुक यह समस्त राजसमूह, समुद्रके किनारेपर उछलकर आये मगरके समान शोभित हो रहा था [किनारेके पास उभरा मगर भी प्रवाह (स्यन्दन) के विपरीत चढ़ता है और पानीके ऊपर ऐसी छलांग लेता है कि उड़ता-सा प्रतीत होता है ॥ ४६ ॥

धनुषको पूरा खींचकर आगे बढ़ते हुए इस राजसमूहने अपनी भृकुटिको टेढ़ा करके ही शत्रुको झुका दिया था और धनुषकी डोरीको फटकारके द्वारा ही शत्रुको मार दिया था। उचित ही है, क्योंकि विजय अपने-अपने पुरुषार्थके ही आधीन है ॥ ४७ ॥

युद्धके प्रारम्भ होनेपर शरीरके सबल दक्षिण भागके रहते हुए भी धनुष खींचते समय योद्धाओंका बाँया भाग सबसे पहले आगेकी ओर निकल आया था। इसपर कवि

---

१. कुपप्लवमान बः।

द्राघिम्नि बाह्वोरुरसः प्रथिम्नि प्रसर्पति स्याद्यदि शक्रचापम् ।
तदा कृतज्यं तदपि प्रभूणां नाकर्षणस्य प्रभवेदवैमि ॥४६॥

द्राघिम्नीति—अवैमि जानेऽहं तदपि शक्रचापमपि न प्रभवेत् न समर्थं भवेत्, कस्य ? प्रभूणामाकर्षणस्य, कथम् ? तदा तस्मिन् काले युद्धसमये, यदि चेत् स्यात्. किम् ? शक्रचापम् इन्द्रधनुः, कथम्भूतम् ? कृतज्यं विहितप्रत्यञ्चम्, क्व सति ? बाह्वोः भुजयोः द्राघिम्नि सति, पुनः किं कुर्वति सति ? प्रसर्पति प्रसरति सति, तथा प्रथिम्नि सति विस्तीर्णत्वे सति, कस्य ? उरसो वक्षस इति शेषः ॥४९॥

पुरः प्रसस्रे धनुषा द्विषद्भ्यः पलायनं सूचयतेव पश्चात् ।
ज्ययापजग्मे भुजवीरलक्ष्मीं संवर्धयत्येव जयस्य दिष्ट्या ॥५०॥

पुर इति—पुरः पुरस्तात् धनुषा प्रसस्रे प्रसृतम्, किं कुर्वतेव ? सूचयतेव निवेदयतेव, किम् ? पलायनम् , केभ्यः ? द्विषद्भ्यः शत्रुभ्यः, कथम् ? पश्चात्, तथाऽपजग्मेऽपसृतम्, कया ? ज्यया मौर्व्या, किं कुर्वाणयेव ? संवर्द्धयत्येव वृद्धिं नयत्येव, काम् ? भुजवीरलक्ष्मीम्, कथम् ? दिष्ट्योत्सवेन, कस्य ? जयस्येति ॥५०॥

तेऽपातयन्मार्गणमेष वाहं सोऽप्यश्ववारं हृदयं निषादी ।
नान्योन्यपातानुगतं व्यमुञ्चन् विमार्गसम्पातभियेव बाणाः ॥५१॥

त इति—ते नरेन्द्राः मार्गणं बाणम् अपातयन्, तथा एष मार्गणः वाहम् अश्वम् अपातयत्, सोऽपि वाहः अश्ववारम् अपातयत्, तथा निषादी अश्ववारः हृदयम् अपातयत्, तथा न व्यमुञ्चन् न तत्यजुः, के ? बाणाः शराः, किम् ? अन्योन्यपातानुगतम्, कयेव ? विमार्गसम्पातभियेवेति शेषः ॥५१॥

गुणेन मुक्तं गुरुपर्वरिक्तं मुखेन तीक्ष्णं प्रतिपक्षबद्धम् ।
मर्माविदेषामिषुजालमायादपारिषद्यस्य तुलां जनस्य ॥५२॥

गुणेनेति—एषां नरेन्द्राणाम् इषुजालं शरश्रेणिः अपारिषद्यस्य हेयोपादेयविवेकविकलस्य मूर्खस्य जनस्य तुलामायात्, कथम्भूतमिषुजालम् ? गुणेन ज्यया मुक्तम् अपाकृतं पुनः गुरुपर्वरिक्तं गुरु च तत्पर्वं च गुरुपर्वं तेन गुरुपर्वणा स्थूलग्रन्थिना रिक्तं पुनः मुखेन तीक्ष्णं पुनः प्रतिपक्षबद्धं पश्चात्पिच्छबद्धं

---

कल्पना करता है कि बारंबार होनेवाले अकल्पनीय अपवाद (क्योंकि यह वाम = उलटा अंग है) का मार्जन करनेके लिए ही उसने ऐसा किया था ॥ ४८ ॥

यदि इन्द्रधनुषपर ही ज्या चढ़ा दी जाती तथा वह भुजाओंकी लम्बाईसे भी ज्यादा खिंचता तथा वक्षःस्थलसे भी अधिक फैलता, तो भी युद्धके उल्लासमें समस्त राजवर्गके खींचनेके लिए वह पर्याप्त न होता ॥ ४६ ॥

शत्रुओंके द्वारा किये जानेवाले भावी पलायनका संकेत करनेके लिए ही योद्धाओंका धनुष, चलाये जानेपर आगेको फैल गया था। विजयके शकुन रूपसे ज्या भी पीछेको फैल गयी थी मानो वीरोंकी भुजाओंकी लक्ष्मी ही बढ़ गयी थी ॥ ५० ॥

योद्धा बाणको बरसाते (गिराते) थे, बाण घोड़ेको गिरा देता था, घोड़ा घुड़सवारको गिरा देता था और घुड़सवार अपने हृदयको गिरा देता था। इस प्रकार एक दूसरेको गिरानेकी परम्परा होनेसे योद्धा लोग विमार्ग (वि-पक्षियोंके मार्ग आकाश) में चले जानेकी आशंकासे बाणोंको नहीं छोड़ते थे। [अर्थात् खूब साध कर बाण चला रहे थे] ॥ ५१ ॥

ज्या (गुण) से छोड़े गये, ज्याकी मोटी गाँठसे दूर, अत्यन्त तीक्ष्ण अग्रभागयुक्त, पीछेकी ओर (प्रति) पंखे लगाये हुए तथा शत्रुओंके मर्मस्थलपर आघात करते बाणोंका

पुनः मर्मावित् मर्म विध्यतीति तत्, अपारिषद्यो जनोऽपि कथम्भूतः ? गुणेन शास्त्राभ्यासादिना मुक्तः पुनः गुरुपर्वरिक्तः सूरिपरम्परया हीनः पुनः मुखेन तीक्ष्णः परुषः । शेषं सुगमम् ॥५२॥

तान्प्रावृषेण्याम्बुदभासि पांशौ मध्ये दृशं रुन्धति शब्दलक्ष्यः ।
शरोऽभिनत्पूगतिथानरातीन्को वा निषेद्धा भवितव्यतायाः ॥५३॥

तानिति—शरो बाणः तानरातीन् अभिनत् भिनत्ति स्म, कथम्भूतान् ? पूगतिथान् पूगानां पूरणाः पूगतिथाः "बहुपूगगणसङ्घस्य तिथक् तांस्तथोक्तान् सङ्घपूरणान्, कथम्भूतः ? शब्दलक्ष्यः शब्दवेध्यः, क्व सति ? पांशौ रेणौ, किं कुर्वति सति ? दृशं दृष्टिं रुन्धति सति, आवृण्वति सति, क्व ? मध्ये, कथम्भूते पांशौ ? प्रावृषेण्याम्बुदभासि प्रावृषि भवः प्रावृषेण्यः स चासावम्बुदश्च तस्येव भाः सादृश्यं यस्य स तस्मिन् सजलजलदसदृश इत्यर्थः, युक्तमेतत्, वाथवा भवितव्यतायाः प्राप्तव्यतायाः, को निषेद्धा, अपितु न कोऽपि ॥५३॥

तथाविधेऽप्युद्यति धूलिजाले नृपा रिपून्प्रापुरमी यथास्वम् ।
सर्वस्य पूर्वानुभवोऽनुबन्धी को विष्वणन्मुह्यति नक्तमास्ये॥५४॥

तथेति—अमी नृपाः रिपून् यथास्वं यथायोग्यं प्रापुः, क्व सति ? तथाविधे तादृशेऽपि धूलिजाले उद्यति ऊर्ध्वं गच्छति सति, युक्तमेतत्, नक्तं रात्रौ विष्वणन् भुञ्जानः सन् आस्ये मुखे को मुह्यति मोहं गच्छति अपि तु न कोऽपि, सर्वस्य पूर्वानुभवः पूर्वसंस्कारः अनुबन्धी प्रेरक इति ॥५४॥

तथोभयेषामपि भूपतीनां चित्तात् प्रकोपश्चिरकालरूढः ।
परस्परं भार इवावतीर्णो जज्ञे लघुर्विश्रमदित्सयेव ॥५५॥

तथेति—तथा तेनैव प्रकारेण उभयेषामपि द्वयेषामपि भूपतीनां नरेन्द्राणां चित्तादवतीर्णः प्रकोपो जज्ञे जातः, कयेव ? विश्रमदित्सयेव विश्रमं दातुमिच्छयेव, कथम् ? परस्परमन्योन्यम्, कथम्भूतः ? चिरकालरूढः पुनः लघुः, क इवावतीर्णः ? भार इवेति ॥५५॥

---

समूह अशिष्ट पुरुषकी तुलनाको प्राप्त हुआ था। [असंस्कृत मनुष्य भी गुणोंसे हीन होता है, आचार्य (गुरु) परम्परा (पर्व) से शून्य होता है, कठोर वचन बोलता है, विरुद्ध मार्ग (प्रतिपक्ष) में लीन रहता है तथा तत्त्वके रहस्य (मर्म) को नहीं जानता है] ॥ ५२ ॥

वर्षा ऋतुमें उमड़ते मेघोंके समान घने धुंधले रंग युक्त धूलके छा जानेपर योद्धाओं-की आँखें अपने आप मुँद गयी थीं। तो भी शत्रुकी आवाजको निशाना करके चलाये गये बाणोंने, झुण्डके झुण्ड शत्रुओंको भेद दिया था। ठीक ही है, भवितव्यताको रोकनेमें कौन समर्थ है ॥ ५३ ॥

उक्त प्रकारसे धूलका बवण्डर छा जानेपर भी ये योद्धा-राजा यथायोग्य प्रकारसे अपने-अपने शत्रुको पा जाते थे। उचित ही है; क्योंकि सबका पुराना संस्कार प्रेरक होता है जैसे कि रातको भोजन करनेवाले किसी भी व्यक्तिको अपने मुँहके विषयमें धोखा नहीं होता है ॥ ५४ ॥

दोनों पक्षोंके राजाओंके मनमें भारके समान बहुत समयसे जमा क्रोध इस घोर संग्राममें भी एक दूसरेको आराम देनेकी इच्छासे ही उतर गया (बरस पड़ा) था और वह हलका प्रतीत होने लगा था ॥ ५५ ॥

ऋजुस्वभावादवदातवृत्ताः स्वनाथनाम्नाभियुः कृताङ्काः ।
तूर्णं मृधोद्यावनिमन्त्रणाय दूता इवान्योन्यचमूं पृषत्काः ॥५६॥

ऋज्विति—पृषत्काः बाणाः अन्योन्यचमूमितरेतरसेनाम् अभिययुरभिगच्छन्ति स्म, कस्मै ? मृधोद्यावनिमन्त्रणाय रणोद्यमनिमन्त्रणाय वा रणोत्सवनिमन्त्रणाय, कथम् ? तूर्णं झटिति, क इव ? दूता इव, कथम्भूताः पृषत्काः ? अवदातवृत्ताः अवदातं वृत्तं येषां ते अण्डितवृत्तय इत्यर्थः, कस्मात् ? ऋजुस्वभावात्, पुनः कथम्भूताः ? कृताङ्काः विहितचिह्नाः, केन ? स्वनाथनाम्ना आत्मप्रभ्वभिधानेन, कथम्भूता दूताः ? अवदातवृत्ताः शुद्धवृत्तयः । अन्यत्समानम् ॥५६॥

छत्रध्वजानामितरेतरस्य दण्डास्तदावादिषतार्धचन्द्रैः ।
नवप्रियत्वोद्भभियेव भूपैर्न तत्यजेऽन्योन्यकृतं वधेऽपि ॥५७॥

छत्रेति—तदा तस्मिन् काले अर्धचन्द्रैः अर्धचन्द्राकारैः बाणैः छत्रध्वजानां दण्डाः अवादिषत, (अवाधिषत) छिन्नाः, कस्य ? इतरेतरस्य, तथा न तत्यजे न त्यक्तम्, किम् ? अन्योन्यकृतं कर्मव्यतिहारः, कैः ? भूपैः, क्व सति ? वधेऽपि, कयेव ? नवप्रियत्वोद्भभियेव नूतनप्रेमभङ्गभयेनेवेति भावः ॥५७॥

ते सायकाः संयति संनिवृत्य कर्तुं प्रियाख्यानमपारयन्तः ।
स्वं साहसं पत्युररातिवर्गैर्भृत्या इवाख्यन्पतिताः पतद्भिः ॥५८॥

त इति—ते सायकाः बाणाः साहसं नाऽयं नाऽहमिति प्रत्ययलक्षणम् आख्यन् निवेदितवन्तः, कथम्भूतम् ? स्वमात्मीयम्, कस्य ? पत्युः स्वामिनः, कथम्भूताः सन्तः ? पतिताः, कैः सार्द्धम् ? अरातिवर्गैः, किं कुर्वद्भिः ? पतद्भिः, किं कुर्वन्तः ? अपारयन्तः अशक्नुवन्तः, किम् ? प्रियाख्यानं भवतां शत्रवो निपातिता अस्माभिरिति, क्व ? संयति सङ्ग्रामे, किं कृत्वा ? पूर्वं संनिवृत्य व्याघुट्य, इव यथा पतद्भिररातिवर्गैः सहपतिताः स्वं साहसं पत्युराख्यन् भृत्याः संयति, किं कुर्वन्तः ? अपारयन्तः, किम् ? प्रियाख्यानम्, किं कृत्वा ? पूर्वं संनिवृत्येति ॥५८॥

ध्रुवस्य शौर्यायतनस्य कर्तुं राज्ञा शिलाशासनमिच्छतेव ।
वक्षः स्वनामाक्षरमार्गणाङ्कं परोवरस्याक्रियताखिलेन ॥५९॥

ध्रुवस्येति—अक्रियत कृतम्, किं कर्मतापन्नम् ? वक्षो हृदयम्, कथम्भूतम् ? स्वनामाक्षरमार्गणाङ्कम् स्वकीयनामाक्षरोपलक्षितशरचिह्नम्, केन ? अखिलेन राज्ञा समस्तेन नरेन्द्रेण, कस्य ? परोवरस्य

---

एक दूसरेकी सेनाको युद्धरूपी महोत्सवका निमन्त्रण देनेकी इच्छासे ही उभय पक्षके योद्धाओंके बिलकुल सीधे, बिना चक्कर लगाये सीधे उड़ते हुए तथा अपने-अपने स्वामीके नामके चिह्नसे युक्त बाण दूतके समान तेजीसे चले जा रहे थे ॥ ५६ ॥

उभय पक्षके द्वारा चलाये गये अर्धचन्द्राकार बाणोंने एक दूसरेके छत्रों तथा ध्वजाओंके दण्ड भी काट डाले थे । इसी प्रकार नूतन प्रीतिके टूटनेकी आशंकासे राजाओंने मर जानेपर भी एक दूसरेके द्वारा किये गये [प्रहारों] को भी नहीं छोड़ा था [नूतन प्रेमी भी मर-मर करके भी एक दूसरेको नहीं छोड़ते हैं] ॥ ५७ ॥

युद्धस्थलीमें दिखाये गये अपने साहसके समाचाररूपी प्रिय कथाको; उक्त प्रकारसे छोड़े गये बाण सेवकोंकी भाँति लौटकर स्वामियोंसे न कह सके थे । क्योंकि जिन्हें वे लगे थे उन्हें मार कर लुढ़कते हुए शत्रुओंके शरीरोंमें खिंचे, वे बाण भी गिर गये थे । और इस प्रकारसे ही उन्होंने अपनी सफलताको प्रकट किया था ॥ ५८ ॥

---

१. अवधि—सुन्दुतरं ।

परस्परस्य, किं कुर्वंतेव ? इच्छतेवाभिलषतेव, किं कर्तुम् ? शिलाशासनं शिलोत्कीर्णप्रशस्तिम्, कस्य ? ध्रुवस्य स्थिरस्य शौर्यायतनस्य शौर्यसौधस्य वीरश्रीकीर्त्तनस्येत्यर्थः ॥५९॥

महीक्षितां दक्षिणबाहुदेशे शरक्षतेऽभूत्क्षतजप्रवाहः ।
वीरश्रियो लाक्षिकपादरागः क्रान्तः श्रमात्प्राप्त इवार्द्रभावम् ॥६०॥

महीक्षितामिति—महीक्षितां राज्ञां दक्षिणबाहुदेशे क्षतजप्रवाहो रक्तप्रवाहः अभूत् संजातः, क इवोत्प्रेक्षितः ? वीरश्रियो लाक्षिकपादराग इव, लाक्षया रक्तो लाक्षिकः स चासौ पादरागश्च लाक्षिकपादरागः, कथम्भूतः ? क्रान्तः संक्रान्तः सन् पुनः श्रमात् आर्द्रभावं द्रवत्वं प्राप्तः ॥६०॥

नृपास्तिरीटेषु समुन्नतेषु चितेषु रत्नैर्मकरीगणैश्च ।
द्विषां निचख्नुर्विशिखान्विरोधाद्वेलाद्रिकूटेष्विव चक्रिणस्ते ॥६१॥

नृपा इति—नृपाः विरोधात् द्विषां शत्रूणां तिरीटेषु मुकुटेषु विशिखान् बाणान् निचख्नुः निखातवन्तः, कथम्भूतेषु ? रत्नैर्मकरीगणैश्च निचितेषु रचितेषु पुनः समुन्नतेषु, क इव ? चक्रिण इव, यथा चक्रेश्वरा वेलाद्रिकूटेषु विरोधात् विशिखान् [1]निखनन्ति ॥६१॥

इतीश्वराः केशवतो भवन्तः साधारणं प्राप्य रणं सलज्जाः ।
यावन्मनः स्थाम पुनः प्रजह्रुरप्यन्यसाम्यं महतां हि दैन्यम् ॥६२॥

इतीति—इति ईश्वराः यावन्मनःस्थाम मनोबलं तावत् पुनरपि प्रजह्रुः प्रहरन्ति स्म, किं कृत्वा ? पूर्वं साधारणं न्यायमार्गानुयायि रणं प्राप्य, किं कुर्वन्त ईश्वराः ? भवन्तो जायमानाः, कस्मात् ? केशवतः केशवात् केशवगृह्या इत्यर्थः, पुनः सलज्जाः, युक्तमेतत्, हि स्फुटं महतां सताम् अन्यसाम्यं परोपमा दैन्यं दीनत्वं स्यादिति ॥६२॥

यावन्निमेषः पतितोऽपि नैकस्तावत्पपातेषुरसावसंख्यः ।
न यावदेकः पततीषुरेषां सुताः परेषामपतन्नशेषाः ॥६३॥

---

स्थिर योद्धा तथा पराक्रमके भण्डार समस्त योद्धाओंने अपनेसे हीन शत्रुओंके वक्षःस्थलोंको अपने-अपने नामके लेखयुक्त बाणोंसे भेद दिया था। मानो अपनी विजयका शिलालेख लगानेकी इच्छासे ही उन्होंने ऐसा किया था ॥ ५६ ॥

योद्धा राजाओंकी बायीं भुजापर बाणका घाव होनेपर उससे रक्त बहने लगा था। यह बहता रक्त भी बड़ा परिश्रम करनेसे आये पसीनेसे पिघले वीरलक्ष्मीके लाखसे रंगे पैरोंके रंग (आलता) के समान शोभित हो रहा था ॥ ६० ॥

रत्नों तथा अनेक कलगियों (मकरी) से भरे हुए शत्रु राजाओंके ऊंचे-ऊंचे मुकुटोंमें योद्धा राजाओंने वैरके कारण बाणोंको उसी तरहसे गाड़ दिया था जिस प्रकारसे चक्रवर्ती तीरवर्ती पर्वतोंके शिखरोंको पार करता है [वेलाद्रि भी ऊँचे होते हैं तथा रत्नों और मकरोंसे व्याप्त होते हैं] ॥ ६१ ॥

श्री नारायणके पक्षमें आये प्रधान राजा लोग उक्त प्रकारके साधारण युद्धको करनेके कारण लज्जित थे फलतः इन्होंने अपने मन और तनकी पूरी दृढ़ता और साहसके साथ पुनः घोर प्रहार करना आरम्भ किया था। उचित ही है, क्योंकि दूसरेकी बराबरी करना भी महापुरुषोंके लिए दीनता दिखानेके ही समान है ॥ ६२ ॥

---

1. निचख्नुरिति—प०, अ०।

यावदिति—एकोऽपि निमेषो यावन्नपतितः तावत् असंख्यः संख्यातीतो बाणः ( –तीतः असौ इषुर्बाणः ) पपात पतितः, एकोऽपीषुर्यावन्न पतति तावदेषां परेषां शत्रूणाम् अशेषाः समस्ताः सूताः सारथयोऽपतन् पतिताः ॥६३॥

**हता हया न द्विषतां प्रतापा रथोऽवरुग्णो न मनोरथोऽभूत् ।**
**वैरथ्ययोगेऽपि महारथत्वं नापत्सु यत्सीदति तद्धि धैर्यम् ॥६४॥**

हता इति—हया अश्वाः हताः न तु प्रतापा हताः, केषाम् ? द्विषतां शत्रूणाम्, रथः अवरुग्णो भग्नः मनोरथो भग्नो नाभूत्, महारथत्वं महारथित्वं पौरुषं जायते महतां द्विषताम्, क्व सति ? वैरथ्य-योगेऽपि विनष्टो रथो येषां ते विरथाः तेषां भावो वैरथ्यं तस्य योगे सति, युक्तमेतत्, आपत्सु सतीषु यन्न सीदति न क्लेशाय जायते हि यस्मात्तद्धैर्यम् उच्यते इति शेषः ॥६४॥

**रथादवतेरुरुच्चैः पदतोऽवतेरुश्चापं सपत्ना जगृहुर्न खेदम् ।**
**तथा वदानोचितचेतसोऽपि दोषाभिमुख्येन गुणं निजघ्नुः ॥६५॥**

रथादिति—सपत्नाः शत्रवः रथादवतेरुरवतीर्णाः उच्चैः पदतः जनप्रशंसास्पदी[1]भूताद्भुवनभ्रमण-शीलात् यशसो नावतेरुः, तथा सपत्नाः चापं धनुः जगृहुः गृहीतवन्तः नतु खेदं दैन्यम् तथा गुणं शौर्य [2]सौण्डीर्यादिलक्षणं निजघ्नुः निहतवन्तः, केन ? दोषाभिमुख्येनानीतितत्परतया, कथम्भूताः सन्तोऽपि ? अवदानोचितचेतसोऽपि अवदानं त्यागशौर्याभ्यां विख्यातत्वम्, अवदाने उचितं योग्यं चेतो येषां ते तथोक्ताः, अपीति विरुद्धं परिह्रियते, निजघ्नुः आस्फालयन्ति स्म, के ? ते सपत्नाः, कम् ? गुणं मौर्वीम्, केन ? दोषाभिमुख्येन दोषोर्भुजयोराभिमुख्यं प्रधानता तेन, कथम्भूताः अपि ? अवदानोचितचेतसोऽपि अवदानस्य खण्डनस्योचितं चेतो येषां ते तथोक्ताः ॥६५॥

**उल्काशरं शक्रधनुस्तडिज्ज्यं घना दधाना इव तत्कथंचित् ।**
**अधिज्यचापाः शरजालमुग्रं ते लोहितापक्रममभ्यमुञ्चन् ॥६६॥**

---

जितने समयमें एक बार पलक भी नहीं झपते हैं उतनी देरमें मुख्य नायकने असंख्यात बाणोंकी वर्षा कर दी थी। जबतक इनका एक बाण जाके गिरता तबतक शत्रु राजाओंके सारथि आदि सबके सब ढेर हो जाते थे ॥ ६३ ॥

शत्रु राजाओंके घोड़े मारे गये थे किन्तु प्रताप तब भी बाकी था। केवल रथ ही खण्डित हुए थे मनोरथ ज्योंके त्यों थे। और रथहीन होकर पैदल लड़ रहे थे तथापि महारथी कहलाते थे। वास्तवमें धीरज वही है जो घोर विपत्तिमें भी नष्ट न हो ॥ ६४ ॥

शत्रु राजा रथ टूट जानेपर रथसे उतर गये थे किन्तु उच्च पदकी मर्यादासे भ्रष्ट नहीं हुए थे। ऐसा होनेपर भी उनने धनुषको ही पकड़ा था खेदको नहीं। इस प्रकारसे त्याग तथा शौर्यमय चित्त होनेपर भी इन्होंने दोषोंमें लीन होकर अपने ही गुणोंको कैसे नष्ट कर दिया था यही आश्चर्य है ? [शत्रुओंके काटने (अवदात) के अनुकूल (उचित) मनोवृत्तिके कारण (चेतसा) भुजाओं (दोष) के बलकी प्रधानतासे अपने धनुषकी मौर्वी (गुण) को बार-बार फटकार रहे थे] अर्थात् भुजाओं (दोषों) में फँसाकर जीवा (धनुषकी डोरी) को नष्ट कर दिया था ॥ ६५ ॥

---

१. स्पदीभूतलक्षणाद्भुवः—म० ।
२. सौण्डीर्य-गाम्भीर्यादि लक्षणम्—प० ज० ।

उल्केति—ते सपत्नाः शरजालं बाणसंहृतिम् अभ्यमुञ्चन् शत्रुं लक्षीकृत्य मुक्तवन्तः, कथम्भूताः सन्तः ? अधिज्यचापाः आरोपितशरासनाः, कथम्भूतं, शरजालम् ? उग्रं सोढुमशक्यं पुनः लोहितापक्रमं लोहमस्यास्तीति लोही, लोहिनो भावो लोहिता तस्या अपक्रमो यत्र तत् अथवा लोहितस्याऽपक्रमो यत्र तत् कथम् ? कथंचिन्महता कष्टेन, के इवाभ्यमुञ्चन् ? घना इव मेघा यथा, किम् ? शरजालं जलममूहम्, कथम्भूतम् ? उग्रं तीव्रं पुनः लोहितापक्रमम्, किं कुर्वाणाः ? दधानाः धरन्तः, किम् ? शक्रधनुः इन्द्रचापम्, कथम्भूतम् ? उल्काशरम् उल्कैव शरो यत्र तत् तथोक्तम्; पुनः तडिज्ज्यं तडिदेव ज्या यत्र तत् ॥ ६६ ॥

**ते रोपणैराववृतार्कभासस्तत्पादघाताविनयक्रुधेव ।**
**चिह्नैश्चमूनां निहतैर्निपेते भियोत्तरीयैरिव दिग्वधूनाम् ॥६७॥**

त इति—ते नरेन्द्राः रोपणैः बाणैः अर्कभासः सूर्यदीप्तीः आवृषत आच्छादितवन्तः, कयेव ? तत्पादघाताविनयक्रुधेव तस्य सूर्यस्य पादाः तत्पादाः तत्पादानां घाता तत्पादघाताः तेभ्यो योऽविनयः तस्मात् या क्रुत् क्रोधस्तयेव, तथा निपेते निपतितम्. कैः ? चिह्नैः ध्वजैः, कासाम् ? चमूनां सेनानाम्, कथम्भूतैः ? रोपणैर्निहतैः, कैरिव ? दिग्वधूनां दिगङ्गनानां भिया भयेन उत्तरीयैरिव ।६७॥

**तैरुत्तरङ्गाकुलितास्तुरङ्गा वातैः प्रवाहा इव वारिराशेः ।**
**रथाश्च नुन्नाः परतोऽपसस्रुः स्वं मन्यमाना इव दुर्निमित्तम् ॥६८॥**

तैरिति—तुरङ्गाः अश्वाः परतः पश्चात् तैः सपत्नैः रोपणैः नुन्नाः प्रेरिताः सन्तः अपसस्रुः अपसृतवन्तः, कथम्भूताः ? उत्तरङ्गाकुलिताः उत्तरङ्गः पलायनं तेन आकुलिताः, के इव ? वारिराशेः समुद्रस्य प्रवाहा इव, कथम्भूताः ? वातैर्नुन्नाः, तथा रथाः परतः पश्चात् अपसस्रुः, कथम्भूताः ? सपत्नैर्नुन्नाः पुनः स्वमात्मानं दुर्निमित्तमिव मन्यमानाः ॥६८॥

**हतः करेणुः पतितः पदातिर्भग्नो वरूथः शिबिरं निरस्तम् ।**
**भुवोऽभवद्विश्वममङ्गलोत्थं भारो निरुन्धन्निव भूमिकम्पम् ॥६९॥**

हत इति—करेणुः हस्ती हतः, पदातिः भृत्यः पतितः, रथावरूथो रथगुप्तिर्भग्नः, तथा शिबिरं सेनानिवेशः निरस्तं नष्टम्. तथा भुवो भूमेः भारोऽभवत्, किं कुर्वन्निव ? विश्वं समस्तम् अमङ्गलोत्थं भूमिकम्पं निरुन्धन्निव निषेधन्निव ॥६९॥

---

शत्रुराजा अपने-अपने धनुषकी डोरीको चढ़ाकर लोहेकी शुद्धता (लोहिता) में सन्देह न होनेके कारण अत्यन्त तीक्ष्ण और भयानक बाणोंको वैसे ही बरसा रहे थे जैसे इन्द्रधनुषपर-से वज्ररूपी बाणको बिजलीकी चमकरूपी ज्याको धारण करनेवाले मेघ आकाश (लोहित) से गिरती उग्र जल [शर] धारको पृथ्वीपर छोड़ते हैं ॥ ६६ ॥

उन्होंने अपने बाणोंकी बौछारसे सूर्यके प्रकाशको भी ढक दिया था क्योंकि उस (सूर्य) के पैर (पाद-किरण) लगनेके अपमानसे उन्हें क्रोध आ गया था। बाणोंके द्वारा काटे गये विविध सेनाओंके चिह्न (ध्वजाएँ) भी ऐसे गिर पड़े थे जैसे भयके कारण दिशाओंरूपी बहुओंके उत्तरीय वस्त्र ही खिसक रहे हों ॥६७॥

उक्त प्रकारसे बरसते शत्रुओंके बाणोंके द्वारा चारों ओरसे सताये गये दूसरी सेनाके घोड़े तथा रथ इनको अपने बुरेके पूर्वचिह्न समझकर वैसे ही भाग लिये थे जैसे आँधीके आनेपर उठी लहरोंसे व्याप्त समुद्रकी जलराशि किनारेसे टकरा कर लौटती है ॥६८॥

हाथी मर रहे थे, पदाति धड़ाधड़ गिर रहे थे, रथ-रक्षक टूट गये थे और सेनाके शिबिर उखड़ गये थे। इस प्रकारके अमंगलसे उत्पन्न सर्वव्यापी भूकम्पको रोकते हुएके समान सारा संसार हो गया था ॥६९॥

ध्वनत्सु तूर्येषु शिवाङ्गनासु भ्रेजे समङ्गल्यरवोद्यतासु ।
सशोणिता भूः परिणीयमाना कन्याऽभिषिक्तेव कषायतोयैः ॥७०॥

ध्वनत्स्विति—भूः भूमिः भ्रेजे रराज, केषु सत्सु ? तूर्येषु वाद्येषु ध्वनत्सुषु ध्वनिं कुर्वाणेषु, तथा शिवाङ्गनासु शृगालीषु गल्यरवोद्यतासु, गलस्यायं गल्यः स चासौ रवस्तस्मिन्नुद्यतासु, कथम् ? समं युगपत् कथम्भूता भूः ? सशोणिता सरक्ता, केव भ्रेजे ? परिणीयमाना कन्येव, कथम्भूता कन्या ? कषायतोयैः अभिषिक्ता, केषु सत्सु ? तूर्येषु ध्वनत्सु तथा शिवाङ्गनासु सभर्तृकासु कामिनीषु समङ्गल्यरवोद्यतासु मङ्गलमर्हति, मङ्गल्यः स चासौ रवस्तेन सह वर्तमानं यत् कर्म तस्मिन्नुद्यतासु ॥७०॥

इत्युद्यतं राजकमन्यपक्षं प्रत्युद्ययावुत्कमुपेन्द्रगृह्यम् ।
स्वमर्पयन्तं सदनेऽभिमित्रं रणेऽभ्यमित्रीणमुदारमाहुः ॥७१॥

इतीति—उपेन्द्रगृह्यं राजकं नारायणपक्षीयो नरेन्द्रसमूहः उद्यतं अन्यपक्षं प्रति उत्कम् उत्कण्ठितं सत् इति उक्तप्रकारेण उद्ययौ उदगतम्, युक्तमेतत् आहुर्ब्रुवन्ति, के ? सूरयः, कम् ? अभ्यमित्रीणं शत्रुम् किं ब्रुवन्ति ? अभिमित्रं सहायम्, क्व ? रणे सङ्ग्रामे, कथम्भूतम् ? उदारम्, किं कुर्वाणं सन्तम् ? स्वमात्मानं सदने गृहेऽर्पयन्तम् ॥७१॥

स्वं पूर्वकायं प्रविशद्भिरश्वैरमुक्तमार्गैं रथकर्मभारैः ।
अतारि तिर्यङ्नरकोपबद्धा कृच्छ्रात् कृताघैरिव जन्यभूमिः ॥७२॥

स्वमिति—स्वमात्मीयं पूर्वकायमग्राङ्गं प्रविशद्भिरश्वैर्वाजिभिः जन्यभूमिः सङ्ग्राममेदिनी अतारि अवतीर्णा, कथम्भूतैः ? अमुक्तमार्गैः अत्यक्तसंचरैः पुनः रथकर्मभारैः रथकर्मैव भारो येषां तैः, कथमतारि ? कृच्छ्रात्, तिर्यक्, कथम् ? तिर्यक्कृच्छ्रादित्यव्ययं विभक्तिप्रतिरूपकम्; कष्टेन, कथम्भूता ? नरकोपबद्धा नराणां यः कोपः तेन बद्धा, कैरिवातारि ? कृताघैरिव विहितपापैः प्राणिभिर्यथा जन्यभूमिः कृच्छ्रादुत्तीर्यते, कथम्भूता ? तिर्यङ्नरकोपबद्धा तिर्यञ्चश्च नरकाश्च तिर्यङ्नरकास्तैरुपबद्धा, कथम्भूतैः ? कृताघैः प्राणिभिः ? अमुक्तमार्गैः अत्यक्तसम्यग्दर्शनज्ञानचारित्रलक्षणपथिभिरथाथवा किं कुर्वद्भिरिव ? स्वमात्मीयं पूर्वकायं अनेकजन्मपुद्गलग्रहयोग्यलक्षणं शरीरं कर्मभारैः कर्मसमूहैः प्रविशद्भिः ॥७२॥

---

रक्तरंजित युद्धभूमि रंगीन पानीसे नहलायी गयी और परिणयके लिए तैयार कन्याके समान लगती थी। क्योंकि रणभेरियाँ बज रही थीं, इसके साथ-साथ सियारियोंके गलेसे(गल्यरव) 'हुवाँ हुवाँ' की तान लग रही थी [महावर आदि शृंगारसे सज्जित कन्याके विवाहमें भी बाजे बजते हैं तथा सौभाग्यवती (शिवा) नारियाँ (अंगना) उत्साहके साथ मंगल गीत गाती हैं ॥७०॥

उपेन्द्र श्री लक्ष्मण अथवा श्रीकृष्णके पक्षके राजा लोग शत्रुसमूहपर टूट पड़े थे, क्योंकि वे लड़ाईके लिए उत्सुक तथा तैयार भी थे। राजभवनमें सर्वदा मित्रके आगे-पीछे चलनेवालेको (अभि-मित्रं) और रणमें अपनेको बलिदान करके भी शत्रुओंपर टूट पड़नेवालों (अभि-अमित्रीणं) को ही, वास्तवमें उदार कहा जाता है ॥७१॥

रथोंके खींचनेके भारसे दुहरे तथा अपने रास्तेको पकड़े जाते-जाते शरीरके अगले भाग से तिरछे-तिरछे शत्रुसेनामें घुसेड़ते हुए घोड़ोंने, घोर पापियोंके समान बड़े कष्टसे युद्धभूमिको पार किया था क्योंकि योद्धाओंके क्रोधके कारण इसमें बाधाएँ-ही-बाधाएँ थीं (नर-कोप-बद्धा) [मोक्षमार्गसे विमुख, कर्मोंके बन्धनसे लदे और अपने-अपने पूर्वोपार्जित शरीरोंको धारण करते हुए पापी जीव भी मोक्षके मार्ग सम्यक् दर्शन-ज्ञान-चारित्रको न

**रथान्वसावेशविवृत्तचक्रान् रथ्याः सुखेनाचकृषुस्तुरङ्गाः ।**
**सारथ्यभीषुभ्रमणानुकूलमाकृष्यते स्नेहवशेन सर्वः ॥७३॥**

रथेति—तुरङ्गाः अश्वाः सारथ्यभीषुभ्रमणानुकूलं सारथिरज्जुभ्रमणानुकूलं यथासुखेन कृत्वा वसावेशविवृत्तचक्रान् वसा शरीरस्नेहः[1] ? तदावेशेन विवृत्तानि भ्रमणशीलानि चक्राणि येषां तान् रथान् आचकृषुराकृष्टवन्तः, कथम्भूतास्तुरङ्गाः ? रथ्याः रथं वहन्तीति रथ्याः, युक्तमेतत्, सर्वो जनः स्नेहवशेनाकृष्यते ॥ ७३ ॥

**ततोऽभ्यमित्रीयमिदं गरीयो राजन्यकं व्याततं धर्मलोपम् ।**
**गुणच्छिदापूर्वसरं परेषां क्रोधाकुलानामविधिः[2] कुतो वा ॥७४॥**

तत इति—ततो हस्त्यश्वरथक्षोभव्यावर्णनानन्तरम् इदं राजन्यकं राजपुत्रसमूहः धर्मलोपं दया-प्रधानस्य व्रतस्य नाशं चापलोपं च व्याततं तनोति स्म, केषाम् ? परेषां शत्रूणाम्, कथम्भूतं धर्मलोपम्[3] ? गुणच्छिदापूर्वसरम् औदार्यादिगुणच्छेदनाग्रेसरं ज्यानाशपुरःसरं च, कथम्भूतं राजन्यकम् ? अभ्यमित्रीयं शत्रुमभिलक्षीकृत्य स्थितं पुनः गरीयो गरिष्ठम्, युक्तमेतत्, वा शब्दोऽत्र संभावनायां विभाव्यते, तेनायमर्थः; क्रोधाकुलानामपि अविधिः कुतः स्यात्, अपितु विधिरेव स्यात् ॥७४॥

**विद्यानवद्यैः कवचानि शस्त्रैस्तेन द्विधाभित्सत शात्रवस्य ।**
**सहस्रशः सन्तमसानि तीव्रैरुस्रैर्निशीथस्य विवस्वतेव ॥७५॥**

विद्येति—तेन राजन्यकेन शस्त्रैः तोमरकुन्तादिभिः शात्रवस्य शत्रुसमूहस्य कवचानि सन्नहनानि अभित्सत भिन्नानि, कथम् ? द्विधा द्विखण्डं यथा भवति, कथम्भूतस्य ? सहस्रशः सहस्रसंख्यस्य शात्रवस्ये-त्यर्थः, कथम्भूतैः शस्त्रैः ? विद्यानवद्यैः धनुर्विद्यापूतैः, इव शब्दोऽत्रोपमार्थो बोद्धव्यः, केन कैः कानीव ? विवस्वता सूर्येण तीव्रैः सोढुमशक्यैः उस्रैः किरणैः निशीथस्य रात्रेः सन्तमसानि घनान्धकाराणीव ॥७५॥

---

छोड़कर (अमुक्त) तिर्यंच, नरक आदि दुस्तर गतियोंसे व्याप्त चौरासी लाख योनियोंसे (जन्म-भूमि) बड़ा तप करके ही पार पाते हैं ॥७२॥

रथोंमें जुते घोड़े सारथिकी चाबुक जिधर जाती थी उधर ही उत्साहके साथ रथोंको खींच रहे थे। रथोंके पहिये भी चर्बीका ओंगन लगे रहनेके कारण हलके चलते थे। घोड़ों और पहियोंकी यह अनुकूलता भी ठीक थी क्योंकि स्नेहपाशमें पड़कर सभी खिंचते आते हैं ॥७३॥

उक्त प्रकारसे हस्ति अश्व-रथ सेनाके संघर्षके बाद शत्रुओंको लक्ष्य करके बढ़ते हुए महान् राजकुमारोंने शत्रुओंके व्रत-नियमादि गुणोंको खण्डित करके उनको धर्मभ्रष्ट कर दिया था [अर्थात् ज्याको काटकर उनके धनुष (धर्म) को भी समाप्त कर दिया था] ठीक ही है, क्योंकि क्रोधसे पागल लोगोंके लिए कुछ भी अकरणीय नहीं होता है ? अपितु वे सभी कर डालते हैं ॥७४॥

शस्त्रविद्याकी दृष्टिसे सर्वगुण सम्पन्न अपने शस्त्रोंकी मारसे इन राजपुत्रोंने हजारों शत्रु राजाओंके कवचोंको उसी तरह टूक-टूक कर दिया था जैसे सूर्य अपनी तीक्ष्ण किरणों-के द्वारा रात्रिके गाढ़ अन्धकारको नष्ट कर देता है ॥७५॥

---

१. मज्जेति तदावेशेन लेपेनेति ।
२. -मवधिरिति सुष्ठुतरः पाठः । अवधिः—कार्याकार्य विवेक इति ।
३. धर्मस्य धनुष्काण्डस्येति ।

करीव सोऽपास्तमुखच्छदोऽयं व्यपोढवर्मा युधि वैरिवर्गः।
पतन्गृहीतासिररोधि बाणैर्नयैर्विनीपात इवावनीशैः ॥७६॥

करीवेति—सोऽयं वैरिवर्गः शत्रुसमूहः अवनीशैः भूपैः कर्तृभिः बाणैः कृत्वा युधि सङ्ग्रामे अरोधि रुद्धः, कथम्भूतः व्यपोढवर्मा मुक्तकवचः पुनः अपास्तमुखच्छदः परित्यक्तमुखप्रच्छादनपटः, क इव ? हस्तीव, किं कुर्वन् ? पतन् अवस्रंसमानः पुनः गृहीतासिः स्वीकृतखड्गः, क इव अरोधि वैरिवर्गः ? विनीपात इव दुर्नय इव अदृष्टसन्निपात इत्यर्थः, कैः ? नयैः सामादिभिरिति ॥७६॥

निहत्य निस्त्रिंशगतिं तदीयां धृतः कथंचिन्नृपतिव्रजेन।
प्रभावशास्त्रप्रबलेन तेन शमेन रागादिरिवारिसंघः ॥७७॥

निहत्येति—तेन नृपतिव्रजेन नरेन्द्रव्यूहेन, कथम् ? कथंचिन्महता कष्टेन, किं कृत्वा ? पूर्वं निस्त्रिंशगतिं खड्गव्यापारं निहत्य, कथम्भूताम् ? तदीयां शत्रुसम्बन्धिनीम्, कथम्भूतेन नृपतिव्रजेन ? प्रभावशास्त्रप्रबलेन प्रभावशम् अस्त्रम् यस्य तत् प्रभावशास्त्रं दीप्त्यायत्तशस्त्रम्, प्रकृष्टं बलं प्रबलम्, प्रभावशास्त्रं प्रबलं यस्य तेन, क इव धृतः ? रागादिरिव, केन ? शमेन, किं कृत्वा ? पूर्वं निहत्य, काम् ? निस्त्रिंशगतिं निर्दयप्रवृत्तिम्, कथम्भूताम् ? तदीयां रागादिसंबन्धिनीम्, कथम्भूतेन शमेन ? प्रभावशास्त्रप्रबलेन प्रकृष्टो भावो यस्य तत् प्रभावं प्रभावं च तत् शास्त्रं च प्रभावशास्त्रम् तस्मात् प्रकृष्टं बलं यस्य स तथोक्तस्तेन कथम् ? कथंचित् ॥७७॥

अभूम शौर्यस्य पदं रणेऽस्मिन्नधाम धैर्यं प्रथितं वयं तत्।
अस्थामयुक्ता इति भूमिपानां समु(मो)ह्यते स्म द्वितयेन युद्धम् ॥७८॥

अभूमेति—समु(मो)ह्यते स्म मोहं नीयते स्म, किम् ? युद्धम्, केन कर्त्रा ? द्वितयेन, केषाम् ? भूमिपानां नरेन्द्राणाम्, कथम् ? इति कृत्वा दृश्यते यतः कारणात् वयमस्थामयुक्ता असामर्थ्यसमन्विताः अभूम संजाताः तत्तस्मात् कारणात् प्रथितम्, किम् ? धैर्यम्, कथम्भूतम् ? पदं स्थानम्, कस्य ? शौर्यस्य, क्व ? अस्मिन् रणे सङ्ग्रामे, न प्रथितम् न कीर्तितम्, किम् ? धाम प्रतापलक्षणं तेजः, कथम्भूतं धाम, कस्य ? शौर्यस्य, कथम्भूतं सत् अभूम ? स्तोकमिति शेषः।

अथ भारतीयः—समु(मो)ह्यते स्म सम्यक्प्रकारेण वितर्क्यते स्म, किम् ? युद्धम्, केन ? भूमिपानां द्वितयेन कथम् ? इति कृत्वा दर्शयति—तत् कारणात् अस्थाम स्थितवन्तः, के ? वयम्, कथम्भूताः सन्तः ?

---

मुखके आवरण (झिलमिली) को उतारे, कवचहीन, तथा तलवार हाथमें लिये, लिये ही लुढ़कते अतएव हाथीके समान गिरते हुए शत्रु राजाओंके समूहको दूसरे पक्षके राजाओंके बाणों-द्वारा वैसे ही रोका गया था जैसे नीतिके आश्रयसे घोर पतन रोका जाता है ॥७६॥

दीप्ति, नियन्त्रण तथा शास्त्र (प्रभा-वश-अस्त्र) की दृष्टिसे सर्वथा उत्कृष्ट राजाओंके समूहने प्रशमके समान शत्रुओंकी तलवारकी गतिको मिटा करके किसी तरह वैसे बन्दी बना लिया था जैसे प्रशम राग-द्वेष, आदिको वशमें कर लेता है [प्रशम भी उत्कृष्ट निर्मल भावों तथा शास्त्र (प्रभाव-शास्त्र) ज्ञानके द्वारा पुष्ट होकर रागादिकी कठोर प्रवृत्ति-को रोक लेता है] ॥७७॥

इस राम-रावण युद्धमें लड़ते हुए राजाओंके युगल मूर्च्छित हो गये थे। क्योंकि उनके मनमें यह भाव आया था—हममें दुर्बलता या अस्थिरता (अस्थाम) आ गयी थी फलतः शूरताके मूल धैर्यको हम प्रकट न कर सके और न प्रचुर (अभूम) तेजका ही प्रदर्शन कर

---

१. प्रभा-दीप्तिः वशं नियन्त्रणम् अस्त्रं च तेषु प्रबलेन बलवत्तरेण नृपतिव्रजेनेति।

युक्ताः मिलिताः, यतो यस्मात् कारणात् अभूम संजाताः, के ? वयम्, किम् ? पदम्, कस्य ? शौर्यस्य, तथा अधाम धृतवन्तः, के ? वयम्, किम् ? धैर्यम्, क्व ? अस्मिन् रणे, कथम्भूतं धैर्यम् ? प्रथितं विख्यातम् ॥७८॥

**बिभ्रत्सदाशाननिरूढदीप्तिं गन्धारकोऽसिं पतितोऽधिकर्धिः ।**
**समारुतिः किन्नरराजवन्द्यो जातोऽत्र भीमोहननाददूरः ॥७९॥** ( चतुरर्थः )

बिभ्रदिति—किं न रराज अपितु रराजैव, कोऽसौ ? स दाशाननिः अक्षयकुमारः अथवा मेघनादाभिधानो रावणपुत्रः, कथम्भूतः सन् ? गान्धारकः पृथिव्या भर्तेत्यर्थः, पुनः कथम्भूतः ? पतितः आगतः, किं कुर्वन् ? ऊढदीप्तिं धृततेजसम् असिं खड्गं बिभ्रत् दधानः, कथम्भूतः ? अधिकर्द्धिः प्रचुरसमृद्धिः पुनः स मारुतिः मया प्राणेनापलक्षिता रुतिर्मारुतिः सह मारुत्या वर्तमानः, सप्राणध्वनिरित्यर्थः, पुनः वन्द्यः प्रशस्यः तथा जातः, कथम्भूतः ? भीमोहननाददूरः भियो भयात् मोहनं मोहो यस्य स भीमोहनः भीमोहनश्चासौ नादश्च भीमोहननादः तस्माद् दूरः भयमोहध्वनिवर्जितः, क्व ? अत्र रणे इत्येकः पक्षः, तथा किं न रराज, अपि तु रराजैव, स मारुतिर्हनूमान्, किं कुर्वन् ? असिं खड्गं बिभ्रत्, कथम्भूतम् असिम् ? शाननिरुढदीप्तिं शाणनिशितकान्तिम्, कथम् ? सदा सर्वकालम्, कथम्भूतः सन् ? पतितः गतः स्थित इत्यर्थः, क्व ? अत्र रणे, तथाधारको धरिष्यति, कोऽसौ ? समारुतिः, काम् ? गां पृथिवीम्, कथम्भूतः ? अधिकर्द्धिः, अन्यत् समम्, द्वितीयोऽर्थः ।

अथ भारतीयौ पक्षौ—किं न रराज अपितु रराजैव, कोऽसौ ? गान्धारको दुर्योधनः, किंभूतः ? असिं मण्डलाग्रं बिभ्रत्, कथम्भूतः ? समारुतिः समानध्वनिः, अन्यत् समम्, जातः, कोऽसौ ? गान्धारकः, कथम्भूतः ? भीमोहननाददूरः, अत्र रणे तृतीयोऽर्थः । किं जातः अपितु न जातः, कोऽसौ ? भीमो वृकोदरः, कथम्भूतः ? अदूरो निकटः, कस्मात् ? हननात् हतेः शत्रूणां हननं विहाय कार्यान्तिरे तत्परो जात इत्यर्थः, क्व ? अत्र रणे, कथम्भूतो न रराज ? वन्द्यः नरेन्द्राणां पूज्यः, अथवा नरराजस्यार्जुनस्य वन्द्यः, कथम्भूतः ? समारुतिः समेषु सर्वेषु प्राणिषु आरुतिरभयध्वनिर्यस्य स तथोक्तः पुनः अधिकर्द्धिः अधिका ऋद्धिर्यस्य सः, कस्मात् ? पतितः स्वामिनो युधिष्ठिरात्, कथम्भूतः ? असिं बिभ्रत् भरन्, कथम्भूतम् असिम् ? सदाशाननिरूढदीप्तिं दाशा भृत्याः, आनः प्राणनम् आश्वासनमित्यर्थः, दाशानाम् आनः दाशानः, सह दाशानेन वर्तन्ते सदाशाना निरूढा चासौ दीप्तिश्च निरूढदीप्तिरुत्तेजितकान्तिः सदाशाना-

---

**सके [इस कौरव-पाण्डव युद्धमें युद्धलीन उभय पक्षके राजाओंने भलीभाँति (सम्यक्) यह तर्क किया था (उह्यते स्म) कि हम पराक्रमके भागी हुए हैं (अभूम-क्रिया), लोकोत्तर (प्रथित) धैर्यको धारण किया है (अधाम) और मिलकर (युक्ताः) डटे रहे हैं (अस्थाम)॥७८॥**

**१–इस राम-रावण युद्धमें अत्यन्त चमचमाती तलवारको लेकर कूद पड़ा वह दशाननका पुत्र (स दाशाननिः) अक्षयकुमार (मेघनाद) क्या सुशोभित नहीं हुआ था ? अपि तु हुआ ही था क्योंकि वह पृथ्वी (गां) का पालक (धारक) था, समृद्धिशाली था, उसकी ध्वनि (रुतिः) प्राण (मा) पूर्ण थी, तथा उसके हुंकार (नाद) में भय भी और मूर्च्छा (मोहन) का लेश भी न होनेसे (दूर) वह सबके लिए प्रशंसनीय था ।**

**२–इस युद्धमें विद्याधरों (किन्नरों) के राजाओं-द्वारा वन्दनीय वह पवनसुत (मारुतिः) खराद (शान) पर चढ़ाये जानेके कारण चमकती तलवारको लिये रहनेके कारण अत्यन्त भयंकर (भीमः) और शत्रुसंहार (हनन) में लीन हो गया था । क्योंकि वह पृथ्वी (गां) को धारण करनेवाला (धारकः) था तथा अपने स्वामी (पतितः) से भी अधिक शक्तिशाली था ।**

निरूढदीप्तिर्यस्य स तथोक्तः उत्तेजितदीप्ति खड्गं विलोक्य यस्य दासानां प्राणममभूदित्यर्थः, किं कर्तुम् ? धारकः धर्तुम्, काम् ? गां पृथ्वीम्. अथवा अह कष्टं ननाद जगर्ज, कोऽसौ ? भीमः, कथम्भूतः ? दूरः दुष्टध्वनिः, अत एव जातः, कोऽसौ ? भीमः. कथम्भूतः ? स मारुतिः समेषां सर्वेषां शत्रूणाम् आरुतिः आलापो यस्मात् सः, क्व ? अत्र सङ्ग्रामे पुनः किन्नरराजानां प्रधानगन्धर्वाणां वन्द्यः स्तुत्य इति चतुर्थोऽर्थः ॥७९॥

**परेऽपि ये यैर्विधृता नरेन्द्राः [1]कैर्नावबुद्धं युधि नाम तेषाम् ।**
**यः कोऽपि दिग्देशकुलप्रमाणं वेवेक्ति राज्ञोऽपि परं स वेत्ति ॥८०॥**

परे इति—परेऽपि अन्येऽपि ये नरेन्द्राः यैः नरेन्द्रैः विधृताः, कस्याम् ? युधि सङ्ग्रामे, तेषां नरेन्द्राणां नाम केनावबुद्धम् अवगतम् अपितु न केनापि, यः कोऽपि वेवेक्ति जानाति, किम् ? दिग्देशकुलप्रमाणं दिशः पूर्वादयः देशा अङ्गकलिङ्गादयः, कुलानि इक्ष्वाकुसूर्यादीनां वंशाः दिशश्च देशाश्च कुलानि च तानि तथोक्तानि, तेषां प्रमाणं तत् तथोक्तं परं केवलं वेत्ति कोऽसौ ? सोऽपि पुरुषः, कान् ? राज्ञो नरेन्द्रान् इति ॥८०॥

**आपृच्छमाना इव नादवत्त्वान्निरोद्धुकामा इव विप्रयोगात् ।**
**सोच्छ्वासकैरुच्छ्वसतां प्रियाणां प्राणा नृणां कण्ठगता बभूवुः ॥८१॥**

आपृच्छमाना इति—नृणां प्राणा असवः कण्ठगता गलस्थिता बभूवुः संजाताः, किं कुर्वतां सताम् ? उच्छ्वसताम्, कैः ? सोच्छ्वासकैः किंविशिष्टा इवोत्प्रेक्ष्यन्ते ? आपृच्छमाना इव । प्रश्नं कुर्वाणा इव, कस्मात् ? नादवत्त्वात्, किं विशिष्टा इव ? निरोद्धुकामा इव निरोद्धुमनस इव, कस्मात् ? विप्रयोगात्, कासाम् ? प्रियाणां कामिनीनाम् ॥८१॥

---

३—शानपर चढ़ाकर सदैव चमकायी गयी तलवारको लेकर भारतमें कूदा (अत्र पतितः) गान्धारीका पुत्र दुर्योधन असीम विभूतिका स्वामी होकर भी, समस्त प्राणियोंको रुलाकर (आरुतिः) भी, किन्नरों और राजाओंके द्वारा वन्दनीय होकर भी तथा अत्यन्त रुद्र (भीम) होकर भी क्या मृत्यु (हनन) के निकट (अदूर) नहीं आया था (जातः) । अर्थात् मारा ही गया था ।

४—सज्जनों (सतां) की आशा और जीवनके द्वारा अपनी शोभाको बढ़ाती हुई पृथ्वीका (गां) पालक, वायुप्रधान (मारुतिः) अर्थात् स्थूल और प्रभु धर्मराजसे भी अधिक शक्तिशाली भीम तलवारको लेकर क्या मनुष्योंके राजाओं अथवा अर्जुनका भी पूज्य नहीं हुआ था । हर्ष है (अह) कि इस रणमें कर्कश ध्वनिवाला वह भीम भी गरज पड़ा था ॥७९॥

इस युद्धमें एक पक्षके राजाओं-द्वारा जो दूसरे राजा घेरे या मारे गये थे उनके नामको किसने जाना है । जो कोई इन राजाओंकी दिशा, अंग, बंगादि देश और इक्ष्वाकु, पौरवादि वंशको भी जानता है वह ही बहुत जानता है क्योंकि अनगिनत राजाओंके नाम-ग्राम जानना असम्भव है ॥८०॥

लम्बी-लम्बी साँसें लेकर हाँफते हुए योद्धाओंके प्राण गलेमें आकर अटक गये थे । 'घर-घर' नादके बहानेसे वे प्रश्न करतेके समान प्रतीत होते थे तथा अपनी-अपनी प्रियतमाओंके चिर वियोगकी कल्पनासे मानो प्राणोंको रोकनेका ही प्रयत्न कर रहे थे ॥८१॥

---

१. कैनावबुद्धम् इति टीकासम्मतः पाठः ।

असृग्वसामांसरसेन भग्ना मस्तिष्कमुन्मग्नकपालशल्कम् ।
आस्वाद्य तद्दाधिककल्पमल्पा लेभे रुचिर्भग्नमुखैः पिशाचैः ॥८२॥

असृगिति—पिशाचैः अल्पा स्तोका रुचिः लेभे प्राप्ता, किं कृत्वा ? पूर्वमास्वाद्यालिह्य, किम् ? तन्मस्तिष्कं शिरोभेदः, कथम्भूतम् ? उन्मग्नकपालशल्कं उन्मग्नं कपालशल्कं येन तत्तथोक्तं संभृतकपालखण्डमित्यर्थः, पुनः दाधिककल्पं दध्ना संस्कृतं वस्तु दाधिकम्, ईषत्सिद्धि दाधिकं दाधिककल्पं दाधिकसदृशमित्यर्थः । किम्भूता रुचिः ? असृग्वसामांसरसेन रक्तमांसस्नेहद्रवेण भग्ना, कथम्भूतैः पिशाचैः ? भग्नमुखैरपाटववदनैः ॥८२॥

भुवि दिशि दिवि कश्चिद्यः समज्ञा(ज्ञा)नतृप्तः
सपदि हरिविधानं यातुधानः सुरो वा ।
परिततसुमनास्तं विक्रमं धाम धैर्यं
विपुलपुलकिताङ्गस्तत्र तुष्टाव तुष्टः ॥८३॥

भुवीति—तुष्टाव स्तुतवान्, कोऽसौ ? स यातुधानो राक्षसः, कम् ? तं विक्रमं तथा धाम प्रतापं तथा धैर्यम्, क्व ? तत्र सङ्ग्रामे, कथम्भूतः ? तुष्टः आनन्दवान्, पुनः विपुलपुलकिताङ्गः प्रचुररोमाञ्चितशरीरः पुनः परिततसुमनाः प्रसृतचेताः, कथम्भूतं विक्रमादि ? हरिविधानं हरेर्नारायणात् विधानं क्रिया यस्य तत् सर्वम्, यः कश्चित् कश्च न तृप्तः अपितु तृप्त एव, केन ? मज्ज्ञा मज्जया रसादीनां सप्तधातूनां मध्ये षष्ठेन धातुविशेषेण, क्व नु ? भुवि भूमौ दिशि आशायां दिवि गगने, वा अथवा तुष्टाव, कोऽसौ ? सुरो देवः, कम् ? तं विक्रमं धाम धैर्यं च, कथम्भूतः ? तुष्टः पुनः परिततसुमनाः परितताः सुमनसो येन स तथोक्तः विस्तृतकुसुमः कृतपुष्पवर्षं इत्यर्थः, कथम्भूतः सुरः ? समज्ञानतृप्तः समं च तत् ज्ञानं च समज्ञानं तेन तृप्तः स तथोक्तः, यः कश्चिदभूत्, क्व ? भुवि दिवि दिशीति शेषं सुगमम् ॥८३॥

इहावाप्तकीर्तिं[1] हरिदवधिमन्यत्र समया—
भिलिम्पानां बालां मम पतिरितीवोत्सवभरात् ।
स्वदेहं नृत्यन्तं सह सुरवधूभिः परनृपा
विमानस्योत्सङ्गे ददृशुरधिकं विस्मितदृशः ॥८४॥

---

करीब-करीब जमे हुए दहीके समान और कपालरूपी खप्परमें पूर्ण रूपसे भरे हुए मस्तिष्कके पदार्थको चखकर मुंह टेढ़ा करनेवाले पिशाचोंको इस नरसंहारमें बहुत कम आनन्द आया था क्योंकि सफेद मस्तिष्कमें रक्त, चर्बी और मांस मिल जानेसे वह बेस्वाद हो गया था ॥८२॥

जो राक्षस चर्बीसे सन्तुष्ट नहीं हुआ था उसका चित्त भी नारायण अथवा वानरोंके द्वारा कृत इस संहारको अकस्मात् देखकर शान्त हो गया था। उसके पूरे शरीरमें जोरोंका रोमांच हो गया था और वह अत्यन्त तृप्त होकर नारायणके पराक्रम, तेज तथा धैर्यकी सारी पृथ्वी, सब दिशाओं और आकाशमें प्रशंसा कर रहा था [हरिकी इस संहारलीलाको देखकर शम (सम) और विवेकको प्राप्त किसी देवके सारे शरीरमें निर्वेदका रोमांच हो आया था। उसने आकाशसे पुष्प वृष्टि की थी (परि-तत-सुमनाः) और शौर्य, प्रताप तथा दृढ़ताकी तीनों लोकों, दशों दिशाओं तथा स्वर्गमें स्तुति करता चला आ रहा था] ॥८३॥

---

१. माकिनीवृत्तम् ।

इहेति—परन्तपाः सन्तः स्वदेहमात्मशरीरं नृत्यन्तं नटन्तं ददृशुः दृष्टवन्तः, कथम् ? सह सार्द्धम्, काभिः ? सुरवधूभिः विमानस्य देवयानस्योत्सङ्गे मध्ये, कथं यथा भवति ? अधिकं प्रबलप्रवृत्ति, कथम्भूताः सन्तः ? विस्मितदृशः आनन्दवशाद्विस्फारितलोचनाः, कस्मात् ? उत्सवभरात्, कथम् ? इतीव हेतोः, कथमिति कृत्वा प्रकाश्यते—अवापत् प्राप्तवान्, कोऽसौ ? मम पतिः स्वामी इह मध्यलोके हरिदवधि हरितो दिशोऽवधिः सीमा यस्यास्तां सर्वाशामर्यादाम् कीर्त्तिम्, तथा चावापत् मम पतिः निलिम्पानाम् अमराणां बालां देवाङ्गनाम्, क्व ? अन्यत्र परलोके, कथम् ? समयात् क्षणात्[1] एव ॥८४॥

पतितसकलपत्रा तत्र कीर्णारिमेदा वनततिरिव रुग्णा सामजैर्भूमिरासीत् ।
निहतनिरवशेषा स्वाङ्गशेषावतस्थे कथमपि रिपुलक्ष्मीरेकमूला लतेव ॥८५॥

पतितेति—आसीत् संजाता, का ? भूमिः, कथम्भूता ? रुग्णा भङ्गवती, कैः ? सामजैः हस्तिभिः, कथम्भूता सती ? पतितसकलपत्रा प्रभ्रष्टसमस्तवाहना पुनः कीर्णारिमेदाः कीर्णं प्रसृतमरीणां मेदो यस्यां सा तथोक्ता भूमिः, केव ? वनततिरिव वनपङ्क्तिर्यथा, कथम्भूता ? पतितसकलपत्रा परिभ्रष्टसम्पूर्णच्छदा, कथम्भूता सती ? सामजैः रुग्णा भग्ना, तथा अवतस्थेऽवस्थिता, का ? रिपुलक्ष्मीः, कथम् ? कथमपि महता कष्टेन, कथम्भूता ? निहतनिरवशेषा निहतं निरवशेषं चतुरङ्गं यस्याः सा तथोक्ता, कथम्भूता ? स्वाङ्गशेषा स्वाङ्गमेव शेषं यस्याः सा तथोक्ता, केव ? एकमूला लतेव, कथम्भूता ? निहतनिरवशेषा निहतं निरवशेषं फलकुसुमादि यस्याः सा तथोक्ता । अन्यत् समम्[2] । ८५॥

सामाजिकैर्नृपजनैः पिशिताशिवर्गैः शैलूषतामुपगतैश्च कबन्धपात्रम् ।
नृत्यं शिवारुतमृदङ्गरवं निरूप्य संगृह्य बन्दिमविशञ्छिबिरं हरीशाः ॥८६॥

द्विः सामाजिकैरिति—हरीशाः शिबिरं स्कन्धावारं सेनानिवेशस्थानम् अविशन् प्रविष्टाः, किं कृत्वा ? पूर्वं हिरण्यादिभिः कृत्वा बन्दि बन्दिजनं संगृह्यादाय संतर्प्येत्यर्थः, किं कृत्वा ? पूर्वं निरूप्य दृष्ट्वा, किम् ? नृत्यम्, कथम्भूतम् ? कबन्धपात्रं कबन्धान्येव रुण्डान्येव पात्राणि यत्र तत्, पुनः शिवारुतमृदङ्गरवम् शिवारुतमेव मृदङ्गरवो यत्र तत्, कैः सद्भिः ? नृपजनैः सामाजिकैः सभ्यैः, तथा, कैः सद्भिः ? पिशिताशिवर्गैश्च राक्षससमूहैः, कथम्भूतैः ? शैलूषतां नटस्वरूपमुपगतैः ।

अधुना भारतीयः पक्षः—हरीशा यादवाः शिबिरमविशन् । शेषं प्राग्वत्[3] ॥८६॥

---

मरकर स्वर्ग गये और सुराङ्गनाओंके साथ स्वर्गके विमानोंमें विराजमान वीर राजाओंने आँखें फाड़-फाड़कर अपने नाचते हुए मृत शरीरको युद्धस्थलीमें देखा था। (मरणके बाद स्वभावसे ही थोड़ी देर तक उचकते-कूदते शरीरमें कवि कल्पना करता है कि) जो कि बड़ा आनन्द इसलिए मना रहा था कि उसके स्वामीने मध्यलोकमें दिग्-दिगन्त तक व्याप्त कीर्तिको प्राप्त किया था तथा दूसरे ही क्षण, स्वर्गमें जाकर सुरबालाओंको वरण किया था ॥८४॥

टूटे-फूटे वाहनों (पत्र) से व्याप्त तथा शत्रुओंकी चर्बीसे लथपथ भूमि, जंगली हाथियों (सामजैः) के द्वारा उजाड़ी गयी अटवीके समान प्रतीत होती थी [हाथियोंके निकलनेपर जंगलके पेड़ोंपर पत्ते नहीं रहते हैं तथा भूतल विट रुधिरोंसे पट जाता है]। समस्त सेनाके नष्ट हो जानेपर अकेली बची शत्रुओंकी लक्ष्मी बड़े कष्टसे उस लताके समान खड़ी थी जिसकी जड़मात्र शेष रह जाती है [समस्त पत्ते, फूल-फलके नष्ट हो जानेपर लताको भी जड़का ही सहारा रह जाता है] ॥८५॥

---

१. तत्क्षण एव प० ज० । शिखरिणीवृत्तम् ।
२. मालिनीवृत्तम् ।
३. वसन्ततिलकावृत्तम् ।

वाराङ्गना ननृतुरुत्पतिताः पताकाः कुन्तीव्रतैकधृतिराप तदा महर्धिम् ।
लक्ष्मीधरो निलयमुज्ज्वलदृश्यसेव्यः सश्रीधनं जयचिताश्वबलो विवेश ॥८७॥

द्विः वाराङ्गना ननृतुरिति—वाराङ्गनाः विलासिन्यो ननृतुः नृत्यं चक्रुः, तथा पताकाः उत्पतिताः उच्छ्रिताः ऊर्ध्वीकृताः, तदा तस्मिन् काले लक्ष्मीधरो लक्ष्मणः कुं पृथ्वीम् आप प्राप्तवान्, कथम्भूतः ? तीव्रतैकधृतिः तीव्रतायामेका धृतिर्यस्य सः, तथा आप लक्ष्मीधरः, काम् ? महर्द्धिं महती चासौ ऋद्धिश्च महर्द्धिः ताम्, तथा श्रीधनं श्रीरेव धनं यत्र तत्, जयम् आप, तथा निलयं गृहं विवेश प्रविष्टवान्, कथम्भूतः उज्ज्वलदृश्यसेव्यः उज्ज्वलद्भिः ऋृश्यैः सेव्यः प्रभावत्कपिसेव्यः अथवा उज्ज्वलः कान्तिमान्, दृश्यो रूपवान्, सेव्यः सेवायोग्यः, स च तथोक्तः, पुनः चिताश्वबलः पुष्टहयसैन्यः ।

अथ भारतीयः—कुन्ती महर्द्धिम् आप लेभे, कथम्भूता व्रतैकधृतिः, कदा ? तदा, तथा लक्ष्मीधरो विष्णुः निलयं विवेश, कथम्भूतम् ? सश्रीधनंजयं श्रियोपलक्षितेन धनंजयेन सह वर्तते इति तं ससम्पदर्जुनम् कथम्भूतो लक्ष्मीधरः ? चिताश्वबलः चिता अश्वा यस्य स चिताश्वः चिताश्वो बलो बलभद्रो यस्य सः । शेषं तुल्यम् ॥८७॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां द्विसन्धानकवेर्धनंजयस्य राघवपाण्डवीयापरनाम्नः काव्यस्य पदकौमुदीनाम दधानायां टीकायामुभयसङ्ग्रामव्यावर्णनं नाम षोडशः सर्गः ॥१६॥

■

---

पहले दण्डरूपी अभिनेताओं (पात्र) का नृत्य देखकर तथा सियारियोंके रोनेरूपी मृदंगोंकी ध्वनिको सुनकर और चारणोंको पुरस्कार देकर अपने दरबारियों और परिजनों तथा नटोंके स्थानको प्राप्त राक्षसोंके साथ राघवेन्द्र अथवा यादवेन्द्रने अपने-अपने शिविरमें प्रवेश किया था ॥८६॥

उस समय वाराङ्गना नाचने लगी थीं, विजय पताकाएँ फहरा रही थीं । तीव्रतामें सबसे उत्तम, लक्ष्मीके निवास, उछलते-कूदते वानरों (ऋृश्य) के द्वारा सेवित लक्ष्मणजीने पृथ्वीको प्राप्त किया था तथा कान्ति, धन और जयकी पोषक अश्व सेनाके साथ अपने महा वैभवशाली गृहमें प्रवेश किया था [विजयी पाण्डव सेनाकी वैजयन्तियाँ फहरा रही थीं, वेश्याएँ नाच रही थीं । अपने व्रतमें एकनिष्ठ महारानी कुन्ती ( व्रतैकधृतिः कुन्ती ) को लोकोत्तर प्रतिष्ठा प्राप्त हुई थी । तथा श्री धनंजय और अश्व संचालनमें प्रवीण बलभद्रके साथ कान्तिमान (उज्ज्वल) दर्शनीय (दृश्य) एवं पूजनीय (सेव्य) लक्ष्मीपति श्रीकृष्णने अपने गृहमें प्रवेश किया था] ॥८७॥

इति निर्दोष विद्याभूषण भूषित पण्डित मण्डलीके पूज्य षट्तर्क चक्रवर्ती श्रीमान् पण्डित विनयचन्द्र गुरुके प्रशिष्य, देवनन्दिके शिष्य, सकलकलाकी चातुर्यचन्द्रिकाके चकोर, नेमिचन्द्र-द्वारा विरचित कवि धनंजयके राघवपाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें 'उभय संग्राम' व्यावर्णन नामका षोडश सर्ग समाप्त ॥१६॥

■

# सप्तदशः सर्गः

**अथ संयुगं सुतरसाप्तयुगमरिरपश्चिमो हरेः ।**
**कालमिव समधिरुह्य रथं तमकालचक्रगतिचक्रमाविशत् ॥१॥**

(द्विः) अथ नायकथावर्णनानन्तरम् आविशत् प्रविष्टवान्, कोऽसौ ? अरिः, किम् ? संयुगं संग्रामम्, कथम्भूतोऽरिः ? अपश्चिमः आद्यः, कस्य ? हरेर्लक्ष्मणस्य रावण इत्यर्थः, किं कृत्वा ? तं लोकोत्तरं रथं समधिरुह्य, कथम्भूतं रथम् ? सुतरसाप्तयुगं सुतैः पुत्रैः रसेन स्नेहेन आप्तं युगं धुरा यस्य पुनः अकालचक्रगतिचक्रम् अकालचक्रस्येव गतिर्ययोः तथाभूते चक्रे यस्य तं तथोक्तम्, कमिव ? कालमिव मृत्युमिव, कथम्भूतम् ? अकालचक्रगतिचक्रम् प्रलयकालप्रवृत्तिसमूहम् ।

भारतीयः पक्षः—आविशत् हरेरपश्चिमोऽरिर्जरासन्ध इत्यर्थः । कम् ? संयुगम्, किं कृत्वा ? पूर्वं समधिरुह्य; कम् ? रथम्, कथम्भूतम् ? सुतरसाप्तयुगं सुष्ठु तरतीति सुतरम् अतिप्लवमानं मनोवेग इत्यर्थः, सप्त्योरिदं साप्तम् आश्वम्, साप्तं च तद्युगं च साप्तयुगं सुतरं साप्तयुगं यस्य तम् । अन्यत् सुगमम्[1] ॥१॥

**अशिरः शवं शरणमेष विशति कवचं बिभर्ति यः ।**
**प्राणविनिमयमयं हि यशः सुलभं भवेदिति स वर्म नाददे ॥२॥**

अशिर इति—सः अरिः वर्म सन्नाहम् इति नाददे न जग्राह, किमिति एषः किम् अशिरः मस्तकरहितं शवं शरणं विशति, कोऽसावेषः ? यः कवचं बिभर्ति, हि यस्मात् यशः किं सुलभं भवेत् ? कथम्भूतम् ? प्राणविनिमयमयं प्राणानां विनिमयः परिवर्त्तनं तेन निर्वृत्तं प्राणविक्रयलभ्यमित्यर्थः ॥२॥

**तमधूममग्निमिव दृष्टिविषमिव विमुक्तकञ्चुकम् ।**
**नागमिव विगतवक्त्रपटं बलवर्जितं ददृशुरूर्जितं सुराः ॥३॥**

तमिति—सुराः देवाः तमरिम् अधूमं निर्धूमम् अग्निमिव ददृशुः, पुनः दृष्टिविषं सर्पविशेषमिव ददृशुः, कथम्भूतम् ? विमुक्तकञ्चुकम् अपास्तनिर्मोकम्, तथा कमिव ? विगतवक्त्रपटम् अपाकृतवदनाच्छादनम् ऊर्जितं प्रौढं बल[2]वर्जितं बलभद्ररहितं नागं गजमिव ददृशुः ॥३॥

---

[नायक वर्णनके उपरान्त प्रतिनायकका वर्णन करते हैं] पुत्रोंके स्नेह (रस) रूपी ओंगन युक्त धुरावाले तथा प्रलय चक्रके समान अत्यन्त वेगवान रथके ऊपर चढ़कर श्री लक्ष्मणके मुख्य शत्रु रावणने यमके समान युद्धभूमिमें प्रवेश किया था [अत्यन्त सरलतासे आगे बढ़ते (सुतर) घोड़ों (साप्त)की जोड़ीसे युक्त, अत्यन्त वेगवान रथके ऊपर दृढ़तापूर्वक सवार श्रीकृष्णके प्रथम शत्रु जरासंधने मृत्युके समान युद्धस्थलीमें प्रवेश किया था] ॥१॥

रावण अथवा जरासंधने कवच नहीं पहिना था। इनका विचार था कि जो कवच धारण करता है वह (शिरस्त्राण अलग होनेके कारण मस्तक-हीन) शवकी शरण लेता है। (जो कि स्वाभिमानके विरुद्ध है। और यशको मलिन करता है) क्योंकि वीरोंको प्राणोंकी बाजी लगानेपर ही मिलनेवाले यश, कवच सुलभ कर देता है ॥२॥

---

१. सर्गेऽस्मिन् उद्गतावृत्तम् । तल्लक्षणं हि 'सजसादिमे सलघुकौ च नसजगुरुकै रथोद्गता । त्र्यङ्घ्रिगत भनजका गयुताः सजसा जगौ चरणमेकतः पठेत् । [ वृ० र० ६ अ०-५ ।''' ]

२. बलेन सैन्येन रहितमिति ।

तनुरक्षया परिणतेव कुपितमपि हेतिरूपताम् ।
यातमिव निशितशस्त्र(मस्त्र)मपि ज्वलनात्मतां गतमिवास्य चक्रिणः ॥४॥

तनुरिति—अस्य चक्रिणः तनुः शरीरं परिणतेव प्राप्तवार्द्धक्या वनितेव बभूवेति क्रियाध्याहार्य्या, कथम्भूता ? अक्षमा न विद्यते क्षमा यस्यां सा क्रोधरूपेत्यर्थः, कथम्भूता परिणता ? वार्द्धकवशात् अक्षया गन्तुमशक्ता तथाकुपितमपि हेतिरूपतां शस्त्रसारूप्यं यातं गतमिव निशितं तीक्ष्णं शस्त्र(अस्त्र)मपि ज्वलनात्मतां वह्निरूपतां गतमिव ॥४॥

स रुषायुधं विषमिवाहिरशनमिव तोयदोऽसृजत् ।
क्षौद्रपटलपतितैरिव तच्छरचैः शिरस्त्रनिवहैर्मही बभौ ॥५॥

स इति—सोऽरिः आयुधं शस्त्रं रुषा कोपेन असृजत् मुक्तवान्, कः किमिव ? अहिः सर्पः विषमिव गरलमिव, पुनः अशनिवज्रं तोयदो मेघ इव तत्तस्मात् शिरस्त्र-निवहैः शिरांसि त्रायन्त इति शिरस्त्राणि तेषां निवहैः समूहैः मही मेदिनी बभौ रेजे, कैरिव ? क्षौद्रपटलपतितैः मधुच्छत्रच्युतैः शरघैरिव मधुमक्षिका-भिरिव ॥५॥

दहनास्त्रपाणिरपमूर्धं विदधदरिसैन्यमाजनुः ।
वेदनं भयरसमित्यशिरः पुरतः स दिव्यमधृतेव नाकिनाम् ॥६॥

दहनेति—सोऽरिः अधृतेव धृतवानिव, किम् ? दिव्यम्, कथम्भूतम् ? अशिरो न शिरो यस्य तदशिरः प्रतिद्वन्द्वरहितमित्यर्थः पुरतः अग्रतः, केषाम् ? नाकिनां देवानाम्, कथम् ? इति कृत्वा प्रकाश्यते, भो नाकिनो देवाः न वेद न वेद्म्यहम्, कम् ? भयरसम्, कथम् ? आजनुराजन्म, किं कुर्वन् ? अरिसैन्यम् अपमूर्द्धम् अपगतमस्तकं विदधत् कथम्भूतः सन् ? दहनास्त्रपाणिः ज्वलनबाणहस्त इति ॥६॥

---

सेनारहित तथा उद्धत इस शत्रु (रावण-जरासन्ध)को युद्धके अनुरागी देवताओंने बिना धुएँकी आगके समान अथवा केंचुली छोड़नेके बाद बाहर आये 'दृष्टिविष' (जिसकी दृष्टिमें ही विष होता है) सांपके समान अथवा बाहरके दांतोंसे रहित हाथीके समान देखा था ॥३॥

चक्रधारी अथवा चक्रवर्ती इस शत्रुका शरीर बूढ़ी स्त्रीके समान अशक्त हो गया था। अथवा क्षमाहीन हो गया था। अत्यन्त क्रुद्ध होकर भी वह शस्त्र (हेति)के समान (पराधीन) हो गया था तथा तीक्ष्ण शस्त्रोंका (लक्ष्यहीन) प्रहार करके भी वह (भभकती, किन्तु न जलाती) ज्वालाके सदृश प्रतीत होता था [बुढ़ियाके शरीरमें भी सामर्थ्य नहीं रहती है, गुस्सा होनेपर 'हा, हा' (हा-इति) करने लगती है तथा तीक्ष्ण हथियार पास रहनेपर भी, प्रयोग न करके अपने मन ही मन जलती रहती है] ॥४॥

जैसे सांप विषका वमन करता है अथवा जैसे मेघ वज्र बरसाते हैं उसी प्रकार रुष्ट हो कर यह शत्रु शस्त्र चला रहा था। बिखरे हुए शिरस्त्राणोंके कारण युद्धस्थलीकी वही दशा हो गयी थी जो मधु-मक्खियोंके छत्तेसे गिरी मधुमक्खियोंके भूमिपर पड़े रहनेसे होती है ॥५॥

अग्निबाणोंको हाथोंसे छोड़ते हुए इस शत्रुने अपने शत्रुओंकी सेनाको बिना मस्तक-का अथवा बिना नेताका कर दिया था। मैंने जन्मसे ही कभी भी भयका रसास्वादन नहीं किया है यही दिखानेके लिए इसने अपनी बेजोड़ (अ-शिर) अथवा बिना मस्तककी दिव्य देहको रणके रसिया देवोंके सामने रख दिया था। (अर्थात् अपनेको मरा समझकर युद्धमें जूझ गया था) ॥६॥

अनुजं तु मृत्युमिव हन्तुमग्रुमभिजिहानमारुधत् ।
तीव्रमन्धतमसमभ्युदयै रथवाहनेन सवितेव केशवः ॥७॥

अन्विति—आरुधत् रुद्धवान्, कोऽसौ ? केशवो लक्ष्मणः, कम् ? अमुमरिं रावणम्, केन कृत्वा ? रथवाहनेन रथाश्वेन, अत्र जात्यपेक्षयैकवचनम्, किं कुर्वाणम् ? अभिजिहानं सम्मुखमागच्छन्तम्, किं कर्तुम् ? हन्तुम्, तथा आरुधत्, कः ? केशवः, कम् ? अनुजं विभीषणं कुम्भकर्णं वा, किं कुर्वाणम् ? अभिजिहानम्, किं कर्तुम् ? हन्तुम्, कथम्भूतं रावणं विभीषणं कुम्भकर्णं च ? तीव्रं सोढुमशक्यम् कमिव ? मृत्युमिव, कैः कृत्वा ? अभ्युदयैः गजतुरगपदातिलक्षणाभिर्विभूतिभिः, क इवारुधत् ? सवितेव सूर्य इव, किम् ? अन्धतमसं घनान्धकारम्, कैः कृत्वा ? अभ्युदयैः किरणसन्दोहलक्षणाभिर्विभूतिभिः, किं कुर्वाणं मृत्युम् ? अभिजिहानम्, किं कर्तुम् ? हन्तुम्, कथम् ? अनुजन्तु जन्तुं जन्तुमनु प्रतिजन्तुं, कैः कृत्वा ? अभ्युदयैः उपर्युपरिदुःखसंपातलक्षणैः, कथम् ? तीव्रं निर्दयमिति ।

भारतीयः पक्षः—अथारुधत्, कोऽसौ ? केशवो नारायणः, कम् ? अमुं जरासन्धम्, केन कृत्वा ? वाहनेन, किं कुर्वन्तम् ? अभिजिहानम्, शेषं पूर्ववत् ॥७॥

चिरमेष चेतसि निरुद्धमुदितमिव मन्त्रमग्रतः ।
प्रेतपतितनृपकोपचयं निचितं पुनः परिभवादिवैक्षत ॥८॥

चिरमिति—एषः केशवः उदितमुद्गतमुत्प्लुतमित्यर्थः, अरिं पुनरैक्षत व्याघुट्यावलोकितवान्, कथम् ? अग्रतः पुरतः, कथम्भूतम् ? निरुद्धं नियन्त्रितम्, क्व ? चेतसि चित्ते, कथम् ? चिरं बहुतरकालम्, कमिव ? मन्त्रमिव षाड्गुण्यलक्षणमन्त्रमिव, कथम्भूतम् ? उदितमुद्गतं सन्तम्, चित्ते चिरं निरुद्धम्, तथा कमिवैक्षत ? प्रेतपतितनृपकोपचयमिव पतिताश्च ते नृपाश्च पतितनृपाः प्रेताश्च ते पतितनृपाश्च प्रेतपतितनृपाः तेषां कोपचयस्तम्, कथम्भूतम् ? निचितं पुञ्जीकृतम्, कस्मात् ? परिभवादिति शेषः ॥८॥

प्रियसंगमात्प्रथमसङ्गमरिकृतमबोधि सोऽधिकम् ।
वृन्दमलघु सुहृदो महतां द्विषतां हि कीर्तिरतुला तु जायते ॥९॥

प्रियेति—अबोधि ज्ञातवान्, कोऽसौ ? स केशवः, कम् ? प्रथमसङ्गम्, कथम्भूतम् ? अधिकं पुनः अरिकृतं रिपुविहितम्, कस्मात् ? प्रियसङ्गमात् इष्टजनमेलापकात्, युक्तमेतत्, महतां सताम् अलघुः स्थूलं वृन्दं समूहः सुहृदो मित्रस्य भवति, तथा तु पुनर्जायते, का ? अतुला कीर्तिः केन ? द्विषता शत्रुणा, कथम् ? हि स्फुटमिति ॥९॥

---

तेज, क्रोधान्ध तथा तमोगुण प्रधान चतुर्विध सेनाके द्वारा मृत्युके समान संहार करनेके लिए आगे बढ़ते हुए इस रावणको तथा इसके अनुज (कुम्भकर्ण)को लक्ष्मणने अपने रथको बढ़ाकर उसी तरह रोक दिया था जिस प्रकार सूर्य उदयकालकी किरणोंके द्वारा घने काले अन्धेरेको समाप्त कर देता है [तेज सेनाके द्वारा प्रत्येक प्राणीको (अनु-जन्तु) ओर बढ़ती मृत्युके समान सामने आये जरासंधको श्रीकृष्णने रथके घोड़ोंके द्वारा रोक दिया था] ॥७॥

नारायणने चिरकालसे मन-ही-मन जलते हुए और अब सामने आये मन्त्रके समान शत्रुको देखा था । वह रावण अथवा जरासंध मरकर भूत हुए राजाओंके उस संचित कोपके समान था जो तिरस्कार होने पर फिर नया हो जाता है [मन्त्र भी सिद्ध होनेके बाद मनमें रहता है और जगानेपर फल देता है तथा प्रेत भी बलि दिये जानेके बाद पुनः अवज्ञा होने-पर सताने लगता है] ॥८॥

निजपौरुषं हि पुरुषस्य कवचमिह कस्य संवृतिः ।
भानुमत इव न हन्ति रुचिं घनदेहबन्धनमयीति नामवीत् ॥१०॥

निजेति—नामवीत् बध्नाति स्म, कोऽसौ ? केशवः, किम् ? कवचम्, कथम् ? पुरुषस्य निजपौरुषं कवचं स्यात्, संवृतिः कस्य रुचिं दीप्तिं न हन्ति अपितु सर्वस्य, कथम्भूता ? घनदेहबन्धनमयी घनदेह एव बन्धनं तेन निर्वृत्ता मेघशरीरमयीत्यर्थः ॥१०॥

उदयाद्विभूतिरिव भोगगतिरिव नयात्प्रसादतः ।
सर्वधृतिरिव परं पुरुषं जयदेवता गणतिथावृत स्वयम् ॥११॥

उदयादिति—जयदेवता जयश्रीः परं पुरुषं पुरुषोत्तमं स्वयं परप्रेरणमन्तरेणैव अवृत वृतवती, कथम्भूता ? गणतिथा गणस्य पूरणा, केव ? विभूतिरिव, कस्मात् ? उदयात्, केव ? भोगगतिरिव भोगविषया प्रवृत्तिरिव, कस्मात् ? नयात् भोगविषयाया नीतेः, केव ? सर्वधृतिरिव समस्तसन्तोष इव, कस्मात् ? प्रसादतो नयविषयाया. प्रसन्नताया इति ॥११॥

ध्वजमारुरोह गरुडोऽस्य रणमिव दिदृक्षुरुच्चकैः ।
ध्मातुमिव कुपितवह्निमयं हृदि पाञ्चजन्यमुदपूरि वैरिणः ॥१२॥

ध्वजमिति—गरुडः अस्य विष्णोः ध्वजम् आरुरोह आरूढवान्, क इवोत्प्रेक्षितः ? उच्चैरतिशयेन रणं सङ्ग्रामं दिदृक्षुरिव द्रष्टुमिच्छुरिव, तथा अयं विष्णुः वैरिणो हृदि कुपितवह्निं ध्मातुमिव सन्धुक्षितुमिव पाञ्चजन्यं शङ्खम् उदपूरि पूरितवान् ॥१२॥

निनदेन तस्य मिहिरस्य शरभ इव सम्मुखं रिपुः ।
प्राप्य कणपनिकरेण रथं परतो युगद्वयसमभ्यदुद्रुवत् ॥१३॥

निनदेनेति—रिपुः शत्रुः कणपनिकरेण बाणसमूहेन परतः पश्चात् युगद्वयसं युगपरिमाणं यथा तथा रथम् अभ्यदुद्रुवत् अपसारितवान्, किं कृत्वा ? पूर्वं तस्य पाञ्चजन्यस्य निनदेन ध्वनिना सम्मुखं प्राप्य, क इव ? शरभ इव, केन ? मिहिरस्य मेघस्य निनदेनेति ॥१३॥

---

शत्रुके साथ हुई इस पहली मुठभेड़को नारायणने आत्मीय जनोंसे होनेवाली स्नेह भेंटसे भी बढ़कर माना था, क्योंकि महापुरुषोंकी मित्रमण्डली विशाल होती है। किन्तु उनकी अनुपम कीर्तिका प्रसार तो शत्रुके (दमनके) कारण ही होता है ॥९॥

अपना पुरुषार्थ ही मनुष्यका सच्चा कवच है। घनघटाके घिरनेसे सूर्यके समान किसीकी कान्तिको क्या आवरण (कवच) नहीं घटाता है ? अपितु घटाता ही है। इसलिए ही नारायणने युद्धमें कवच नहीं पहना था ॥१०॥

जिस प्रकार पुण्यकर्मके उदयसे अपने आप विभूतिकी प्राप्ति होती है अथवा नीति मार्गके अनुसरणसे भोगोंकी परम्परा चलती है अथवा चित्तकी निर्मलतासे सब प्रकारका धैर्य अनायास ही प्राप्त हो जाता है उसी प्रकार सैन्यसमूहसे घिरी पूर्ण विजयलक्ष्मीने अपने-आप ही परम-पुरुष विष्णुको वरण किया था ॥११॥

नारायणकी गरुड़के चिह्नसे युक्त ध्वजा आकाशमें फहरा रही थी मानो चिह्नका गरुड युद्धको देखनेकी इच्छासे ही ऊपर चढ़ गया था। वैरियोंके हृदयोंमें धुंधाती क्रोधकी अग्निको भड़कानेके लिए ही नारायणने अपने शंखको फूंका था ॥१२॥

शंखकी ध्वनिको सुनकर रावण-जरासंध शत्रु उसी प्रकार सामने आ गये थे जैसे

स्वरुषा सहोच्छ्वसितसूतगतिरथ हरिश्च कम्पनैः।
तस्य भुजमिव सदाशरथी रणशान्तिमिच्छुरिव केतुमच्छिदत् ॥१४॥

(द्वि०) स्वेति—अथानन्तरं स दाशरथिः रामो हरिश्च लक्ष्मणोऽपि कम्पनैः बाणविशेषैः तस्य रावणस्य भुजमिव केतुं ध्वजम् अच्छिदत् छिन्नवान्, किंविशिष्ट इव ? रणशान्तिमिच्छुरिव इच्छन्निव, कथम्भूतो रामो हरिश्च ? उच्छ्वसितसूतगतिः उच्छ्वसिता सूतस्य सारथेर्गतिश्चेष्टा येन स तथोक्तः, कथम् ? सह सार्द्धम्, कया ? स्वरुषा आत्मकोपेनेति।

भारतीयः पक्षः—तस्य जरासन्धस्य, कथम्भूतो हरिः ? सदाशरथी सती समीचीना आशा वाञ्छा येषां ते सदाशाः सदाशा रथिनो यस्य सः, कथम्भूतः ? उच्छ्वसितसूतगतिः उच्छ्वसिता सुतानां भटानां गतिर्येनेति ॥१४॥

धवलातपत्रमपि तस्य हतमपतदिन्दुमण्डलम्।
द्रष्टुमुपगतमिवाजिगतः परुषं रिपुः प्रतिजगर्ज तर्जयन् ॥१५॥

धवलेति—हरिणा हतं तस्य वैरिणः धवलातपत्रमपि अपतत् प्रभ्रष्टम्, किमिवोत्प्रेक्षितम् ? इन्दुमण्डलमिव चन्द्रबिम्बमिव, कथम्भूतम् ? आजि संग्रामं द्रष्टुमवलोकितुमागतम्। अतः कारणात् रिपुः परुषं कर्कशं तर्जयन् तिरस्कुर्वन् प्रतिजगर्ज गर्जितवान् ॥१५॥

विमुखः फलं विधिरिवाशु खल इव कृतं स तं यशः।
लोभ इव मद इवोपशमं गुरुशक्तिशस्त्रमरुजन्नियोजयन् ॥१६॥

विमुख इति—अरुजत् तुतोद, कोऽसौ स रिपुः कम् ? तं विष्णुम्, किं कुर्वन्निव ? शक्तिशस्त्रम् आशु शीघ्रं नियोजयन्, कथम्भूतम् ? गुरु गरिष्ठम्, क इवारुजत् ? विमुखो विधिरिव फलम्, तथा खल इव कृतं दुर्जन इवोपकारम्, तथा लोभ इव यशः कीर्तिम्, तथा मद इवोपशमम्।

भारतीयः—स जरासन्धः तं नारायणम् शेषं प्राग्वत् ॥१६॥

---

मेघोंकी गर्जनाको सुनकर हिरण आ जाते हैं। किन्तु बाणोंकी वर्षा पड़ते ही, इनके रथसे कोशों दूर तक सब दिशाओंमें भागते नजर आये थे ॥१३॥

अपने क्रोधके साथ-साथ सारथीकी गतिको भी बढ़ाते हुए तथा रणकी शान्ति (समाप्ति)के इच्छुकके समान दाशरथि रामने तथा लक्ष्मणने रावणकी भुजाके समान उसके रथपर उठी हुई उसकी ध्वजाको 'कम्पन' जातिके बाणोंसे काट दिया था।

अपने क्रोधके साथ-साथ सूतनृपतिके प्रगतिको करते हुए तथा सदाशयरथी योद्धाओं [सदाश-रथी]से घिरे हरि कृष्णने जरासंधकी आक्रमणके लिए उठी भुजाके समान ध्वजाको रण समाप्तिकी इच्छासे कम्पनोंके द्वारा काट दिया था ॥१४॥

नारायणके द्वारा आघात किये जानेपर उस (शत्रु रावण-जरासंध) का श्वेत छत्र भी गिर गया था। गिरता हुआ यह छत्र ऐसा मालूम देता था कि चन्द्रमण्डल ही युद्ध देखनेके लिए उतर आया है। छत्र गिरते ही शत्रु भी धमकानेके लिए कठोर गर्जना करने लगा था ॥१५॥

जिस प्रकार विपरीत दैव पुण्य कर्मके फलको, दुष्ट पुरुष उपकारको, लोभ यशको और अहंकार प्रशान्तिको नष्ट कर देते हैं उसी प्रकार विचार करके शत्रुके द्वारा वेगके साथ नारायणपर छोड़े गये 'शक्ति' नामके महान् शस्त्रने उन्हें आहत कर दिया था ॥१६॥

विवशोऽपि चित्रमवलोकमयमवगमं च नामुचत् ।
येन तिमिरमभितो ददृशे कमलोदरेण विविदे न वेदना ॥१७॥

विवश इति—चित्रमाश्चर्यं विवशोऽपि परवशोऽपि सन्नवलोकं दर्शनमवगमं ज्ञानं चायं विष्णुर्नामुचन्न त्यक्तवान् तथाऽभितः सामस्त्येन तिमिरं येन कारणेन कमलोदरेण विष्णुना ददृशे दृष्टम्, तथा चकारेण पूर्वोक्तः प्रतिषेधोऽपि लभ्यते, तेनायमर्थः—वेदना पीडा । न विविदे न ज्ञातेति ॥१७॥

विधुतव्यथः क्षणमवाप युधि न किमु माधवोहितम् ।
दाशरथिरविरतः प्रहरन्निलयं कुलस्य सहसार रक्षसः ॥१८॥

विधुतेति—किन्नावाप अपितु प्रापैव प्राप्तवानेव, कोऽसौ ? दाशरथी रामः, कम् ? अहितं शत्रुम्, क्व ? युधि सङ्ग्रामे, कथम् ? क्षणं मुहूर्त्तमेकम्, कथम्भूतः ? अविरतो निवृत्तः पुनः उमाधवः कीर्तिप्रियः पुनः विधुतव्यथः त्यक्तपीडः, किं कुर्वन् ? कुलस्य निलयं निवासं प्रहरन् संहरन्, कथम्भूतस्य ? सहसाररक्षसः सहसारै रक्षोभिर्वर्त्तत इति सहसाररक्षाः तस्य सबलिष्ठराक्षसस्य रावणस्येत्यर्थः, अथवा आर प्राप रामः, कम् ? निलयम्, किं कुर्वन् ? प्रहरन्, कस्य ? रक्षसो रावणस्य, कथम् ? सहसा शीघ्रमिति ।

भारतीयः—उ अहो, किं नावाप किं न प्राप्तवान्; अपितु प्राप्तवान्, कोऽसौ ? माधवो विष्णुः, किम् ? हितम्, क्व ? युधि, कथम् ? क्षणम्, कथम्भूतः ? दाशरथिरविः दाशो धूर्त्तः कुशल इत्यर्थः, रथी सारथिः दाशश्चासौ रथी च दाशरथी दाशरथी रविर्यस्य [1]सुविधावनप्रकाशनात् स तथोक्तः अतः कारणात् ररक्ष पालितवान्, कोऽसौ ? स माधवः, कम् ? निलयम्, कस्य ? कुलस्य, किं कुर्वन् ? सहसा शीघ्रं प्रहरन् । शेषं तुल्यम् ॥१८॥

सदृशौ बलेन समकालमधिकृतजयौ निजोद्धती ।
पुण्यदुरितनिचयाविव तौ व्यतिरेधतुर्न तु जवाद् व्यतीयतुः ॥१९॥

सदृशाविति—तौ जिगीषुप्रतिजिगीषू पुण्यदुरितनिचयौ इव व्यतिरेधतुः परस्परं प्रहृतवन्तौ व्यतिजघ्नतुरित्यर्थः, कथम्भूतौ ? सदृशौ समानौ समानकक्षावित्यर्थः, केन ? बलेन शरीरसत्त्वेन, कथम्भूतौ अधिकृतजयौ अङ्गीकृतजयौ, कथम् ? समकालं तुल्यसमयं यथा भवति पुनः निजोद्धती निजात्मीया उद्धतिर्ययोः तौ तु पुनर्न व्यतीयतुः, न परस्परं गतौ विरतौ, कस्मात् ? जवाद्वेगादिति ॥१९॥

---

शक्ति लगनेसे नारायण (श्री लक्ष्मण-कृष्ण) अशक्त हो गये थे किन्तु उनकी दर्शन और ज्ञानकी शक्तिका लोप नहीं हुआ था । आश्चर्य यही है कि शक्तिके प्रभावसे नारायण चारों ओर अन्धकारको देखते थे किन्तु वेदनाका अनुभव नहीं करते थे ॥१७॥

कीर्ति (उमा)के स्वामी, युद्धमें लीन, अनुजके आघातकी मार्मिक पीड़ाको दबाये हुए तथा बलवान् (सहसार) राक्षसोंसे घिरे रावणकी पैतृक राजधानीपर प्रहार करते हुए दाशरथि रामने क्या क्षण-भरमें ही शत्रुको नहीं घेर लिया था ?

जरासंधके प्रहारकी व्यथाको भूले, माधवने क्या क्षण-भर ही में युद्धस्थलीमें अपना भला (हित) नहीं किया था ? अपितु किया ही था । कुशल नीतिमानों (दाशः) तथा सारथियों (रथी)में सूर्य (श्रेष्ठ) श्रीकृष्णने सहसा आक्रमण करके पाण्डव कुलके आधार (निलय) अर्जुनकी रक्षा की थी ॥१८॥

शारीरिक बलकी दृष्टिसे एक समान, एक ही समयमें विजय प्राप्त करनेके लिए प्रयत्नशील और स्वभावसे ही उद्धत वे दोनों [नायक (राम-कृष्ण) और प्रतिनायक

---

१. सुविधायन-प० अ० । सुविधाव-ब० मा० ।

विरथश्चिरेण विहितोऽपि विततधनुषामुना रिपुः ।
जातमिव बहुमुखं सुकृतं विविधं स मूलविभुजं व्यलङ्घयत् ॥२०॥

विरथ इति—स रिपुर्विपक्षः मूलविभुजं मूलरथं सुकृतमिव पुण्यमिव व्यलङ्घयत् अतिक्रान्तवान्, कथम्भूतम् ? जातं समुत्पन्नं पुनः बहुमुखं प्रचुरकारणं पुनः विविधं नानाप्रकारम्, कथम्भूतः ? विहितोऽपि कृतोऽपि पुनः विरथः रथरहितः अमुना विजिगीषुणा, कथम्भूतेन ? विततधनुषा आरोपितचापेन, कथम् ? चिरेण बहुकालम् ॥२०॥

अवलोकितुं हरिविघातमसह इव गन्तुमुद्यतः ।
संख्यरुधिरमवलोक्य चिरं स मदादपप्तदिव तीव्रगुः सदा ॥२१॥

अवलोकितुमिति—तीव्रगुः सूर्यः पूर्वं संख्यरुधिरं रणरक्तं चिरं बहुतरकालम् अवलोक्य निरीक्ष्य सदा सर्वकालं मदादिव अपप्तत् पतितवान्, कथम्भूतः ? गन्तुमुद्यतः पुनः हरिविघातम् अवलोकितुम् असह इव असहमान इव ॥२१॥

स विपन्नबन्धुमुपदृश्य नृपजनमशेषमंशुमान् ।
दुःखजलमवतरीतुमिव प्रतिपश्चिमार्णवतटं व्यलम्बत ॥२२॥

स इति—सः अंशुमान् सूर्यः पश्चिमार्णवतटं पश्चिमसमुद्रतीरं व्यलम्बत अवलम्बितवान्, किं कर्तुमिव ? दुःखजलं दुःखमेव जलं तत् अवतरीतुमिव, किं कृत्वा ? अशेषं नृपजनं नृपतिलोकं विपन्नबन्धुं मृतबान्धवम् उपदृश्य दृष्ट्वा ॥२२॥

सवितापि संहृतिमियाय नियतदिवसातिलङ्घनः ।
हन्त किमु किल निषेकदिनं जगति व्यतिक्रमितुमक्षमो जनः ॥२३॥

सवितेति—सवितापि सूर्योऽपि संहृतिं संहारम् इयाय गतवान्, कथम्भूतः ? नियतदिवसातिलङ्घनः निश्चितदिवसातिक्रमः, युक्तमेतत्, हन्त कष्टं किल लोकोक्तौ किमु अहो जगति लोके निषेकदिनं मृत्युं व्यतिक्रमितुं लङ्घितुमक्षमः असमर्थो जनः, अत्र यत्र सवितापि संहृतिं प्राप्तवान्, तत्रान्ये जना निषेकदिनं व्यतिक्रमितुं कथमलं समर्था भवेयुरिति भावो विभाव्यते ॥२३॥

---

(रावण-जरासन्ध)] पुण्य तथा पापके सजीव ढेरके समान एक-दूसरेपर प्रहार कर रहे थे, तो भी उनमें-से किसीका भी वेग रंचमात्र नहीं घट रहा था ॥१९॥

बहुत समय तक धनुष चलाकर इस नारायणके द्वारा रथहीन (खण्डित-रथ) किया गया भी वह शत्रु सब तरफसे खुले बहुमुख तथा लक्ष्य भेदनके लिए अनुकूल अवसर-पर भी (विविध) मूलनायकके रथके सामनेसे निकल गया था और पुण्यकी समानताको प्राप्त हुआ था क्योंकि पुण्यका फल भी अनेक (बहु) साधन (मुख) जुटा देता है तथा अनेक प्रकारसे सहायक होता है ॥२०॥

बहुत समय तक युद्धमें बहती रक्तधाराको देखकर प्रखर किरणोंके सदैव स्वामी सूर्यका भी अहंकार (उष्मा) अपने-आप ढलने लगा था। और नारायणके वधको (अथवा वानरों और यादवोंके संहारको) देखनेके लिए तैयार न होनेके कारण ही उसने भी (अस्ता-चलकी ओर) चलनेकी तैयारी कर ली थी ॥२१॥

समस्त राजाओंके आत्मीय-जनयुद्धमें मर चुके थे। ऐसे इन राजाओंको देखकर सूर्य भी दुखी होकर जलमें उतरने (डूबने) के लिए ही (अथवा अन्त्येष्टिके बादका स्नान करनेके लिए ही) पश्चिम सागरके किनारेकी ओर मुड़ गया था ॥२२॥

गतवत्यरौ तमनुमत्य परमपुरुषं महोदयैः ।
व्याप्य निशिततमसंप्लवगैः स्थितमर्जुनप्रकृति तत्र राजकम् ॥२४॥

गतेति—राजकं सुग्रीवप्रभृतीनां राज्ञां समूहः तत्र रणे स्थितम्, किं कृत्वा ? तं परमपुरुषं लक्ष्मणं निशिततमसं निशितं तमो यस्य तं तीक्ष्णतिमिरोपहृतं विनष्टचेतनम् अनुमत्य ज्ञात्वा, कस्मिन् सति ? अरौ गतवति सति, किं कृत्वा स्थितम् ? महोदयैः प्लवगैः वानरैः व्याप्य वेष्टयित्वा, कथम्भूतं राजकम् ? अर्जुनप्रकृति शुद्धस्वभावम् ।

भारतीयः—अर्जुनप्रकृति मध्यमपाण्डवप्रधानं राजकं स्थितम्, किं कृत्वा ? परमपुरुषं नारायणं पूर्वम् अनुमत्य, किं कृत्वा व्याप्य, कस्याम् ? निशि रात्रौ, कथम्भूतं राजकम् ? असंप्लवगैः शिष्टवीरयागैः महोदयैः ततं व्याप्तम्, क्व सति ? अरौ गतवति ॥२४॥

न किलास्ति कोऽप्यवनिमानमवगत इतीरितोद्यमः ।
पादपरिगणनया भुवनं रविरेष मित्सुरिव दूरमत्यगात् ॥२५॥

नेति—रविः सूर्यः दूरं यथा तथा अत्यगात् अतिशयेन गतवान् इवोत्प्रेक्षितः ? भुवनं जगत् पादपरिगणनया कृत्वा मित्सुरिव, कथम्भूतः ? ईरितोद्यमः, कथमिति कृत्वा प्रकाश्यते, किल लोकोक्तौ परामर्शे च, न कोऽप्यस्ति, कथम्भूतः ? अवनिमानं भूमिपरिमाणम् अवगतः ज्ञातवान् ॥२५॥

सदृशोदयास्तमयवृत्तिरजनि तपनोऽनुरागतः ।
संपदियमिह विपच्च परं परिवर्तते नहि महीयसः स्थितिः ॥२६॥

सदृशेति—तपनः सूर्यः अनुरागतः अनुरागात् सदृशोदयास्तमयवृत्तिः सदृशी उदयास्तमययोर्वृत्तिर्यस्य स तथोक्तोऽजनि संजातः, एकरूपोऽजनीत्यर्थः, युक्तमेतत्, इह लोके परं केवलम् इयं संपद् विपच्च परिवर्त्तते महीयसः स्थितिर्न परिवर्तते हि स्फुटम् ॥२६॥

---

दिनकी समाप्ति (अतिलंघन) को निश्चित करनेवाला सूर्य भी (अस्त) विनाशको प्राप्त हुआ था। यही खेदकी बात है कि संसारमें मृत्युकी वेलाको टालनेमें कोई भी व्यक्ति समर्थ नहीं होता है ऐसा निश्चय है ॥२३॥

शत्रुके चले जानेपर परम प्रतापी वानरोंने यह जाना था कि परम पुरुष लक्ष्मण तीक्ष्ण शक्ति लगनेके कारण अचेतन पड़े हैं। स्वभावसे सरल (अर्जुन-प्रकृति) समस्त राजा लोग यह जानते ही शोकमग्न होकर उसको घेरकर बैठ गये थे।

अत्यन्त सम्पन्न तथा शिष्टवीरों (असंप्लवगैः) से व्याप्त (ततं) अर्जुनके अनुयायी (प्रकृति) राजाओंका समूह शत्रुओंके लौट जानेपर रात्रिको परमपुरुष कृष्णको घेरकर जा बैठा था। तथा उनकी सम्मतिको जाननेके लिए प्रतीक्षा करने लगे थे ॥२४॥

कोई भी व्यक्ति ऐसा नहीं है जिसने पृथ्वीको स्वयं नापा हो इस लोकोक्तिसे प्रेरित होकर पुरुषार्थी सूर्य पगों (कदमों) से गिनकर पृथ्वीको नापनेके लिए ही दूर तक चला गया था [सन्ध्या समय सूर्यकी किरणें (पाद) संख्यात रह जाती हैं और वह अस्त हो जाता है] ॥२५॥

सन्ध्याकालीन लालिमाके कारण सूर्य उदय और अस्तके समय एक समान स्वभाव (लालिमा, आदि) का धारक हो गया था। उचित ही है—संसारमें यह सम्पत्ति और विपत्ति ही खूब बदलती हैं किन्तु इससे महापुरुषोंकी स्थिति रंचमात्र भी नहीं बदलती है ॥२६॥

**क्षतजप्रवाहनिवहस्य समरभुवि सर्पतो द्विषः[1] ।**
**रागपटलमधिरूढमिव द्युतलानि सान्ध्यमरुणं बभौ महः ॥२७॥**

क्षतजेति—सान्ध्यं सन्ध्यासमुत्पन्नं महः तेजः बभौ रराज, कथम् ? अरुणम्, किमिवोत्प्रेक्षितम् ? द्युतलानि अधिरूढम्, क्षतजप्रवाहनिवहस्य रक्तपूरसमूहस्य रागपटलमिव, कथम्भूतस्य ? समरभुवि रणभूमौ दिशः सर्पतो गच्छतः ॥२७॥

**अथ वारुणीरुचिरभाजि न परममुनाम्बरस्थितिः ।**
**क्वापि रविरवपतन्भविता तदितीव तद्गतमगामि सन्ध्यया ॥२८॥**

अथेति—अथ सन्ध्यावर्णनानन्तरं न परं केवलमभाजि सेविता वारुणी रुचिः पश्चिमा दीप्तिः, केन? अमुना रविणा, तथाभाजि त्यक्ता, का ? अम्बरस्थितिः, तथा क्वाप्यवपतन् भविता तदितीव भविष्यति रविः । अत्र लुप्तोपमा बोध्या । यथामुना मद्यपेनाभाजि सेविता, का ? वारुणीरुचिर्मदिराभिलाषः, तथाभाजि भग्ना, का ? अम्बरस्थितिः वस्त्रस्थितिः, अमुना रविणा, तथा क्वाप्यवपतन् भविता तत् ततोऽनन्तरमगामि गतम्, किम् ? तद्गतं रविगमनम्, कया ? सन्ध्ययेति ॥२८॥

**परतस्तमांसि पुरतोऽस्य सवितुरभवन्महोद्यमः ।**
**दिग्विजयमधिकरोति किमु क्षुभितं हि पश्चिममचिन्तयन्प्रभुः ॥२९॥**

परत इति—अभवन् संजातानि, कानि ? तमांसि अन्धकाराणि, कथम् ? परतः पश्चात् पृष्ठत इत्यर्थः, पुरतोऽग्रतोऽभवन्, कोऽसौ ? महोद्यमः, कस्य ? अस्य सवितुः सूर्यस्य युक्तमेतत्, उ अहो किमपि करोति, अपि तु नेति भावः, कोऽसौ प्रभुः, किम् ? दिग्विजयम्, किं कुर्वन् ? अचिन्तयन् अवितर्कयन्, किम् ? पश्चिमम्, कथम्भूतम् ? क्षुभितम्, कथम् ? हि स्फुटम् अकुटिलत्वमुपदर्शितमिति ॥२९॥

**उपवन्यभूम्युपगिरं च दिवसमुपलाय वाहयत् ।**
**प्राप तिमिरमुतमभ्युदयं किल कं न यापयति दुर्गयापना ॥३०॥**

उपेति—प्राप प्राप्तम्, किं कर्तृ ? तिमिरम्, कम् ? अभ्युदयम्, कथम्भूतम् ? उरुं गरिष्ठम्, किं कुर्वन् ? वाहयन् अतिलङ्घमानम् ? किम् ? दिवसम्, किं कृत्वा ? पूर्वमुपलाय लीनं भूत्वा, कथम् ?

---

समरभूमिमें बहते हुए शत्रुओंके रक्तकी धाराके पूरकी लालीको आकाश-पटलपर फैलाती हुईके समान सन्ध्याकालीन लालिमाकी कान्ति समस्त आकाशके तलमें व्याप्त हो गयी थी ॥२७॥

सन्ध्या समय सूर्य (रूपी मद्यप) के द्वारा केवल पश्चिम दिशाकी कान्तिरूपी मदिरा वारुणी का ही आनन्द नहीं लिया गया था अपितु वह आकाश (कपड़ों) में भी न रह सका था। तब सूर्य (मद्यप) कहीं जाकर गिर गया होगा, यह सोचकर सन्ध्या (मद्यपकी स्त्री) भी सूर्य (मद्यप) के रास्तेपर चली गयी थी ॥२८॥

महा पुरुषार्थके [कारण प्रकाश] सूर्य आगे-आगे चला जा रहा था और इसके पीछे-पीछे अन्धकार बढ़ता जाता था। यह देखकर पश्चिम दिशामें क्षोभ फैल गया था, क्योंकि समर्थ पुरुष बिना संकल्पके (अनायास ही) दिग्विजय कर डालते हैं ॥२९॥

वनोंके निकटकी भूमिमें तथा पहाड़ोंकी घाटियोंमें छिपकर दिनको काटनेवाला अन्धकार रात्रि होते ही विस्तारके शिखरपर पहुँच गया था। ठीक ही है; ऐसी कौन-सी

---

१. 'द्विषः' प्रासङ्गिकं भविष्यति ।

उपवन्यभूमि वने भवा वन्या सा चासौ भूमिश्च तस्या अभ्यासः कान्तारसमीपमुपगिरं च गिरिसमीपे, युक्तमेतत्, किल लोकोक्तौ, कं न यापयति नातिक्रामति दुर्गयापना दुर्गगमनिका ॥३०॥

**द्युमणौ प्रतापिनि गतेऽस्तमभयचिरसङ्गमात्तमः ।**
**श्लिष्यदिव घनमशेषमभूत्प्रलयः प्रियो हि खरदण्डतोषिणः ॥३१॥**

द्युमणाविति—अभूत् संजातम्, किम्? तमोऽन्धकारम्, किं कुर्वदिव? आश्लिष्यदिवालिङ्गदिव, कस्मात्? अभयचिरसङ्गमात् निर्भयचिरकालसंसर्गात्, क्व सति? द्युमणौ सूर्ये अस्तंगते, कथम्भूते द्युमणौ? प्रतापिनि प्रतापवति, कथम्भूतं तमः? घनं पुनः अशेषं निखिलम्, युक्तमेतत्, खरदण्डतोषिणः खरदण्डं पद्मं तोषयतीत्येवंशीलः सूर्यः तस्य प्रलयो हि प्रियो भवेत् तीव्रकरादानकुशलस्य राज्ञ इति ध्वनिः ॥३१॥

**निजदुःसुतं कुलमिवाशु गुरुगृहमिवायथोद्यतम् ।**
**राज्यमिव समुदितव्यसनं भुवनं परास्तमवबद्धतामसम् ॥३२॥**

निजेति—भुवनं जगत् परास्तं प्रक्षिप्तम्, किमिव? निजदुःसुतं कुलमिव, आशु शीघ्रं यदि वा अयथोद्यतम् अयथाचारम् असदाचारं गुरुगृहमिव समुदितव्यसनं राज्यमिव, कथम्भूतं सद्भुवनम्? परास्तम् अवबद्धतामसं तमस इदं वैकृतं तामसं बद्धं तामसं येन तत् ॥३२॥

**कृतमुच्छ्रितं तदनुदात्तमधरतरमुच्चमादृतम् ।**
**क्वाप्यजनि न च विवेकमतिः कुनृपैकचेष्टितमिवाभवत्तमः ॥३३॥**

कृतमिति—कृतं विहितम्, किं कर्मतापन्नम्? तत् उच्छ्रितम् अनुदात्तम् अधरतरं च उच्चम् उच्चैः, केन? तमसेत्यध्याहार्यम्, तथा प्रदर्श्यते यत् पूर्वम् उच्छ्रितम् उच्चं तदधरं कृतं यदधरतरं तत् उच्चं कृतम्, तथा अजनि, किम्? तमः, कथम्भूतम्? आदृतमादरयुक्तम्, क्व? क्वापि, न चाजनि का? विवेकमतिर्भेदबुद्धिः, तथाभवत् संजातम्, किम्? तमः, किमिव? कुनृपैकचेष्टितमिव, येन यदुच्छ्रितं तदनुदात्तं यदधरतरं तदुच्चं कृतं क्वाप्यादृतमजनि न च तस्य विवेकमतिर्विचारबुद्धिरजनीति ॥३३॥

**पुरतः स्थितं परिचितं च निकटतिमिराहतेक्षणः ।**
**जात इव धनमदान्ध इव क्वचनापि कोऽपि न जनोऽभ्यचायत ॥३४॥**

---

वस्तु है जिसका पार कठोर (जीवन) यात्रा न पाती हो? अर्थात् पुरुषार्थी जीवन ही अभ्युदयका साधक है ॥३०॥

आकाशके मणिभूत अत्यन्त तेजस्वी सूर्यके अस्त हो जानेपर गाढ़ अन्धकार सर्वत्र व्याप्त हो गया था, मानो बहुत समय बाद मिलनेके कारण ही समस्त विश्वका निडर होकर गाढ़ आलिंगन करनेमें लीन था। और कमलोंके विकासक सूर्यकी प्रलयपर आनन्द मना रहा था [मलिन मनोवृत्ति (तमः) के लोगोंको भी प्रतापी (खर) तथा अनाचारियोंको दण्ड देकर ही माननेवाले राजाका नाश ही प्यारा लगता है] ॥३१॥

अन्धकार पटलमें लपटा समस्त संसार शीघ्र ही उसी प्रकार हीन अवस्थामें जा पड़ा था, जिस प्रकार अपने कुपुत्रके कारण कुल, परम्परा-विरुद्ध अनाचारके कारण गुरु-कुल और ईति-भीति विपत्तिके आ जानेपर कोई राज्य परास्त हो जाता है ॥३२॥

दुष्ट राजाके व्यवहारके समान अन्धकारने भी ऊँचे पदार्थको नीचा कर दिया था, नीचेसे नीचे पदार्थ बहुत ऊँचे प्रतीत होते थे तथा कहीं पर भी ऊँच-नीच (कर्त्तव्य-अकर्त्तव्य) का भेद समझमें नहीं आता था ॥३३॥

---

१. 'दण्ड' इति मूलानुसारी ।

पुरत इति—पुरतोऽग्रतः स्थितं वस्तु कोऽपि जनो नाभ्यचायत नेक्षितवान्, तथा च परिचितं लक्षमनुभवगोचरमित्यर्थः, क्व ? क्वापि, कस्मिंश्चित् स्थाने, क इवोत्प्रेक्षितः ? जात इव, कथम्भूतः ? निकटतिमिराहृतेक्षणः आसन्नतिमिराभिभूतलोचनः, तथा धनमदान्ध इवोत्प्रेक्षितः स्वजनापीति शेषः ॥३४॥

**इति दिग्विमूढमिव तत्र गिरिषु दरिषु स्खलत्पतत् ।**
**व्याप हृतमिव तमस्तमसा तदशेषमग्रजवपूरणोद्यतम् ॥३५॥**

इतीति—तमः अग्रजवपुः रामशरीरं व्याप व्याप्तवान्, किमिवोत्प्रेक्षितं तमः ? तमसा कोपेन हृतमिव गृहीतमिव, किं कुर्वत् ? पतत् भ्रंशमानम्, कासु दरिषु गर्तासु, तथा किं कुर्वत् ? गिरिषु पर्वतेषु स्खलत् किमिवोत्प्रेक्षितम् ? दिग्विमूढमिव भ्रान्तमिव, क्व ? तत्र रणे, कथम् ? इत्युक्तप्रकारेण, कथम्भूतमग्रजवपुः ? रणोद्यतम् पुनरशेषं समस्तम् ।

भारतीयः—तमः तत् अशेषं[1] जगत् व्याप, कथम्भूतं तमः ? अग्रजवपूरणोद्यतम् अग्रजवं प्रधानवेगं पूरयति पुष्टीकरोति अग्रजवपूरणः, तत्र उद्यतम् उद्यमो यस्य तत्, किमिवोत्प्रेक्षितम् ? तमसा हृतमिव, शेषं प्राग्वत् ॥३५॥

**मिलिताङ्गदंपतिसुखाय सहितजनकीयनन्दनम् ।**
**व्योम्नि गमनमकृत त्वरितः स शनैरवाल्लघुरयाच्च मारुतः ॥३६॥**

मिलितेति—स मारुतो मरुतोऽपत्यं पुमान् मारुतो हनूमान् पतिसुखाय लक्ष्मणसुखार्थं व्योम्नि गगने लघुरयात् शीघ्रवेगात् त्वरितगमनम् अकृत कृतवान्, कथम्भूतात् लघुरयात् ? शनैरवात् प्रच्छन्दाध्वनेः, कथम्भूतं गमनम् ? मिलिताङ्गदं मिलितः अङ्गदो यस्मिन् तत्, पुनः सहितजनकीयनन्दनं सहितः जनकीयनन्दनः भामण्डलो यस्मिन् तत् ।

भारतीयः—स मारुतो वायुः व्योम्नि नभसि शनैरवात् मधुरध्वनेः मिलिताङ्गदम्पतिसुखाय[2] संश्लिष्टदयिताप्राणनाथप्रमोदार्थं[3] गमनम् अयात्[4] वहति स्मेत्यर्थः कथं गमनम् ? सहितजनकीयनन्दनं जनानाम् इदं जनकीयं सहहितेन वर्तते सहितम्, जनकीयं च तन्नन्दनं च जनकीयनन्दनं सहितं जनकीयनन्दनं यस्मात् तत्, कथम्भूतो मारुतः ? अकृतत्वरितः अकृतं त्वरितं वेगो येन सः, पुनः लघुर्मन्दः मयूरपिच्छभेदीत्यर्थः ॥३६॥

---

**सम्पत्तिके अभिमानसे अन्धे (क्रूर) व्यक्तिके समान आँखोंपर छाये गाढ़ अन्धकारके कारण कोई भी व्यक्ति कहींपर भी सामने रखे अथवा अत्यन्त परिचित पदार्थको भी नहीं देख पाता था [सम्पत्तिके गर्वसे क्रूर व्यक्ति भी पुराने परिचित और सामने आये सुपरिचित सम्बन्धियोंको भी नहीं पहचानता है] ॥३४॥**

**दिशाओंके ज्ञानसे हीन व्यक्तिके समान रणभूमिमें पहाड़ोंपर लड़खड़ाते तथा गुफाओंमें गिरते सर्वत्र व्याप्त अन्धकारने क्रोधसे अभिभूत तथापि युद्धके लिए तैयार अग्रज (राम) के शरीरको भी प्रभावित कर दिया था [पाण्डव पक्ष''' अन्धकारने प्रधान रूपसे (अग्र) युद्धके वेगको (जव) पूर्ति करनेमें (पूरण) लगे तथापि अन्धकारके कारण निष्क्रिय परम ब्रह्म (अशेष) कृष्णजीको भी प्रभावित किया था] ॥३५॥**

**स्वामी (लक्ष्मणजी) को स्वस्थ करनेके लिए पवनञ्जयके पुत्र हनुमान्‌जीने शीघ्र**

---

१. अशेषं ब्रह्माणमिति ।

२. मिलितं संश्लिष्टं अङ्गं शरीरं यस्य सः जरासन्धः तस्य दम्पति''' ।

३. "इ शरीर स्त्री पुंस सुख निमित्तं" प० ।–इ शरीररमणीरमणसुखनिमित्तं–द० ।

४. प्राहवान्–प० द० ।

भरतः स्थितः स खलु यत्र तदिदमथवातिरागतः ।
स्थानमसुखमलिनो न्यगदन्नलिनोदरं निशि निबद्धमीलनम् ॥३७॥

भरत इति—यत्र स्थाने भरतः कैकेयीनन्दनः स्थितः तदिदं स्थानं सः वातिः वातस्यापत्यं वातिः हनूमान् आगतः, कथम् ? खलु निश्चयेन कस्याम् निशि रात्रौ अथ स्थानगमनानन्तरम्, न्यगदत् कथितवान्, कोऽसौ ? वातिः, कम् ? नलिनोदरं लक्ष्मणम्, कथम्भूतम् ? निबद्धमीलनम्, कथम्भूतः ? असुखमलिनः दुःखम्लानः ।

भारतीयः—अथवा स मारुतः[1] न्यगदत् किम् ? तदिदं नलिनोदरं कमलकोशम्, कथम्भूतम् ? निबद्धमीलनं प्राप्तसंकोचम्, कस्याम् ? निशि, पुनः कथम्भूतम् ? अलिनो भ्रमरस्य स्थानम्, कथं यथा भवति न्यगदत् ? असुखं दुःखं यत्र नलिनोदरे स्थितः, कः ? सोऽलिः, कथम् ? भरतः तत्परतया कस्मात् ? अतिरागतः अत्यन्तप्रीतेः, कथम् ? खलु[2] दिवेतिष्याहार्यम् ? ॥३७॥

भुवि कोकनिष्ठ इव तत्र सहजपरिपीडनोऽभवत् ।
यः सः तपनपरितापगुणः स्वयमस्तमेत्य सह एवमुद्यतः ॥३८॥

द्विः भुवीति—तत्र तस्यां भुवि यः तपनपरितापगुणः तपनस्येव परितापगुणस्तपनपरितापगुणोऽभवत् संजातः, कथम् उद्यतः ? सहजपरिपीडनः सहजातः सहजो भ्राता लक्ष्मणः सहजं परिपीडयतीति सहजपरिपीडनः, "नन्द्यादिभ्यः [ जै० सू० २।१।१०६ ]" इति कर्त्तरि ल्युः, अकनिष्ठो महान्, कः ? सः, असह इव असहिष्णुरिव स्वयमस्तमेति, कथम्भूतः ? उद्यतः, कथम् ? एवं विनाशं सहजं नेष्यामीत्यङ्गीकारे ।

---

ही आकाशमें गमन किया था । किन्तु इनके प्रस्थानमें न तो शोर हुआ था और न वेगके कारण धक्का ही लगा था । गोकि यह प्रस्थान इन्होंने जनक-नन्दन भामण्डलके साथ किया था और अंगद भी (रास्तेमें) मिल गये थे ।

जुटे हुए शरीरके धारक (मिलितांग) जरासंध दम्पतिके लिए विश्रामदायक तथा इनके हितैषी (स-हित) लोगोंके (जनकीय) आनन्दका कारण पवन आकाशमें धीरे-धीरे चल रहा था । उसका वेग बहुत हलका था तथा वह जरा भी जल्दी नहीं कर रहा था ॥३६॥

प्रयाणके बाद जहाँ भरतजीके उस स्थानपर पहुँचते ही (आगतः) दुःखसे मुरझाये उन पवनसुतने भरतजीको समाचार दिया था कि वे लक्ष्मणजी (शक्ति लगनेके कारण) रात्रिमें आँख बन्द किये (मूर्च्छित) पड़े हैं ।

उक्त प्रकारसे शत्रुपक्षके (अथ) रातको सो जाने पर (निबद्ध मीलनं) वह पाण्डव (भारत) श्रीकृष्ण (नलिनोदरं) के स्थानपर आ पहुँचा था तथा मित्रोंको जहाँ-जहाँ कष्ट था यह सब उनको बता दिया था क्योंकि उन सबपर उसका स्नेह था ॥३७॥

इस प्रकारसे (एवं) उस रणभूमिपर जो सगे भाई (सह-ज) पर भयंकर प्रहार हुआ था वह [रात्रिमें भी] सूर्यके प्रखर तापके समान जला रहा था । तथा परम पुरुषार्थी (उद्यतः) सबसे छोटेसे बड़ा (अकनिष्ठः) भाई उस प्रहारको सहनेमें असमर्थ (असह) के समान स्वयमेव अस्त-सा हो रहा है ।

---

१. मरुत्, वायु-बहुलं शरीरं यस्य स मारुतः भीमः ।

२. खलु दिवेति साध्याहार्यम्-द० । खलु दिवेति साध्याहार्यम्-ब० ।

अथ भारतीयः—तत्र भुवि कोकनिष्ठ इव चक्रवाकतत्पर इव सहजपरिपीडनो निसर्गपीडकः तपनपरितापगुणः तपनस्य परितापगुणस्तपनपरितापगुणः सूर्यस्य सर्वव्यापी तापगुण इत्यर्थः, अभवत् स स्वयमस्तमेति, कथम्भूतः ? असहः, पुनः उद्यतः, कथम् ? एवं कोकं विनाकं नेष्यामीत्यङ्गीकारेण। अत्र रात्रिविभागे भवितेति शेषः ॥३८॥

विनिवार्य तं निजकरेण निशि गुरुतमोऽभिमातुलम्।
प्राप विधुरपटुरभ्युदयं महसाञ्जनोऽस्य स तुतोष सङ्गतः ॥३९॥

विनिवार्येति—आञ्जनो अञ्जनातनयो हनुमान् अभ्युदयम् आप प्राप्तवान्, केन ? महसा तेजसा, किं कृत्वा ? पूर्वं विनिवार्य सम्बोध्य, कम् ? तं भरतम्, केन कृत्वा ? निजकरेण स्वहस्तेन, कथं यथा भवति अभिमातुलं मातुलेन द्रोणेन सहेत्यर्थः, कस्याम् ? निशि रात्रौ, तुतोष जहर्ष, कोऽसौ ? स मातुलो द्रोणनामा, कस्मात् ? सङ्गतः सङ्गात्, कस्य ? अस्याञ्जनस्य, कथम्भूतः आञ्जनः ? गुरुतमः गरीयान्, पुनः विधुरपटुः दुःखहर्ता[1]।

अथ भारतीयः—विधुश्चन्द्रः महसां तेजसाम् अभ्युदयं निशि रात्रौ प्राप, किं कृत्वा ? पूर्वं विनिवार्य किं तमः, केन कृत्वा ? निजकरेण स्वकीयकिरणेन, कथम्भूतेन ? अभिमाव अभिमेति विधि रूपम्, तृतीयायां परत आकारस्य लोपः, परिच्छेदकेनेत्यर्थः, कथं तमः ? गुरु घनम्, कथम्भूतो विधुः ? अपटुर्बलिः, कथम्भूतमभ्युदयम् ? अतुलमनुपमम्, तथा च तुतोष, कोऽसौ ? जनः, कस्मात् ? अस्य विधोः सङ्गतः सङ्गात् ॥३९॥

स वामकृत्तु द्रोणोरुचितमुदयात्संमुखगते
विधौ रागोद्रेकं धृतवति तमोघैकनिलयः।
कथंचिच्चित्तस्य स्थितिमिव विशल्यां प्रहितवान्
विहातुं शक्यात्मप्रकृतिरनुबद्धा न हि सुखम् ॥४०॥

---

संसारमें जिस प्रकारसे यह निर्बाध घोर दमन हुआ है उसको सहनेमें असमर्थ वह महान् धर्मराज, अपने आप ही समाप्त-सा हो रहा है। यद्यपि सूर्यके समान प्रतापी है और [सत्यकी प्रतिष्ठाके लिए] सतत प्रयत्नशील है।

रात्रिमें चक्रवाकोंपर जो स्वाभाविक महाविपत्ति (विरह) आती है उसको न देख सकनेके कारण ही आकाशचारी अत्यन्त तेजस्वी सूर्य भी स्वयमेव अस्त हो जाता है॥३८॥

भरतके दुःखको हाथ फेर करके शान्त करनेके पश्चात् रातमें ही महान् संकट हरण हनुमान् (आंजनेय) बड़े वेगके साथ द्रोणाचलकी ओर (अभिमातुलम्) बढ़ गये थे। वह द्रोणाचल भी इसको अपने ऊपर पाकर परम प्रसन्न हुआ था।

पुण्याधिकारियों (महसां) के भी परम पूज्य तथा दुःखियोंकी (विधुर) सान्त्वनामें कुशल श्रीकृष्णजीने रातको ही मामाकी ओर जाते इसे हाथसे रोक दिया था। और वह (भीम) इसके सहवासमें सन्तुष्ट हो गया था और अभ्युदयको प्राप्त हुआ था।

अपूर्ण चन्द्रमा प्रकाशकारी (अभिमत) लम्बे-लम्बे अपने किरणोंके द्वारा घोर (गुरु) अन्धकारको दूर करके अनुपम (अतुलम्) उदयको प्राप्त हुआ था। संसारके लोक भी इसके प्रकाशमें आनन्दित हुए थे ॥३९॥

---

१. दुःखस्फोटनदक्ष इत्यर्थः—प० द०।
२. 'विधुः श्रीवत्सकान्तनः' श्रीकृष्णः। अम्बुपरो तृतीयोऽर्थः।

स इति—वा नियमार्थोऽयम्, स द्रोणः विशल्यां विशल्या [1] सुन्दरीं मङ्क्षु शीघ्रं प्रहितवान् प्रस्थापितवान्, कथम् ? कथञ्चित् महता कष्टेन, कामिव ? चित्तस्य स्थितिमिव, क्व सति विधौ दैवे [2] उदयात् रुचितं शोभितं तं रागोद्रेकं धृतवति सति, कथम्भूते विधौ ? सम्मुखगते, कथम्भूतो द्रोणः ? ओघैकनिलयः अन्वयैकमन्दिरम्, युक्तमेतत्, हि स्फुटम् आत्मप्रकृतिः सुखं यथा तथा विहातुं त्यक्तुं न शक्या न समर्था, कथम्भूता सती ? अनुबद्धा।

भारतीयः—स क्षुद्रस्तस्करादिजनः विशल्यां विगतं शल्यं यस्याः सा ताम् अशल्यां स्थितिं प्रहितवान् धृतवानित्यर्थः, कस्य ? चित्तस्य कथञ्चित् किमिव ? तम इव, कथम्भूतः ? अघैकनिलयः पापैकमन्दिरम्, क्व सति ? विधौ चन्द्रे उदयात् उचितं योग्यं रागोद्रेकं धृतवति कथम्भूतात् उदयात् ? अणोः स्वल्पात्, कथम्भूतं रागोद्रेकम् ? वामं प्रतिकूलम्, कथम्भूते विधौ ? सम्मुखगते। शेषं प्रागृवत् [3] ॥४०॥

**विधुतोऽभ्युदितो दिगन्तरं परितस्तारुचा तया ततः।**
**निशि शक्त्युदयः पराद्युतिः कियतीनाम न हन्त्युपप्लवम् ॥४१**

विधुत इति—शक्त्युदयः शक्तेरायुधविशेषस्योदयः परितः सामस्त्येन दिगन्तरमाशान्तरालम् अभ्युदितः प्राप्तवान्, कथम्भूतः सन् ? तया लोकोत्तरया तारुचा शुभ्रदीप्त्या विधुतः निराकृतः, कस्याः ? ततस्तस्याः विशल्यायाः, कस्याम् ? निशि, युक्तमेतत्, नामाहो कियती परा उत्कृष्टा द्युतिः दीप्तिः कमुपप्लवमन्धतमसं न हन्ति, अपितु सर्वमेव हन्तीति।

अथ भारतीयः—परितस्तार [4] ल्पितवान् आच्छादितवानित्यर्थः, कोऽसौ ? शक्त्युदयः सामर्थ्योदयः, किम् ? दिगन्तरम्, कया कृत्वा ? तया मनोहरतया लोकप्रसिद्धया रुचा कान्त्या, कस्याम् ? निशि,

---

जलपूरोंके एकमात्र केन्द्र उस द्रोणाचल पर्वतने उदयके पश्चात् ऊपर उठते तथा लाल-लाल कान्तिसे व्याप्त चन्द्रमाके सामने आते ही मनकी स्वाभाविक स्थितिके समान गुणकारी विशल्या औषधिको किसी तरह शीघ्र ही भेज दिया था। उचित ही है क्योंकि अपनी अनुरक्त (अनुबद्धा) सन्तान (उपज) को छोड़ना आसान नहीं ही होता है।

अपने वंशका आधारभूत तथा शीघ्र ही उत्तेजित होनेवाले उस (भीम) ने भी विधाता (श्रीकृष्ण)के सामने आनेपर उचित मात्रामें आवेशको किया था। तथा बड़े प्रयत्नसे मनकी निःशंक स्थितिको पा सका था। अथवा ठीक ही है, चिरकालसे बँधा अपना स्वभाव आसानीसे नहीं छूटता है।

चन्द्रमाका थोड़ा थोड़ा उदय हुआ था। अतः सामने आनेपर भी उसकी कान्ति लाल ही थी। परिणाम यह हुआ कि अन्धकारके समान पापोंके भण्डार क्षुद्र व्यक्ति (चोरादि) ने भी स्वाभाविक (उचित) विपरीत आचरणको छोड़कर बड़े प्रयत्नसे अपने मनको पापवृत्तिसे बचाया था। क्योंकि अपना पुराना संस्कार छुड़ाना कठिन होता है ॥४०॥

सब प्रकारसे लक्ष्मणपर चढ़ी (अभ्युदितः) शक्ति शस्त्रका प्रभाव उस विशल्या औषधिके देते ही न जाने किस दिशामें उसी रातको विलीन हो गया था। उत्कृष्ट प्रभावशाली जड़ी किस महारोगको नष्ट नहीं करती है ?

---

१. औषधिमिति प्रकृतार्थः।

२. चन्द्रे सतः रात्रावेवौषधिः नीतः वृत्तश्च।

३. शिखरिणीवृत्तम्।

४. राकपितवान्—प० अ०।

कथम्भूतः सन् ? अभ्युदितः समुत्पन्नः, कस्मात् ? ततस्तस्माल्लोकोत्तराद्विधुतवचन्द्रात्, युक्तमेतत्धाम कियती परद्युतिः कं नोपप्लवं हन्ति अपितु सर्वमेव हन्तीति भावः[1] ॥४१॥

परिमोहयमाणमाशयं व्यसनाम्भोधिमिवोत्तरंस्तमः ।
सुखरोचिरतः सलक्ष्मणः क्षणमुल्लाघ इवोदतिष्ठत ॥४२॥

परीति—स लक्ष्मणोऽचिरतः अचिरेण कालेन उदतिष्ठत उत्थितवान्, क इव ? उल्लाघ इव व्याधिमुक्त इव गदनिर्गत इवेत्यर्थः, कथम् ? क्षणं मुहूर्तमेकम्, कथम्भूतः ? सुखरः खरप्रहारी अथवा सुखरः सुखदः, किं कुर्वन् ? व्यसनाम्भोधिमिव व्यसनसमुद्रमिव आशयं चेतः परिमोहयमाणं तमोऽन्धकारम् उत्तरन् सन् ।

भारतीयः—अतः सुखरोचिश्चन्द्रः सलक्ष्मणः सह लक्ष्मणा वर्तत इति सः परिपूर्णत्वात् । पामादित्वान्नप्रत्ययः । सलाञ्छनः इत्यर्थः । शेषं पूर्ववत् ॥४२॥

निजपूर्वया रुचिरपाण्डुरुचा परमाशयौषधिपतिंवरया ।
तमवाप्य कान्तमधिकं रुरुचे न महस्विसङ्गतिषु कस्य रुचिः ॥४३॥

निजेति—ओषधिपतिंवरया विशल्या नाम्न्या द्रोणराजपुत्र्या अधिकं रुरुचे शुशुभे, किं कृत्वा ? पूर्वं तं लोकोत्तरं कान्तं मनोहरं लक्ष्मणमवाप्य, अथवा कान्तं पतिमवाप्येति सम्बन्धः, कथम्भूतया ? निजपूर्वया निजपूर्वार्जितया, पुनः रुचिरपाण्डुरुचा मनोहरविशदकान्त्या, पुनः परमाशया उत्कृष्टाभिप्रायया युक्तमेतत्, महस्विसङ्गतिषु तेजस्विसम्बन्धेषु कस्य रुचिः न स्यादपि तु सर्वेषामपीति शेषः ।

---

नारायण (विधु) से उत्पन्न शक्तिका संचार रातमें ही समस्त दिशाओंमें व्याप्त हो गया था । इसके साथ ही उनकी मनोहर कान्ति भी फैल गयी थी । परब्रह्मकी प्रभा किस उपद्रवको शान्त नहीं करती है ! अर्थात् सब उपद्रवोंको मिटा देती है ।

चन्द्रमाकी कान्ति दिग्-दिगन्तरालोंमें व्याप्त हो गयी थी तथा इस मनोहर प्रकाशसे रात्रिमें लोगोंको बल प्राप्त हो गया था। पूर्ण प्रकाश किस अन्धकारको दूर नहीं करता है ॥४१॥

अत्यन्त तीक्ष्ण योद्धा श्री लक्ष्मणने इसे जाते ही चित्तको पूर्ण रूपसे मूर्च्छित करनेमें समर्थ शक्तिके विषको तुरन्त वैसे ही शान्त कर दिया था जैसे गुणी व्यसनोंके सागरको पार कर लेता है । और क्षण-भरमें ही ऐसे उठ बैठे थे मानो कुछ हुआ ही न था ।

द्यूत, आदि व्यसनोंके सागरको पार करनेके समान चित्तको मोह-जालमें फँसाते हुए कलुषित भावोंको श्री कृष्णने तत्काल सुखद कर दिया था और पाण्डव उत्साहित होकर उठ खड़े हुए थे ।

शान्त कान्ति धारक शश चिह्नधारी चन्द्रमा भी सबको अचेत ( सुषुप्त ) करनेवाले अन्धकारको नाश करता हुआ और उत्सवको बढ़ाता हुआ ऊपर आ गया था ॥४२॥

श्रेष्ठ औषधि विशल्याके द्वारा लायी गयी लक्ष्मणकी पहली कान्ति ( निजपूर्वया ) दुर्बलताके कारण सफेद ( पाण्डु ) होकर भी मनोहर लगती थी । तथा विशाल मनोबलकी द्योतक थी । यह पाण्डु छवि भी ( पिलकाई ) सुन्दर लक्ष्मणको पाकर और जगमगा उठी थी । उचित ही है प्रतापियोंकी संगतिमें कौन नहीं चमकता है ?

परमात्मा एवं औषधीश श्रीकृष्णपर अनुरक्त और प्रकृतिस्थ ( निजपूर्वया ) पाण्डवोंके मनोहर प्रतापने जगन्मोहन (कान्त) श्रीकृष्णको पाकर अपनी शोभाको अत्यधिक कर लिया था । ठीक है, प्रतापियोंके साथ रहकर कौन प्रतापी नहीं हो जाता है ।

---

१. वैतालीयं छन्दः ।

अथ भारतीयः—परं केवलं काशया दिशा अधिकं रुरुचे, किं कृत्वा ? पूर्वं तमोषधिपतिं चन्द्रमवाप्य, कथम्भूतं चन्द्रम् ? कान्तं कमनीयम्, कथम्भूतया ? निजपूर्वया निजमात्मीयरूपं पूर्वं यस्याः सा तथोक्ता तया, पुनः रुचिरपाण्डुरुचा श्लक्ष्णशुक्लदीप्त्या, पुनः वरया रमणीयया । शेषं प्राग्वत्[1] ॥४३॥

**स हरिन्नवोदयमुदीक्ष्य जनश्चिरचन्द्रहासभयविह्वलितः ।**
**निजकृत्यनिर्वहणभारमितः समुदश्वसीन्निशि कवोष्णमसौ ॥४४॥**

स इति—सः असौ जनः कवोष्णम् ईषदुष्णं यथा तथा निशि रात्रौ समुदश्वसीत् समुच्छ्वसितवान्, कथम्भूतः ? निजकृत्यनिर्वहणभारमात्मकार्यनिर्वाहभारम् इतो गतः, किं कृत्वा ? पूर्वं नवोदयं हरिं लक्ष्मणमुदीक्ष्यावलोक्य, कथम्भूतो जनः ? चिरचन्द्रहासभयविह्वलितः चिरं चिरमाचष्टे चिरयतीति चिरः, पचादित्वादच्; अपक्षय इत्यर्थः, चन्द्रहासः खड्गविशेषः, चिरः चन्द्रहासो यस्य सः चिरचन्द्रहासो रावणस्तस्माद्भयं तेन विह्वलितो विधुरितः ।

भारतीय—असौ सोऽयं जनः[2] कवोष्णं समुदश्वसीत् । किं कृत्वा ? पूर्वम् उदीक्ष्य, कम् ? हरिन्नवोदयं[3] हरिति दिशि नवोदयो यस्य तं [4]चन्द्रमित्यर्थः, कस्याम् ? निशि, कथम्भूतः सन् ? चिरचन्द्रहासभयविह्वलितः[5] चन्द्रहासः चन्द्रातपः चन्द्रज्योत्स्नेत्यर्थः[6] चिरचन्द्रहासाद्भयं चिरचन्द्रहासभयं तेन विह्वलितः, शेषं पूर्ववत् ॥४४॥

**दारुण्यमात्मन्यनुशय्य तीव्रं स्वतापतप्तां दयया धरित्रीम् ।**
**निर्वृत्य निर्वापयितुं हिमांशुव्याजेन शीतोऽभ्युदयाद्दिवार्कः ॥४५॥**

दारुण्यमिति—हिमांशुव्याजेन चन्द्रस्वरूपेण स्वतापतप्तां धरित्रीं मेदिनीं निर्वापयितुं सुखयितुं शीतीकर्तुमित्यर्थः, दयया पूर्वम् अनुशय्य पश्चात्तापं गत्वा निर्वृत्य व्याघुट्य असौ अर्कः सूर्यः अभ्युदयादिव

---

अपनी परम्परा ( पूर्वया ) के अनुसार निर्मल धवल कान्तियुक्त दिशाएँ सर्वोत्तम ( परं ) मनोहर चन्द्रमाका वरण करके सुशोभित हो उठी थीं । प्रकाशपुञ्जके साथ रहकर कौन प्रकाशित नहीं होता है ? ॥ ४३ ॥

औषधि लानेके अपने कर्त्तव्यके भारसे मुक्त तथापि चन्द्रहास नामके खड्गकी सिद्धिसे सम्बद्ध प्रकरणकी स्मृतिसे विह्वल हनुमान्‌जीने फिरसे चैतन्यको प्राप्त होते हुए लक्ष्मणको देखकर उस रात्रिमें आमन्दसे उष्ण साँस ली थी ।

अपने कर्त्तव्यके निर्वाहमें पारंगत तथापि अकाल विनाशके द्योतक कौरवराजके अट्टहाससे भीत और व्याकुल पाण्डव ( भीम ) ने नूतन प्रतापसे देदीप्यमान कृष्णको देखकर रात्रिमें ही साहसकी साँस ली थी ।

दिन भर अपने-अपने कर्त्तव्यको पूर्ण करनेमें लगे लोग रात्रिमें भी चन्द्रमाके उदयमें होते विलम्बके कारण डर तथा संकुचा गये थे । इन्होंने ही दिशाओंमें निकलती चाँदनीको देखकर आनन्दकी साँस ली थी ॥ ४४ ॥

अपनेपर बीते दारुण दुःखकी तीव्रताका ध्यान करके तथा अपने दुःखसे दुःखी संसारको शान्त करनेके लिए ही करुण रससे पूर्ण ठण्डे ( निर्जीव और निरुत्साहित ) सूर्यवंशी ( लक्ष्मण-भीम ) चन्द्रोदयके समान उदित हुए थे ।

---

१. प्रमिताक्षरा छन्दः—तल्लक्षणं तु, 'प्रमिताक्षरा सजससैरुदिता'—इति । २. पाण्डवसमूहः । ३. नूतनकान्तिदीप्तं हरिं श्रीकृष्णमित्यर्थः । ४. श्लेष्य– । ५. चिरः अपक्षयभूतश्चन्द्रहासोऽट्टहासो यस्य सः चिरचन्द्रहासः कौरवाधिपतिस्तस्माद्भयं । ६. –त्स्ना चेत्यर्थः ।

अभ्युद्गतवानिव, किमनुशय्य ? तीव्रं सोढुमशक्यम् आत्मनि दारुण्यं दारुणत्वम्, कथम्भूतः ? शीतः शीतलः[1] ॥४५॥

शनैः समारुह्य नभोऽनुरागं जहौ शशी लोकहितोद्यतोऽपि ।
प्रायेण सर्वोऽप्यधिरूढसंपद्व्यपोढपूर्वस्थितिरीदृगेव ॥४६॥

शनैरिति—शशी चन्द्रः पूर्वं शनैः नभो गगनं समारुह्य अनुरागं जहौ त्यक्तवान्, कथम्भूतः ? लोकहितोद्यतोऽपि, युक्तमेतत्, ईदृगेव चन्द्रसम एव सर्वोऽप्यपोढपूर्वस्थितिर्जायते मुक्तपूर्वस्थितिर्भवति, कथम्भूतः सन् ? अधिरूढसंपत्, कथम् ? हि स्फुटं प्रायेण बाहुल्येन ॥४६॥

चन्द्रो वातः शीतकं चन्दनं च क्षोदेष्वासीदुष्णकं कामुकानाम् ।
निर्द्वन्द्वं वा चन्द्रमश्छद्मनाभूदेकच्छत्रं प्राभवं मन्मथस्य ॥४७॥

चन्द्र इति—चन्द्रः वातो वायुः शीतकं कल्हारं चन्दनं श्रीखण्डमेतत् सर्वम् उष्णकं दाहकम् आसीत् सञ्जातम्, केषाम् ? कामुकानाम् कामिनाम्, केषु सत्सु ? क्षोदेषु कामजनितपीडासु सतीषु, वा अथवा अभूत् सञ्जातम्, किम् ? प्राभवं प्रभुत्वम्, कस्य ? मन्मथस्य, कथम्भूतम् ? एकच्छत्रम्, केन ? चन्द्रमश्छद्मना चन्द्रव्याजेन, कथम्भूतं प्राभवम् ? निर्द्वन्द्वं विपक्षरहितम् ॥४७॥

माधवेन मधुना स्मरेण वा को मयेव मदते च तोषितः ।
इत्यहं पुरवशः स्फुटन्निव स्वल्पतारकगणः शशी बभौ ॥४८॥

माधवेनेति—शशी चन्द्रः बभौ रेजे, कीदृशः ? स्वल्पतारकगणः, कथम्भूतः ? अवशः स्वाधीनः, पुनः अहंयुर्गर्वितः किं कुर्वन्निव ? स्फुटन्निव, कथम् ? गर्वितः, तदाह—माधवेन वसन्तेन मधुना मद्येन स्मरेण वा मयेव मदते मां विना कस्तोषितः अपि नु न कोऽपि[3] ॥४८॥

---

अपने तेजसे तपायी गयी सृष्टिको दयापूर्वक ठण्डा करनेके लिए ही अपने तीक्ष्ण तथा दारुण प्रतापके लिए पश्चात्ताप करता सूर्य ही मानो ठण्डा होकर चन्द्रमाके रूपसे रात्रिमें निकला था ॥ ४५ ॥

संसारका हित करनेमें तत्पर होते हुए भी चन्द्रमाने अनुराग ( लाली ) को आकाशमें ऊपर उठकर छोड़ दिया था। उचित ही है क्योंकि सभी समुन्नत अवस्थाको प्राप्त करके प्रायः इसी प्रकार पहलेकी अवस्थाको छोड़ देते हैं ॥ ४६ ॥

कामविकारके जाग्रत होते ही प्रेमियोंके लिए शीतल चन्द्रमा, वायु तथा अत्यन्त ठण्डा चन्दन भी गरम लगने लगा था। अथवा यों कहिए कि चन्द्रमाके व्याजसे कामदेवका एकच्छत्र राज्य हो गया था और कोई भी उसके ( कामदेवके ) सामने खड़ा होनेमें समर्थ न था ॥ ४७ ॥

वसन्त ऋतु अथवा मदिरा अथवा कामदेव, इनमें-से कौन मेरे समान है तथा मेरे बिना इनमें-से किसका सन्तोष होता है ? ( अर्थात् किसीका भी नहीं ) इस प्रकारसे अहंकारमें मस्त, स्वाधीन होकर फैलता हुआ-सा चन्द्रमा थोड़े-से तारोंके साथ सुशोभित हो रहा था ॥ ४८ ॥

---

१. उपजातिश्छन्दः । २. टीकायां सम्पत् + अपोढ विग्रहकरणात् 'द' मात्रं प्रतिभाति। मूलानुसारी-विग्रहस्तु "सर्वोऽपि व्यपोढ इति ।" ३. रथोद्धतावृत्तम् ।

न विधुः स्मरशस्त्रशाणबन्धः स्वयमेव स्फुरिताश्च ता न ताराः ।
मदनास्त्रनिशानवह्निशल्कप्रचयोऽसाविति मानिभिश्चकम्पे ॥४९॥

नेति—मानिभिः कामुकैरिति कृत्वा चकम्पे कम्पितम्, कथमिति तत्राह—विधुश्चन्द्रो न भवति, कः ? एषः, किं तर्हि भवति ? स्मरशस्त्रशाणबन्धः, कथम् ? स्वयमात्मना, ता लोकप्रसिद्धाः ताराश्च न भवन्ति, कथम्भूताः ताः ? स्फुरिताः, किं तर्हि भवति ? कोऽसौ मदनास्त्रनिशानवह्निशल्कप्रचयः मदनास्त्रनिशानाग्निकणनिकर इति[1] ॥४९॥

आत्मपादशरणं कुमुदौघं भानुतापितमवेत्य सवैरम् ।
हन्तुमभ्यधिकमिच्छुरिवेन्दुश्चक्रवाकमतपत्कमलं च ॥५०॥

आत्मेति—स इन्दुश्चन्द्रः चक्रवाकं कोकं कमलं च अभ्यधिकं यथा भवति तथा अतपत् संतापितवान्, किं कुर्वन्निव ? वैरं हन्तुमिच्छुरिव वाञ्छन्निव, किं कृत्वा ? पूर्वं कुमुदौघं कैरवनिकरम् आत्मपादशरणम् अवेत्य मत्वा, कथम्भूतमवेत्य भानुतापितमिति[2] ॥५०॥

क्षीरधिप्लवकृतोद्गमैरिव प्लाविते‌ऽशुभिरतिग्मदीधितिः ।
व्योम्नि मज्जनभयेन शङ्कितः सञ्चरन्निव गतेन लक्षितः ॥५१॥

क्षीरेति—अतिग्मदीधितिश्चन्द्रः जनैरित्यध्याहार्यम्, लक्षितः, केन ? गतेन गमनेन, किं कुर्वन् ? सञ्चरन् प्रवर्त्तमानः, क इवोत्प्रेक्षितः ? शङ्कित इव, केन ? मज्जनभयेन, क्व ? व्योम्नि नभसि, कथम्भूते ? अंशुभिः किरणैः प्लाविते प्लोडिते, कैरिवोत्प्रेक्षितैः क्षीरधिप्लवकृतोद्गमैरिव क्षीरसमुद्रपूरविहितोपपत्तिभिरिवेति[3] ॥५१॥

भोगसागरपरिक्रमचौरान् रागिणो जलपथे कृतकृत्यान् ।
अभ्यरोहदिव जेतुमुदस्त्रश्चन्द्रमण्डलतरण्डमनङ्गः ॥५२॥

भोगेति—अनङ्गः कन्दर्पः चन्द्रमण्डलतरण्डम् अभ्यरोहदिव आरूढवानिव, कथम्भूतः ? उदस्त्रः उत्खातशस्त्रः, किं कर्तुम् ? रागिणः कामुकान् जेतुम्, कथम्भूतान् ? भोगसागरपरिक्रमचौरान् भोगसमुद्रमार्गतस्करान्, पुनः कृतकृत्यान् कृतार्थिनः, क्व जेतुम् ? जलपथे जलमार्गे[4] ॥५२॥

---

यह चन्द्रमा नहीं है अपितु कामदेवके अस्त्रोंपर धार रखनेके लिए शाण ( खराद ) का चक्र है। आकाशमें ये तारे नहीं खिले हैं बल्कि मदनके अस्त्रोंको खरादपर चढ़ानेसे उड़े हुए आगीके पतंगोंका समूह ही है। यह सोचकर ही रूठी हुई कामिनियाँ कांप उठी थीं ॥ ४९ ॥

सूर्यके द्वारा सताये गये और अपने पदों ( किरणों ) पर आश्रित ( खिलनेवाले ) कुमुद-समूहको देखकर वैरको बाँधे चन्द्रमाने ( सूर्यके आश्रित ) चक्रवाक-युगलों तथा कमलोंको अधिकसे अधिक सतानेकी इच्छा की थी ॥ ५० ॥

क्षीरसागरके पूरके बढ़ावके समान चन्द्रमाकी धवल किरणोंके द्वारा आकाशके व्याप्त हो जानेपर शान्त-शीतल किरणोंका स्वामी चन्द्रमा स्वयमेव आशंका ( कहीं डूब न जाऊँ ) में पड़ गया था। फलतः डूबनेके भयसे सावधानीपूर्वक जाता हुआ-सा वह देखा गया था ॥ ५१ ॥

---

१. औपच्छन्दसिकं वृत्तम्। २. स्वागता वृत्तम्। ३. रथोद्धता वृत्तम्। ४. स्वागता वृत्तम्।

परं न दृष्ट्वाक्रममाणमिन्दुं प्रपूरयामास पयोधिराशाः।
लावण्यधामा च्युतमानसीमा रागोऽप्यसंमान्हृदये जनस्य ॥५३॥

परमिति—न परं केवलं प्रपूरयामास पूरितवान्, कोऽसौ? पयोधिः समुद्रः, काः? आशा दिशः, किं कृत्वा? पूर्वं दृष्ट्वाऽवलोक्य, कम्? इन्दुं चन्द्रम्, किं कुर्वाणम्? आक्रममाणमुदयन्तम्, कथम्भूतः? लावण्यधामा पुनश्च्युतमानसीमा, किं कुर्वन्? असंमान् अवकाशमलभमानः, क्व जनस्य हृदये। रागोऽपि प्रपूरयामास, काः? आशा वाञ्छाः, किं कृत्वा? पूर्वं दृष्ट्वा, कम्? इन्दुम्, किं कुर्वाणम्? आक्रममाणम्, कथम्भूतः? लावण्यधामा, पुनः च्युतमानसीमा, किं कुर्वन्? असंमान् अवकाशमलभमानः, क्व? जनस्य हृदये[1] ॥५३॥

श्रवणाञ्जलिनेक्षणेन शुक्त्या प्रियवार्तां विधुमासवं पिबन्त्यः।
मधुरत्रयसेवयेव जाता हृदि वध्वः समधातवश्चिरेण ॥५४॥

श्रवणेति—वध्वः कामिन्यः जाताः, कथम्भूताः? समधातवः, कथम्? चिरेण बहुतरकालम्, क्व? हृदि हृदये, कयेव? मधुरत्रयसेवयेव, किं कुर्वन्त्यः? पिबन्त्यः आस्वादयन्त्यः, काम्? प्रियवार्तां वल्लभवार्ताम्, केन? श्रवणाञ्जलिना कर्णाञ्जलिना, तथा पिबन्त्यः कम्? विधुं चन्द्रम्, केन? ईक्षणेन लोचनेन, तथा शुक्त्या चषकेणासवं मद्यम् पिबन्त्यः[2] ॥५४॥

रत्नाजिनेष्वाजिभरावशेषाद्विषादवद्वाष्पजलाविलानि।
स्त्रैणं समुच्छ्वासतरङ्गितानि सीधूनि योधाः समपाययन्त ॥५५॥

रत्नाजीति—समपाययन्त समपाययन्ति[3] स्म, के? योधाः धनुर्धराः, कानि? सीधूनि मद्यानि, किम्? स्त्रैणं स्त्रीसमूहम्, केषु? रत्नाजिनेषु मणिमयचषकेषु[4], कथम्भूतं स्त्रैणम्? विषादवत्, कस्मात्? आजिभरावशेषात्, कथम्भूतानि सीधूनि? बाष्पजलाविलानि अश्रुजलमिश्राणि, पुनः समुच्छ्वासतरङ्गितानि समुच्छ्वासास्तरङ्गाः संजाता येषु तानि तथोक्तानि[5] ॥५५॥

---

जलमार्गके विशेषज्ञों तथा भोगरूपी समुद्री यात्राके उत्कंतों अर्थात् कामुकोंको जीतनेके लिए ही शस्त्र उठाये हुए कामदेवने चन्द्रमण्डलरूपी छोटी-सी नौकापर सवार होकर प्रयाण किया था। जलमार्गके विशेषज्ञ समुद्री चोरोंके समान कामुक भी अविवेकी ( डलयोरभेदः अतएव जड़मार्ग ) जीवनके यापनमें पारंगत होते हैं ॥ ५२ ॥

चन्द्रमाके ऊपर ( कामदेवके ) आक्रमणको देख कर ही खारे ( लावण्य ) पानीका भण्डार समुद्र ही ज्वाररूपसे किनारोंके ऊपर नहीं आया था और समस्त दिशाओंमें ही नहीं फैला था अपितु लोगोंके मनमें न समाते हुए प्रेमने भी अपनी सब आशाएँ ( अभिलाषाएँ ) पूर्ण कर ली थीं [क्योंकि चन्द्रमाके उदय ( आक्रमण ) होते ही ज्वारके समान रागका भी प्रमाण या सीमा नहीं रहती है तथा सारी सृष्टि ही सुन्दर ( लावण्यमय ) प्रतीत होने लगती है ] ॥ ५३ ॥

कानोंसे प्रीतमकी बातोंको सुनती, आँखोंसे चन्द्रिकाका पान करती तथा शुक्तिके पात्रसे आसवको पीती हुई बहूके हृदयमें बहुत समय बाद, तीनों मधुरोंका सेवन करनेके कारण समस्त धातुओंका सामञ्जस्य हो गया था ॥ ५४ ॥

युद्धकालीन मानसिक त्रासके अवशेष स्वरूप विषादके सूचक आँसुओंसे मटमैले तथा

---

१. उपजातिर्वृत्तम्। २. औपच्छन्दसिकं वृत्तम्। ३. -ययन्ते स्म। ४. चित्रकम्बलेषूपयुक्तः पाठः। ५. उपजातिर्वृत्तम्।

उत्पलस्य शशिनोऽप्यवतारात्सौरभं हरतु कान्तिगुणं च ।
क्व स्वयं क्व मदनः किल येन प्राप मोहनविधिं मधुवारः ॥५६॥

उत्पलस्येति—किल लोकोक्तौ, क्व कस्मिन् स्थाने हरतु, कोऽसौ ? मधुवारः मदिरा, किम् ? सौरभं परिमलम्, कस्य ? उत्पलस्य, कमलस्य, तथा च क्व हरतु, कम् ? कान्तिगुणम्, कस्य ? शशिनोऽपि चन्द्रस्यापि, कस्मात् ? अवतारात्, कयोर्द्वयोः ? उत्पलशशिनोरिति ग्राह्यम्, क्व स्वयं मधुवारो वर्तते तथा क्व वर्तते मदनः येन मदनेन प्राप को मधुवारः कम् ? मोहनविधिं मोहक्रियाम्, कथम् ? स्वयमात्मनेति[1] ॥५६॥

इन्दोः प्रियस्यापि कराग्रपातैर्मदस्य चित्तस्य तथार्द्रभावैः ।
पूर्वापराधस्मृतयो विनेशुर्जन्मापरं जातमिवाबलानाम् ॥५७॥

इन्दोरिति—इन्दोश्चन्द्रस्य कराग्रपातैः किरणाग्रपातैः पूर्वापराधस्मृतयो विनेशुः विनष्टाः, तथा प्रियस्यापि कराग्रपातैः नखक्षतैः तथार्द्रभावैः द्रवस्वरूपैः, कस्य ? मदस्य तथा चित्तस्य मनसः आर्द्रभावैः सदयभावैः, अत एव अबलानां कामिनीनाम् अपरं द्वितीयं जन्म जातमिव[2] ॥५७।

प्रतिमितविधुबिम्बसीधुपानादिव वदनं विशदारुणं वधूनाम् ।
श्रमजललुलितभ्रुकोपशङ्कानतशिरसः किल कामिनश्चकार ॥५८॥

प्रतीति—किलेति वाक्यालङ्कारे वधूनां कामिनीनां वदनं कामिनः कामुकान् कोपशङ्कानतशिरसः कोपभ्रान्तिनम्रमस्तकान् चकार कृतवत्, कथम्भूतं वदनम् ? श्रमजललुलितभ्रु स्वेदजलकलुषितभ्रु पुनः विशदारुणं विशदं च तत् अरुणं च विशदारुणम्, कस्मादिव ? प्रतिमितविधुबिम्बसीधुपानादिव अत्र प्रतिभावो विभाव्यते प्रतिबिम्बितचन्द्रबिम्बाद्विशदं मद्यास्वादनादरुणं युगपद्द्वयोः पानाद्विशदारुण-मिति[3] ॥५८॥

स्वच्छवृत्ति रसिकं मृदु चार्द्रं तत्तथापि मधुमानवतीनाम् ।
रूपयौवनमदस्य विकारैर्मत्तमत्तमिव विप्रललाप ॥५९॥

स्वच्छेति—तन्मधु मद्यं तथापि विप्रललाप विप्रलापितवान्, किमिवोत्प्रेक्षितम् ? रूपयौवनमदस्य

लम्बी-लम्बी साँसोंके आघातसे तरंगित मदिराको योद्धाओंने रत्नजटित कम्बलोंपर बैठकर पिया था ॥ ५५ ॥

मदिरा कमलकी सुगन्धिको और चन्द्रमाकी कान्तिको नीचा दिखा सकती है क्योंकि ये दोनों उतर जाते हैं। किन्तु मदिराकी स्वयं स्थिति क्या है ? तथा मदन की क्या है ? क्योंकि कामदेवके कारण ही मदिरापानका अवसर अत्यन्त मोहक हो जाता है ॥ ५६ ॥

चन्द्रमाकी किरणों ( करों ) के ऊपर पड़ने तथा वल्लभके नखक्षतों ( कराग्र ) के द्वारा, तथा मदिराकी द्रुतता और चित्तकी सदयताके कारण कामिनियाँ प्रेमियोंके पुराने अपराधोंको भूल ही गयी थीं । मानो उनका दूसरा जन्म ही हो गया था ॥ ५७ ॥

चन्द्रमाकी परछाँही पड़नेसे निर्मल कान्तियुक्त तथा मदिरा पीनेके कारण लाल एवं थकानके पसीनेसे गीली-गीली भृकुटियुक्त बहुओंके झुके हुए मस्तकको देखकर कामियों-को ऐसा लगा था कि वे रुष्ट तो नहीं हो गयी हैं ॥ ५८ ॥

---

१. स्वागता वृत्तम् । २. उपजातिश्छन्दः । ३. पुष्पिताग्रावृत्तम् ।

विकारैः मत्तमत्तमिव, कासाम् ? मानवतीनाम्, यद्यपि स्वच्छवृत्ति तथापि रसिकं रसोऽस्यास्तीति रसिकं रसवत् तथा मृदुशरीरमार्दवविधायित्वात् तत्तथोक्तं तथा आर्द्रं द्रवरूपत्वात् तथोक्तम्[1] ॥५९॥

मानो व्यतीतः कलहं व्यपेतं गतानि गोत्रस्खलितच्छलानि ।
गुरून्प्रहारान्मधु सन्दधीत क्षतं पुनः कामिषु तत्कियद्वा ॥६०॥

मान इति—मानो व्यतीतः कलहं व्यपेतं तथा गोत्रस्खलितच्छलानि नामस्खलितदम्भाः गतानि तथापि मधु गुरून् प्रहारान् सन्दधीत तत्क्षतं कियद्वा स्यात् पुनः, केषु ? कामिषु कामुकेषु[2] ॥६०॥

परिपीडितमुक्तमङ्गनायाः परिरम्भेषु चिरादिव प्रियेण ।
हृदयोच्छ्वसितोष्मणा सहैव प्रतिसर्पत्कुचयुग्ममुन्ममज्ज ॥६१॥

परीति—अङ्गनायाः प्रशस्तमङ्गमस्याः पामादित्वान्न अङ्गना तस्याः कामिन्याः कुचयुग्मं स्तनद्वन्द्वम् उन्ममज्ज उन्नाम उन्नमितम्, कथम्भूतं कुचयुग्मम् ? परिरम्भेषु आलिङ्गनेषु प्रियेण परिपीडितं पश्चान्मुक्तम्, किं कुर्वदिव ? प्रतिसर्पदिव, कथम् ? चिराद्बहुतरकालेन, कथम् ? सहैव सार्द्धमेव, केन ? हृदयोच्छ्वसितोष्मणा[3] ॥६१॥

निरुत्तरां कर्तुमनिस्त दोषी योषामुपालिप्सुरनेकमागः ।
वाक्कर्मणोरन्यतरस्य मोहमन्यस्य रक्षत्यथवावबोधः ॥६२॥

निरुत्तरामिति—अनिस्त चुचुम्ब, कोऽसौ ? दोषी, काम् ? योषां वल्लभाम्, किं कर्तुम् ? निरुत्तरां कर्तुम्, कथम्भूतो दोषी दोषवान् वल्लभः ? उपालिप्सुः प्रोञ्छितुमिच्छुः, किम् ? आगोपराधम्, कथम्भूतम् ? अनेकं नानाविधम्. अथवा युक्तमेतत्, वाक्कर्मणोर्मध्येऽन्यतरस्य एकस्य मोहमन्यस्याश्यामपरस्यावबोधो ज्ञानं रक्षतीति[4] ॥६२॥

---

यद्यपि मदिरा अत्यन्त स्वच्छ थी, रसीली थी, कोमल ( हलकी ) थी और शीतल थी तथापि मानवती ( रुष्ट ) नायिकाओंके सौन्दर्य, यौवन और अहंकारके आवेशके कारण अत्यन्त उन्मत्तके समान अनर्गल आलापका कारण हुई थी ॥ ५९ ॥

धीरे-धीरे रोष शान्त हो गया था, कलह समाप्त हो गयी थी तथा दूसरे नायक-नायिकाका नाम लेकर चिढ़ानेकी प्रक्रिया भी नहीं चल सकी थी । मदिराके आवेशमें कामी युगल परस्परमें पूरी शक्तिसे उलझ रहे थे । ऐसी स्थितिमें दन्तक्षत और नखक्षतकी चिन्ता ही किसे थी ॥ ६० ॥

आलिंगनके समय प्रीतमके द्वारा पहले दबाया गया और बादमें छोड़ दिया गया कल्याणाङ्गी नायिकाका कुचयुगल हृदयके उच्छ्वासकी उष्माके साथ-साथ फैलते हुए के समान ही काफी देरमें ऊपर उठा था ॥ ६१ ॥

अनेक अपराधोंके कारण दोषी प्रीतमने अपने अपराधोंको क्षमा करानेकी इच्छासे अपनी प्रियतमाका चुम्बन कर लिया था ताकि वह कुछ कह न सके । उचित ही है वचन और कर्ममें-से किसी एकके मोहको दूसरेकी जाग्रति छिपा देती है ॥ ६२ ॥

---

१. विद्युत इति शेषः—प० द०, स्वागतावृत्तम् । २. उपजातिर्वृत्तम् । ३. औपच्छन्दसिकं वृत्तम् । ४. उपजातिर्वृत्तम् ।

मध्यस्थितं मण्डलधर्मबद्धं मित्रं जिगीष्वोरिव पीड्यमानम् ।
सन्देहभावि स्तनचक्रमासीत् साधारणं तत्प्रिययोर्मुहूर्तम् ॥६३॥

मध्येति—आसीत् सञ्जातं किम् ? तत् स्तनचक्रम्, कथम्भूतम् ? सन्देहभावि-संशयरूपम्, कियत्कालम् । मुहूर्तं क्षणम्, कथम्भूतं सत् ? साधारणम्, कयोः ? प्रिययोः वल्लभयोः, किमिव ? जिगीष्वोमित्रमिव, किं क्रियमाणम् ? पीड्यमानम्, कथम्भूतं सत् ? मध्यस्थितम् अन्तरालगतम्, पुनः मण्डलधर्मबद्धं देशधर्मबद्धम् ॥६३॥

आलिङ्ग्य गाढं मधुरं ध्वनन्ती मुखे मुखं न्यस्य वधूः प्रियस्य ।
विस्मृत्य कर्णान्तरमुन्मदत्वादास्ये जपन्तीव बभौ रहस्यम् ॥६४॥

आलिङ्ग्येति—बभौ शोभिता, का ? वधूः, किं कुर्वती ? गाढमालिङ्ग्य ध्वनन्ती कूजन्ती, कथं यथा भवति ? मधुरं कर्णकुहरसुखदम्, किं कृत्वा ? पूर्वं न्यस्यारोप्य, किम् ? मुखं, क्व ? मुखे, कस्य ? प्रियस्य वल्लभस्य किं कुर्वतीवोत्प्रेक्षिता ? आस्ये मुखे रहस्यं जपन्तीव निरूपयन्तीव, किं कृत्वा ? विस्मृत्य किम् ? कर्णान्तरम्, कस्मात् ? उन्मत्तत्वादुन्मत्तताया इति शेषः ॥६४॥

किमु मधुरसितां मुखात्प्रियां प्रशमयितुं रसमुत्पिबन्निव ।
अविरतिरुतनिंसनच्छलादजनि जनः सकलां गिलन्निव ॥६५॥[1]

किमिति—उ अहो किमिति प्रश्ने, अजनि संजातः, कोऽसौ ? जनः, किं कुर्वन्निव ? उत्पिबन्निव ऊर्ध्वमास्वादयन्, कम् ? रसं मद्यस्वभावम्, कस्मात् ? मुखात्, किं कर्त्तुमिव ? प्रियां प्रशमयितुमिव, कथम्भूताम् ? मधुरसितां मधुमत्तां किं कुर्वन्निव ? प्रियां गिलन्निव कथम्भूताम् ? सकलां साङ्गोपाङ्गतया समस्ताम्, कस्मात् ? अविरतिरुतनिंसनच्छलात् रुतं रतिकूजितं निंसनं चुम्बनं न विद्यते विरतिर्ययोस्ते अविरतिनी रुतं च निंसनं च रुतनिंसने अविरतिनी च ते रुतनिंसने च ते तथोक्ते तयोः छलाद् व्याजात् ॥ ६५ ॥

दोनों प्रेमियोंके आलिंगनके समय बीचमें दबा वर्तुलाकार स्वाभाविक स्तनचक्र क्षण-भरके लिए सन्देहमें पड़ गया था क्योंकि वह दो विजेताओंके मध्यस्थ मित्रकी स्थितिमें था [ मित्र-मण्डलके कर्त्तव्योंकी भावनासे प्रेरित संघर्षरत दोनों पक्षोंका मित्र राजा जब संघर्ष रोकनेके लिए मध्यस्थ बनता है तो उसे दोनोंके आक्रमण सहने पड़ते हैं। तथा कुछ समय दोनों ही उसपर शंका करते हैं ] ॥ ६३ ॥

प्रियतमका गाढ़ आलिंगन करके मधुर-मधुर गुनगुनाती वधूने उसके मुखमें अपना मुख डाल दिया था। और आनन्दके अतिरेकमें बेसुध होकर कान तथा मुखका अन्तर भूलकर वह मुखमें ही गुप्त बात कहती-सी लग रही थी ॥ ६४ ॥

मद्यपानके कारण रतिकेलिमें मस्त प्रियाको शान्त करनेके लिए उसके मुखमें मुख डालकर रति-रसको पीते हुए के समान, प्रेमी ऐसा लगता था कि वह पूरीकी पूरी प्रियतमाको ही निगले जा रहा है। क्योंकि रति-सुखमें लीन प्रियाकी भी मधुर गुनगुनाहट और चुम्बन शान्त हो गये थे ॥ ६५ ॥

अपने स्तनों तथा जंघाओंके विपुल भारके कारण भारी, प्रेयसी प्रेमीके विशाल शरीरमें समा गयी थी। किन्तु प्रकृतिसे चंचल तथा सब प्रकारसे छलिया प्रेमीके मनमें यह प्रेमिकाका शरीर कहाँतक और कितना समाता है यही प्रश्न था ॥ ६६ ॥

---

१. अपरवक्त्रम् वृत्तम्, तल्लक्षणं तु—"अयुजि नन रला गुरुः समे नृजमपरवक्त्रमिदं ततो गरौ" [ वृ० र० ४।९ ] ।

स्तनजघनभरेण भूरिणा दयिततनौ दयिता ममौ गुरुः।
पृथुनि निजचले बहुच्छले मनसि हि माति कियत्यसौ तनुः ॥६६॥

स्तनेति—दयिता वल्लभा दयिततनौ वल्लभमूर्तौ ममौ अवकाशं लेभे, कथम्भूता ? भूरिणा गुरुणा स्तनजघनभरेण कुचनितम्बभारेण गुरुः, युक्तमेतत्, हि यतः कियती तनुरसौ माति क्व ? मनसि कथम्भूते ? पृथुनि विस्तीर्णे पुनः, निजचले स्वतश्चपले, पुनः बहुच्छले प्रचुरप्रपञ्चे इति ॥६६॥

क्षेपयन्निव मुखामुखिमानं मानसीं कलुषतां कुसुमेषोः।
संविभाषिषुरिवासवमत्तश्चुम्बनेषु रमणः क्वणति स्म ॥६७॥

क्षेपयन्निति—रमणो वल्लभः क्वणति स्म कूजति स्म, किं कुर्वन्निव ? मानं क्षेपयन्निव, त्याजयन्निव चुम्बितुमहं कुशलो भवामीत्यहङ्कारं क्षेपयन्निवेत्यर्थः, केषु ? चुम्बनेषु, कथं यथा भवति ? मुखामुखि मुखेन मुखेन आश्रित्य इदं प्रवृत्तं मानक्षेपणकर्म, किं कुर्वन्निव ? संविभाषिषुरिव संभाषितुमिच्छन्निव, काम् ? कुसुमेषोः स्मरस्य मानसीं चित्तोद्भवां कलुषताम्, कथम्भूतो रमणः ? आसवमत्तः[1] ॥६७॥

कोपाश्रुभिः कालवणैः परीतः स्याद्वा स लावण्यमयः प्रियोष्ठः।
कुतोऽन्यथा तं पिबतामुदन्या माधुर्यवत्प्रत्युत हन्ति तृष्णाम् ॥६८॥

कोपेति—यः पूर्वं मधुरमधुरमिति कृत्वा स्वादितः स प्रियोष्ठ, अत्र प्रियोष्ठयोर्विकास्यत्वादेकवद्भावः। लावण्यमयो वा लावण्यनिर्मित इव स्यात्, कथम्भूतः ? कोपाश्रुभिः कोपवशात् प्रवृत्तनेत्रजलैः परीतो व्याप्तः सिक्त इत्यर्थः, कथम्भूतैः सद्भिः ? कालवणैः ईषत्क्षारैरत्र कोपाश्रुसिक्तत्वादीषल्लवणत्वममृतमयत्वात् मधुरमाधुर्यं चास्ति "प्रियोष्ठोऽमृत" इति श्रुते, ईषल्लवण(ेन) संस्कृतो मधुररसोऽमृतमेव स्यात् चिरं-तनस्यास्वाद्यमानत्वात्केवलो हि मधुररसो विरसतां रसनायामुत्पादयति अचिरमास्वादने तस्य विरस्य-मानत्वादिति भावः अन्यथा यद्येवं विधो न स्वरूपेण स्यात्तदा कुतः कस्मादुदन्या पिपासा तृष्णामभिलाषं हन्ति, केषाम् ? कामुकानां, किं कुर्वतां सताम् ? माधुर्यवत् माधुर्यमिव प्रत्युत विशेषतः प्रियोष्ठं पिबताम्[2] ॥६८॥

प्रथममधरे कृत्वा श्लेषं व्रणं निदधे वधू-
रतिविनिमयः प्रीतेनायं कुतोऽप्यनुशय्यते।
स्वयमिति भयात्सत्यंकारं प्रदातुमिवोद्यता
ननु च सबलाः कृत्ये नाम्ना भवन्त्यबलाः स्त्रियः ॥६९॥

---

आसव पीनेके कारण मस्त प्रेमी अपने मुखसे प्रियाके मुखपर चुम्बन करते-करते कूंज उठा था। मानो वह कामदेवके मनकी कालिमाको फेंकने को दृष्टिसे वार्तालाप ही करनेको तैयार था ॥ ६७ ॥

बहुत थोड़े नमकीन प्रेम-कोपके आंसुओंसे भीगा प्रेमिकाका ओठ अत्यन्त सुन्दर ( हलका नमकीन होनेसे सुस्वादु ) हो गया था। यदि ऐसा न होता तो उसे पीनेवाले प्रेमियोंकी (प्रेमकी) प्यास उसी प्रकार क्यों शान्त होती जैसी मधुर पानसे होती है ॥ ६८ ॥

प्रसन्न पतिदेव किसी कारणसे प्रेम-क्रीड़ाके अपरिवर्तनको लेकर पश्चात्ताप न करें इस भयसे तथा ठीक तौरसे प्रतिफल देनेकी इच्छासे ही प्रेमिकाने स्वयं पतिका आलिंगन

---

1. स्वागता वृत्तम्।
2. उपजातिश्छन्दः।

प्रथममिति—विदधे निखातवती, का ? वधूः कामिनी, कम् ? व्रणं दन्तक्षतम्, क्व ? अधरे दन्तच्छदे, किं कृत्वा ? पूर्वं चापलेषमालिङ्गनं कृत्वा, कथं यथा भवति आलिङ्गनकर्म ? प्रथमं प्राक्, केवोत्प्रेक्षिता ? उद्यतेवोद्यमवतीव, किं कर्तुम् ? प्रदातुम्, कम् ? सत्यंकारम्, कस्मात् ? भयात्, कथम् ? इति कृत्वा दर्शयति कुतोऽपि कस्मादप्यनुशय्यते पश्चात्तापविषयीक्रियते, कोऽसौ ? अयमतिविनिमयः पुरुषसंभोगैकगुणस्य स्त्रियाः पुरुषायितसंभोगो द्विगुणस्त्रिगुणो वा स्त्रीपुरुषाश्रितसम्भोगैकगुणस्य पुरुषसद्भाषणाद्गुणोपाधिपस्य विनिमयः, केन ? प्रीतेन हृष्टेन वल्लभेन, (वल्लभेन) कथम् ? स्वयमात्मना, युक्तमेतत्, ननु अहो भवन्ति, काः ? स्त्रियः, कथम्भूता ? अबलाः, केन ? नाम्ना भवन्ति, सबलाश्च, क्व ? कृत्ये कर्मणीति[1] ॥६९॥

चित्तं चित्तेनाङ्गमङ्गेन वक्त्रं वक्त्रेणांसेनांसमत्यूरुणोरुम् ।
एकं चक्रुः सर्वमात्मोपभोगे कान्ताः पङ्क्तौ हन्त लज्जां ववञ्चुः ॥७०॥

चित्तमिति—चित्तं चित्तेन अङ्गम् अङ्गेन वक्त्रं वक्त्रेण अंसं स्कन्धं अंसेन स्कन्धेन ऊरुणा ऊरुम् अपि एतत्सर्वं च एकम् एकतां नीतं चक्रुः कृतवत्यः, काः ? कान्ताः क्व ? आत्मोपभोगे हन्त अहो ववञ्चुः त्यजन्ति स्म, काम् ? लज्जाम्, कस्यां सत्याम् ? पङ्क्तौ अङ्गीकारे[3] णोत्वमिति[4] । ७०॥

सहस्थितं विस्मृतमङ्गमंशुकं गतं पुनः किं सहजा सखीव सा ।
कदापि दृष्टेव न संस्तुतेव च त्रपा कुतस्त्यं कुपितं नतभ्रुवः ॥७१॥

सहेति—विस्मृतम्, किम् ? अङ्गम्, कथम्भूतम् ? सहस्थितम् एकत्रावस्थितम्, तथा गतम् अंशुकं क्षिप्तं वस्त्रं सहजा [5]सखीव वयस्येव लज्जा किं कदापि कस्मिंश्चित्काले दृष्टेव आसीत् न पुनः संस्तुतेव परिचयमागतेवासीत् न कुपितं कुतस्त्यम्[6] ॥७१॥

विलोकभावेषु सहस्रनेत्रतां चतुर्भुजत्वं परिरम्भणेऽभवत् ।
समागमे सर्वगतत्वमिच्छवः सुदुर्लभेच्छाकृपणा हि कामिनः ॥७२॥

विलोकभावेष्विति—कामिनः कामुकाः सुदुर्लभेच्छाः कृपणाः लम्पटाः अभवन् सञ्जाताः कथम् ?

---

कर लिया था तथा ओंठको काट लिया था। इस प्रकार काम-क्रीड़ामें सबला स्त्रियाँ नाममात्रके लिए ही अबला थीं ॥ ६९ ॥

अपनी भोग-क्रियामें लीन कान्ताने प्रियके चित्तमें चित्त, शरीरमें शरीर, मुखमें मुख, कन्धेपर कन्धा और जंघेसे जंघा समस्त बातोंको एकमेक कर दिया था। चिन्ताकी बात इतनी ही थी कि इस समय सबको श्रेणीमें उसने केवल लज्जाको छोड़ दिया था ॥ ७० ॥

रतिके अतिरेकके कारण झपकी आँखोंवाली कान्ता क्यों एकमेक हुए अंगोंको नहीं भूली थी ? क्या फिर उसका वस्त्र नहीं खिसक गया था ? अपितु ये दोनों बातें हुई थीं। हाँ, भली स्नेहमयी सखीके समान केवल लज्जा ही न तो कहीं दिखी थी और न कहीं उसकी चर्चा ही आयी थी। फिरसे रुष्ट होनेकी तो सम्भावना ही क्या थी ॥ ७१ ॥

कामी पुरुष स्तन, जंघादि उद्दीपन भावोंको देखनेके लिए हजारों आँखों चाहने लगे थे। आलिंगन करते समय दो भुजाओंसे तृप्ति न होनेके कारण चार भुजाएँ चाहते थे।

---

१. पाधिगुणोऽयं– द० अ०। २. हरिणी वृत्तम्। ३. णेप्यमिति– प० द०। ४. शालिनी वृत्तम्। ५. सखीव नयन्तः वयस्येव विफला जाता, किं दृष्टेवासीत् कदापि कस्मिंश्चित्काले पुनर्न संस्तुतेव न पुनः परिचयमागतेवासीत्त्रपा तथासति किं न पुनरिति सर्वत्र सम्बन्धो बोद्धव्य इति शेषः प० द०। 'सा' 'नतभ्रुवः' इत्यनयोः पदयोः सम्बन्धोऽर्थो वा न कस्मिन्नपि टीका पुस्तके उपलभ्यते'।
६. वंशस्थवृत्तम्।

हि स्फुटम्, किं कुर्वन्तः ? विलोकभावेषु स्तनजघनकक्षान्तरावलक्षणेषु दृश्यपदार्थेषु सहस्रनेत्रताम् इच्छवः अभिलषन्त. तथा परिरम्भणे आलिङ्गने चतुर्भुजत्वं समागमे सम्प्राप्तौ सर्वगतत्वमिति ॥७२॥

**बद्ध्वासवे प्रेमवधूः प्रियेऽपि त्रप्तुं न धातुद्वयबद्धमैच्छत् ।**
**अगूढभावापि ततो विकल्पात्पण्याङ्गनेव द्विमनी बभूव ॥७३॥**

बद्ध्वेति—नैच्छत वाञ्छितवती, का ? वधूः किं कर्तुम् ? त्रप्तुं तृप्तिं कर्तुम् आत्मनो लज्जितुं प्रियस्य, किं कृत्वा ? पूर्वं बद्ध्वा नियन्त्र्य, किम् ? प्रेम, क्व ? आसवे सुरायाम् अपि प्रयोगात् प्रिये वल्लभे, कथम्भूतं प्रेम ? धातुद्वयबद्धं तृप् प्रीणने त्रपूष् लज्जायां चेति यथाक्रमेण निर्मितम्, तथा द्विमनी-बभूव अद्विमना द्विमना बभूव द्विमनीबभूव चित्तद्वैतं गताभूदित्यर्थः, का ? वधूः कस्मात् ? विकल्पाद्भेदो-पलब्धेः, कस्मादपि विकल्पात् ? ततोऽपि प्रेम्णोऽपि, कथम्भूता भूत्वा ? अगूढभावा प्रकटभावा, केव द्विमनीव बभूव ? पण्याङ्गनेव वारवधूरिव । शेषं प्राग्वत्[1] ॥७३॥

**व्रीडावासः स्वान्तमङ्गं समस्तं कामार्त्तानां प्राप शैथिल्यमेका ।**
**स्वप्नेऽप्यासीन्नश्लथा बाहुपीडा युक्तं द्राघीयस्सु मूर्खत्वमाहुः ॥७४॥**

व्रीडेति—कामार्त्तानां कामेन आर्त्ताः कामार्त्ताः तेषां कामिनां सम्बन्धित्वेन व्रीडा लज्जा शैथिल्यं प्राप प्राप्तवती । तथा वासो वस्त्रं शैथिल्यं प्राप प्राप्तवत् । तथा स्वान्तं चित्तं शैथिल्यं प्राप समस्तम् अङ्गं शैथिल्यं प्राप । एका बाहुपीडा स्वप्नेऽपि श्लथा नासीन्नसंजाता, युक्तोऽयमर्थः, आहुर्वदन्ति वाग्चन्द्रचन्द्रिका-चकोरा विद्वांसः किम् ? द्राघीयस्सु दीर्घतरेषु मूर्खत्वं युक्तम् अतिदीर्घो मन्दबुद्धिरिति वचनात्[2] ॥७४॥

**रागं नेत्रे नैव चित्तं मुखं च स्त्रीणां पानान्मानजिह्मं जगाहे ।**
**द्वेधैकोऽभूद्बद्धपानोऽपि पाण्डुः कान्तास्योष्मस्वेदभावादिवोष्ठः ॥७५॥**

रागमिति—न केवलं नेत्रे एव रागं जगाहे, किं कर्तृ ? चित्तम्, कथम्भूतम् ? मानजिह्मम्, तथा च जगाहे, किं कर्तृ ? मुखम्, कम् ? रागम्, कासाम्, स्त्रीणाम्, कस्मात् ? पानात्, एकोऽप्योष्ठो द्वेधाऽभूत्, कथम्भूतः ? पाण्डुः शुक्लः, कस्मादिव ? कान्तास्योष्मस्वेदभावादिव वल्लभवदनोच्छ्वासघर्मत्वादिव,

और समागमके समय उद्यान, गुल्म, नदी तीर आदि सब स्थानोंपर जाना चाहते थे। उचित ही है क्योंकि कामार्त्त बड़े स्वार्थी होते हैं और दुर्लभ ( इन्द्रत्व, विष्णुत्व तथा सर्वव्यापकता ) पदार्थोंकी इच्छा करते हैं ॥ ७२ ॥

पहले आसव पानमें आसक्त होकर फिर प्रीतमके प्रेममें विभोर होकर कुलवधूने क्या ( तृप् ) धातुके दोनों रूपोंको नहीं चाहा था ? [ अपितु चाहा था क्योंं आसव पानमें उसे तृप्ति न थी और पतिसे प्रेम करनेमें त्रपा नहीं थी ] अतएव दोनों भाव स्पष्ट हो जानेसे तथा विकल्प न रहनेसे वह वेश्याके समान दोको चाहनेवाली ( द्विमनी ) हो गयी थी ॥ ७३ ॥

कामातुर युगलोंकी लज्जा, कपड़े, अन्तरंगकी रिरंसा ही शिथिल नहीं हुए थे अपितु समस्त अंग भी क्लान्त हो गये थे। थक कर सो जानेपर भी केवल भुजपाश ढीले नहीं पड़े थे। उचित ही है क्योंकि बहुत विशाल (-काय ) मूर्ख ही होते हैं ॥ ७४ ॥

प्रेमासक्ति तथा लालिमा केवल नेत्रोंमें ही नहीं आयी थी अपितु अधरादि पानके कारण मानसे कुटिल स्त्रियोंके मुख तथा चित्तमें भी व्याप्त हो गयी थी। बार-बार पिये जाने पर भी केवल अधर ही के दो रूप ( द्विविधा ) हुए थे क्योंकि स्वरूपसे लाल होकर भी वह

---

१. उपजातिश्छन्दः । २. शालिनीवृत्तम् ।

कथम्भूतः सन् ? बद्धपानः अधरस्यकपायेक्षया रक्तः पानवशात्पाण्डुश्चेति भावः ॥७५॥

**देहेषु भोगाय विभक्तिमागतैः प्राणेषु चैक्यं निजमेव कामिभिः ।**
**न क्वापि दृष्टा इव मानवृत्तयस्तत्पूर्वदृष्टा इव वल्लभाः परम् ॥७६॥**

देहेष्विति—न परं केवलमभूवन्, का ? मानवृत्तयः, का इव ? दृष्टा इव, कैः ? कामिभिः, क्व ? क्वापि कस्मिंश्चित् स्थानेऽपि, तथा अभूवन्, काः ? वल्लभाः कामिन्यः, कथम्भूता इव ? तत्पूर्वदृष्टा इव मानवृत्तिपूर्वदृष्टा इव, कैः ? कामिभिः, कथम्भूतैः ? आगतैः काम् ? विभक्तिं भेदम्, केषु ? देहेषु शरीरेषु, कस्मै ? भोगाय अकृत्वन्दनानुशीलनाय, तथा आगतैः किम् ? ऐक्यमेकीभावं समरसीभावमित्यर्थः, कथम्भूतम् ? निजमात्माधीनम्, केष्वेव ? प्राणेष्वेव[1] ॥७६॥[2]

**असंमनन्ती व्यवधानमक्ष्णोरीचिक्षिषुः पक्ष्म कुचद्वयं च ।**
**चित्तव्यवायं परिरिप्सुरीशं प्राणत्प्रिया कान्तरिता प्रियेण ॥७७॥**

असंमनन्तीति—का प्रिया प्राणत् जिजीव अपितु न कापि, कथम्भूता सती ? प्रियेण अन्तरिता व्यवहिता, किं कुर्वती सती ? असंमनन्ती अनिच्छन्ती असूयन्ती, किम् ? पक्ष्म नेत्रपत्ररोम, कथम्भूतम् ? व्यवधानम्, कयोः ? अक्ष्णो लोचनयोः, कथम्भूता सती ? ईचिक्षिषुः अवलोकितुमिच्छन्ती, तथा किं कुर्वती ? कुचद्वयं स्तनद्वयम् असंमनन्ती, कथम्भूतम् ? चित्तव्यवायं चित्तस्य व्यवायो यस्य तत् मनो व्यवधानमित्यर्थः, कथम्भूता सती ? परिरिप्सुरालिङ्गितुमिच्छन्ती, कम् ? ईशं स्वामिनमिति[3] ॥७७॥

**तुल्यमिवोभयरसं मदिरां दयितोष्ठमप्यभिपिबन्दयितः ।**
**अधरस्य नाल्पमपि सीधुनि तन्मधुनोऽधरेऽधिकमलब्धरसम् ॥७८॥**

तुल्यमिति—तत् तस्मात् कारणात् दयितो वल्लभः अधरेऽधिकं रसम् अलब्ध प्राप्तवान्, कस्मादधिकम् ? मधुनो मद्यात् सीधुनि मद्येऽधरस्य अल्पमपि रसं नालब्ध, किं कुर्वन् ? मदिरां तथा दयितोष्ठमपि अभि पिबन् सन्, किं कुर्वन्निव ? उभय रसं मदिराया दयितोष्ठस्यापि तुल्यमिवेति[4] ॥७८॥

---

परस्परकी उष्ण श्वास लगनेके कारण सफेद भी हो गया था ॥ ७५ ॥

संभोगके लिए ही अलग-अलग शरीरोंका अनुभव करते हुए तथा प्रेमातिरेकके कारण स्वयमेव एक प्राण हुए कामियोंमें, रूठना ऐसा लगता था मानो पहले कभी उसे देखा-सुना ही नहीं है । और इसके बहुत पहलेसे ही उन्होंने केवल वल्लभाको ही देखा-सुना है ॥ ७६ ॥

सतत देखनेके लिए आतुर नायिका पलक मारनेके व्यवधानको भी नहीं सह सकती थी । गाढ़ आलिंगनके लिए उत्सुक नायिका कुच युगलको हृदय-मिलनमें बाधक मानती थी । अतएव प्रियसे दूर हुई कौन प्रिया वहाँ जीवित थी ? अर्थात् कोई भी नहीं ॥ ७७ ॥

तुलना करनेकी दृष्टिसे ही प्राणवल्लभ मदिरा और प्रेमिकाके अधरके रसका पान कर रहा था । किन्तु मदिरामें उसको अधर रसका जरा भी स्वाद नहीं आया था और अधरके पानमें मदिरासे बहुत अधिक स्वाद आया था ॥ ७८ ॥

---

१. प्राणेष्वप्राणेष्विति- प० । २. इन्द्रवंशावृत्तम् तल्लक्षणं तु 'स्यादिन्द्रवंशाततजैरसंयुतैरिति' ( वृ० र० २।४८ ) । ३. उपजातिश्छन्दः । ४. प्रमिताक्षरा वृत्तम् ।

घनयोः स्तनयोः स्मरेण तन्व्याः परिणाहं परिमातुमुन्नतिं च ।
[1]रचितेव रसेन सूत्ररेखा नखलेखा विरराज कुङ्कुमस्य ॥७९॥

घनयोरिति—नखलेखा विरराज शुशुभे, केव ? सूत्ररेखेव, कथम्भूता ? स्मरेण मदनेन, रचिता विहिता, केन कृत्वा ? कुङ्कुमस्य रसेन, किं कर्तुम् ? तन्व्यास्तरुण्या घनयोर्निबिडयोः स्तनयोः परिणाहं वर्तुलत्वं तथा उन्नतिम् उत्सेधं परिमातुम् ॥७९॥

इत्याशंसुर्नाभिगन्धं मृगाणामन्यद्रागं वीक्ष्य बालामुखस्य ।
नामोदो मे हा मृगस्यापि नाभेरित्यङ्कात्मव्यङ्कमाधादिवेन्दुः ॥८०॥

इतीति—हा कष्टम् इन्दुः चन्द्रः अङ्कात्मव्यङ्कं लाञ्छनस्वरूपं कलङ्कम् आधादिव धृतवानिवोत्प्रेक्षितः नाभिगन्धं कस्तूरीम् आशंसुरिव श्लाघमान इव, केषाम् ? मृगाणां हरिणानाम्, किं कृत्वा ? पूर्वं वीक्ष्यावलोक्य, कम् ? अन्यद्रागम् अन्यश्चासौ रागस्य अन्यद्रागस्तम् अपूर्वशोभाम्, कस्य ? बालामुखस्य नारीवदनस्य, कथमितिहेतोः कथमिति कृत्वा प्रदर्श्यते नास्ति कोऽसौ ? आमोदः, कस्याः ? नाभेः, कस्यापि ? मृगस्यापि, कस्य ? मे ममेति[2] ॥८०॥

ग्लानिं मुक्तामण्डपे तन्तुजालं व्यासीदन्तश्चन्द्रकान्ताः करेण ।
राज्ञां भोगे सुस्रुवन्तोऽपरोधं रोद्धुं चन्द्रेणाभिनुन्ना इवासुः ॥८१॥

ग्लानिमिति—आसुः प्रद्योतन्ते स्म, के ? चन्द्रकान्ताः चन्द्रकान्तमणयः किं कुर्वन्तः ? व्यासीदन्तः गच्छन्तः, किम् ? तन्तुजालं तन्तुसमूहम्, केन ? करेण किरणेन अत्र जात्यपेक्षयैकवचनम्, एकैकेन करेण तन्तुजालं प्राप्य किरणसन्दोहं प्राप्नुवन्त इत्यर्थः, कस्मिन् ? मुक्तामण्डपे मौक्तिकजनाश्रये, कथम्भूताः सन्तः ? सुस्रुवन्तो बिन्दुशो जलं मुञ्चन्तः, कथं यथा भवति ? अपरोधं निरर्गलम् कथम्भूता इवोत्प्रेक्षिताः ? अभिनुन्ना इव सामस्त्येन प्रेरिता इव, केन ? चन्द्रेण किं कर्तुम् ? ग्लानिं श्रमं भोगे सुरतव्यापारे रोद्धुम्, केषाम् ? राज्ञां नरेन्द्राणाम् ॥८१॥

अरण्यवृत्तेरुदवासकर्मणः स पुष्पभाराहरणाच्च मारुतः ।
श्रमं विनिन्ये परिरम्य कामिनीस्तयोऽन्तरेणासुलभा हि तादृशः ॥८२॥

---

स्तनोंके चारों ओर लगी नखक्षतकी रेखाएँ ऐसी प्रतीत होती थीं मानो कामदेवने तन्वी नायिकाके कठोर और सघन स्तनोंकी गोलाई तथा ऊँचाई नापनेके लिए ही कुंकुमसे रंगे सूतके द्वारा रेखाएँ खींच दी हैं ॥ ७९ ॥

यौवनके मध्यमें स्थित इस नायिकाके मुखकी अभूतपूर्व कान्तिको देखे बिना ही चन्द्रमा पहिले कस्तूरी मृगोंकी नाभिकी सुगन्धिकी प्रशंसा करता था। किन्तु इसे देखनेके बाद वह बोल उठा, "मुझे कस्तूरीकी सुगन्धि अच्छी नहीं लगती" और इसी पश्चात्तापमें उसने कलंकको धारण कर लिया था ॥ ८० ॥

मुक्ता मालाओंसे सुसज्जित केलि-मण्डपमें अपनी किरणोंके जालको फैलाते हुए तथा बूँद-बूँद करके अनवरत पसीजते हुए चन्द्रकान्त मणि ऐसे लगते थे मानो राजाओंकी भोग क्रियामें थकावट अथवा उदासीनताको दूर करनेके लिए ही चन्द्रमाने इन्हें पूर्ण प्रेरणा करके भेजा है ॥ ८१ ॥

---

१. औपच्छन्दसिकं वृत्तम् । २. शालिनी वृत्तम् ।

अरण्येति—मारुतो वायुः कामिनीः श्रमं खेदं विनिन्ये परित्याजितवान्, किं कृत्वा ? पूर्वं परिरभ्यालिङ्ग्य, कस्याः सकाशात् ? अरण्यवृत्तेर्वनवर्तनात्तथोदवासकर्मणो जलस्थितिविधानात् तथा पुष्पमाराहरणाच्च कुसुमनिकरानयनात् च एतेन मन्दत्वशीतलत्वसुरभित्वलक्षणैस्त्रिभिर्गुणैः श्रमं निराकृतवान् वातो नारीरालिङ्ग्येति भावो विभावितः युक्तमेतत्तयोऽन्तरेण तपश्चरणं विना तादृशः कामिन्योऽसुलभा-दुर्लभा भवन्ति, कथम् ? हि स्फुटमिति शेषः[1] ॥८२॥

इति विविधरतेन राजलोकैः क्षणमिव न क्षणदा गतापि जज्ञे ।
शशिनि शशकदर्शनस्य शङ्कां स्वमनसि मानयितुं कृतत्वरेव ॥८३॥[2]

इतीति—राजलोकैः नरेन्द्रजनैः, क्षणदा रात्रिः, विविधरतेन नानाप्रकारसम्भोगक्रीडया इति श्यावर्णनप्रकारेण क्षणमिव मुहूर्तमिव गतापि न जज्ञे न ज्ञाता, कथम्भूता ? कृतत्वरा विहितवेगा, किं कर्तुमिव ? मानयितुमिव संभावयितुमिव, काम् ? शङ्कां वितर्कम्, क्व ? स्वमनसि स्वकीयचित्ते, कस्य ? शशकदर्शनस्य क्व ? शशिनि चन्द्रे अत्र कलङ्किनः संसर्गात् सकलङ्को जनो भण्यते इत्यास्ताम्, "कलङ्किनः कलङ्कदर्शनादेव सकलङ्को जनो जायत" इति श्रुतेः, अयं शशी तावत् कलङ्की अस्य शशकस्तावत् कलङ्क एव तस्यावलोकनात् यावत्सकलङ्को न भविष्यामि तावद्गमिष्यामीति स्वचेतसि कृत्वा गन्तुमुत्सुकेव कृतत्वरेति भावोप्युपन्यस्तः[2] ॥ ८३ ॥

लघु मोदुगमद्युमणिरप्युदियादिति कान्तयोर्विरहकातरयोः ।
पततोश्च दोहदमिदं समभूद्विविधाथवा विषयिणां हि रुचिः ॥ ८४ ॥

लघ्विति—समभूत् सञ्जातम्, किम् ? इदं दोहदम्, कथमिति कृत्वा प्रकाश्यते, मोद्गमत् मोद्गच्छत्, कोऽसौ ? द्युमणिः सूर्यः, कथम् ? लघु शीघ्रम् कयोः ? कान्तः स्त्रीपुंसयोः, कथम्भूतयोः ? विरहकातरयोः वियोगभीतयोः, तथा च समभूत् किम् ? इदं दोहदम्, कथमिति कृत्वा प्रकाश्यते । उदियादाक्रमतात् उद्गच्छतात्, कोऽसौ ? द्युमणिः रविः, कथम् ? लघु इति कयोः ? पततोः चक्रवाकयोः कथम्भूतयोः ? विरहकातरयोः, युक्तमेतदथवा हि स्फुटं विविधा रुचिः स्यात्, केषाम् ? विषयिणामिति[3] ॥ ८४ ॥

---

वनवासी होकर ( मन्द ) पानीमें रहनेकी विधिको करके ( शीतल ) तथा पूजाके लिए फूलोंका चयन करके ( सुगन्धि ) आये हवाके झोकोंने कामिनियोंको चारों ओरसे घेर कर ( आलिंगन ) उनकी थकान ( पसीना ) दूर कर दी थी। उचित ही है क्योंकि वैसा तप ( वनवास, जलसमाधि और बलिदान ) किये बिना ऐसी कामिनियाँ कहाँ मिलती हैं ॥ ८२ ॥

उक्त प्रकारसे भाँति-भाँतिके भोगोंमें लीन राजाओंने कामोल्लासकी जननी पूरी रातको क्षण भरके समान जाते न जाना था। चन्द्रमामें कलंक ( शशक ) देखनेसे हम भी कलंकी हो जायेंगे, मनमें ऐसा भाव आनेके कारण उन्होंने जल्दी की थी अर्थात् पूरी रातको क्षण मान लिया था ॥ ८३ ॥

अनागत विरहसे डरे प्रेमी-प्रेमिकाका आनन्द थोड़ा हो गया था तथा भोगाभिलाषा समाप्त हो गयी थी क्योंकि सूर्य निकल रहा था। किन्तु रात भरके विरहसे दुःखी चकवा-चकवीको शीघ्र ही सूर्योदय होनेसे आनन्द हो गया था तथा मिलनकी कामना पूरी होनेकी आशा हो गयी थी। ठीक है विषयी लोगोंकी रुचियाँ अलग-अलग होती हैं ॥ ८४ ॥

---

१. वंशस्थ वृत्तम् ।
२. पुष्पिताग्रावृत्तम् । ३. प्रमिताक्षरा वृत्तम् ।

आश्लेषमन्तः क्वथनं प्रणामं कामोपदंशानि च चुम्बनानि ।
दृष्ट्वाङ्गनानामसहा निसोढुं हासादिवासौ स्फुटिता प्रभासीत् ॥ ८५ ॥

आश्लेषमिति—आसीत् सञ्जाता, का ? असौ प्रभा प्रभातम्, कथम्भूता ? हासादिव स्फुटिता, किं कुर्वाणा ? असहा असहमाना संवरितुमसमर्था, किं कर्तुम् ? निसोढुम्, किं कृत्वा ? पूर्वं दृष्ट्वा कम् ? आश्लेषमालिङ्गनं तथा प्रणामं प्रणतिम्, कथं यथाभवति ? अन्तःक्वथनम् अन्तःकरणपाकं तथा च चुम्बनानि, कथम्भूतानि ? कामोपदंशानि कन्दर्पव्यञ्जकानि, कासाम् ? अङ्गनानां कामिनीनामिति[1] ॥ ८५ ॥

अन्योन्यनिद्रावसरं प्रतीच्छद्‌द्वन्द्वं न सुष्वाप कृतावधानम् ।
अध्यात्मतत्त्वानि कषायिताक्षं जागर्यया ध्यायदिव स्मरस्य ॥८६॥

अन्योन्येति—न सुष्वाप न शेते स्म, किं कर्तृ ? द्वन्द्वं मिथुनम्, कथं यथा भवति ? कृतावधानं विहिततत्परत्वं यथा, किं कुर्वत् ? प्रतीच्छत् परस्परमभिलषदित्यर्थः कम् ? अन्योन्यनिद्रावसरं परस्परशयनप्रस्तावम्, कथम्भूतं ? कषायिताक्षं सरागलोचनम्, कया ? जागर्यया उन्निद्रतया, किं कुर्वदिव ? ध्यायदिव स्मरदिव, कानि ? अध्यात्मतत्त्वानि परमार्थरहस्यानि, कस्य ? स्मरस्य मदनस्य ॥ ८६ ॥

निधुवनमधुनिद्रामोदशेषैकभारं
पुनरुषसि स कामो योषितोऽङ्गं ललङ्घे ।
रुचिमपि विदधेऽस्याः क्षामभावं विनीय
प्रशमयति न कं वा लङ्घना शेषदोषम् ॥ ८७ ॥

निधुवनेति—ललङ्घे लङ्घितवान्, कोऽसौ ? स कामी किम् ? अङ्गम्, कस्याः ? योषितः कामिन्याः, कस्याम् ? उषसि प्रभाते, कथम्भूतमङ्गम् ? निधुवनमधुनिद्रामोदशेषैकभारं निधुवनं च मधु च निद्रा च निधुवनमधुनिद्राः सुरतमदिरास्वापास्तासां य आमोदो गन्धस्तस्य यः शेषः लेशः स एव एको भारो यस्मिंस्तत् अपि शब्दः समुच्चयार्थः, विदधे चकार, ?कः ? स कामी, काम् ? रुचिमभिप्रीतिम्, कस्याः ? अस्या योषितः, किं कृत्वा, ? पूर्वं विनीय अपाकृत्य, कम् ? क्षामभावं रतिश्रमम्, युक्तमेतत्, पुनः कं वाशेषदोषं लङ्घनाकर्त्री न प्रशमयति अपितु सर्वमपि[2] ॥ ८७ ॥

---

प्रेमिकाओंके बिदाईके आलिंगन, मन ही मनकी उदासी, अभिवादन, रतिके समयके उपदंश तथा चुम्बन आदिको बहुत समय तक देखकर और चुप रहनेमें असमर्थके समान सूर्य या प्रभात खिलखिलाता-सा निकल आया था ॥ ८५ ॥

रतजग्गा करके कामदेवके गूढ़ रहस्योंका पूरी तत्परताके साथ ध्यान करनेके लिए ही कामी मिथुन सोया नहीं था । एक दूसरेको सुलानेका प्रयत्न करते-करते इसकी आँखें लाल और किरकिरी हो गयी थीं [ ध्यानी भी द्विविधाको भुलाकर, सर्वथा सावधान होकर और आँखोंमें तीक्ष्ण ( कपूर आदि ) लगाकर रात भर जागता है । तथा आत्माके रहस्यकी चिन्ता करता है ] ॥८६ ॥

कामलीला, कादम्बरी और जागरणके आनन्दके एक मात्र भारसे भारिल कामिनी की कायलताको भी उषा कालमें कामी लाँघ ( जीत ) गया था । अतएव कोमलांगीकी थकानको दूर करके उसको प्रसन्न करनेका भी प्रयत्न कर रहा था । ठीक ही है लंघन

---

१. इन्द्रवज्रा वृत्तम् । २. मालिनी वृत्तम् ।

रात्रिवृत्तमलमेवमनूद्य त्वं वधूः खलु विलक्षय खलेति।
हुंकृतैः प्रतिहितोऽपि सखीभिः स्त्रीरतान्यधिजगौ शुकशावः ॥८८॥

रात्रीति—अधिजगौ अन्वादीत्, कोऽसौ ? शुकशावः कीरपिल्लः, कानि ? स्त्रीरतानि, कथम्भूतोऽपि प्रतिहतोऽपि प्रतिषिद्धोऽपि, काभिः ? सखीभिः वयस्याभिः, कैः कृत्वा ? हुंकृतैः, कथमिति कृत्वा प्रकाश्यते, एवं च सति हे शुकशाव ! अलमनूद्य त्वं मा अनुवादीर्मा अनुवदः, कोऽसौ ? त्वं भवान्, किम् ? रात्रिवृत्तं [1]रजनीवृत्तान्तम्, हे खल ! तथा खलु विलक्षय मा विलक्षय मा लज्जयेत्यर्थः, कोऽसौ ? त्वम्, का ? वधूः कामिनीरिति[2] ॥ ८८ ॥

सूर्योऽभ्युदेष्यति कदाजिभरोऽथवेति
ध्यायन्निवाश्वनिवहः स्तिमितान्तरात्मा।
पश्यन्निवाक्षिभिरसूचयदूर्ध्वसुप्तो
घोणापुटस्फुरणसूत्करणैर्विबोधम् ॥ ८९ ॥

सूर्य इति—असूचयत् निवेदितवान्, कोऽसौ अश्वनिवहः तुरङ्गसमूहः, कम् ? विबोधं प्रभातम्, कैः कृत्वा ? घोणा पुटस्फुरणसूत्करणैः नासापुटसञ्चरणसूत्करणैः, कथम्भूतः ? ऊर्ध्वसुप्तः[3] ऊर्ध्वनिद्राणः, कैः कृत्वा ? अक्षिभिर्लोचनैः, किं कुर्वन्निव ? पश्यन्निव कम् ? विबोधम्, पुनः कथम्भूतः ? स्तिमितान्तरात्मा निश्चलान्तरात्मा, किं कुर्वन्निव ? ध्यायन्निव, कथमिति कृत्वा प्रकाश्यते, कदा कस्मिन् काले अभ्युदेष्यति उद्गमिष्यति, कोऽसौ ? सूर्यः, अथवा कदा भविष्यति कोऽसौ ? आजिभरः सङ्ग्राम इति[4] ॥ ८९ ॥

नीत्वा पार्श्वेनोभयेनापि निद्रां युद्धोत्स्वप्नेनेव नागा विबुद्धाः।
शत्रोश्छत्रं हैममाशङ्क्य बालं हस्तावृत्त्याक्रष्टुमैच्छन्निवार्कम् ॥९०॥

नीत्वेति—नागा हस्तिनः, ऐच्छन् वाञ्छन्तिस्म, किं कर्तुमिव ? बालमर्कं सूर्यं हस्तावृत्या शुण्डादण्ड-परावर्तनेन आक्रष्टुमिव, किं कृत्वा ? पूर्वमाशङ्क्य, किम् ? छत्रम्, कथम्भूतम् ? हैमं हिरण्मयम्, कस्य ? शत्रोर्विपक्षस्य, किं विशिष्टा ? विबुद्धाः, केनेव ? युद्धोत्स्वप्नेनेव रणोद्गतस्वप्नेनेव, किं कृत्वा ? पूर्वं नीत्वा समाप्य, कम् ? निद्रां स्वापम्, केन ? पार्श्वेन, कथम्भूतेन ? उभयेनापि द्वयेनापीति शेषः[5] ॥ ९० ॥

---

( अवमर्दन ) करनेवाला कौन-सा ऐसा दोष है जिसे शान्त नहीं करता है ? अर्थात् सर्व दोषी होनेके कारण मालिश करके प्रायश्चित करता है ॥ ८७ ॥

'रातको जो हुआ उसकी पुनरावृत्ति रहने दो। हे खल ? तुम क्यों बहुओंको लज्जित कर रहे हो कह कर' सखियोंके द्वारा 'हूँ-हूँ' करके रोके जाने पर भी तोतेके बच्चेने स्त्रियों-की रतिकेलिको कह डाला था ॥ ८८ ॥

'सूर्य कब उगेगा अथवा घमासान युद्ध कब होगा' स्थिर चित्तसे यही सोचते हुए के समान खड़े-खड़े सोये घोड़ोंके समूहने आँखोंसे देखे गयेके समान नथुनोंकी फुंकारसे प्रातः-कालकी सूचना दी थी [ ध्यानलीन, अन्तरात्मामें मग्न योगी भी कर्म संग्रामके अन्तमें शुद्ध आत्मा रूपी सूर्यके उदयकी प्रतिभा करते हैं और मुक्त आत्मस्वरूपको साक्षात् आँखोंसे देखे गये समान करके कैवल्य प्राप्तिकी सूचना श्वासोच्छ्वास मात्रसे देते हैं ] ॥ ८९ ॥

दोनों करवट सो लेनेके बाद हाथियोंने स्वप्नमें युद्धको ही देखा था और चौंककर

---

१. रजनी चेष्टितं प० द०। २. स्वागता वृत्तम्। ३. उन्नतनिद्राणः—प; उन्निद्र नि—द०। ४. वसन्त-तिलका वृत्तम्। ५. शालिनी वृत्तम्।

लक्ष्मीं खलामुभयभागितया विलोलां
स्वीकर्तुमेष गणिकामिव जागरूकः ।
संनह्य मुञ्च शयनं प्रधनं जयेति
स्तुत्यै परं हरिरबोध्यत सूतपुत्रैः ॥ ९१ ॥

इति श्री द्विसन्धानकवेर्धनञ्जयस्य कृतौ राघव-पाण्डवीये महाकाव्ये
रात्रिसम्भोगवर्णनं नाम सप्तदशः सर्गः ॥

लक्ष्मीमिति—अबोध्यत प्रबोधितः, कोऽसौ ? कर्मतापन्नः ? एष हरिर्विष्णुः, कैः कर्तृभिः ? सूतपुत्रैः प्राभातिकमङ्गलपाठकपुत्रैः, कस्यै ? स्तुत्यै स्तवनाय, कथमिति कृत्वा प्रकाश्यते, हे देव ! मुञ्च अपाकुरु त्यजेत्यर्थः, किम् ? शयनं शय्यां तथा जय, किम् ? प्रधनं सङ्ग्रामम्, किं कृत्वा ? पूर्वं सन्नह्य सन्नहनं कृत्वा, कथम्भूतं प्रधनम् ? परं न्याय्यम्, अथवा परशब्देन केवलार्थो गम्यते, तेनायमर्थः परं केवलं स्तुत्यै सूतपुत्रैः हरिरबोध्यत इति लब्धम्, कथम्भूतो हरिः ? जागरूकः जागरणशीलः, किं कर्तुम् ? खलां प्रतारणपरां लक्ष्मीं स्वीकर्तुम्, कया ? उभयभागितया जिगीषुप्रतिजिगीषुद्वयजनितया, पुनः विलोलां चपलाम्, कामिव ? गणिकामिव वेश्याङ्गनामिव[1] ॥ ९१ ॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीडितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनय-
चन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भव-
चारुचातुरीचन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां द्विसन्धान-
कवेर्धनञ्जयस्य राघवपाण्डवीयापरनाम्नः काव्यस्य
पदकौमुदीनाम दधानायां टीकायां
रात्रिसम्भोगव्यावर्णनं नाम
सप्तदशः सर्गः ॥१७॥

---

जाग गये थे । तथा बाल ( उदीयमान ) सूर्यको शत्रुओंका सोनेका छत्र समझकर सूंड़ बढ़ा दी थी तथा इसे झटककर खींचनेका प्रयास कर रहे थे ॥ ९० ॥

उभय पक्षों ( राम-रावण तथा पाण्डव-कौरवों ) की ओर झुकती और पलटती फलतः विलोल तथा गणिकाके समान खल ( गुण-दोषके विवेकहीन ) लक्ष्मीको अपनी बनानेके लिए सदैव जागरूक हरि ( राम-कृष्ण ) भी बन्दियोंके द्वारा जगाये गये थे । वे कह रहे थे हे विष्णो ! शय्याको छोड़िए, युद्धवेषको धारण करिए और विनाशक तथा परम भूतिके साधक संग्रामको जीतिए ॥ ९१ ॥

इति निर्दोष विद्याभूषणभूषित पण्डितमण्डलीके पूज्य, षट्तर्क चक्रवर्ती श्रीमान्
पण्डित विनयचन्द्र गुरुके शिष्य—देवनन्दिके शिष्य, सकलकलाचातुर्य-
चन्द्रिका-चकोर नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघव-पाण्ड-
वीय नामसे ख्यात, द्विसन्धान काव्यकी पदकौमुदी नामक
टीकामें रात्रिसम्भोग वर्णन नामक सप्तदश सर्ग समाप्त ।

---

१. वसन्ततिलका वृत्तम् ।

# अष्टादशः सर्गः

प्रभावै रोचनीयस्य भीतेवोदेतुमोजसः ।
प्रभा वैरोचनी यस्य वीतोच्छ्वासेव चावनिः[1] ॥१॥

प्रभेति—इदानीं कुलकेन व्याक्रियते, बभूवेति क्रियाध्याहार्या, बभूव सञ्जाता, का ? वैरोचनी प्रभा भास्करीदीप्तिः, केव ? भीतेव, किं कर्त्तुम् ? उदेतुम्, कस्मात् ? ओजसः प्रतापात्, कस्य ? यस्य पुंसः, कथम्भूतस्य ? रोचनीयस्य भासनीयस्य दीप्रस्येत्यर्थः, कैः ? प्रभावैः माहात्म्यैः, तथा च बभूव का ? अवनिर्मेदिनी, केव ? वीतोच्छ्वासेव[2] गतोर्ध्वश्वासेवेत्यर्थः विषमपादाभ्यासो यमकः ॥१॥

तथापि स पुमानन्ते यद्व्यवस्थितमाकुलम् ।
सहास्य यशसा शुभ्रं यद्व्यवस्थित मा कुलम् ॥२॥

तथापीति—यद्यप्येवं यस्य प्रतापो विजृम्भते तथापि स पुमान् पुरुषो यत् यस्मात् कारणात् यद्यस्मात् पुरुषात्मा व्यवस्थित मातिष्ठत किम् ? कुलम्, कथम्भूतम् ? आकुलम्, कथम् ? सह सार्द्धम्, केन ? यशसा, क्व ? अन्ते अवसाने, कस्य ? अस्य पुंसः कथम्भूतं सत्कुलम् ? व्यवस्थितं विगतावस्था संजाता अस्य व्यवस्थितं तारकादित्वादितच् स्थिरास्थमित्यर्थः, पुनः शुभ्रम् । पादाभ्यासो यमकः ॥२॥

भवेयुरन्ते विरसाः समं देहा विभूतयः ।
राज्ञां माहंक्रिया भूवन्समन्देहाविभूतयः ॥३॥

भवेयुरिति—भवेयुः स्युः, के ? देहाः कायाः विरसाः, क्व ? अन्ते अवसाने, कथम् ? समं युगपत्, यतः यस्मात् तस्मात् मा भवन्तु, काः ? अहंक्रियाः अहङ्काराः, कथम्भूताः ? विभूतयो विनष्टा भुवः पृथिव्या ऊतिः प्रतिपालनं याभ्यस्ता विभूतयः, तथा मा भूवन् काः ? विभूतयः संपदः, कथम्भूताः ? समन्देहाः मन्दा चासावीहा च मन्देहा तया सह वर्त्तते इति समन्देहाः कार्पण्यवृत्तयः[3], केषाम् ? राज्ञां नरेन्द्राणामिति । पादाभ्यासो यमकः ॥३॥

---

प्रखर प्रतापी विष्णु ( राम-कृष्ण ) के माहात्म्यके कारण तथा उसके प्रज्वलित तेजके सामने सूर्यका प्रकाश उदयके समय ही डर गया था । तथा भयके कारण पूरी पृथ्वी की साँस ही रुक गयी थी ( क्योंकि सन्ध्या समयमें वायुका वेग रुक जाता है ) ॥१॥

तो भी यह पुरुषोत्तम चिन्ताकुल हो उठा था । क्योंकि [महासमरके] अन्तमें उसे व्यवस्थित, परम शुद्ध और अपने यशके आधार कुल धर्मकी अव्यवस्था ( संकर ) की आशंका हो उठी थी [ महायुद्धके बाद ऐसा होता है इसीलिए गीतामें अर्जुन भी महाभारत से काँप उठा था ] ॥२॥

अन्तमें पृथ्वीके पालनमें असमर्थ ( भू-उति-वि ) होकर शरीर भी नीरस हो जाता है इसलिए राजाओंको राज्यलक्ष्मीका अहंकार नहीं करना चाहिए तथा इसकी प्राप्ति की अभिलाषाको भी मन्द ही रखना चाहिये ॥३॥

---

१. सर्गेऽस्मिन्ननुष्टुप् वृत्तम् । २. वस्तस्येवेत्यर्थः—द० ज० । ३. यः परोपकाराप्रवृत्तयः प० । परोपकारानिष्ठा इत्यर्थः द० । परोपकारनिष्ठा इत्यर्थः ज० ।

उत्तरेऽर्थे कृतार्थत्वं नान्तराले कृते परम् ।
लज्जालुप्तोत्तरीयेण नान्तरीयेण केवलम् ॥४॥

उत्तर इति—न परं केवलमुत्तरेऽर्थे प्रयोजने कृते सति कृतार्थत्वं स्यात् अन्तराले मध्येऽर्थे कृते सति कृतार्थत्वं स्यात् युक्तमेतत् न केवलम् उत्तरीयेण वस्त्रेण लज्जालुता स्यात् अन्तरीयेण अधोवस्त्रेणैव स्यादिति । समपादादियमकः ॥४॥

स्थेयान्माहाकुलः स्वान्ते निजमालम्ब्य पौरुषम्
स्थेयान्माहा कुलः स्वान्ते भीतं मुञ्चति नान्तकः ॥५॥

स्थेयानिति—हा कष्टं मा स्थेयात् मा तिष्ठतु अपितु तिष्ठत्वेव, कोऽसौ ? माहाकुलः महच्च तत् कुलं च महाकुलं तत्र जातो माहाकुलः कुलीनः, कथम्भूतः सन् ? आकुलो व्यग्रः, क्व सति ? स्वान्ते आत्मावसाने, किं कृत्वा ? निजं स्वकीयं पौरुषम् आलम्ब्य धृत्वा, स्थेयान् स्थिरतरः, क्व ? स्वान्ते चेतसि, युक्तमेतत्, अन्तको यमः भीतं पुरुषं न मुञ्चति न त्यजति । विषमपादयमकः ॥५॥

स्थिरप्रकृतिरादेयः केषांचन न चञ्चलः ।
पिङ्गलोऽप्यर्च्यते काको मङ्गलार्थं न केनचित् ॥६॥

स्थिरेति—स्थिरप्रकृतिः निश्चलस्वभावः केषांचन केषांचिन्न आदेयः आप्यायनीयो न भवति, अपितु सर्वेषामेव भवति, न चादेयश्चञ्चलश्चपलः, युक्तमेतत्, मङ्गलार्थं पिङ्गलोऽप्युलूकोऽपि अर्च्यते पूज्यते न काको वायसः केनचित् ॥६॥

असिं भुजमहं धैर्यं स मन्त्रिभ्योऽधिकोचितम् ।
गणयन्करवै शत्रुं समं त्रिभ्योऽधिकोचितम् ॥७॥

असिमिति—करवै करोमि, कोऽसौ ? सोऽहं कम् ? शत्रुम्, कथम्भूतम् ? अधिकोचितं सङ्कोचितम्, केभ्यः ? त्रिभ्यः असिभुजधैर्येभ्यः, किं कुर्वन् ? गणयन् मन्यमानः कम् ? असिं खड्गं तथा भुजं बाहुं तथा धैर्यम्, कथम्भूतं त्रितयम् ? अधिकोचितं योग्यम्, केभ्यः ? मन्त्रिभ्यः सचिवेभ्यः इति । समपादाभ्यासो यमकः ॥७॥

---

जिस प्रकार केवल दुपट्टे ( उत्तरीय ) से ही शरीरकी लज्जा नहीं ढंकती है अपितु परिधान ( अधरीय ) भी आवश्यक होता है उसी प्रकार लौकिक कार्योंमें कृतकृत्य होनेसे ही जीवन चरितार्थ नहीं होता, जन्मान्तरकी भी साधना आवश्यक है ॥४॥

महाकुलोंमें उत्पन्न लोगोंको भी अपने पुरुषार्थका सहारा लेकर अन्तरंगसे सुदृढ़ रहना चाहिए । और मनसे व्याकुल होकर कदापि नहीं रहना चाहिए क्योंकि अन्त समय आने पर अन्तक ( मृत्यु ) भीत पुरुषको भी नहीं छोड़ता है ॥५॥

सुदृढ़ स्वभावको धारण करना चाहिए और कभी भी किसीकी चंचल प्रकृतिका अनुकरण नहीं करना चाहिए । लक्ष्मीके लिए उल्लूकी भी पूजा की जाती है, पर कौएको कोई नहीं पूछता ॥६॥

सुयोग्य मन्त्रियोंकी अपेक्षा तलवार, भुजा और धैर्यको अधिक कार्यकरी मानकर इस त्रिपुटी ( असि, भुजा और धैर्य ) के द्वारा मैं शत्रुओंको सब तरफ ( समधिक ) से चाप ( कोचितम् ) दूंगा ॥७॥

नरघूर्णाविदाहेन न वाहानुमताद्रणात्
नाप्यथ केशवक्लेशान्मत्कोपाग्निः प्रशाम्यति ॥८॥

नरघूर्णेति—(द्वि:) अद्यापि साम्प्रतमपि न प्रशाम्यति न विध्यायति, कोऽसौ ? मत्कोपाग्निः मम क्रोधवह्निः, केन ? रघूर्णाविदाहेन रघव एव ऊर्णा तस्याविदाहेन, तथा न प्रशाम्यति मत्कोपाग्निः, कस्मात् ? रणात्, कथम्भूतात् ? हानुमतात् हनुमतोऽयं हानुमतः तस्मात् वा तथा न प्रशाम्यति मत्कोपाग्निः, कस्मात् ? केशवक्लेशात् लक्ष्मणखेदात् ।

अथ भारतीयः—नरघूर्णाविदाहेन नरस्य अर्जुनस्य घूर्णाभ्रमणं विदाहः संक्लेशस्तेन, कथम्भूतात् रणात् ? वाहानुमतात् अश्वानामिष्टात्, केशवो नारायणः । अन्यत्सुगमम् ॥८॥

इत्यतो रावणो रोषसिद्धेस्ताम्यन्निवात्मनि ।
बहुधामागधैर्योऽसौ वीरैश्चक्री रणं ययौ ॥९॥

इत्यत इति—( द्वि: ) ययौ गतवान्, कः ? असौ चक्री रावणः, किम् ? रणम्, कैः सह ? वीरैः, कथम्भूतः ? बहुधामा प्रचुरप्रतापः, पुनः अगधैर्यः न गच्छतीत्यगं स्थिरं धैर्यं यस्य सः, अथवा बहुधामागधैः बहुविधैर्वन्दिभिः, कस्याः सकाशात् ? अतोऽस्या रोषसिद्धेः कोपसंप्राप्तेः कथम् इत्युक्तप्रकारेण, किं कुर्वन्निव ? आत्मनि ताम्यन्निव तप्यमान इव ।

अथ भारतीयः—यः जरासन्धनाम्ना प्रसिद्धः सः चक्री रणं ययौ, कैः सह ? मागधैर्मगधदेशोद्भवैः क्षत्रियैः, किं कुर्वन्निव ? बहुधा बहुप्रकारेण आत्मनि निजे असौ खड्गे ताम्यन्निव आकाङ्क्षां कुर्वन्निवेत्यर्थः कस्याः सकाशात् ? अतोऽस्या रोषसिद्धेः क्व ? अरौ शत्रौ कथम्भूताया रोषसिद्धेः ? अणोः लघोः ॥ ९ ॥

जित्वारयः सुखं बन्धून्प्राध्वं कृत्यविचक्षणे ।
इति चित्तेऽमुना वैरं प्राध्वंकृत्य विचक्षणे ॥१०॥

जित्वेति—विचक्षणे हसितं विपूर्वकत्वात् क्षणु हिंसायामित्यस्य धातोः प्रयोगः उक्तं च—उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । विहाराहारनीहारप्रतिहारोपहारवत् ॥ इति वचनात् । केन ? अमुना रावणेन, भारतपक्षे-जरासन्धेन, किं कृत्वा ? पूर्वं प्राध्वंकृत्य बध्वा, किम् ? वैरम्, क्व ? कृत्यविचक्षणे कार्यकुशले, चित्ते, कथम् ?

---

रघुवंशियोंकी ऊर्णा ( भृकुटियोंके बीच नाकके ऊपरके रोम ) में आग लगनेसे, अथवा हनुमान्के साथ हुए घोर युद्धसे अथवा लक्ष्मणजीको हुए अपार कष्टसे भी आज मेरी कोपाग्नि शान्त नहीं होती है [ अर्जुन ( नर ) के भ्रमण ( घूर्णा ) तथा प्रतिशोधमें तपनेसे अथवा अश्व ( वाह ) सेनाको इष्ट घोर युद्धसे अथवा कृष्णजीको हुए परिश्रमसे भी आज मेरा क्रोध रञ्चमात्र कम नहीं हो रहा है ] ॥८॥

इस प्रकारसे रोषकी पूर्णताके कारण मन-ही-मन जलतेके समान प्रचुर प्रतापी ( बहुधामा ), अचल धैर्यधारी ( अग धैर्यः ) और चक्रसे सज्जित रावण वीरोंको साथ लिये चल दिया था [ अपनी तलवार पर ( असौ ) सब प्रकारसे ( बहुधा ) विश्वास करते हुए ( ताम्यन्निव ) के समान, मगध देशके प्रमुख वीरोंसे घिरा और शत्रु पर ( अरौ ) थोड़े प्रयत्न द्वारा ( अणु ) ही अपने क्रोधको उतारनेके लिए रथपर सवार होकर जरासन्ध युद्धभूमिमें आ गया था ] ॥९॥

कर्त्तव्य और अकर्त्तव्यके निर्णयमें कुशल रावण मन ही मन ( कृत्यविचक्षणे-चित्ते ) वैर बाँधकर यह सोचकर हँस दिया था ( विचक्षणे ) कि हे शत्रुओ, तुम मेरे भाइयोंको जीतकर सुखसे बैठनेकी सोचते हो ? [ कार्यकुशल जरासन्धके चित्तमें भी वैरका

शत्रवः यूयं सुखं यथा भवति तथा प्राध्वं तिष्ठत्, किं कृत्वा ? पूर्वं बन्धून् बान्धवान् जित्वा । समपादाभासो यमकः ॥१०॥

पशुवच्छादयन्भीरूञ्शूरानच्छादयं समम् ।
हृद्यस्वच्छादयन्धातोरस्त्रैः स्वच्छादयन्नभः ॥११॥

पशुवदिति—पशुवत् भीरून् शादयन् अभ्याजयन् शूरान् अयं रावणः जरासन्धश्च समं युगपत् अच्छात् चिच्छेद, छो छेदने इति धातुः, तथा सः रावणः नभः गगनम् अस्त्रैः बाणैः स्वच्छादयत् अतिशयेन छादयति स्म, किं कुर्वन् ? अयन् गच्छन्, कस्मात् ? धातोरभिप्रायात्, कथम्भूतात् ? अस्वच्छात् कुटिलात्, क्व ? हृदि चेतसीति । चतुष्पादशब्दयमकः ॥११॥

वक्षसासौ पुरोभागं तेजसादित्यमुर्वराम् ।
शस्त्रैरघुक्षतोद्युक्तः कीर्त्या तस्तार दिङ्मुखम् ॥१२॥

वक्षसेति—रघुक्षतोद्युक्तः रघुवधोद्यतः असौ रावणः वक्षसा उरसा पुरोभागं भटानामुपसरणं तस्तार, आदित्यं तेजसा प्रतापेन तस्तार, उर्वरां भुवं शस्त्रैः तस्तार, कीर्त्या दिङ्मुखं तस्ताराच्छादितवान् ।

भारतीयः—अघुक्षत "गुह संवरणे" धातोः रूपम्, संवृतवान् स जरासन्धः, कम् ? पुरोभागं पर पणम् क्व ? असौ खड्गे, केन कृत्वा ? वक्षसा अत्र कोपाधिक्यं व्यज्यम्, 'कोपवश्यो हि प्राणी अन्यदपि विस्मृत्यान्यदपि गृह्णातीति' श्रुतेः । तथा तेजसा आदित्यं शस्त्रैरुर्वरामतः कारणात् अघुक्षत, किम् ? तारदिङ्मुखं विशददिग्वदनम्, कया ? कीर्त्या, कथम्भूतः ? उद्युक्तः ॥१२॥

स हस्ताभ्यां चमूहस्तौ सहस्ताभ्यामपीडयत् ।
विभ्रजिष्णुः प्रतापाग्नौ बिभ्रत्संधित्सुतामिव ॥१३॥

स इति—अपीडयत् पीडितवान्, कोऽसौ ? स प्रतिविष्णुः कोसावयं रावणो जरासन्धश्च, कौ ? चमूहस्तौ सेनापार्श्वौ, काभ्याम् ? ताभ्यां लोकोत्तराभ्यां हस्ताभ्याम् कथम्भूतः ? सहक्षमः, पुनः विभ्राजिष्णुः

---

प्रतिशोध दृढ़तर हो गया था । और वह सोचता था कि सम्बन्धी ( बन्धून् ) शत्रुओंको जीतकर मौजसे रहूँगा ] ॥१०॥

रावण तथा जरासन्धने भीरु योद्धाओंको पशुओंके समान अनायास ही संत्रस्त कर दिया था ( शादयन् ) और इसके साथ ही साथ वीरोंको इसने काटकर फेंक दिया था ( अच्छात् ) तथा आकाशको बाणोंकी बौछारसे वैसा ही सब तरफसे ढँक दिया था (स्वच्छादयत्) जैसे मलिन ( अस्वच्छ ) विचारों ( धातोः ) के द्वारा हृदयको व्याप्त किया जाता है ॥११॥

रघुवंशियोंके वध ( क्षत ) के लिए तत्पर ( उद्युक्त ) रावणके वक्षस्थलको देखते ही शत्रुओंका पलायन प्रारम्भ हो गया था, प्रतापके कारण सूर्य छिप गया था, शस्त्रोंके प्रहारसे पृथ्वी व्याप्त हो गयी थी [ उद्यत जरासन्ध ने कोपोन्मत्त चित्तसे सैन्यके अग्रभागको तलवारमें छिपा दिया था, तेजसे सूर्यको पछाड़ दिया था और हथियारोंसे पृथ्वीको पाट दिया था अतएव सर्वव्याप्त ( तार ) दिशाओंके अन्तको भी कीर्तिसे ढँक दिया था ] ॥१२॥

समर्थ (सहः) रावणने अपनी लोकप्रसिद्ध भुजाओंके द्वारा शत्रुसैन्यके दोनों पार्श्वों (चमूहस्तौ) को चाप दिया था । मानो सन्धि करनेकी भावनाको वह प्रतापकी ज्वालामें

पक्तुमिच्छुः, क्व ? प्रतापाग्नौ, किं कुर्वाणमिव ? संधित्सुतां संधातुमिच्छुतां बिभ्रदिव बिभ्राण इव। पादादि यमकः ॥१३॥

**प्रापूरयन्नमस्त्रातः शिक्षामार्गेण मार्गणैः।**
**प्रापूरयं न मस्त्रातस्ते निर्याताः पुरोगतैः ॥१४॥**

प्रापूरयदिति—प्रापूरयत् प्रपूरितवान्, कोऽसौ ? प्रतिविष्णुः, किम् ? नभो गगनम्, कैः कृत्वा ? मार्गणैः, कथम्भूतः सन् ? त्रातः पालितः, केन ? शिक्षामार्गेण, ते मार्गणाः न प्रापुः न प्राप्तवन्तः अपि तु प्रापुरेव, कम् ? रयं वेगम्, कैः ? सहपुरोगतैरग्रगतैर्बाणैः सह, कथम्भूताः सन्तः ? निर्याताः, कस्याः सकाशात् ? भस्त्रात् इषुधेर्बाणगृहादित्यर्थः। विषमपादाभ्यासो यमकः ॥१४॥

**प्रस्वापनास्त्रमसृजत्स तामसमयोदयम्।**
**द्विषां तेनाकरोन्मोहं सतामसमयोदयम् ॥१५॥**

प्रस्वापनेति—असृजन्मुक्तवान्, कोऽसौ ? स प्रतिविष्णुः, किम् ? प्रस्वापनास्त्रं प्रकृष्टनिद्राजनकशस्त्रम्, कथं यथा भवति ? अदयं निर्दयम्, कथम्भूतः ? तामसमयः कोपनिर्वृत्तः तथा अकरोत् कृतवान्, कः ? स प्रतिविष्णुः कम् ? द्विषां शत्रूणां मोहम्, केन ? तेन प्रस्वापनास्त्रेण, किं विशिष्टानाम् ? सतां विद्यमानानाम्, कथम्भूतं मोहम् ? असमयोदयम् अनवसरोद्भवमिति। समपादाभ्यासो यमकः ॥१५॥

**मत्तसुप्तामिव चमूं तां तमोघमयोऽजयत्।**
**शरभिन्नं धियारीणां तान्तमोघमयोजयत् ॥१६॥**

मत्तेति—अजयत् जितवान्, कः ? स प्रतिविष्णुः काम् ? तां चमूं सेनाम्, कामिव ? मत्तसुप्तामिव पूर्वं मत्तां पश्चात्सुप्तामिव, कथम्भूतः सन् ? तमोघमयः अविवेकपापनिर्वृत्तः तथा अयोजयत् योजितवान्, कः स प्रतिविष्णुः, कम् ? अरीणाम् ओघं शत्रूणां समूहम्, कया ? धिया बुद्धया कथम्भूतं सन्तम् ? तान्तं खिन्नम्, पुनः शरभिन्नमिति। समपादाभ्यासो यमकः ॥१६॥

---

भूंज देना चाहता था ( बिभ्रज्जिषुः ) [शरीरमें जोड़ोंको धारण करनेवाले ( सन्धित्सुतां बिभ्रत् ) और अपनी क्रोधाग्निमें भुनता हुआ सा, वह समर्थ जरासन्ध अपनी लोक प्रसिद्ध पार्श्व सेनाओंके द्वारा शत्रुकी पार्श्व सेनाओंको चपेट रहा था ] ॥१३॥

शस्त्र शिक्षाकी शैलीका पालन करनेके कारण स्वयं सुरक्षित रावण या जरासन्धने बाणोंकी वृष्टिसे आकाशको पाट दिया था। तथापि इसकी भस्त्रा ( तूणीर ) से निकले बाण पहले छोड़े गये बाणोंके समान तेजो ( रयं ) को क्या नहीं पा सके ( प्रापुः ) थे ? अर्थात् वे भी बहुत तेजीसे जा रहे थे ॥१४॥

तमोगुणप्रधान ( तामसमयः ) रावण और जरासन्धने निर्दयतापूर्वक ( अदयम् ) प्रस्वापन अस्त्रका प्रहार किया था। इसके द्वारा राम – और पाण्डव सेनाको असमयमें ही मूर्च्छित कर दिया था जो कि सज्जनोंके लिए बुरे समयके समान था ॥१५॥

तमोगुण और पापलीन प्रतिविष्णुने विष्णुकी सेनाको वैसे ही जीत लिया था जैसे नशेमें उन्मत्त होकर सोये हुए व्यक्तिको परास्त किया जाता है। बाणोंसे बिंधे और खिन्न शत्रुओंके समूहको इसने, इस प्रकार बुद्धिबलसे फँसा लिया था ॥१६॥

अरयो भीरवश्चक्रे जाताश्चित्रार्पिता इव ।
अरयो भीरवश्चक्रे व्याकुलैस्तद्वधूकुलैः ॥१७॥

अरय इति—भीरवः त्रस्ता अरयः चक्रे चक्रव्यूहे चित्रार्पिता इव जाताः तद्वधूकुलैः शत्रुस्त्रीसमूहैः अरयो मन्दः भीरवो भयध्वनिः चक्रे कृतः, कथम्भूतैः ? व्याकुलैः । विषमपादाभ्यासो यमकः ॥१७॥

अश्वोरसपतत्पत्तिः सुप्ताधोरणहस्तिका ।
सेनाक्षिपद्भियेवाङ्गमक्षधूः सुप्तसारथिः ॥१८॥

अश्वेति—सेना अङ्गम् आक्षिपत् आक्षिप्तवती, कयेव ? भियेव भयेनेव, कथम्भूता सेना ? अश्वोरसपतत्पत्तिः अश्वानामुरोग्रम् अश्वोरसं 'उरसोऽग्ने' [जै० सू० ४।२।९५] इत्ययं सान्तः, तेन पतन्तः पत्तयो यस्यां सा हयवक्षोग्रपतत्पदातिरित्यर्थः, पुनः सुप्ताधोरणहस्तिका सुप्ता आधोरणा येषु ते हस्तिनो यस्यां सा निद्राणमहामात्रगजा, पुनः अक्षधूः सुप्तसारथिः अक्षश्चक्रधाराकाष्ठं धूर्धुरा अक्षश्च धूश्च अक्षधूः समाहारापेक्षया[1] अक्षधुरि सुप्ताः सारथयो यस्यां सा ॥१८॥

ससास स स सांसासि यं यं यो यो ययुं ययौ ।
नानन्नानन्ननोनौनीः शशाशाशां शशौ शिशुः ॥१९॥

ससेति—सः स पुरुषः ससास सुप्तवान्, कथं यथा भवति ? सांसासि सह अंसेन वर्तते असिर्यत्र स्वापकर्मणि तथोक्तं स स्कन्धखड्गं यथा भवति, यो यः पुमान् यं यं ययुम् अश्वं ययौ प्राप्तवान् तथा नानत् न श्वसिति स्म, कोऽसौ ? ना पुमान्, किं कुर्वन् ? अनन्‌ श्वसन्, कथम्भूतः ? अनोनौनीः अनो नावं नयतीति अनोनौनीः रथप्रवहणप्रेरकः, तथा शिशुरज्ञः शशास प्लुतं गतवान् तथा शशौ तनूकृतवान् काम् ? आशां वाञ्छामिति एकाक्षरपादः । ॥१९॥

द्राग्दानोच्छेदभीत्येव प्रासं शक्तिमसिं शरम् ।
पाशं परश्वधं शस्त्रीं ववर्षास्त्रमयो रिपुः ॥२०॥

---

प्रस्वापन अस्त्रके द्वारा कायर बनाये गये शत्रु चित्रमें लिखोंके समान पड़े थे । तथा उनकी पत्नियोंके भुण्डके भुण्ड व्याकुल हो उठे थे । तथा तेजहीन (अश्वः) होकर भयका चीत्कार ( भी-रवः ) कर उठे थे ॥१७॥

घोड़ोंकी पीठ परसे सवार गिर रहे थे । हाथियोंके ऊपर महावत आदि सो गये थे । रथ सेनामें धुराके ऊपर सारथी सो गये थे फलतः चक्र चलना बन्द हो गया था । इस प्रकार पूरीकी पूरी सेनाने भीत होकर शरीरको झुका दिया था ॥१८॥

[ अन्वय—स स स-असं—असि ससास, यं यं—ययुं यो यो ययौ, न अनन अनो नौनी नानत्, शिशुः आशां शशौ ( एवं ) शशास ]

प्रत्येक सैनिक कन्धे पर लटकी तलवारके साथ सो गया था । जिस-जिसने जिस किसी घोड़ेके पास जानेका प्रयत्न किया था वह स्वयं सांस लेकर भी रथके वाहकोंमें सांस नहीं पा सका था फलतः वह बच्चेकी भाँति युद्ध करनेकी आशाको दबाकर तेजीसे भाग गया था ॥१९॥

---

1. समाहारपक्षोऽयं—प० द० ।

प्रागिति—ववर्ष, कोऽसौ ? रिपुः शत्रुः, कम् ? प्रासं यष्टिं तथा शक्तिं शस्त्रविशेषं तथा असिं खड्गं तथा शरं बाणं तथा पाशं परश्वधं परशुं तथा शस्त्री छुरिकाम्, कथम्भूतः ? अस्त्रमयः, कयेव ? दानोच्छेद-भीत्येव त्यागोच्छेदभीत्येव, शब्दच्छलात् खण्डनमेव ग्राह्यम्, प्राक् शीघ्रमिति शेषः ॥२०॥

रैरोऽरिरीरुरूरारा रोरुरारारिरैरिरत् ।
रुरूरोरूरारारुरु रूरुरुरेरुरः ॥२१॥

रायिति—ऐरिरत् प्रेरितवान्, कोऽसौ ? अरिरोः अराः सन्त्यस्य अरि चक्रम् अरिणा रिणाति हिनस्ति रिपूनिति अरिरीः चक्री प्रतिविष्णुरित्यर्थः, काः ? आराः शस्त्रविशेषसंज्ञकाः, कथम्भूता ? उरूः बृहतीः कथम्भूतोऽरिरीः ? रैरः रायं राति इति रैरः द्रव्यदाता, पुनः रोरुः रोरवीति विचिप्रत्यये कृते सति रोरुरिति रूपं निष्पद्यते, अत्यर्थशब्दं कुर्वाण इत्यर्थः, पुनः, आरारिः अरीणां समूहः आरम् आरस्यारिः आरारिः शत्रुसमूहरिपुरित्यर्थः, पुनः उरुर्महान् तथा आर गतवान् कोऽसौ ? ऊरुः व्यापः, किम् ? अरुः व्रणम्, कथम्भूतः ऊरुः ? उरुः गरिष्ठः, तथा आर, किं कर्तृ ? उरो वक्षस्थलम्, किम् ? अरुः व्रणं कस्य ? अरेः शत्रोः, कथम्भूतस्य ? रुरूरोः रुरोरिव मृगविशेषस्येव ऊरुर्यस्य स रुरूरुः तस्य रुरूरोरिति । एकाक्षरबन्ध इति ॥ २१॥

याष्टीकन्ते स्मरव्यग्रा खेऽमरस्त्रीर्मृताश्च ताः ।
याष्टीकं ते स्म रव्यग्रास्तं प्रतीच्छन्ति नाभितः ॥२२॥

याष्टीकन्त इति—ये वीराः टीकन्ते लभन्ते, काः ? ताः अमरस्त्रीर्देवाङ्गनाः, कथम्भूताः सन्तः ? मृताः याश्च सन्ति, काः ? अमराङ्गनाः, कथम्भूताः ? स्मरव्यग्राः कन्दर्पाकुलाः क्व ? खे गगने, तेन कारणेन ते वीरा न प्रतीच्छन्ति अपि तु प्रतीच्छन्ति स्मैवेत्यर्थः, कम् तं याष्टीकं यष्टिः प्रहरणमस्य तं याष्टीकम् कथम् ? अभितः सामस्त्येन, कथम्भूताः सन्तः ? रव्यग्राः सूर्यवत् प्रधाना इति विषमपादयमकम् ॥२२॥

एकः सर्वास्त्रसंग्राहः शिलेयं चालयन्नुरः ।
दिक्पालानां समाहारश्चलन्निव चचाल सः ॥२३॥

---

शस्त्रोंसे सुसज्जित शत्रुने भागते हुए अपने शत्रुओं पर प्रास (चौड़ी तलवार ) बरछी, तलवार, बाण, नागपाश, और तेजीसे मारनेवाले फरसे, कटारी आदिकी वर्षा की थी। क्योंकि उसे यही डर था कि संहार ( दान दा = दाने खण्डने च) रुक न जाय ॥२०॥

[अन्वय—आरारिः रोरुः रैरः अरिरीः उरूः आराः ऐरिरत्, रुरूरोः अरेः उरः उरुः अरुः उरुः आर । ]

शत्रुओंके समूह ( आरा ) का शत्रु ( अरि ) जोरसे गर्जनेवाला, कोष या धनका-प्रदाता और चक्रके द्वारा शत्रुओं [ अ ] के संहारक [रीः] प्रतिविष्णुने बहुत मात्रामें 'आर' चलाये थे। जिनके द्वारा रुरु मृगके समान उरुयुक्त शत्रुका वक्षस्थल गम्भीर रूपसे आहत हुआ था। तथा उसे छेद कर अस्त्र निकल गये थे ॥२१॥

इस प्रकार से युद्धमें वीरगतिको प्राप्त योद्धा उन देवाङ्गनाओंको प्राप्त करते थे जो कामसे विह्वल होकर आकाशमें प्रतीक्षा कर रहीं थी। तथा सूर्यसे भी ऊपर [क्योंकि स्वर्ग ज्योतिष लोकसे बहुत ऊपर हैं] जाने के इच्छुक ये योद्धा भी क्या सर्व प्रकार से घोर यष्ठि प्रहारकी इच्छा नहीं करते थे ? अपि तु करते ही थे ॥२२॥

एक इति—चचाल—कोऽसौ ? स प्रतिविष्णुः, कथम्भूतः ? एक एकाकी असहाय इत्यर्थः, किं कुर्वन् ? चालयन् स्वस्थानात् चालयन्, किम् ? उरो वक्षः कथम्भूतं सत् ? शिलेयं शिलासमानं शिलया सदृशम् 'उपमानार्थे ढः' पुनः सर्वास्त्रसंग्राहः सर्वास्त्राणां सङ्ग्राहोऽङ्गीकारो यस्य सः, किं कुर्वन् ? चलन् क्षोभं गच्छन्, क इव ? दिक्पालानां समाहार इव ॥२३॥

**असत्क (असक्थ) मशिरोऽश्वीयं हास्तिकं चित्तमोहतः ।**
**पपात वञ्चन्‌ स्मासौ हास्तिकंचित्तमोहतः ॥२४॥**

असक्थेति—पपात पतितम्, किम् ? अश्वीयमश्वानामिदं बलम् अश्वीयम्, कथम्भूतम् ? असक्थम्, अः सान्तः, असक्थीवरकम्, कस्मात् ? चित्तमोहतः वैचित्त्यात्, तथा पपात, किम् ? हास्तिकं हस्तिनामिदं बलम्, कथम्भूतम् ? अशिरो मस्तकहीनम्, कस्मात् ? चित्तमोहतः तथा हा कष्टं नास्ति स्म न सञ्जातः, कः ? असौ अयं प्रतिविष्णुः, किं कुर्वन् ? वञ्चन् त्यजन्, कम् ? कांञ्चत्, कथम्भूतः ? तमोहतः कोपवशः । समपादयमकम् ॥२४॥

**अंसोत्सेधेन सोत्सेकस्त्रिमूर्ध इव केशवः ।**
**पापपाक इवामुष्य प्राभवत्पारिपन्थिकः ॥२५॥**

अंसोत्सेधेनेति—प्राभवद् प्रकर्षेण सञ्जातः, कोऽसौ ? केशवो विष्णुः, कथम्भूतः ? पारिपन्थिकः परिपथं तिष्ठति पारिपन्थिकः प्रतिषेधक इत्यर्थः, कस्य ? अमुष्य प्रतिविष्णोः, क इव ? पापपाक इव, कथम्भूतः ? सोत्सेकः सगर्वः, क इवोत्प्रेक्षितः ? त्रिमूर्द्ध इव त्रिमस्तक इव, केन ? अंसोत्सेधेन स्कन्धो-च्छ्रायेण ॥ २५ ॥

**मणेः प्रत्युरसस्यासीत्सुप्रातीकुर्वता जगत् ।**
**रवेः सर्वपथीनेन तेजसेवोदयाचलः ॥२६॥**

मणेरिति—आसीत् सञ्जातः, कोऽसौ ? विष्णुः, कथम्भूतः ? उदयाचलः, केन ? तेजसा प्रकाशेन, कस्य ? मणेः, कथम्भूतस्य ? प्रत्युरसस्य उरसि स्थितस्य कौस्तुभस्येत्यर्थः, किं कुर्वता सता ? सुप्रातीकुर्वता सुप्रभातीकुर्वता, कथम्भूतेन ? सर्वपथीनेन सर्वान् पथ आप्नोतीति सर्वपथीनं तेन, किम् ? जगद्भुवनम्, कस्येव ? रवेरिव तेजसा सूर्यस्येवेति ॥२६॥

---

समस्त शस्त्रोंसे सुसज्जित अथवा समस्त शस्त्रोंका आघात सहनेमें समर्थ शिलाके समान वक्षस्थलको ताने हुए एकाकी प्रतिनारायण चल पड़ा था । वह अकेला ही ऐसा लगता था जैसे समस्त दिग्पाल ही चल पड़े हों ॥२३॥

घोड़ों की सेना चित्त विभ्रमके कारण बिना जांघ की होकर गिर पड़ी थी । तथा हाथियोंकी सेना मर्मस्थलमें प्रहार होनेके कारण मस्तकहीन होकर लुढ़क गयी थी । क्योंकि तमोगुणमय हो जानेके कारण इस प्रतिनारायणने किसीको भी नहीं छोड़ा था ॥२४॥

कन्धोंको ऊपर तानता हुआ, उत्साह और गौरवसे व्याप्त तथा तीन मस्तक युक्त के समान नारायणने इस (प्रतिनारायण) के मार्ग को रोक लिया था अर्थात् परम विरोधी हो गया था । ऐसा लगता था कि नारायण, प्रतिनारायणके पापके परिपाक रूपसे ही प्रकट हुआ था ॥२५॥

उर स्थलमें धारण किये गये कौस्तुभमणिके सब ओर फैलनेवाले तेजके कारण नारायण उदयाचलके समान हो गया था क्योंकि उदयाचलपर आये सूर्यका प्रकाश भी सब दिशाओंमें फैल जाता है । और जगत्‌में सुप्रभात हो जाता है [नारायणके द्वारा नैतिकताका प्रभात हुआ था] ॥२६॥

वीरारिवैरवारी वै वव्रे रविरिवोर्वराम् ।
विव्रोवरैरविवरैरवोवावाविरावावान् ॥२७॥

वीरेति—वव्रे प्रच्छादितवान्, कोऽसौ ? विष्णुः, काम् ? उर्वरां पृथ्वीम्, कैः कृत्वा ? विव्रोवरैः तेजोमण्डलैः, कथम्भूतैः ? अविवरैः निबिडैः, कथम् ? वै स्फुटम् क इव वव्रे – रविरिव सूर्य इव, कथम्भूतो विष्णुः ? वीरारिवैरवारी वीराणामरीणां वैरं वृणोतीत्येवंशीलः सः वीररिपुवैरभञ्जक इत्यर्थः, पुनः अवोवावा अवः अपराधलक्षणं तमोऽत्र ग्राह्यम्, अवो वनति संभनक्तीति वन्प्रत्ययः, "वन्याः" [ जै० सू० ४।४।४१ ] इति सूत्रेण वनिपरतो नकारस्याकारादेशे अवो वावेति सिद्धं रूपम्, अनीति तमोभञ्जक इत्यर्थः, पुनः विरावधान् गम्भीरध्वनिमानिति[1] ॥२७॥

योऽयेयाययियायायं पापापापोपपान्पपौ ।
नृननूनानिनोऽनेनास्ततत्तातोऽततातितिम् ॥२८॥

य इति—इयाय गतवान् प्राप्तवानित्यर्थः, कः ? यः इनः स्वामी विष्णुरित्यर्थः, कम् ? आयं द्रव्योत्पत्तिस्थानं वज्रादीनां रत्नानां खनिमित्यर्थः, कथम्भूतः ? अयेयायः अयेयः अयो यस्य सः अगम्यगमनः अलक्ष्यप्रवृत्तिरित्यर्थः, 'को बुद्ध्यते राजगतिं विचित्रामिति वचनात्, अत्र संधौ रेफस्थाने यो यकारः तस्य लोपो न कृतः, पपौ प्रतिपालितवान्, कोऽसौ ? इनः, कान् ? नॄन् पुरुषान्, कथम्भूतः इनः ? अनेनाः पापरहितः पुण्यवानित्यर्थः, कथम्भूतान् ? पापापापोपपान् पापादपापाः पापापापाः पापापापेषु उपपा येषां तान् अनपराधरक्षकानित्यर्थः, पुनः अनूनान् प्रचुरान् तत् तस्मात् कारणात् अतत विस्तारयामास, काम् ? आततिं श्रेणीं तत्तेषां नृणां कथम्भूतः सन् ? तातः पिता, केषाम् ? तत्तेषामेव तदित्यव्ययपदमिति ॥२८॥[2]

छिन्नैः शफैः समीकेऽस्त्रैरर्वतां गोक्षुरैरिव ।
हस्तिहस्तक्रमैः कीर्णे मुसलोलूखलैरिव ॥२९॥
तेजिते तमसा जेरे रेजेऽसामततेऽजिते ।
भासिते रदनारीमे मेरीनादरतेसिभा ॥३०॥

छिन्नैरिति—जेरे जीर्णं विनष्टम्, केन ? तमसान्धकारेण, क्व ? समीके सङ्ग्रामे, कथम्भूते ? कीर्णे व्याप्ते, कैः ? शफैः खुरैः, केषाम् ? अर्वताम् अश्वानाम्, कथम्भूतैः ? अस्त्रैः छिन्नैः, कैरिव ? गोक्षुरैरिव

---

वीर शत्रुओंको वैरका शमनकर्त्ता (वीरारि वैरवारी), अनीतिके अन्धकारका विनाशक (अवोवा) गम्भीरस्वरमें ललकारते हुए नारायणने अपने सघन (अ-विवरैः) तेजमण्डलके द्वारा (विव्रोवरैः) युद्धस्थलीको निश्चित रूपसे वैसे ही व्याप्त किया था जैसे सूर्य पूरी पृथ्वीको करता है ॥२७॥

स्वयं अप्राप्य अथवा गूढ़ताके कारण अगम्य (अयेयायः) वह (यः) विष्णु रत्नोंकी खान (आयं) को प्राप्त हुआ था (इयाय)। स्वयं पापों (इनः) से रहित होकर भी उस भगवान् (इनः) नारायणने पापोंसे बचे (अपाप) हुए तथा शरणागत [उपपा] जनोंकी रक्षा की थी (पपौ)। और उस जगद्रक्षक (तात) ने ही मानवों को (नॄन्) विविध (ततत्) विशाल (अनूनान्) एवं समग्र श्रेणियों (आततिम्) का विस्तार किया था (आतत) ॥२८॥

सर्वग्रासी (कीर्णे) संग्राममें शस्त्रोंके प्रहारसे चीरी गयी घोड़ोंकी टापें गोखुरके समान हो गयी थीं। और शस्त्रोंसे काटी गयी हाथियों की सूँड़ें तथा पैर मूसल और

---

१. द्व्यक्षरबन्धः । २. एकाक्षरपादबन्धः ।

तथा च कीर्णे, कैः ? हस्तिहस्तक्रमैः शुण्डाकशुण्डाचरणैः, कैरिव ? मुसलोलूखलैरिव हस्तिहस्तैर्मुसलैरिव हस्तिक्रमैरुलूखलैरिवेत्यर्थः, कथम्भूते ? तेजिते प्रदीप्ते, पुनः असामतते न विद्यते साम येषां ते असामानः सकोपाः पुरुषाः असामभिस्तते विस्तृते, पुनः अजिते अनभिभूते, पुनः भासिते प्रकाशिते, पुनः अरदनारोभे न विद्यन्ते रदना येषां ते अरदनाः अरीणामिभा अरीभाः अरदना अरीभा यत्र तस्मिन् तथोक्ते, पुनः भेरीनादरते भेरीणां यो नादो ध्वनिस्तस्मिन् रते सक्ते, तथाऽसिभा रेजे खड्गदीप्तिः कर्त्री[1] ॥२९-३०॥

गर्भापोढा इव हयाः पङ्कात्यस्ता इव द्विपाः ।
उन्मत्ता इव तत्रासञ्छ्रैमताः शस्त्रपाणयः ॥३१॥

गर्भापोढेति—आसन् सञ्जाताः, के ? हयाः, क इवोत्प्रेक्षिताः ? गर्भापोढा इव गर्भनिर्गता इव, तथा आसन्, के ? द्विपाः हस्तिनः, क इवोत्प्रेक्षिताः ? पङ्कात्यस्ता इव कर्दमनिर्गता इव, तथा आसन्, के ? शस्त्रपाणयः शस्त्रहस्ताः सुभटाः, क इवोत्प्रेक्षिताः ? उन्मत्ता इव, क्व ? तत्र रणे, कथम्भूता हयादयः ? श्रैमताः श्रीरस्यास्तीति श्रीमान् विष्णुः श्रीमत इमे श्रैमताः वासुदेवसम्बन्धिन इति ॥३१॥

अत्यध्वान्तां महोपायां चमूमुत्सृज्य वैष्णवीम् ।
अत्यध्वां तां महोऽपायां वैरीयां तत्तमोऽविशत् ॥३२॥

अत्येति—अविशत् प्रविष्टं, तत् लोकप्रसिद्धं तमः, काम् ? तां चमूम्, कथम्भूताम् ? वैरीयां वैरिणामियं वैरीया तां वैरीयां शात्रवीम्, पुनः कथम्भूताम् ? महोपायां महसां तेजसां प्रतापलक्षणानामपायो विनाशो यस्यां ताम्, पुनः अत्यध्वाम् अध्वानमतिक्रान्ताम्, 'गेरध्वनः' [जै० सू० ४।२।८७] इति असान्त-सूत्रेण अः सान्तः, किं कृत्वा पूर्वं तमोऽविशत् ? उत्सृज्य विसृज्य परित्यज्य, काम् ? चमूम्, कथम्भूताम् ? वैष्णवीं विष्णोरियं वैष्णवी तां पुनः महोपायां महानुपायो यस्यास्ताम्, उपायः सामादिः पञ्चाङ्गमन्त्रो वा त्रिशक्तिलक्षणोऽग्राह्यः, पुनः अत्यध्वान्तां ध्वान्तमुत्साहोऽत्र ग्राह्यः न ध्वान्तमतिक्रान्ता अत्यध्वान्ता तां सोत्साहामित्यर्थः[2] ॥३२॥

अयानि तव तिष्ठ त्वं गृहाणायुधमायुधम् ।
इत्येकवाक्यौ वैरेऽपि तावाह्वेतां परस्परम् ॥३३॥

---

ओखली के सदृश पड़े थे। इस प्रकार समता भावसे रहित भटोंके द्वारा बढ़ाये गये संघर्षके अपनी चरम सीमा पर पहुँच ( तेजित ) जाने तथा शत्रुओंके हाथियोंके काटे गये दाँतोंसे प्रकाशमान होनेपर भी विजयका निश्चय नहीं हुआ था। ( अजिते ) फलतः रणभेरियाँ जोरोंसे बज रही थीं तथा चलती तलवारोंकी चमकसे अन्धकार नष्ट हो गया था ॥२९-३०॥

लक्ष्मीके स्वामी विष्णुकी ( श्रैमतः ) सेना के घोड़े तुरन्त उत्पन्नोंके समान हो गये थे। हाथी ऐसे लगते थे मानो कीचड़में लोट कर आ रहे हैं। और हाथोंमें हथियार लेकर बढ़ते योद्धा मदोन्मत्त ऐसे प्रतीत होते थे ॥३१॥

रात्रि अथवा पराजयके अन्धकारने अत्यन्त उत्साह (ध्वान्त) पूर्ण और सामादि पाँचों उपायोंमें परिपूर्ण नारायणकी सेनाको छोड़ कर, पथभ्रष्ट होकर भागती हुई (अत्यध्वां) और सर्वाङ्ग विनाशको प्राप्त (महोऽपायं) वैरी प्रतिनारायणकी सेनामें प्रवेश किया था ॥३२॥

---

१. ३०तमे श्लोके गतप्रत्यागतबन्धः। २. विषमपादयमकम्।

अयानीति—आह्वेतामाकारितवन्तौ, कौ ? तौ विष्णुप्रतिविष्णू, कथम् ? परस्परमन्योन्यम्, कथम्भूतौ सन्तौ ? एकवाक्यौ एकवचनौ, क्व सत्यपि ? वैरेऽपि कथमिति कृत्वा प्रकाश्यते तव भवतः यदि अयानि अगमनं तदा तिष्ठ आस्व त्वं गृहाण आयुधमायुधं अस्त्रमस्त्रमिति ॥३३॥

**लोलध्वजौ वहद्वाजिवेलौ तद्वत्तयो रथौ ।**
**युद्धाम्बुधौ द्विनावं चेदन्योन्यमभिपातुकम् ॥३४॥**

लोलेति—तद्वत् द्विनाववत् स्यातामिति क्रियाध्याहार्या, कौ ? तयोः केशवप्रतिकेशवयोः रथौ, कथम्भूतौ ? लोलध्वजौ चलत्केतू, पुनः वहद्वाजिवेलौ वहन्तौ वाजिनौ वेला ययोः तौ, कस्मिन् ? युद्धाम्बुधौ रणसमुद्रे, चेद्भवेत्, किम् ? द्विनावं द्वयोर्नावोः समाहारः, "नावोरात्" [ जै० सू० ४।२।१०२ ] इत्यनेन सूत्रेण अः सान्तः, कथम्भूतम् ? अभिपातुकमभिपतनशीलम्[1] अन्योन्यमितरेतरमभिगमनशीलम् ॥३४॥

**स मेनेऽनेन सामर्थ्यमग्रे युधि दिवौकसाम् ।**
**समेनेऽनेन सामर्थ्यमीयमानमरातिना ॥३५॥**

स इति—स विष्णुः सामर्थ्यं पौरुषं मेने ज्ञातवान्, क्व ? युधि सङ्ग्रामे, कथम्भूते ? अग्रे भाविनीत्यर्थः, पुनः समेने समस्वामिनि, किं क्रियमाणं सामर्थ्यम् ? ईयमानं गम्यमानं प्राप्यमाणमित्यर्थः, केन ? अनेनारातिना वैरिणा प्रतिविष्णुना सह, कथम्भूतम् ? अनेनसां पुण्यवतां दिवौकसां देवानाम् अर्घ्यं श्लाघ्यम् । समपादयमकम् ॥३५॥

**अरिरस्त्रं रणेऽस्राक्षीदाग्नेयं धीरदीधिति ।**
**अक्षान्ति हृदयेऽनेकां निःसहं लङ्घयन्यथा ॥३६॥**

अरिरिति—अरिः शत्रुः रणे आग्नेयम् अग्निविकारम् अस्त्रं बाणम् अस्राक्षीत् मुक्तवान्, कथम्भूतम् ? धीरदीधिति स्थिरदीप्ति[2], कथं यथा भवति ? निःसहं दुःसहम्, यथाशब्दोऽत्र उत्प्रेक्षार्थोऽवगम्यते तेनायमर्थः, किं कुर्वन्निव ? हृदयेऽनेकां प्रचुराम् अक्षान्तिमक्षमां लङ्घयन्निवातिक्रामयन्निव ॥३६॥

**कोपः कश्चिज्ज्वलत्यस्य कनकाश्मस्य किं द्रवः ।**
**किं किंशुकवनं फुल्लं किं जिह्वा समवर्तिनः ॥३७॥**

कोप इति—ज्वलति दीप्तो जायते, कोऽसौ ? कश्चित् कोपः, कस्य ? अस्य शत्रोः किं द्रवः, कस्य ?

---

'मैं तुम्हारे सामने उपस्थित हूँ । तुम शस्त्रको उठाओ । मेरे सामने जमो ।' घोर वैर होनेपर या इस प्रकारके समान वाक्यों द्वारा उन दोनों (नारायण और प्रतिनारायण) ने एक दूसरेको ललकारा ॥३३॥

लहलहाती ध्वजाओंसे शोभित तथा जुते हुए घोड़ों रूपी तीर युक्त नारायण और प्रतिनारायणके रथ, युद्ध रूपी समुद्र में उन दो नौकाओंके समान लगते थे जो ध्वजा और पालसे युक्त होकर एक दूसरेपर आघात करनेके लिए बढ़ती हैं ॥३४॥

समान नायक (इन = नायक-प्रतिनायक) युक्त संग्रामकी पराकाष्ठामें उस नारायणने प्रतिनारायणकी तुलनामें अपनी शक्तिको स्पष्टतया जाना था । तथा उसकी इस सामर्थ्य की पापाचाररहित (पुण्यात्मा) देवोंने भी कामना की थी ॥३५॥

धीर गम्भीर एवं तेजस्वी शत्रुने युद्धमें अग्निबाणको चलाया था । मानो उसने अपने हृदयकी बहुमुखी अशान्ति या क्रोधको ही सहन न करके उछाल दिया था ॥३६॥

शत्रुका धधकता हुआ क्रोध रूप वह अग्निबाण ऐसा लगता था मानो स्वर्ण-पाषाण

---

१. लं सम्मुखगमनशीलमित्यर्थः । कथम् ? अन्योन्यमितरेतरमिति शेषः प०, द०, ज० । २. धीरदीप्ति प० द० ।

कनकाश्मस्य कनकस्य अश्मा कनकाश्मः "सरोनोऽश्मा यसः सुजात्योः" [ जै० सू० ४।२।९६ ] इत्यनेन सूत्रेण अः सान्तस्तस्य तथोक्तस्य सुवर्णपाषाणस्य, किं फुल्लं पुष्पितं किंशुकवनं पलाशकाननम्। किं समवर्तिनो यमस्य जिह्वा रसना ? ।।३७।।

इत्याशङ्क्य चिराज्जज्ञे संतप्तैर्भीरुकैः शिखी।
दृष्ट्या शूरैः पराच्छेदि भिदेयं भीरुधीरयोः ।।३८।।

इत्येति—जज्ञे जातः, कोऽसौ कर्मतापन्नः ? शिखी दहनास्त्रम्, कैः ? भीरुकैः भीतैः पुरुषैः, कथम्भूतैः ? संतप्तैः कथम् ? चिराद्बहुतरकालेन, किं कृत्वा ? पूर्वमाशङ्क्य, कथम् ? इत्युक्तप्रकारेण, पराच्छेदि परिच्छिन्ना, का ? इयं भिदा भेदः, कयोः ? भीरुधीरयोः, कैः कर्तृभिः ? शूरैः, कया कृत्वा ? दृष्ट्या अवलोकनमात्रेणेत्यर्थः ।।३८।।

सामिमीलदहो चक्षुः सामिमीलद् द्विपावलिः।
नवपुष्करमस्याः किं न वपुष्करणं वपुः ।।३९।।

सामिमीलदिति—अहो आश्चर्यम्, अमिमीलत् विनिमेषितवती, का ? सा द्विपावलिः गजराजिः, किम् ? चक्षुर्लोचनम्, किं कुर्वत् सत् ? मीलत् सङ्कुचत्, कथम् ? सामि अर्धं तथा किं नामिमीलत् अपितु अमिमीलदेव, किं किम् ? नवपुष्करं शुण्डादण्डाग्रं तथा वपुः शरीरं तथा करणमिन्द्रियं तथा वपुः ओजः धातूनां तेजः, कस्याः ? अस्या द्विपावलेरिति। पादादियमकम् ।।३९।।

अत्यन्तीना हयालीयं सालिलङ्घिषत स्यदात्।
निसर्गः कश्चिदस्यास्ति सक्तस्यान्यस्य चाङ्गिनः ।।४०।।

अत्यन्तीनेति—अलिलङ्घिषत लङ्घितुमिष्टवती, का ? सा इयं हयाली हयपङ्क्तिः, कस्मात् ? स्यदात् वेगात्, कथम्भूता ? अत्यन्तीना गच्छन्ती युक्तमेतत्, अस्ति कः ? निसर्गः स्वभावः कश्चित् कस्य ? अङ्गिनः शरीरिणः, कथम्भूतस्य ? शक्तस्य समर्थस्य अन्यस्य[1] भीरोरिति। निरोष्ठ्यः ।।४०।।

रवेरावरणं चापी कुर्वाणः शरणं शरैः।
कृष्णो मेघो जगर्जोच्चैर्व्याप्योपककुभं भुवः ।।४१।।

रवेरिति—जगर्ज गर्जितवान्, कोऽसौ ? कृष्णो विष्णुः, किं कृत्वा ? पूर्वं व्याप्य, किम् ? उपककुभं प्रतिदिशम्, 'गिरिनदीपौर्णमासी' [जै० सू० ४।२।११२।] इत्यनेन सूत्रेणाकारः सान्तः। कथम्भूतः ? चापी

पिघल कर फैल गया है, अथवा पलास-वन चारों ओरसे फूल पड़ा है, अथवा पापी-पुण्यात्मादिमें समदृष्टि यमराजकी जिह्वा ही लपलपा रही है ।।३७।।

इत्यादि प्रकारसे विकल्प करनेके बाद, तपाये गये अथवा डरे हुए भीरु लोगोंने बड़ी देरमें यह जाना था कि यह अग्नि बाण है किन्तु शूर-वीरोंने देखकर ही इसे पहचान लिया था। तथा इस प्रकारसे भीरु और धीरका अन्तर स्पष्ट कर दिया था ।।३८।।

आग्नेय अस्त्रके तेजके कारण उस गजसेनाने आधी (सामि) आँख बन्द करते-करते आँखें ही बन्द कर ली थी। क्या इस गजसेनाकी सूँड़ संकुलित नहीं हुई थी ? अवश्य हुई थी। साथ ही साथ इन्द्रियाँ, शरीर और तेज (वपुः) भी सँकुचा गये थे ।।३९।।

वेगके साथ भागती हुई अश्वपंक्तिने अग्निको तेजीसे पार करनेकी इच्छा की थी। [इसमें क्या आश्चर्य है ] क्योंकि घोड़ेकी यह (फाँद जाना) प्रकृति ही है। और यही स्वभाव किसी भी सामर्थ्य युक्त दूसरे देहधारीमें देखा जाता है ।।४०।।

१. -न तथा सति परा प०, द०। २. शक्तस्य विशेषरूपेण ग्राह्यमिति।

धनुष्मान्, किं कुर्वाणः रवेः सूर्यस्यावरणं झम्पनं कुर्वाणः, कैः शरैर्बाणैः, कथम् ? उच्चैरतिशयेन, तथा कुर्वाणः, किम् ? भुवो भूमेः शरैः शरणं विदारणम्, अत्र लुप्तोपमा ज्ञातव्या, क इव ? कृष्णो नीलः मेघ इव जलधर इव, किं कृत्वा ? पूर्वं उपककुभं व्याप्य, किं कुर्वाणः ? रवेरावणं कुर्वाणः, कैः कृत्वा ? शरैः जलैः तथा कुर्वाणः, किम् भुवः शरणम्, कैः ? शरैर्जलैः कथम् ? उच्चैः, कथम्भूतः ? चापो इन्द्रधनुर्युक्त इति ॥४१॥

**अमरिष्यज्जनः पूर्वं [1]धूमध्यामाग्निशङ्कया ।**
**विद्युत्वन्तं घनं वीक्ष्य नामोक्ष्यच्चेत्स विप्रुषः ॥४२॥**

अमरिष्यदिति—अमरिष्यत् कोऽसौ ? जनः, कथम् ? पूर्वम्, कया ? धूमध्यामाग्निशङ्कया धूमध्यामलवह्निभ्रान्त्या, किं कृत्वा ? पूर्वं वीक्ष्यावलोक्य, कम् ? घनं मेघम्, कथम्भूतम् ? विद्युत्वन्तं तडिद्युक्तं चेद्यदि नामोक्ष्यत्, कोऽसौ ? सघनः काः ? विप्रुषो जलबिन्दून् ॥४२॥

**भूरिरभ्रमरो रेमी कोऽनेकानीककाननम् ।**
**काकालिकी किलाकाले नोपापापोऽपिनापपुः ॥४३॥ [पादद्व्यक्षरी]**

भूरिरिति—किलशब्दो लोकोक्तौ[2] अत्र, कः ? अभ्रमरो मेघसमूहः न उपाप न व्याप्नोति स्म, अपि तु सर्वोऽपि, किम् ? अनेकानीककाननं प्रचुरसैन्यकान्तारम्, कथम्भूतः ? भूरिः प्रचुरः, पुनः रेमी ध्वनिमान्, क्व ? अकालेऽसमये तथा का आकालिकी विद्युत् नोपाप अपि तु उपाप, किम् ? अनेकानीककाननं तथा का आपोऽपि जलान्यपि नापपुर्न पीतवत्यः अपि तु आपपुः किमनेकानीककाननम् ॥४३॥

**रणमेकार्णवं कर्तुमारेभेऽभ्रं शनैः रसन् ।**
**अभूद्वह्निरपां घोरैरारेभे भ्रंशनैः रसन् ॥४४॥ [समपादयमकम्]**

रणमिति—आरेभे प्रारब्धवत्, किं कर्तुं ? अभ्रं मेघः, किं कर्तुम् ? रणं सङ्ग्राम-भूमिं कर्तुम्, कथम्भूतम् ? एकार्णवं तथाभूसंजातः, कोऽसौ ? वह्निः, किं कुर्वन् ? रसन् वदन्, कथम् ? शनैर्मन्दम्, क्व सति ? आरेभे गर्जे, कथमभूद्वह्निः ? असन् अविद्यमानः, कैरभूद्वह्निः ? भ्रंशनैः संघट्टनैः, कासाम् ? अपां जलानाम्, कथम्भूतैः ? घोरैः भयानकैः, इत्यनेन विद्युत्पातादिति भावः ॥४४॥

---

धनुषधारी नारायणने मेघ-बाणोंकी वर्षाके द्वारा सूर्यको ढंक दिया था तथा पृथ्वीको फोड़ (शरण) दिया था। तथा युद्ध गर्जना करते हुए इसने काले बादलके समान समस्त दिशाओंको झंकृत या व्याप्त कर दिया था [कृष्ण मेघ भी सूर्यको छिपा देता है तथा मूसलाधार वृष्टिसे भूमिको विदीर्ण करता हुआ गरजता है तथा सब दिशाओंमें छा जाता है] ॥४१॥

अग्नि बाणके कारण लपटें छोड़ती अग्निकी शंकासे पहले ही अधमरे लोग बिजली चमकाते भयंकर मेघको देखकर [वज्रके भयसे] ही मर गये होते, यदि इस (मेघ बाणके बादल) ने तुरन्त वृष्टि न कर दी होती ॥४२॥

[मेघबाणके कारण] विविध सेनाओं रूपी जंगलपर कौन-सी उत्कट मेघघटा गरजती हुई नहीं आयी थी ? वर्षाऋतु न होनेपर (अकाले) भी कौन-सी वर्षाकालीन बिजली नहीं चमकी थी ? और यह सैन्यरूपी जंगल क्या वर्षाकालीन जलसे प्लावित नहीं हुआ था ? [अर्थात् समराङ्गण सर्वथा वर्षा ऋतुमय हो गया था] ॥४३॥

रुक-रुककर गरजते मेघोंने समरस्थलीको विशाल समुद्र बनाना आरम्भ कर दिया

---

१. –'द' पुस्तके 'धूममध्याग्निशंकया' इति पाठो वर्तते। तत्र टीकायामपि 'धूममध्याग्निशंकया धूममध्यामलवह्निशङ्कया' इति पाठो लभ्यते। २. –क्तौ आह्वोऽत्र द०।

नागाननागा गगने सज्जाजिः सासृजोऽसृजत् ।
रिपुः प्रपपरुः पापाः परपारपरम्पराम् ॥४५॥

[ द्व्यक्षरपादः ]

नागानिति—रिपुः शत्रुः नागान् सर्पान् असृजत् मुक्तवान्, कथम्भूतान् ? सासृजः सरुधिरान्, कस्मिन् ? गगने, कथम्भूतः ? सज्जाजिः प्रगुणितरणः, पुनः अनागा अनपराधः तथा प्रपपरुः प्रपूरितवन्तः, के ते ? नागाः, काम् ? परपारपरम्पराम् परं पिप्रतिपरन्ति "कर्मण्यण्" [जै० सू० २।२।१] इत्यनेन सूत्रेणाण्, परपाराः शत्रुभृत्याः परपाराणां परम्परा परपारपरम्परा तां विष्णुपदातिश्रेणिमित्यर्थः, कथम्भूता नागाः ? पापाः पापमूर्तय इति शेषः ॥४५॥

जलवेणीति संतुष्य तत्रासादित सा हसम् ।
विष्णोश्चमूर्विभाव्याहिं तत्रासादित साहसम् ॥४६॥

[ द्वितीयचतुर्थपादयमकम् ]

जलवेणीति—अत्र रणे आदित गृहीतवती, का ? चमूः सेना कम् हसमुल्लासम्, किं कृत्वा ? पूर्वं संतुष्य, कथमिति ? जलवेणीति नागान् जलधाराप्रवाहभ्रान्ति दत्तानानवलोक्य तुष्टेति भावः, कस्य चमूः ? विष्णोः तत्रास, का ? सा चमूः, किं कृत्वा ? पूर्वं विभाव्य ज्ञात्वा, कम् ? अहिं सर्पम्, कथम्भूतम् ? आसादितसाहसं आसादितं प्राप्तं [1]साहसं प्राणनिरपेक्षं कर्म येन तं तथोक्तम् ॥४६॥

अधोऽधः पेतुरानीलाँल्लेलिहानान्कृशानवः ।
वर्षतो विषमम्भोदानशनेरिव राशयः ॥४७॥

अध इति—पेतुः पतिताः, के ? कृशानवोऽग्नयः, कथम् ? अधोऽधः अधस्तादधस्तात्, कान् ? लेलिहानान् सर्पान्, कथम्भूतान् ? आनीलान् आ सामस्त्येन कृष्णान्, किं कुर्वतः पुञ्जा इव, पेतुः कथम् ? अधोऽधः, कान् ? अम्भोदान् मेघान्, कथम्भूतान् ? आनीलान् सामस्त्येन कृष्णान् सजलत्वात्, किं कुर्वतः ? वर्षतः, किम् ? विषं जलमिति ॥४७॥

वर्माण्याप्रपदीनानि दीनानि बिभिदुः सदा ।
दुःसदा भुजगोपाया गोपाया दुर्मुखे वृथा ॥४८॥

[ शृङ्खलायमकम् ]

था । तथा मूसलाधार वृष्टिके लगातार पड़नेसे तड़कती हुई बिजलीका आतप और उद्योत भी फैल गये थे ॥४४॥

संग्रामके लिए सर्वथा तैयार शत्रुने आकाशमें नागपाशोंको छोड़ दिया था। तथा नागपक्षके इन पापी नागोंने भी रक्तरंजित होकर (सासृज्) पापविमुख अर्थात् पुण्यात्मा (अनागाः) नारायणके सैनिकोंकी दूर तक फैली पंक्तियोंको सब तरफसे घेर लिया था ॥४५॥

नागपाशोंसे व्याप्त समरस्थलीमें नागोंको जलकी धारा समझकर नारायणकी सेना सन्तुष्ट हो कर हँसने लगी थी। किन्तु थोड़ी ही देरमें इन्हें साहस तथा वेग युक्त साँप समझ कर डर गयी थी ॥४६॥

अग्निको उगलते, अत्यन्त काले नागोंके समूह धीरे-धीरे पृथिवीपर आ रहे थे। और वज्र या बिजलीकी विपुल राशि युक्त मेघोंके समान नारायणकी सेनापर विषको बरसा रहे थे [काले और उमड़ते बादल भी जल (विष) को घनघोर वृष्टि करते हैं] ॥४७॥

1. साहसं यत्र नाहं न चेदं कार्यमित्यनुपचरितप्रत्ययः आसादितं साहसं येन तं तथोक्तमिति शेषः —प०, द०, ज० ।

वर्माणीति—बिभिदुः भेदितवन्तः, के ? भुजगोपायाः सर्पव्यापाराः, कानि ? वर्माणि सन्नहनानि, कथम्भूतानि ? आप्रपदीनानि आप्रपदं प्राप्नुवन्ति "आप्रपदम्" [ जै०सू० ३।४।१३४ ] इत्यनेन सूत्रेण खः । आगुल्फप्राप्तानीत्यर्थः, पुनः दीनानि क्षीणानि, कथम् ? सदा सर्वकालम्, कथम्भूता भुजगोपायाः ? दुःसदा दुर्गम्याः, युक्तमेतत्, स्यात्, का ? गोपाया रक्षा, कथम् ? वृथा एवमेव निष्फलेत्यर्थः, दुर्मुखे दुर्ज इत्यर्थः ॥४८॥

**सर्पवेणी विसर्पन्ती दानधारेव दन्तिनः ।**
**कटयोराकुला भ्रेजे शृङ्खला पादयोरिव ॥४९॥**

सर्पवेणीति—भ्रेजे शोभिता, का ? सर्पवेणी पन्नगश्रेणिः । किं कुर्वन्ती ? विसर्पन्ती विजृम्भमाणा, कयोर्विषये ? दन्तिनो गजस्य कटयोः कपोलयोः, केव ? दानधारेव, कथम्भूता सती ? आकुला व्यग्रा तथा पादयोः विसर्पन्ती सती शृङ्खलेव भ्रेजे शुशुभे ॥४९॥

**नागायत्तं सुजित्याभिर्नभोऽभूदिव दारितम् ।**
**नागायत्तं सुजित्याभिर्मायाभिर्नोदितं जनः ॥५०॥**

[ पादयमकम् ]

नागेति—नभो गगनं दारितमिव छिन्नमिव अभूत् सञ्जातम्, काभिः ? सुजित्याभिः सुमहद्बलैः, कथम्भूतं सत् ? नागायत्तं सर्पाधीनं तथा न नागा यदपि त्वगायद् गीतवान्, कोऽसौ ? जनो लोकः कम् ? तं प्रतिविष्णुम्, कथम्भूतम् ? अभिर्मायाभिः कौटिल्यैः तं शत्रुं सुजित्य पराजित्य उदितम् ॥५०॥

**दददेऽदोऽदरिद्रोऽरिरद्रिरौद्रोऽदरादरी ।**
**दूरादरं दरं दद्रुरार्द्रा दद्रुर्दरोर्दरी ॥५१॥**

[ द्व्यक्षरबन्धः ]

दद इति—दददे दत्तवान्, कोऽसौ ? अरिः शत्रुः किम् ? अद एतदरुत्रणम्, कथम्भूतः ? अदरिद्रः पुण्यवान्, पुनः कथम्भूतः ? अद्रिरौद्रः अद्रिरिव रौद्रः पर्वतवद्भयानकः इत्यर्थः, पुनः आदरी [1]आदरवान्, तथा

---

सदैव कठिनाईके साथ रोकी जाने योग्य नागोंकी प्रवृत्तिने नारायणके सैनिकोंके पैरों तक लटकते कवचोंको फोड़ दिया था । और जीर्ण-शीर्ण कर दिया था । ठीक ही है क्योंकि दुर्जनके समान साँपका प्रतिरोध भी व्यर्थ है [सदैव दुष्टतापूर्ण भेदिये भी सर्वथा प्रहरियोंसे घिरे किलोंमें घुस जाते हैं । और सुरक्षाको नष्ट करके सब बल नष्ट कर देते हैं ] ॥४८॥

कुटिलता तथा चंचलताके साथ फैलती हुई नागोंकी श्रेणियाँ हाथियोंके मस्तकपर मदजलकी धाराके समान लगती थीं । तथा तेजीसे पैरोंमें पहुँचकर शृंखलाकी शोभाको प्राप्त हुई थीं ॥४९॥

सर्पोंकी श्रेणियोंसे व्याप्त आकाश, सरलतासे विजयकी साधक इनके द्वारा विदारण किया समान हो गया था । इस प्रकारसे उठे हुए उस प्रतिनारायणकी क्यों लोगोंने प्रशंसा नहीं की थी ? [अपितु की ही] क्योंकि उसने इन छलोंके द्वारा आसानीसे विजय पा ली थी ॥५०॥

(अन्वय-अदरिद्रः, अद्रिरौद्रः, आदरी अरिः अद् अरुः ददे । अरं दरं दूरात् दद्रुः । आर्द्रा दरी दद्रुः ) ।

---

१. दरं अस्यास्ति दरी । समन्तात् दरी आदरी, सर्वथाभयवानिति व्याख्या प्रकरणानुसङ्गिनी ।

ददवे छिन्नवान्, किम् ? दरं भयम् कस्मात् दूरात्, कथम् ? अरमत्यर्थं तथा ददवे ररक्ष, कोऽसौ ? दरी भयवान्, किम् ? दरं भयं तथा दद्रुभयं गताः, के ? आर्द्राः आर्द्रा भयवशात् स्वेदजलकणाङ्कितगात्राः तथा च दद्रुर्गताः, के ? आर्द्राः का ? दरीः कन्दरा इति ॥५१॥

**प्रौर्णवीदथ सौपर्णः कीर्णपर्णः फणाभृतः ।**
**कृष्णोदीर्णोऽर्णवस्याग्निस्तरङ्गानिव घूर्णतः ॥५२॥**

प्रोर्णवोदिति—अथारिप्रौढिदर्शनानन्तरं सौपर्णो गरुडः फणाभृतः सर्पान् प्रौर्णवीत् प्रच्छादितवान्, कथम्भूतान् फणाभृतः ? घूर्णतः भ्रमतः, कथम्भूतः सौपर्णः ? कीर्णपर्णः प्रसारितपक्षः, पुनः कृष्णोदीर्णः विष्णुप्रेरितः, क इव प्रौर्णवीत् ? [1]अग्निरिव, कान् ? अर्णवस्य समुद्रस्य घूर्णतः तरङ्गान् ॥५२॥

**अरुणत्फणिनगणानुच्चचार समुद्धृतान् ।**
**सोऽन्त्राणीव रुषा कर्षन्नुच्चचार समुद्धृतान् ॥५३॥**

( समपादयमकम् )

अरुणदिति—अरुणत् रुद्धवान्, कोऽसौ ? स सौपर्णः, कान् ? फणिनगणान् फणिनामिमे फाणिनाः ते च ते गणाश्च तान् सर्पसमूहांस्तथोच्चचार ऊर्ध्वं भक्षितवान् कः ? स सौपर्णः, कान् ? फणिनगणान् कथम्भूतान् ? हृतान् गृहीतान्, पुनः, उच्चचारसमुद्धृतान् उच्चैर्गमनसमुद्भिमान्, कया ? रुषा कोपेन, किं कुर्वाण इव ? आकर्षन्निव, कानि ? अन्त्राणि, कथम्भूतः सौपर्णः ? समुत्सहर्षः ॥५३॥

**गरो गिरिगुरुर्गौरैररागैरुरगैररम् ।**
**मुमुचेऽमी चमूमुच्चाममाचाममुचोऽमुचन् ॥५४॥**

( चतुरक्षरबन्धः )

गर इति—उरगैः सर्पैः गरो गरलं मुमुचे मुक्तः, कथम्भूतो गरः ? गिरिगुरुः पर्वतगरिष्ठः, कथम्भूतैः उरगैः ? गौरैः शुभ्रैः, पुनः, अरागैः दुष्टैः निस्नेहैरित्यर्थः, कथम् ? अरमत्यर्थम्, अमी उरगाः चमूं सेनाममुचन् मुक्तवन्तः, कथम्भूताम् ? उच्चाम्, कथम्भूताः सन्तः ? आचाममुचः भक्षणमुक्ताः, कथम् ? अमा युगपत् ॥५४॥

---

सर्वथा विभव सम्पन्न, पर्वतके समान कठोर और उग्र तथापि नारायण से भीत शत्रुने इस भीषण प्रहारको किया था। दूरसे ही उसने बहुत कुछ भय दिखाया था। तथापि वह भीत ( दरी ) था और भयजन्य पसीने आदिका अनुभव कर रहा था। [अथवा भयसे नम गुफाओंमें चला गया था] ॥५१॥

प्रतिनारायण द्वारा नागपाश चलाये जानेके बाद नारायणके द्वारा छोड़े गये और पंख फैलाकर उड़ते गरुड़ों (सौपर्णों) ने शत्रुके नागोंको वैसे ही दबा दिया था जिस प्रकार समुद्रमें लगी बडवाग्निको लहराती हुई समुद्रकी लहरें दबा देती हैं ॥५२॥

उस गरुड़ने नारायणकी सेनाके ऊपर उड़ते (समुद्धृतान्) नागोंकी पंक्तियोंको रोक दिया था तथा उनको ऊपरसे खींचता हुआ चला था (उच्चचार)। तथा इस प्रकार मरे हुए नागों (हृतान्) को आंतोंकी तरह क्रोधसे खींचकर खा गया था (उच्चचार) तथा प्रसन्न (समुद्) था ॥५३॥

(अन्वय—गौरैः, अरागैः, उरगैः, गिरिगुरुः, गरः, अरम् मुमुचे। आचाममुचः अमी उच्चां चमूं अमा अमुचन् ।)

---

1. -च कान् ? तरङ्गान्, किं कुर्वतः ? घूर्णतः, कस्याग्निः ? अर्णवस्य समुद्रस्य वडवानल इत्यर्थः।

आधुनानः करं भानुरापतन्मण्डलस्थितिम् ।
प्रयोगं गारुडं प्राप्य नागदष्टोऽश्वसीदिव ॥५५॥

आधुनान इति—अश्वसीत् उल्ललास । कोऽसौ ? भानुः सूर्यः, किं कृत्वा ? पूर्वं गारुडं गरुडकृतं प्रयोगं प्राप्य, किं कुर्वन् ? मण्डलस्थितिं परिवेषम् आपतन्नागच्छन्, पुनः, करं किरणम् आधुनानः कम्पयन्, क इव अश्वसीत् ? नागदष्टः इव सर्पदष्टपुरुष इव, किं कृत्वा ? पूर्वं प्राप्य, कम् ? प्रयोगम्, कथम्भूतम् ? गारुडम्, किं कुर्वन् ? आपतन्, काम् ? मण्डलस्थितिं मन्त्रचक्रम्, किं कुर्वाणः ? करं हस्तं आधुनानः ॥५५॥

स दिदृक्षाममायासीत्पक्षिराजो रुरुत्सया ।
सदिदं क्षाममायासीच्चिन्तयेवाहिमण्डलम् ॥५६॥

स इति—स पक्षिराजो गरुडो दिदृक्षां द्रष्टुमिच्छाम् अयासीत् प्राप्तवान्, कया ? रुरुत्सया रोद्धुमिच्छया, कथम् ? अमा युगपत् तथा आयासीत् खेदमनुभवति स्म, किम् ? इदमहिमण्डलं सर्पवृन्दम्, कयेव ? चिन्तयेव, कथम्भूतं सत् ? क्षामं सत् क्षीणं सदिति ॥५६॥

पलायांचक्रिरे नागा नैव नागान्महानृपाः ।
निस्तुदन्नपि चञ्च्वा तान्गरुत्मान्पर्णवायुना ॥५७॥
वनेऽपूरिरिपूनेव नेयताक्षक्षतायने ।
पूतानेककनेता पू रिक्षकर्यर्यकक्षरि ॥५८॥ ( गतप्रत्यागतं द्विकलम् )
( युग्मम् )

पलायाञ्चक्रिर इति—पलायांचक्रिरे पलायिताः, के ? नागाः सर्पाः, नैव पलायांचक्रिरे महानृपाः नरेन्द्राः, तथा अपूरि आप्लावयते स्म, कोऽसौ ? गरुत्मान् गरुडः कानेव ? रिपूनेव शत्रूनेव, क्व ? वने रणे, केन कृत्वा ? पर्णवायुना पक्षवातेन, किं कुर्वन् अपि ? निस्तुदन्नपि कान् तान् नागान् भोगिनः, कया ? चञ्च्वा, कथम्भूते वने ? नेयताक्षक्षतायने नेयाः रथास्तानि चक्राणि अक्षाश्चक्रभ्रमणहेतुकाष्ठानि क्षतानि खण्डितानि अयनानि मार्गाः, नेयानां तानि नेयतानि नेयतानामक्षाः नेयताक्षा नेयताक्षैः क्षतानि अयनानि मार्गा यत्र तत्तथोक्तं तस्मिन्, उक्तं च 'प्राप्ये गम्ये पदार्थे च रथे नेयः प्रवर्तते', विस्तारे जनके चक्रे तकच्छब्दोऽप्यभि-

---

गरुड़के भक्षणसे बचे अत्यन्त निर्मम श्वेत नागोंके द्वारा विपुल मात्रामें ऐसा गरल वमन किया गया था जो पहाड़ोंको भी भारी पड़ता [फोड़ देता] । गरल वमन करनेके साथ ही साथ (अमा) ये नारायणकी श्रेष्ठ सेवाको छोड़कर भाग गये थे ॥५४॥

सांपके द्वारा काटे गये पुरुषके समान नागपाशोंसे ढका गया सूर्य गरुड़-प्रयोगको प्राप्त करके फिर चमक उठा था तथा किरणों (कर) को फैलाता हुआ पूर्णवृत्त रूपको प्राप्त हुआ था [सर्प-दष्ट व्यक्ति भी विषापहार मन्त्रका प्रयोग होते ही सांस लेता है तथा हाथ हिलाने लगता है और फिर अपने वर्गमें लौट आता है] ॥५५॥

पक्षियोंके राजा गरुड़ने प्रतिनारायण द्वारा छोड़े गये नागोंको रोक देनेकी इच्छासे चारों ओर दृष्टिको दौड़ाया था । इसकी दृष्टि उठनेके साथ-साथ ही मड़राता नाग समूह चिन्ताके कारण बिलकुल क्षीण हो गया था ॥५६॥

(अन्वय—पूतानेक-कनेता, पूः गरुत्मान् नेयताक्ष-क्षताऽयने रिक्षकरि-अर्यकक्षरि वने चञ्च्वा निस्तुदन्नपि तान् नागान् पर्णवायुना । रिपूनेव अपूरि । महानृपाः नैव पलायाञ्चक्रिरे । नागाः पलायाञ्चक्रिरे) ।

अनेकानेक प्राणियोंके पावक विष्णु (क)के वाहन गरुड़ने चोंचसे बिना काटे या खाये उड़ते-उड़ते ही, अपने पंखोंकी वायुके द्वारा ही शत्रुके द्वारा छोड़े सर्प-समूहको उस वनमें

धीयते।' इति। पुनः कथम्भूते ? रिक्षकर्यर्यकक्षरो रिक्षाश्च ते करिणश्च रिक्षकरिणः विलग्ना गन्धहस्तिन इत्यर्थः, अर्य ऐरावणः कक्षा स्पर्द्धा अर्येण सह कक्षां ऋच्छन्ति गच्छन्ति प्राप्नुवन्ति विधिप्रत्यये लुप्ते सति अर्यकक्षरः ऐरावणस्पर्द्धाबद्धाः इत्यर्थः, रिक्षकरिणः अर्यकक्षरो यत्र तत् रिक्षकर्यर्यकक्षः तत्र, उक्तं च 'स्वामिनि गौरवे सूर्ये प्रधानेऽपि च वस्तुनि। देवदन्तिनि वै दक्षैरर्यशब्दोऽभिधीयते' इति। कथम्भूतो गच्छन्‌ ? पूतानेककनेता को विष्णुः पूता अनेके येन स पूतानेकः पवित्रितविश्वजन इत्यर्थः, पूतानेकश्चासौ कश्च पूतानेककः नेता वाहकः पूतानेककस्य नेता पूतानेककनेता, पुनः पूः पवते पूः विशाल रूपम्, पवमानः पावमान इत्यर्थः ॥५७-५८॥

**इति मोघं बभूवारिर्मन्त्रयुद्धमयुङ्क्त यत्।**
**प्रागनालोचितस्यास्मिन् मन्त्रस्यावसरः कुतः ॥५९॥**

इतीति—बभूव सञ्जातम्। किम् ? तन्मन्त्रयुद्धम्, कथम्भूतम् ? मोघं निष्फलम् कथम् ? इत्युक्तप्रकारेण यत् अयुङ्क्त प्रयुक्तवान् कः ? अरिः प्रतिविष्णुः, युक्तमेतत्, अस्मिन् पश्चो प्राक् पूर्वमनालोचितस्य प्रमाणनयनिक्षेपैः न विचारितस्य मन्त्रस्य कुतः कस्मादवसरः प्रस्तावः स्यादपि तु नेत्यर्थः ॥५९॥

**अविस्मरन्पराघातमित्थं कस्यचिदस्मरत्।**
**यदर्थं यतते शूरः तदर्थं विस्मरेत्कथम् ॥६०॥**

अविस्मरन्निति—अस्मरत् कस्यचित् कश्चिच्चिन्तितवान् इत्यर्थः। कोऽसौ ? अरिः, किं कुर्वन् ? अविस्मरन्, कम् ? पराघातं परेषामाघातं शत्रुवधम् ? कथम् ? इत्थमुक्तप्रकारेण, युक्तमेतत्, यदर्थं यन्निमित्तं यतते यत्नपरो भवेत्, कः ? शूरः तदर्थं स चासावर्थश्च तदर्थः तम् कथं विस्मरेत् ॥६०॥

**नन्वधसि पयोऽस्तीति कुण्डोघ्नीनां फलं भवेत्।**
**समेत्य भुक्तमात्मीयं तत्संभुक्तं मया धनम् ॥६१॥**

नन्विति—ननु भवेत् न पुनः स्यात्, किम् ? फलम्, कासाम् ? कुण्डोघ्नीनां गवाम्, कथमिति ? ऊधसि पयोऽस्तीति अतः कारणात् समेत्य मिलित्वा यद्धनमात्मीयं भुक्तं तत्संभुक्तमुच्यते तच्च मया प्रतिविष्णुना भुक्तमिति ॥६१॥

**रणे प्राणाः सदातिथ्यं प्रीणितास्तथ्यमर्थिनः।**
**निःशेषास्तस्य ते मेऽस्य भुक्तशेषाः हि कीर्तयः ॥६२॥**

---

उड़ा दिया था, जिसमें रथोंके पहियोंकी हालके द्वारा रास्ते खुद गये थे और बड़े-बड़े बालों वाले (रीक्ष) ऐरावत (अर्य) के समान विशाल हाथी घूम रहे थे। इस प्रकार सर्प ही भाग खड़े हुए थे, बड़े-बड़े राजा स्थिर थे ॥५७-५८॥

शत्रुने जो मन्त्रयुद्ध (अग्निबाण, आदिके द्वारा) चलाया था वह उक्त प्रकारसे निष्फल हो गया था। नारायणके साथ चल रहे युद्धमें विविध दृष्टियोंसे विचार किये बिना ही चलाये गये मन्त्रयुद्धकी सफलताकी संभावना भी कैसे हो सकती थी ॥५९॥

दूसरेके घोर प्रहारको[1] न भूलकर प्रतिनारायणके भट इस प्रकारसे कह रहे थे 'वीरके द्वारा जिस प्रयोजनकी सिद्धिका प्रयत्न किया जाता है उसे कैसे भुलाया जाय ?' ॥६०॥

कुण्डके समान विशाल थन युक्त गायोंका यही फल है कि उनके ऊधस (थन) में दूध होता है। इस प्रकार हमने अपनी जिस सम्पत्तिका सबको बाँटकर उपभोग किया है वही हमारा पवित्र उपभोग है ॥६१॥

---

१. 'प्रहारम्' सुष्ठुतरः।

रण इति—तस्यास्य मे मम रणे सङ्ग्रामे ते प्राणा आतिथ्यं भजन्ते, कथम् ? सदा सर्वदा तथा निः-शेषाः समस्ता अर्थिनो याचकाः प्रीणिताः सन्तर्पिताः। कथम् ? तथ्यं परमार्थतः युक्तमेतत्, हि यस्मात् भवेयुः, काः ? कीर्तयः कथम्भूताः ? भुक्तशेषाः भुक्ताच्छेषास्तास्तथोक्ताः भुक्तादुद्धृताः, कोऽयमर्थः ? भुक्तं द्रव्यशरीरादि यास्यति कीर्तयः स्थास्नवो भवन्ति ॥६२॥

**भुज्यतेऽवारपारीणं मयैकेनार्जितं यशः।**
**सोऽयं लोभो गुणो वस्तु सहभोगो न सह्यते ॥६३॥**

भुज्यत इति—यदेकेन एकाकिना मया भुज्यते अनुभूयते, किं कर्मतापन्नम् ? यशः, कथम्भूतं सत् ? अर्जितम्, पुनः अवारपारीणं पारावारगामि सोऽयं लोभः कार्पण्यं गुणो वास्तु यतः कारणात् सहभोगः शत्रुणा सह मिलित्वा भोगो न सह्यते न सोढुं शक्यते मयेति ॥६३॥

**अरावणञ्जगद्विश्वं करवै तदविष्णु वा।**
**न योक्तव्याजरासन्धं वागितोऽन्या न वर्तते ॥६४॥**

अरावणमिति—करवै करोमि, किम् ? तत् जगत् भुवनम्, कथम्भूतम् ? अरावणं रावणहीनं वाऽथवा अविष्णु लक्ष्मणवर्जितम्, कथम्भूतं जगत् ? विश्वं समस्तम्, इतोऽस्याः प्रतिज्ञायाः न वर्ततेऽन्या वाग् वाणी, कथं यथा भवति ? असन्धम् अप्रतिज्ञम् कथम्भूता सती वाणी ? न योक्तव्या व्येञ् संवरणे व्यानं व्यम् "आतः कः" [ जै० सू० २।२।३ ] इत्यनेन सूत्रेण कः, संवरणमित्यर्थः नयेनोक्तं व्यं यया सा तथोक्ता नीतिप्रति-पादितसंवरणेत्यर्थः, पुनः कथम्भूता ? अजरा नूतनेति।

अधुना भारतीयः—ततस्मात् कारणात् करवै, किम् ? जगत् कथम्भूतम् ? अविष्णु नारायणहीनं वाऽथवा अजरासन्धम्, किं कुर्वन् ? अणन् गर्जन् क्व ? अरौ कथम्भूतं जगत् ? विश्वं निखिलम् इतः प्रतिज्ञाया अन्या वाग् न वर्तते न च योक्तव्या न योजनीयेति ॥६४॥

**इति चक्रस्य तत्कालमध्यगादभियोगतः।**
**अकालचक्रं लोकोऽयमध्यगादभियो गतः ॥६५॥**

इतीति—ततस्मात् कारणात् अध्यगात् स्मृतवान्, कोऽसौ ? प्रतिविष्णुः, कम् ? कालमवसरम्,

याचकोंकी समस्त इच्छाओंको प्रेमपूर्वक पूर्ण करनेवाले मेरे प्राण समाप्त होकर, निश्चित ही स्वर्गके आतिथ्यको प्राप्त करेंगे। किन्तु तब भी भोगोंसे बची हुई मेरी कीर्ति यहाँ स्थायी होगी तथा उसका कभी अन्त नहीं आयेगा ॥६२॥

मुझ अकेलेके द्वारा ऐसे विशाल यशका उपभोग किया जा रहा है जिसका ओर-छोर ही नहीं है। यह भले ही लोभ हो या गुण हो किन्तु दूसरेके साथ यशका सहभोग सह्य नहीं है ॥६३॥

नायक और प्रतिनायक क्रमशः यही करते थे कि समस्त संसार बिना रावणका अथवा बिना रामका करता हूँ। इसके सिवा दूसरी प्रतिज्ञा ( सन्ध ) ही नहीं है और न नीतिशास्त्रके व्याख्यानकी ओटमें ( नयोक्तव्या ) कोई नयी ( अजरा ) व्याख्या करके ही इस शपथको तोड़ा जा सकता है।

श्रीकृष्ण और जरासन्ध भी शत्रुपर ( अरौ ) गर्जते हुए (अणन्) निखिल विश्वको बिना जरासन्ध या बिना कृष्णका करनेके लिए सन्नद्ध थे। तथा इस प्रतिज्ञाके शब्दों या अर्थमें परिवर्तनके विरुद्ध थे ॥६४॥

इस प्रकारसे बड़ा प्रयत्न करनेपर प्रतिनायकको उस समय चक्रके प्रयोगके अवसर-

१. -षाः भुक्तशेषाः तास्तथोक्ताः, भुक्ता उद्धृताः—अ०। २. भवेयुरिति शेषाः—प० ज०।

कस्य ? चक्रस्य । कस्मात् ? अभियोगतः उद्यमात्, कथम् ? इत्युक्तप्रकारापेक्षया तथा अभ्यगात् ज्ञातवान् कोऽसौ ? अयं लोकः, किम् ? अकालचक्रं कथम्भूतः सन् ? गतो नियतः, कस्याः सकाशात् ? अभियः अभया-दिति ॥६५॥

तथायुधिष्ठिरन्तारं कीर्त्या बलमधिष्ठितम् ।
चिन्तागृहप्रवेशैकप्रारम्भो राममाविशत् ॥६६॥

तथेति—तथा आविशत् प्रविष्टवान्, कोऽसौ ? चिन्तागृहप्रवेशैकप्रारम्भः चिन्तैव गृहं चिन्तागृहं चिन्तागृहस्य प्रवेशश्चिन्तागृहप्रवेशः चिन्तागृहप्रवेशस्य एकः प्रारम्भो यस्य सः तथोक्तः, कम् ? रामं राघवम्, कथम्भूतम् ? रन्तारं क्रीडन्तम्, कया सह ? कीर्त्या, पुनः अधिष्ठितम् कम् ? बलं सैन्यम्, कथम्भूतम् ? आयुधिष्ठि प्रकृष्टानि आयुधानि आयुधिष्ठानि, "तमेष्ठावातिशायने" [ जै० सू० ४।१।११४ ] इत्यनेन सूत्रेणेष्ठप्रत्ययः, आयुधिष्ठानि अस्य सन्ति आयुधिष्ठि "ठेनावतः" [ जै० सू० ४।१।४१ ] इत्यनेन सूत्रेण इन् अतिनिशितास्त्रयुक्तमित्यर्थः ।

अथ भारतीयः—रामं तथा आविशत्, कम् ? युधिष्ठिरम् कथम्भूतम् ? बलम् बलभद्रं अधिष्ठितम्, पुनः, कीर्त्या तारम् उच्चम्, शेषमशेषं प्राग्वत् ॥६६॥

असुग्रीवाभियोगार्तमनाशं नरि पौरुषम् ।
विदधेऽनाकुलं सैन्यमनाशं न रिपौ रुषम् ॥६७॥ (समपादयमकम्)

असुग्रीवेति—न विदधे न कृतवत्, किं कर्तृ ? सैन्यम्, किं कर्म ? पौरुषम्, कथम्भूतं सत् ? आकुलं व्यग्रम्, तथा न विदधे, किं कर्तृ ? सैन्यम्, काम् ? रुषम्, क्व ? नरि, कथम्भूते ? रिपौ शत्रौ कथम्भूतं पौरुषम् ? अनाशम् अनश्वरम्, कथम्भूतं सैन्यम् ? अनाशं न विद्यते आशा यस्य तत् अवाञ्छम् अनभिलाषं कलत्रपुत्रादौ अलोभितया स्वस्थम्, पुनः, असुग्रीवाभियोगार्तं सुग्रीवस्याभियोगः सुग्रीवाभियोगः न सुग्रीवाभि-योगोऽसुग्रीवाभियोगः असुग्रीवाभियोगेन ऋतम्[3] असुग्रीवाभियोगार्तम् असुग्रीवोद्यमार्दितम् इति ।

भारतीयः पक्षः—न विदधे न चकार किं कर्तृ ? नकुलस्येदं नाकुलम्, किं कर्म ? पौरुषम्, कथम्भूतम् ? अनाशम् अनश्वरम्, क्व ? नरि, कथम्भूते ? रिपौ, तथा न विदधे, किं कर्तृ ? नाकुलं सैन्यं काम् ? रुषम्, कथम्भूतं सत् ? अनाशमवाञ्छम्, पुनः कथम्भूतम् ? असुग्रीवाभियोगार्तं ग्रीवायामभियोगो येषां ते ग्रीवा-भियोगाः असवश्च ते ग्रीवाभियोगाश्च असुग्रीवाभियोगास्तैः ऋतम् असुग्रीवाभियोगार्तं कण्ठगतप्राणादित-मित्यर्थः ॥६७॥

---

की स्मृति आयी थी । किन्तु निखिल विश्व अभयको प्राप्त करके यम (काल) के चक्रके प्रहारकी समाप्तिको जान सका था ॥६५॥

और निर्मल कीर्तिके साथ खेलते ( रन्तारम् ) तथा तीक्ष्ण शस्त्रोंसे सज्जित ( आयुधिष्ठि ) सेनाके स्वामी रामका चिन्ता रूपी गृहमें प्रवेशका प्रारम्भ हो गया था [ सत्यकीर्तिके कारण सबसे उन्नत ( तारं ), बलरामके साहाय्ययुक्त तथा प्रकृत्या मनोहर युधिष्ठिरका भी चिन्ता-गृहमें प्रवेशका मुहूर्त प्रारम्भ हो गया था ] ॥ ६६ ॥

श्रीरामने सुग्रीवकी सतत कर्मठताके कारण निःशंक और चिरस्थायी पुरुषार्थको शत्रुके विरुद्ध किया था । तथा घर-द्वारकी चिन्तासे मुक्त सेनाको निराकुल कर दिया था । क्या शत्रुपर क्रोध नहीं किया था ?

श्रीकृष्णने शत्रुके विरुद्ध नकुलका ऐसा पराक्रम कराया था जिससे उसकी सेनाकी विजयकी आशा ही समाप्त हो गयी थी । शत्रुपर नकुलको क्रोध अनश्वर था तथा उसके प्राण ग्रीवामें आ गये थे ( असु-ग्रीवा-अभियोगार्त ) ॥ ६७ ॥

---

१. इन्—प० । २. सैन्यमेति मुद्रितः । ३. आर्त—द० ।

योऽपि ना हनुमानाजेर्जुष्टो भेरिरवो गतिः ।
नोऽरुजे तीर्थनीत्याथोऽसौ सहायकमस्तुत ॥६८॥

( गोमूत्रिकागर्भश्लोकः )

य इति—अथ उ अहो अस्तुत प्रशंसितवान्, कः ? असावेव हनुमान्, किम् ? सहायकं मित्रसमूहं योऽपि आसीत् कः ? ना पुरुषः हनुमान् कथम्भूतः ? जुष्टः प्रीतः, कस्याः ? आजेः सङ्ग्रामस्य कथम्भूतः ? भेरिरवः गम्भीररवः पुनः पुनरपि कथम्भूतः ? गतिः, कस्यै ? रुजे[2] सभङ्गाय, केषाम् ? नः अस्माकं भङ्गमुदेतुं न ददात्यस्माकमित्यर्थः, कया कृत्वा ? तीर्थनीत्या पञ्चाङ्गमन्त्रेणेति ॥६८॥

गोमूत्रिकागर्भश्लोकेन भारतीयपक्षोऽप्यभिधीयते अस्य श्लोकस्य चतुरोऽपि पादान् अधोधो लिखित्वा पश्य गोमूत्रिकारूपगर्भः श्लोकः समुत्पद्यते स यथा—

| यो | ऽि | ना | ह | नु | मा | ना | जे |
|---|---|---|---|---|---|---|---|
| र्जु | ष्टो | भे | रि | र | वो | ग | तिः |
| नो | रु | जे | ती | र्थ | नी | त्या | थो |
| सौ | स | हा | य | क | म | स्तु | त |

योऽर्जुनोऽसौ स रुष्टोऽपि नामेजे हायतीरिह ।
नुरर्थकमनीवोमा नागत्यास्तु तथोतिजे ॥६९॥

( अन्वय—आजेर्जुष्टः, भेरिरवः, तीर्थनीत्या नः अरुजे गतिः यः ना हनुमान्, अथ असौ अपि सहायकम् अस्तुत उ )

युद्धमें तल्लीन, भेरियोंके समान गरजता तथा पंचांग मन्त्रणाके द्वारा हमारी विपत्तियोंका परिहारक जो यह हनूमान् नामका महापुरुष है उसने भी अपने सहायकोंकी प्रशंसा की थी [ भारत पक्षमें शिखरयुक्त अर्थात् 'पर्वतोंके स्वामी' भी हनूमान्‌की जगह हो सकेगा ] यही आश्चर्य है ॥ ६८ ॥

( अन्वय—असौ रुष्टोऽपि यः अर्जुनः स इह आयतीः न भेजे ? हा । तथा ऊतिजे अगत्या नुः उमा अर्थकमनीव नास्तु । )

तलवारके प्रयोगसे दूर जो धनुषधारी अर्जुन था क्या उसने इस युद्धमें उज्ज्वल भविष्यकी नींव नहीं डाली थी ? अपितु अवश्य डाली थी । इस प्रकारके रक्षात्मक युद्धमें थोड़े अनौचित्यके कारण पुरुषकी कीर्ति क्या कमनीय उद्देश्यके लिए नहीं होती है ? अपितु होती ही है ।

यो पि ना ह नु मा ना जे
र्जु ष्टो भे रि र वो ग ति
नो रु जे ती र्थ नी त्या थो
सौ स हा य क म स्तु त

१. -रुः अगतिः—दि० ज० । २. -जे भङ्गाय दि० । —जे भयाय दि० ।

स इति—सः सोऽर्जुनः लोकप्रसिद्धः, हा कष्टं ना भेजे नाश्रितवान् ? काः ? आयतीरुत्तरफलानि, कस्मिन् ? इह रणे, क्व सति ? असौ खड्गे सति, कथम्भूतोऽपि ? रक्तोऽपि तथा मास्तु न भवतु, का ? उमा कीर्तिः, कस्य ? नुः पुरुषस्य अक्लया अनोत्या क्व सति ? इह रणे, कथम्भूते ? ऊर्जिते रक्षाजाते, इव शब्दोऽत्र यथार्थवाची यथा उमा कीर्तिः आयते, कथम्भूता कीर्तिः ? अर्थकमना अर्थात् कमनी इष्टमनोहरा ॥६९॥

**हस्तच्युतास्त्रमाकम्पं मीलिताक्षं बलं जलम् ।**
**वाताहतमिवोत्सृज्य न स्म वेद क्रियान्तरम् ॥७०॥**

हस्तेति—न वेद स्म न जानाति स्म न वेदितवदित्यर्थः, किं कर्तृ ? बलं सैन्यम्, किं कर्म ? क्रियान्तरम्, किं कृत्वा ? पूर्वमुत्सृज्य परित्यज्य कम् ? आकम्पम्, कथम्भूतं सत् ? हस्तच्युतस्तास्त्रं करगलितशस्त्रम्, पुनः कथम्भूतम् ? मीलिताक्षं सङ्कुचितलोचनम्, किमिव न स्म वेद क्रियान्तरम् ? जलमिव, किं कृत्वा ? पूर्वमुत्सृज्य कम् ? आकम्पम्, कथम्भूतं सत् ? वाताहतमिति ॥७०॥

**दूरक्षेशविभीमोऽस्मिन्निति वेपथुमीयुषि ।**
**त्रस्तं युद्धे परं सैन्यं विजगाहे विभीषणः ॥७१॥**

दूरक्ष इति—विजगाहे विलोडितवान्, कोऽसौ ? विभीषणो रावणानुजः, किम् ? सैन्यम्, कथम्भूतम् ? त्रस्तम्, क्व ? अस्मिन् युद्धे, कथम्भूते वेपथुं कम्पं ईयुषि गतवति कथम् ? इत्युक्तप्रकारापेक्षया, कथम्भूतः ? दूरक्षेशविभीमः दुःखेन रक्ष्यते दूरक्षः वर्तुमशक्या इत्यर्थः दूरक्षश्चासावीशश्च दूरक्षेशः दूरक्षेशेन विभीमः दूरक्षेशविभीमः दुर्धररावणभयानके इत्यर्थः, कथम्भूतं तत्सैन्यम् ? परमुत्कृष्टमिति ।

भारतीयः—विजगाहे कोऽसौ ? भीमः, किम् ? परमन्यत् सैन्यम्, कथम्भूतं सत् ? त्रस्तम्, क्व ? अस्मिन् युद्धे, कथंभूते ? वेपथुम् ईयुषि, कथम् ? इत्युक्तप्रकारापेक्षया, पुनः कथम्भूते ? दूरक्षे दुष्टरक्षे, कथम्भूतं सैन्यम् ? शवि शवान्यस्य सन्ति शवि मृतकयुक्तं कथम्भूतो भीमः ? विभीषणो रौद्रः ॥७१॥

**अजित्वान्यं श्रिया विष्णोररिरंसोरसी सरत् ।**
**संमुखं चक्रमुद्योतैररिरंसोरसीसरत् ॥७२॥** (समपादयमकम्)

अजित्वेति—असीसरत् प्रेरितवान्, कोऽसौ अरिः प्रतिविष्णुः, किम् ? चक्रम्, किं कृत्वा ? पूर्वमजित्वा अनभिभूय, कम् ? अन्यं विष्णुम्, किं कुर्वन् ? सरत् गच्छत्, के ? अंसोरसी स्कन्धवक्षसी, कथं यथा भवति ?

---

सेनाने कांपनेके सिवाय और दूसरीको उस समय नहीं जाना था । उसके हाथोंसे शस्त्र गिर गये थे, आंखें बन्द कर ली थीं तथा वह हवासे थरराये गये पानीके समान वायु-रोगसे पीड़ित होकर अचेतन ( जडम् ) हो गयी थी ॥ ७० ॥

उक्त प्रकारसे घोर कम्पको करानेवाले इस दारुण युद्धमें दुष्ट राक्षसराज रावणसे सर्वथा डरे हुए विभीषणने डरते-डरते दूसरे (रामकी) सेना में प्रवेश किया था ।

[ (अन्वय--दूरक्षे, शवि वेपथुमीयुषि अस्मिन् युद्धे विभीषणः भीमः त्रस्तं परं सैन्यं विजगाहे । ) बड़ी कठिनाईसे आत्म-रक्षा योग्य, शवोंसे पटे हुए, अतएव सर्वथा कँपा देनेवाले इस महाभारतमें अत्यन्त भयंकर भीम पाण्डवने डरी हुई शत्रुकी सेना पर आक्रमण कर दिया था ] ॥ ७१ ॥

( अन्वय—अन्यं अजित्वा अंसोरसि उद्योतैः संमुखं सरत् अरिः श्रिया अरिरंसोः विष्णोः चक्रम् असीसरत् । )

शत्रुपर विजय पाये बिना ही कन्धों और छातीको फुलाकर विष्णुके सामनेसे

---

1. दुः दुष्टात् रावणात् विशेषेण भीतिं गतः इति सुष्ठुतरः ।

संमुखम्, कैः ? उद्योतैः प्रकाशैः, कस्यां सोरसो ? विष्णोः, कथम्भूतस्य ? अरिरंसोः अक्रीडितुमिच्छोः, कया सह ? श्रिया लक्ष्म्येति ॥७२॥

**स प्रभाविक्रमं भूमेः कामुको नमयन् परान् ।**
**वामोऽथ चक्रं वक्रोऽरिः प्रमुमोच न विक्रमम् ॥७३॥**

( गूढचतुर्थपादः )

स इति—अथ चक्रग्रहणानन्तरं स अरिः प्रतिविष्णुः चक्रं प्रमुमोच प्रयुक्तवान्, कथम्भूतम् ? प्रभाविक्रमं प्रभवनशीलवृत्ति, किं कुर्वन् प्रमुमोच ? नमयन् नम्रीकुर्वन्, कान् ? परान् स्तब्धवृत्तीन् शत्रून्, कथम्भूतोऽरिः ? भूमेः कामुकः कामी, पुनः वामः प्रतिकूलः, पुनः वक्रः कुटिलः, स अरिः विक्रमं पराक्रमं न प्रमुमोच ॥७३॥

**सस्रेरुस्रैः सुसंसस्रे सीरिसीरासिरासरत् ।**
**सा ररास रसा सारा सुराः सस्रंसिरेऽसुराः ॥७४॥** ( द्व्यक्षरबन्धः )

सस्रेरिति—सुसंसस्रे संकुचितम्, कैः ? उस्रैः किरणैः, कस्य ? सस्रेः सूर्यस्य तथा आसरत् विजृम्भते स्म, कोऽसौ ? सीरिसीरासिः सीरो हलं एव असिः खड्गो यस्य सः सीरासिः स चासौ सीरो हलधरो बलभद्रः तथा ररास ध्वनितवती काऽसौ ? सा रसा पृथ्वी, कथम्भूता ? सारा सारभूता तथा सस्रंसिरे पतिताः, के ? सुराः देवाः तथा सस्रंसिरे, के ? असुराः दानवाः ॥७४॥

**अरथाश्वं हरिर्युद्धमध्यवासादसिन्धुरम् ।**
**वीक्ष्यास्त्रं विदधत्सैन्यमध्यवासादसिं धुरम् ॥७५॥** ( समपादयमकम् )

अरथेति—अध्यवासात् गृहीतवान्, कोऽसौ ? हरिर्विष्णुः कम् ? असिं खड्गम्, कथम्भूतम् ? धुरं प्रधानम्, किं कुर्वन् ? विदधत् कुर्वन्, किम् ? युद्धं रणम्, कस्मात् ? अध्यवासात् निश्चयात्, किं कृत्वा ? पूर्वं वीक्ष्यावलोक्य किम् ? अस्त्रं चक्रम्, किं कुर्वत् ? विदधत् किम् ? सैन्यम्, कथम्भूतम् ? अरथाश्वं रथवाजिहीनम्, पुनः असिन्धुरं गजरहितम् ॥७५॥

---

गुजरनेवाले शत्रु ( जरासन्ध और रावण ) ने लक्ष्मीके संग विलाससे विमुख नारायणके चक्रको चलाये जानेकी प्रेरणा दी थी ॥ ७२ ॥

अधिकसे अधिक पृथ्वीको जीतनेके लिए आतुर, विपरीतगामी और कुटिल शत्रु प्रतिनारायणने भी अत्यन्त तीक्ष्ण तथा कार्यकारी चक्रको तेजीके साथ छोड़ दिया था। जिसे देखकर शत्रु स्तब्ध रह गये थे क्योंकि उसने विक्रमको नहीं छोड़ा था ॥ ७३ ॥

( अन्वय—सस्रेः उस्रैः सुसंसस्रे, सीरि सीरासिः आसरत्, सा सारा रसा ररास, सुराः असुराः सस्रंसिरे । )

सूर्यकी तीक्ष्ण किरणें पूरी तौरसे छिप गयी थीं, हलधर ( बलराम ) की हलरूपी तलवार चारों ओर वार कर रही थी, रत्नगर्भा समग्र पृथ्वी ही चीत्कार कर उठी थी तथा सुर और असुर दोनोंका ही मान मर्दन हो गया था ॥ ७४ ॥

( अन्वय—हरिः असिं वीक्ष्य धुरं अस्त्रं अध्यवासात् युद्धं विदधत, सैन्यं अ-रथाश्वं असिन्धुरं विदधत् )

नारायणने दारुण खड्ग-युद्धको देखकर सर्वश्रेष्ठ अस्त्र ( चक्र ) को ही उठा लिया था। तथा युद्धको करते हुए शत्रुसेनाको बिना रथोंको, बिना घोड़ोंकी और बिना हाथियोंकी कर दिया था ॥७५॥

आज्ञासमापनीयेन विष्णुनैवास्त्रमैक्ष्यत ।
तेनैव तद्यशः केन निःशेषं समभुज्यत ॥७६॥

आज्ञेति—ऐक्ष्यतावलोकितम्, किम् ? अस्त्रं चक्रम्, केनैव ? विष्णुनैव, कथम्भूतेन ? आज्ञासमापनीयेन प्रतिज्ञानिर्वाहिकेन, युक्तमेतत्, तेनैव विष्णुनैव तद्यशस्तस्य विष्णोः यशस्तद्यशः निःशेषं समस्तं केन समभुज्यत केन संभुक्तम् अपितु न केनापीति ॥७६॥

न तद्भुजतटं गच्छन्न रराज स्यदारुणम् ।
अर्कोऽञ्जनाद्रिपर्वेव नरराजस्य दारुणम् ॥७७॥ (समपादयमकम्)

नेति—न न रराज अपितु रराजैव द्वौ नञौ प्रकृतमर्थं गमयत इति श्रुतेः । किं कर्तृ ? तत् चक्रम्, किं कुर्वत् ? गच्छत्, किम् ? भुजतटं, कथम्भूतम् ? दारुणम्, कस्य ? नरराजस्य, कथम्भूतम् चक्रम् ? स्यदारुणं स्यदे वेगेऽरुणं लोहितमित्यर्थः, क इव रराज ? अर्क इव, किं कुर्वत् ? गच्छत्, किम् ? अञ्जनाद्रि पर्व अञ्जनगिरितटमिति ॥७७॥

भियेदमिति नैकोऽपि जज्ञे तत्केशवः परम् ।
यस्यांसमगमच्चक्रं बोढा भारं हि बोधति ॥७८॥

भियेति—इदमितिकृत्वा एकोऽपि जनो न जज्ञे न ज्ञातवान्, किम् ? चक्रम्, कया ? भिया भयेन परं केवलं जज्ञे ज्ञातवान्, कोऽसौ ? स केशवः, किम् ? तच्चक्रम् अगमत् गतम्, किं कर्तृ ? चक्रं कम् ? अंसं स्कन्धम्, कस्य ? यस्य केशवस्य, युक्तमेतत्, बोधति जानाति, कोऽसौ ? वोढा वाहकः, कम् ? भारम्, कथम् ? हि स्फुटम् ॥७८॥

उत्तमोऽपरतो दुःखमुत्तमोऽभ्युदयोऽन्यतः ।
आसीदतिक्रमं तस्मिन्नासीदति रवाविव ॥७९॥ (अर्द्धपादादियमकम्)

उत्तम इति—आसीत्, किम् ? दुःखम्, कथम्भूतम् ? उत्तमः उद्गतान्धकारम्, कथम् ? अपरतः पृष्ठतः तथा आसीत् कोऽसौ ? अभ्युदयः, कथम्भूतः ? उत्तमः उत्कृष्टः अन्यतोऽग्रतः, क्व सति ? तस्मिन् चक्रे, किं कुर्वति सति ? अतिक्रमम् आसीदति आगच्छति, कस्मिन्निव ? रवाविव सूर्य इवेति ॥७९॥

---

अपनी प्रतिज्ञाके सफल निर्वाहकर्त्ता उस नारायणने ही इस अस्त्र ( चक्र ) के चमत्कारको जाना था । उनके सिवा इस अस्त्रके सम्पूर्ण यशका दूसरा कौन उपभोग कर सकता है ? अर्थात् कोई नहीं कर सकता है ॥ ७६ ॥

( अन्वय—नरराजस्य दारुणं भुजतटं, अञ्जनाद्रिपर्व अर्क इव गच्छन् स्यदारुणं तद्(अस्त्रं) न न रराज ? )

नरलोकके श्रेष्ठ नारायणकी भीषण भुजामें, आये उस अत्यन्त वेगशाली तथा अग्निज्वालाके समान लाल चक्रकी अद्भुत शोभा नहीं नहीं हुई थी ? अपितु वह अंजन-गिरिके तटपर पहुँचे सूर्यके समान देदीप्यमान हुआ था ॥ ७७ ॥

यह चक्र है, और कितना भयानक है यह एक भी व्यक्तिको पता न लगा था । केवल नारायण ही-ने इसके महत्त्वको समझा था, क्योंकि वह उसके कन्धेपर था । उचित ही है वाहक ही वस्तुके भारको जानता है ॥ ७८ ॥

सूर्यके समान अकस्मात् उड़ते हुए चक्रके चलते रहने पर उसके पीछे सर्वत्र फैले अन्धकारके समान दुःख छा जाता था । और उसके आगे-आगे सर्वोत्तम प्रकाश फैल जाता था ॥ ७९ ॥

चक्रं दुःसहमालोक्य चक्रन्दुः सहसारयः । ( अर्द्धपादादियमकः )
मृतोत्पन्नेव साश्वा साश्वासा सा वैष्णवी चमूः ॥८०॥
( शृङ्खलायमकः )

अरयः दुःसहं दुर्द्धरं चक्रमालोक्य सहसा शीघ्रं चक्रन्दुः क्रन्दितवन्तः । तथा सा वैष्णवी चमूः मृतोत्पन्नेवासीत् पूर्वं मृता पश्चाल्लब्धजन्मेव कथम्भूता ? साश्वा सहया, पुनः साश्वासा[1] आश्वासवती ॥८०॥

हस्तच्युते गते क्वापि कीदृशोऽप्यनुशेरते ॥
साम्राज्यमूलेऽतीतेऽपि तादवस्थ्यं ययौ रिपुः ॥८१॥

हस्तच्युत इति—कीदृशोऽपि पुरुषाः अनुशेरते पश्चात्तापं कुर्वन्ति, क्व सति ? वस्तुनि हस्तच्युते कर-पतिते पुनः क्व ? क्वापि गते असौ रिपुः शत्रुः तादवस्थ्यं ययौ गतवान्, क्व सति ? साम्राज्यमूले हस्त्यश्वरथ-पदातिहेतुभूते चक्रेऽतीतेऽपि[2] लोचनगोचरमतिक्रान्तेऽपि ॥८१॥

कृपया नापि मोहेन हस्तप्राप्तं हि दुस्त्यजम् ॥
किन्तु शत्रूत्तरप्रौढिं शुश्रूषुः स व्यलम्बत ॥८२॥

कृपयेति—हि यस्मात् कारणात् न स्यात् किम् ? वस्तु, कथम्भूतम् ? दुस्त्यजम्, कया ? कृपया तथा न स्याद्वस्तु दुस्त्यजम्, केनापि ? मोहेनापि, कथम्भूतं सत् ? हस्तप्राप्तं करगतं किन्तु व्यलम्बत कालयापनां चकार, कः ? स विष्णुः, कथम्भूतः सन् ? शुश्रूषुः आकर्णयितुमिच्छुः, काम् ? शत्रूत्तरप्रौढिं शत्रोरुत्तरकालीन-सामर्थ्यम् द्वयोः श्लोकयोर्दृष्टान्तालङ्कारः ॥८२॥

अत्यन्तकोऽपकारेण निरास्थन्न तदानवम् ।
अत्यन्तकोपकारेण निरास्थं न तदानवम् ॥८३॥
( मुरजबन्धः गोमूत्रिकासमुद्गकम् )

अत्यन्तक इति—न निरास्थत् न निक्षिप्तवान्, कोऽसौ ? अत्यन्तको विष्णुः, किम् ? तदानवम् अनोः इदम् आनवं रथस्येदं चक्रमित्यर्थः, केन कृत्वा ? अपकारेण, कथम्भूतेन ? अत्यन्तकोपकारेण अतिशयेन कोप-कारिणा, कथम्भूतं चक्रम् ? निरास्थं चञ्चलम्, पुनः नतदानवं नता दानवा येन तत् ॥८३॥

---

आते हुए चक्रको देख शत्रुसमूह एकाएक चीत्कार कर उठा था क्योंकि उसकी मार बड़ी कठिनाईसे झेली जा सकती थी। किन्तु अश्ववाहिनी प्रधान नारायणकी सेना मरके जी उठी थी तथा उसे अपनी विजयका भरोसा हो गया था॥ ८० ॥

कैसा भी साहसी पुरुष हो किन्तु कोई वस्तु हाथसे गिर जाय और कहीं चली जाय तो पश्चात्ताप करता है। किन्तु साम्राज्यके मूलाधार हस्ति-अश्व-पदाति-रथके चक्र द्वारा समाप्त कर देनेपर भी शत्रु ज्योंका त्यों रह गया था अर्थात् जड़ हो गया था ॥ ८१ ॥

जिस पदार्थका छोड़ना असम्भव है यदि वह हाथकी पहुँचमें आ जाय तो दयाकी प्रार्थनाके कारण या मोहके उदयसे भी विलम्ब नहीं किया जाता है, तथापि नारायणने विलम्ब किया था क्योंकि वे शत्रुके उत्तर देनेकी कुशलता या डींगको सुनना चाहते थे ॥ ८२ ॥

( अन्वय—अत्यन्तकः निरास्थं, नत-दानवं तत् आनवं अत्यन्तकोपकारेण अपकारेण न निरास्थत्। )

परम पुरुष नारायणने न रुकनेवाले और दानवोंको भी पराजित करनेमें समर्थ उस

---

१. सा॰ सहाश्वेन वर्तमानाः प॰ अ॰ । २. —तिलक्षणेऽतीतेऽपि प॰ अ॰ ।

व्यापिपदुव्यापिपक्षोऽसौ रूक्षोरू क्षोभपीवरौ ।
तौ भुजौ भूभुजौ पूर्वं वाचो वाचोद्धुरो विभुः ॥८४॥

( ओष्ठ्यगतानुगतकबन्धः )

व्यापिपदिति—पूर्वं प्रथमम् उवाच उक्तवान्, कोऽसौ ? असावेव विभुर्लक्ष्मणः, कथम्भूतः ? उद्धुरः उत्कटः, कया ? वाचा वाण्या पश्चात् व्यापिपत् व्यापारितवान्, कः ? स लक्ष्मणः, कौ ? तौ भुजौ बाहू, कथम्भूतौ ? भूभुजौ भुवं भुञ्जाते इत्येवंशीलौ तथा व्यापिपत्, कः ? सः, कौ ? रूक्षोरू कर्कशोरू, कथम्भूतौ ? क्षोभपीवरौ क्षोभपुष्टौ, कथम्भूतः सन् ? व्यापिपक्षः व्यापी पक्षो यस्य स तथोक्तः प्रतिपेक्षको रामो यस्येत्यर्थः ।

भारतीयः—पूर्वमुवाच, कः असावेव विभुर्नारायणः, कथम्भूतः ? उद्धुरः, कया ? वाचा तथा पश्चात् व्यापिपत्, कः ? सः, कौ ? तौ भुजौ, कथम्भूतौ भूभुजौ तथा रूक्षोरू, कथम्भूतौ ? क्षोभपीवरौ, कथम्भूतः सन् ? व्यापिपक्षः व्यापिनी पक्षा यस्य सः कामव्यापारचतुरा लक्ष्मीर्यस्येति ॥८४॥

भोगः स एव सा संपच्च न हानिश्च यस्यते ।
सीतार्पणेऽपवादो मे न महानिश्चयस्य ते ॥८५॥

( समपादयमकम् )

भोग इति—हे दशानन ! स एव भोगो दशाङ्गलक्षण चक्रिणोऽर्द्धचक्रिणोऽपि तस्य सम्भवात् उक्तं च "सैन्यनाट्यनिधिरत्नभोजनान्यासनं शयनभाजने परम् । वाहनेन सममित्यभीप्सितं भोगमाप स दशाङ्गमीश्वरः ॥" सैव संपल्लक्ष्मीः, तथा न स्यात्, कोऽसौ ? अपवादो जनदूषणम्, क्व सति ? सीतार्पणे जानकीदाने, कस्मै ? मे मह्यम्, किं कुर्वाणाय ? यस्यते यत्नं कुर्वते वाथवा न स्यात्, का ? हानिश्च, कस्य ? ते तव, कथम्भूतस्य ? महानिश्चयस्य गृहीतशीलशतिज्ञस्य अतएव नम नमस्कुरु ।

भारतीयः—हे जरासन्ध ! सीतार्पणे भूमिदाने मे नारायणायेति । अन्यत्समम् ॥८५॥

---

रथ ( अनु ) के अंग चक्र नहीं छोड़ा था, यद्यपि शत्रुके अपकारीके द्वारा इसे ( नारायणको ) अत्यन्त कुपित हो जाना चाहिए था ॥ ८३ ॥

(अन्वय—उद्धुरः व्यापिपक्षः, रूक्षोरुः असौ विभुः पूर्वम् उवाच वाचा क्षोभपीवरौ तौ भू-भुजौ भुजौ व्यापिपत् । )

अत्यन्त उद्धत तथापि राम ( पक्ष ) के वशीभूत और कर्कश जंघाधारी इस स्वामी ( लक्ष्मण ) ने पहले शत्रुको शब्दोंसे ही ललकारा था और वचनोंके साथ ही क्षोभके कारण तनी और पृथ्वीके भोगमें समर्थ अपनी दोनों भुजाओंका व्यापार भी किया था [ संसारके उद्धारक लक्ष्मीसे सर्वदा अनुगत भगवान् ( कृष्ण ) ने पहले वचन कहे थे और बोलनेके साथ-साथ कर्कश जंघाधारी क्रोधमें सबसे प्रबल, उन दोनों शत्रु भूपतियोंने भुजाओं-को चला दिया था ] ॥ ८४ ॥

हे रावण ! जिसके दशों प्रकारके भोग तदवस्थ हैं तथा विभवपर आंच नहीं आती उस तुम्हें नमन करनेमें क्या हानि है ? यदि तुम सीताजीको मुझे वापस कर दोगे तो तुम्हारी कोई अकीर्ति नहीं होगी क्योंकि तुम दृढ़ तथा उदार निश्चय करनेवाले हो । [ हे जरासन्ध, तुम्हारे समस्त भोग तथा लक्ष्मी कृष्णके सामने नत होने पर भी रंचमात्र नहीं घटेंगे । तथा भूमि ( सीता ) मुझे वापस कर देनेसे तुम महान् निश्चय करनेवाले हो कहलाओगे ॥ ८५ ॥

---

१. स मामिति शेषः । द० ज० ।

प्रत्याहृतं सुराजानमामकीर्तिरिति स्म सः ।
प्रत्याह तं सुरा जानन्कथाक्षेपेण शात्रवः ॥८६॥

( विषमपादयमकम् )

प्रत्याहेति—प्रत्याह स्म प्रत्युत्तरं गोचरीकृतवान्, कोऽसौ ? स शत्रुरिति विगृह्य स्वार्थे णः शात्रवः प्रतिविष्णुः, कम् ? तं विष्णुम्, किं कुर्वन् ? आनेन् श्वसन्, केन ? कथाक्षेपेण, कथम्भूतः सन् ? सुराजा शोभनश्चासौ राजा च सुराजा नीतिज्ञ इत्यर्थः, कथम्भूतम् ? [1]प्रत्याहृतम्, किं कुर्वन् ? आनन्, कथमिति ? नामकीर्तिरिति त्रैलोक्यकण्टककीर्तनमिति, कथम्भूतः सन् ? सुराः[2] कोमलध्वनिरिति ।

भारतीयः—नामकीर्तिरिति जरासन्धकीर्तनमिति शेषं सुगमम् ॥८६॥

रजश्छलेन दुर्दानं सुदानाः कृपयासवः ।
दृष्टोऽपन्थास्त्वया मार्गं दावाग्निर्नापि लङ्घ्यते ॥८७॥

रज इति—रजोऽविवेकलक्षणं दुर्दानं स्यात्, केन ? छलेन छद्मना तथा असवः प्राणाः सुदानाः स्युः, कया ? कृपया अतः कारणान्नापि लङ्घ्यते नातिक्रामति, कोऽसौ ? अपन्थाः, कम् ? मार्गम्, कथम्भूतः सन् ? दृष्टः त्वया तथा दावाग्निरपि न लङ्घ्यत इति ॥८७॥

त्रासो विरूपरेखा वा छायाया यदि वा हृतिः ।
मानिनः शठ मन्यन्ते तृणायापि न नायकम् ॥८८॥

त्रास इति—हे शठ ! न मन्यन्ते, के ? मानिनः, कम् ? नायकं नेतारम्, कस्मै ? तृणायापि यदि चेद्विद्यते त्रास उद्वेजनं वा अथवा विरूपरेखा रौद्रत्वं वा अथवा छायाया लोकव्यवहारस्य हृतिः तथा मानिनो मानं ज्ञानमस्ति येषां ते मानिनः ज्ञानिनः परीक्षकाः न मन्यन्ते, कम् ? नायकं प्रधानरत्नम्, कस्मै ? तृणायापि यदि विद्यते त्रासो भङ्गः वा विरूपरेखा असौन्दर्यं वा छायायाः कान्तिविशेषस्य हृतिः ॥८८॥

---

( अन्वय—नामकीर्तिः सः शात्रवः सुराः कथाक्षेपेण प्रत्याहृतं जानन् तं सुराजानं इति प्रत्याह स्म । )

निन्दनीय ख्यातिका पात्र अथवा अपने विचित्र नामके कारण ही ज्ञात वह शत्रु रावण या जरासन्ध यह जानता था कि वार्तालापकी समाप्ति होते ही वह मृत है फलतः मदोन्मत्तकी भाँति उसने आगेके वाक्य कहे थे ॥ ८६ ॥

कपट करके यदि कोई धूल भी माँगे तो वह देना दुष्कर है और कृपाके लिए प्राण भी देना सुन्दर है । तुम्हारे द्वारा दिखाया गया मार्ग ( नमन ) विपरीत मार्ग है । उसपर उसी तरह नहीं चला जायेगा जैसे दवाग्निमें नहीं चला जाता है ॥ ८७ ॥

अरे दुष्ट, स्वाभिमानी व्यक्ति यदि दबाये जायें, अथवा उनके अनुरूप रंचमात्र आकृति भंग हो, अथवा उनकी परछाईंका भी पदवलन हो तो वे अपने नेताको भी तिनका बराबर नहीं मानते हैं [ रत्न-पारखी लोग नायक मणिमें यदि रंचमात्र दरार हो या असौन्दर्यजनक रेखा हो या चमकमें कमी हो तो उसे घास-फूसके बराबर भी नहीं कूतते हैं ] ॥ ८८ ॥

---

१. 'सुराजानम्' विग्रहः सुष्ठुतरः ।
२. सुरया अभिभूतः इति सुराः ।

शिश्रीषतोऽन्यमीत्सायै पारावारीणमात्मनः ।
यशः संकुचति व्याप्तं किं वा नेनार्जयिष्यते ॥८६॥

शिश्रीषत इति—संकुचति संकोचं प्राप्नोति, किं कर्तृ ? यशः, कस्य ? शिश्रीषतः सेवितुमिच्छोः पुरुषस्य, कम् ? अन्यमपरं जनं शत्रुमित्यर्थः, कस्यै ? ईत्सायै वर्द्धितुमिच्छायै, किम् ? यशः, कस्य ? आत्मनः, कथम्भूतम् ? व्याप्तं प्रसृतम्, पुनः कथम्भूतम् ? पारावारीणं पारावारमलङ्गामि अत एव बाथवा किमनेन परसेवनेनार्जयिष्यते अपितु न किमपीति ॥८९॥

विधुरास्ते त्रपापेतः पराश्रये च ये स्थिताः ।
विधुरास्ते त्रपापेतः पूष्णो नास्योदये रविः ॥९०॥

( विषमपादयमकम् )

विधुरिति—ये पुरुषाः विधुराः भीता ये च पराश्रये स्थिताः, कथम्भूताः सन्तः ? त्रपापेतः त्रपाम-पयन्ति क्विप् पिति कृति तुक् त्रपापेत इति सिद्धं रूपं निर्लज्जा इत्यर्थः, युक्तमेतत्, आस्ते तिष्ठति, कोऽसौ ? विधुश्चन्द्रः, क्व ? उदये, कस्य ? पूष्णः सूर्यस्य, कथम्भूतः सन् ? त्रपापेतः [1]लज्जारयक्तः तथा नास्ते न तिष्ठति, कोऽसौ ? रविः सूर्यः क्व ? अस्य विधोश्चन्द्रस्योदये ॥९०॥

मा ज्ञाप्यस्मि निरस्त्रोऽहं हस्तेनास्त्रं हि मुच्यते ।
ततस्तलप्रहारेण मुञ्चास्त्रं क्राथयामि ते ॥९१॥

मेति—माज्ञायि हे विष्णो मा बुध्यतां त्वया अस्मि भवामि, कोऽसौ ? अहम्, कथम् ? निरस्त्रोऽस्त्र-रहितः, हि यस्मात् कारणात् मुच्यते किं कर्मतापन्नम् ? अस्त्रम्, केन ? हस्तेन, ततस्तस्मात् मुञ्च कोऽसौ ? त्वम्, किम् ? अस्त्रं चक्रं ते तवास्त्रं तलप्रहारेण करतलघातेन क्राथयामि हन्मि ॥९१॥

इत्याकर्ण्य तमुत्साहं साहंकारं सुरावली ।
सुरावलीला साशंसं साशं संप्रशशंस तम् ॥९२॥

इतीति—सुरावली देवश्रेणी तं लोकोत्तरं प्रतिविष्णुं संप्रशशंस प्रशंसितवती, कथम्भूतम् ? साहंकारं सगर्वम्, किं कृत्वा ? पूर्वं तम् उत्साहं आकर्ण्य श्रुत्वा, कथम् ? इत्युक्तप्रकारेण, पुनः साशंसं सप्रशंसम्, पुनः

---

दूसरेकी सेवा करनेकी इच्छा करनेवालेका सारे लोकमें व्याप्त तथा आसमुद्र गील यश भी घट जाता है। तब परसेवा या नमनको करके अभ्युदयके लिए प्रयत्नशील व्यक्ति-को क्या मिलेगा ? ॥ ८९ ॥

वे महाभीरु हैं और निर्लज्ज हैं जो दूसरोंके सहारेसे जीवन यापन करते हैं। सूर्य-के उदय हो जानेपर कान्ति और त्रिवलिको छोड़कर भी चन्द्रमा ( विधुः ) रहता है ( आस्ते )। किन्तु प्रतापी सूर्य इस ( चन्द्रमा ) के उदय होनेपर कदापि नहीं रुकता है ॥ ९० ॥

मैं निरस्त्र ( खाली हाथ ) हूँ ऐसा मत समझो, क्योंकि मैं हाथके द्वारा ही तुम्हारे शस्त्रको बेकार कर दूँगा। अपने चक्रको छोड़िये। मैं करतलके प्रहारसे ही उसे तोड़े देता हूँ ॥ ९१ ॥

प्रतिनारायणके इस साहसको सुनकर युद्ध देखने आयी तथा सुराके प्रभावसे विनोदलीन देवपंक्तिने स्वाभिमानको न छोड़नेवाले शत्रुका गुणानुवाद करते हुए ( साशंसं ) तथा आशाके साथ ( साशं ) इसकी प्रशंसा की थी ॥ ९२ ॥

---

१. त्रिपरिवेषरहित इति यावत् ।

साधं सवाञ्छम्, कथम्भूता सुरावली ? सुरावलीला[1] शोभनो रावो यस्याः सा सुरावा मधुरध्वनि लीला क्रीडा यस्याः सा ॥९२॥

शौर्यं ह्रीश्च कुलीनस्य स्वे नुः सन्मार्गलाञ्छनम् ।
वस्वितीवोक्तये भेर्यः स्वेनुः सन्मार्गलाञ्छनम् ॥९३॥

(समपादयमकम्)

शौर्यमिति—स्वेनुर्ध्वनन्ति स्म, काः ? भेर्यः, कथम् ? सन्मार्गलाञ्छनं मन्दिरार्गलोल्लङ्घनम्, कस्यै ? उक्तये उक्तिनिमित्तम्[2], कथं शौर्यं पौरुषं, ह्रीश्च लज्जा चेति द्वे स्वे आत्मीये स्यातां तथा स्यात् किम् ? वसु द्रव्यम्, किं स्यात् ? सन्मार्गलाञ्छनं संश्चासौ मार्गश्च सतां सत्पुरुषाणां वा मार्गः सन्मार्गस्तस्य लाञ्छनम्, कस्य ? कुलीनस्य नुः पुंसः ॥९३॥

गाथका गाथकाबन्धैः सज्जगुः स्थाम सज्जगुः ।
राशिराशिश्रवन्नाम वन्दिनां गुणवन्दिनाम् ॥९४॥

(गतागतबन्धः)

गाथकेति—गाथकाः मङ्गलपाठकाः गाथकाबन्धैः सत् समीचीनं स्थाम बलं जगुर्गायन्ति स्म तथा वन्दिनां नागरिकाणां राशिः समूहः नामाभिधानम् आशिश्रवत् आश्रावितवान्, कथम्भूतानां वन्दिनाम् ? गुणवन्दिनां गुणस्तवनशीलानां कथम्भूतो राशिः ? सज्जगुः सज्जा गीर्वाणी यस्य स मधुरवचन इत्यर्थः ॥९४॥

देवैर्विमानशालायामास्थितैर्मत्तवारणीम् ।
रणरङ्गस्तयोस्तत्र पूर्वरङ्ग इवाभवत् ॥९५॥

देवैरिति—तयोः विष्णुप्रतिविष्ण्वोः तत्र युद्धे रणरङ्गोऽभवत् सञ्जातः, क इव ? पूर्वरङ्ग इव, कैः ? विमानशालायां मत्तवारणीं मत्तालम्बनम् आस्थितैः देवैः देवैरित्यत्र षष्ठ्यर्थे तृतीया ॥९५॥

नामोचितेन चक्रान्तं दोष्णवर्त्यामुचद्धरिः ।
नामोचि तेन च क्रान्तं धैर्यं जगति वैरिणा ॥९६॥

(विषमपादयमकम्)

नामेति—हरिः विष्णुः आवर्त्य भ्रमयित्वा चक्रान्तं चक्रस्वरूपम् अस्त्रम् अमुचत् मुक्तवान्, केनावर्त्य ? दोष्णा बाहुना, कथम्भूतेन दोष्णा ? नामोचितेन कीर्त्तनयोग्येन तथा तेन वैरिणा प्रतिविष्णुना जगति क्रान्तं प्रसृतं धैर्यं नामोचि न त्यक्तम् ॥९६॥

---

शिष्टाचार पालनके मुख्य लक्षण शौर्य और लज्जा ही कुलीन पुरुष ( नुः ) के सगे ( स्वे ) धन ( वसु ) हैं। इसकी घोषणा ( उक्तये ) करनेके लिए ही मन्दिरांचलके परिपार्श्व ( अर्गला ) को पार करके दूर तक सुनाई देनेवाली भेरियाँ बज उठी थीं ॥ ९३ ॥

मंगलपाठियोंने उत्तमसे उत्तम गुण-गाथाएँ बनाकर भटोंकी दृढ़ताका व्याख्यान किया था। तथा शौर्य, औदार्य आदि गुणोंके पुजारी एवं मधुर तथा लयादि युक्त वाणीके धनी बन्दियोंकी श्रेणीने वीरोंके नाम लेकर गुणगान किया था ॥ ९४ ॥

युद्ध दर्शनार्थी एवं विमानशालाके छज्जोंपर जमे हुए देवोंके लिए नारायण-प्रतिनारायणका युद्ध प्रेम ऐसा लगा था मानो वे किसी अभिनयका 'पूर्वरंग' देख रहे थे ॥ ९५ ॥

नारायणने 'यथा नाम तथा गुण' भुजाको घुमाकर चक्रका प्रहार कर दिया था।

---

१. सुरया अवलीला विनोदशीलेति ।

२. -त्तम्, कथमितीव, कथमिति कृत्वा प्रकाश्यते शौर्यं । प० द० ज० । अस्मिन् श्लोके एकस्मिन् पादे सन्मार्गलाञ्छनमिति पाठोऽपेक्षितः व्याख्याकारमतेन ।

तेनार्जितात्मशिरसा श्रीः कथं सा बहिः शिरः ।
इतीवोत्सृज्य सोऽन्याङ्गमुत्तमाङ्गमतोऽग्रहीत् ॥९७॥

तेनेति—तेन वैरिणा आत्मशिरसा निजमस्तकेन श्रीः अर्जिता सा श्रीः कथं बहिः शिरः शिरसो बहिः इतीव हेतोः अतः कारणात् स विष्णुः अन्याङ्गमुत्सृज्य मुक्त्वा उत्तमाङ्गं मस्तकम् अग्रहीत् जग्राह ॥९७॥

ग्रीवा हते चरत्तन्त्री वैरराजे समन्ततः ।
धुनी सधातुस्यन्देव वै रराजे समं ततः ॥९८॥

(समपादयमकम्)

ग्रीवेति—ततः शिरश्छेदानन्तरं चरत्तन्त्री स्रवन्नाडी ग्रीवा रराजे शुशुभे, क्व सति ? वैरराजे प्रतिविष्णौ हते सति कथम् ? समन्ततः सामस्त्येन, कथम् ? वै स्फुटम्, केव रराजे ? स धातुनिस्यन्दो सवैरिकप्रस्रवणा धुनीव नदीव, कथम् ? समं युगपत् ॥९८॥

इत्यघानि द्विषन्देवैर्दिव्यघानिषतानकाः ।
जित्वाघानि स्थितोऽनर्तीदमोघानि स नारदः ॥९९॥

इतीति—विष्णुना द्विषन् वैरो अघानि हतः, कथम् ? इत्युक्तप्रकारापेक्षया देवैः दिवि गगने आनकाः पटहाः अघानिषत आहताः स लोकप्रसिद्धः नारदः ब्रह्मपुत्रः अनर्तीत् नटितवान्, कथम्भूतः ? अमोघानि निःफलानि अघानि पापानि जित्वा स्थितः ॥९९॥

सत्रा संभ्रमसंपातैः सत्रासं भ्रमरैश्चिता ।
ता माल्यमालिकाः पेतुस्तामाल्य इव नाकतः ॥१००॥

सत्रेति—ता माल्यमालिकाः पुष्पमालाः नाकतः स्वर्गात् पेतुः पतिताः, कथम्भूताः ? सत्रासं सभयं[1] संभ्रमसंपातैः संभ्रमेण सपातो येषां तैः भ्रमरैः चिताः पुष्टाः, कथम् ? सत्रा[2] साढंम्, कथम्भूता इव ? तामाल्य इव तमालसुमनोनिर्मिता इव ॥१००॥

---

किन्तु रावण या जरासन्ध रूपी शत्रुने सारे संसारमें फैले हुए अपने दुःसाहसको नहीं हो छोड़ा था ॥ ९६ ॥

शत्रुने राजलक्ष्मीको अपने शिर ( मस्तिष्क ) से अर्जित किया था इसलिए वह शिरसे बाहर कैसे होगी । इस कारणसे ही अन्य अंगोंको छोड़कर उसने केवल उत्तमाङ्ग ( शिर ) को ही *आक्रान्त किया था* ॥ ९७ ॥

ग्रीवापर हुए आघातके कारण शत्रुका मस्तक कट जानेके बाद सब तरफ बिखरती हुई और रक्त बहाती हुई नसें देखकर ऐसा लगता था कि किसी नदीसे गेरूका घुला पानी बहाती हुई धाराएँ फूट पड़ी हैं ॥ ९८ ॥

इस प्रकारसे नारायणने शत्रुका वध किया था । और देवताओंने आकाशमें पटह बजाये थे । पापोंको जीतकर आत्मस्वरूपमें लीन, लोकमें विख्यात नारद मुनि भी सफलताके उल्लासमें नाच उठे थे ॥ ९९ ॥

तमालके पुष्पोंसे गुंथी हुईके समान वे यज्ञकी मालाओंकी लड़ियाँ फरफराती हुई आकाशसे गिर रही थीं । अत एव उल्लास और वेगके साथ लपकते हुए भौंरे इनके ऊपर मड़रा रहे थे ॥ १०० ॥

---

१. सकम्पम् इति यावत् ।

२. सत्राय यज्ञाय इमे इति सत्रा ।

अदृक्षेतामुभौ सेन्द्रैर्विशेषेण जगद्विषन् ।
पौरुषं पुरुषायत्तं मरणं हि विधेर्वशम् ॥१०१॥

अदृक्षेतामिति—सेन्द्रैः उभौ विष्णुप्रतिविष्णू अदृक्षेतां दृष्टौ तयोर्मध्ये जगद्द्विषन् प्रतिविष्णुः विशेषेण दृष्टः, युक्तमेतत् स्यात्, किम् ? पौरुषं पुरुषायत्तं पुरुषप्रयत्नाधीनं मरणं विधेर्वशमधीनं हि स्फुटमिति ॥१०१॥

शुद्धां शुद्धान्तवसतिं संगतः कर्मसङ्गतः ।
मुख्योद्यावो ददे मुख्यो बाष्पेण त्र्यञ्जलं जलम् ॥१०२॥

शुद्धामिति—ददे दत्तवान्, कोऽसौ ? मुख्योद्यावः मुख्यानां स्त्रीणाम् उद्यावः राज्ञीसमूहः, किम् ? जलम्, कथम्भूतम् ? त्र्यञ्जलं त्रयोऽञ्जलयः परिमाणं यस्य तत्, केन ? बाष्पेणाश्रुणा, कथम्भूतः ? मुख्यः प्रधानः, पुनः कर्मसङ्गतः क्रियासम्बन्धात् शुद्धां पवित्रां शुद्धान्तवसतिम् अन्तःपुरमन्दिरनिवासं सङ्गतः प्राप्तः ॥१०२॥

पुरो रिपोरपारोऽपि तत्तूत्तापातपोऽतपत् ।
विवेशोवावशोऽवेशो नृमानं मानिनीमनः ॥१०३॥

( द्व्यक्षरपादबन्धः )

पुर इति—उत्तापातपः संतापातपः अतपत् जज्वाल, कस्मात् ? पुरोर्महतः तत् तस्मात् रिपोः शत्रोः तथा तु पुनः असौ उत्तापातपः मानिनीमनः विवेश प्रविष्टवान्, कथम्भूतोऽपि ? अपारोऽपि पुनः अवशः अपराधीनः, पुनः अवेशः अव सामस्त्येन गत ईशो यस्य सः निःस्वामिकः, कमिव ? नृमानमिव पुरुषाभिमानमिव ॥१०३॥

हरिः क्रान्तमतं भूतगरिमान्तगतं बत ।
वरित्सुं तत्र तष्ट्वा तमरिणान्तरतप्यत ॥१०४॥

( अश्वप्लुतमुरजबन्धादितुरगबन्धादिः )

हरिरिति—बत खेदे अतप्यत स्वयं तप्यते स्म हरिः विष्णुः कथम् ? अन्तः अन्तःकरणे, किं कृत्वा ? तत्र रणे अरिणा चक्रेण तं प्रतिविष्णुं तष्ट्वा हत्वा, कथम्भूतम् ? [1]वरित्सुं हन्तुमिच्छुम्, पुनः भूतगरिमान्तगतं भूतगरिमावसानगतं भूतव्यापारव्याप्तिविपर्ययं प्राप्तमित्यर्थः, पुनः क्रान्तमतम् अनुकूलकारिणम् ॥१०४॥

---

संसारका शत्रु बनकर आये उस प्रतिनारायणका विमर्श करके स्वर्गके इन्द्रोंने दोनों बातें देख ली थीं कि पुरुषार्थ करना मनुष्यके वशकी बात है और मृत्यु दैवके आधीन है ॥ १०१ ॥

पुण्यकर्मके फलस्वरूप सुरक्षित अन्तःपुरमें आकर विशिष्ट रानियोंके समूहमें भी प्रधानताको पायीं और शिष्ट कर्मकाण्डकी ज्ञाता पटरानियोंने अपने आँसुओंके जलके द्वारा ही मृत पतियोंको तीन अञ्जलियाँ दी थीं ॥ १०२ ॥

( पुरः रिपोः तत् उत्ताप-आतपः आतपत् तु, अपारोऽपि अवशः अवेश नृमानमिव मानिनीमनः विवेश । )

पहले तो महान् शत्रु ( नारायण ) के उत्कृष्ट आतंकका वह अपार तेज भभक उठा था किन्तु बादमें विवश तथा नायकहीन मनुष्यके सम्मानके समान वह, मानिनी रानियोंके मनमें प्रवेश कर गया था ॥ १०३ ॥

लौकिक विभवकी चरम सीमाको प्राप्त, अपने ही दुराग्रहपर आरूढ़ तथा नारायण-पर आघात करनेके लिए उद्यत उस शत्रुका चक्रके द्वारा वध करके भी राम या कृष्णको मन ही मन अनुताप हुआ था ॥ १०४ ॥

---

१. विरित्सुं । ज० ।

सत्यतो विभया व्यूहे समुत्पत्या महोरसा ।
प्रत्यक्तो विभया व्यूहे समुत्पत्वा महोरसा ॥१०५॥

( समुद्गकगोमूत्रिकामुरजादिबन्धः )

सत्यत इति—व्यूहे परिणीता, का ? आ लक्ष्मीः, केन ? पत्या स्वामिना विष्णुनेत्यर्थः, कस्मात् ? अतो प्रतिविष्णुप्रत्यक्, क्व ? व्यूहे रणे, कथम्भूता ? सती समीचीना, पुनः विभया विगतविधुरा, पुनः महोरसा तेजोरसा, पुनः समुत्सहर्षा, कथम्भूतेन पत्या ? महोरसा विस्तीर्णवक्षसा, कया विष्णुना लक्ष्मीर्व्यूहे ? विभया विशिष्टप्रभया प्रतापेनेत्यर्थः, किं कृत्वा ? पूर्वं सत्यतः सत्यात् एनं प्रतिविष्णुं जेष्यामीति निश्चयात् व्यूहे समुत्पत्येत्यर्थः ॥१०५॥

बलिमानर्चयावेद्य बलिमानर्चं संयुगे ।
निर्ययौ भूतलोकं तं निर्ययौ भूतलोचितम् ॥१०६॥

बलिमिति—आनर्च पूजितवान्, कोऽसौ ? बलिमान् बलिनोऽस्य सन्तीति बलिमान् विष्णुरित्यर्थः, कम् ? भूतलोकं भूतसमूहम्, क्व ? संयुगे रणे, किं कृत्वा ? पूर्वमावेद्य संकल्प्य तं प्रतिविष्णुं कमावेद्य ? बलिम्, कया कृत्वा ? अर्चया पूजया, कथम्भूतम् ? भूतलोचितम् अवनीतलयोग्यम्, कथम्भूते संयुगे ? निर्ययौ निर्गताः ययुरश्वो यस्मात्तस्मिन् निरश्वे तुरङ्गमरहिते तदनन्तरं निर्ययौ निर्गतवान् कोऽसौ ? विष्णुः, कस्मात् ? रणात् ॥१०६॥

याहतेशाद्दते सीता साह तेजोधिके रिपौ ।
व्याहते श्वसितै रागं प्राह तेन स्म संयुता ॥१०७॥

याहतेति—अह कष्टं प्राह स्म प्रोक्तवती प्रकटितवती, का ? सा सीता जानकी कम् ? रागं प्रीतिम्, कैः कृत्वा ? श्वसितैः, कथम्भूता सती ? तेन रामेण संयुता संयुक्ता, क्व सति ? रिपौ प्रतिविष्णौ व्याहते सति कथम्भूते ? तेजोधिके प्रतापाधिके याहता खिन्ना कथम् ? ऋते कस्मात् ? ईशात् स्वामिनो रामं विनेत्यर्थः ।

भारतीयः—प्राह स्म, का ? सीता भूमिः, कम् ? रागं कथम्भूता ? तेन विष्णुना संयुता, कैः कृत्वा रागं प्राह स्म ? श्वसितैः, क्व सति ? रिपौ व्याहते सति, कथम्भूते ? तेजोधिके अह कष्टं याहता खिन्ना, कथम् ? ऋते, कस्मात् ? ईशात् प्रतिविष्णोरित्यर्थः ॥१०७॥

---

( महोरसा विभया पत्या, व्यूहे समुत्पत्य सत्यतः महोरसा, विभया, सती समुत् आ प्रतः व्यूहे । )

विशाल वक्षस्थलधारी, अलौकिक प्रभाके स्वामी नारायणने युद्धमें आगे बढ़कर उचित मार्गसे पीन पयोधरधारिणी, निर्भय, सती और प्रमुदित विजयलक्ष्मीको प्रतिनारायणसे छीन लिया था ॥ १०५ ॥

( बलिमान् निर्ययौ संयुगे, भूतलोचितम् तं बलिं अर्चया आवेद्य भूतलोकं आनर्च निर्ययौ । )

अश्वसेना विहीन उस घोर संग्राममें बलवान् सैनिकोंके स्वामी नारायणने, पृथ्वीतलपर सबसे श्रेष्ठ उस ( प्रतिनारायण ) की बलिको विधि-विधानपूर्वक समर्पित करके पंच महाभूतोंकी पूजा की थी । और युद्धसे बाहर चले गये थे ॥ १०६ ॥

( तेजोधिके रिपौ व्याहते, ईशात्, ऋते याहता सा सीता तेन संयुता, श्वसितैः रागं प्राह स्म, अह । )

नारायण ( राम-कृष्ण ) से अलग हो जानेके कारण खेद-खिन्न वह सीता ( भूमि ) अत्यन्त उग्र शत्रु प्रतिनारायणके मारे जानेपर स्वामीसे मिल गयी थी । और धीरे-धीरे मुस्किकी साँसें लेकर अपने रागको प्रकट कर रही थी ॥ १०७ ॥

कौरवीं मतिमुच्छेत्तुमदुर्योधनपाटवम् ।
ये ते सख्येन विक्रान्ताः स स्वां तेभ्यो ददौ भुवम् ॥१०८॥

कौरवीमिति—ये विभीषणादयो रावणबान्धवाः कर्तारः अयुर्दत्तवन्तः, किम् ? योधनपाटवं युद्धपटुत्वम्, किं कर्तुम् ? उच्छेत्तुम्, काम् ? गतिम्, कथम्भूताम् ? कौरवीं कुत्सितो रवः कुरवः कुरवाज्जाता कौरवी तां निर्दयत्वेन समुत्पन्नामित्यर्थः, तथा विक्रान्ताः संयोजिताः के ? ते विभीषणादयः, केन ? सख्येन मित्रत्वेन तथा च यो दत्तवान्, कोऽसौ ? स विष्णुः, काम् ? भुवं पृथिवीम्, केभ्यः ? तेभ्यो विभीषणादिभ्यः, कथम्भूतां भुवम् ? स्वामात्मीयामिति ।

भारतीयः—ये कौरवीं कुरूणामिमां कौरवीं गतिं उच्छेत्तुं सञ्जाताः, कथम् ? अदुर्योधनपाटवं न विद्यते दुर्योधनस्य पाटवं यस्मिन् कौरवगतिच्छेदनकर्मणि तत्तथा भवति विक्रान्ताः, के ? ते पाण्डवाः, केन ? सख्येन तेभ्यः पाण्डवेभ्यः स विष्णु. स्वां भुवं ददौ ॥१०८॥

सरक्षोवरजो राज्यं धर्मपुत्रोऽथ फल्गुनः ।
भीमोहतापरुद्धारि लब्ध्वासीद्वैरतः प्रभोः ॥१०९॥

स इति—अथ स्वभूमिदानानन्तरम् आसीत् संजातः, कः ? स रक्षोवरजः रावणलघुभ्राता, कथम्भूतः ? धर्मपुत्रः प्रतिपन्नपुत्रः, कस्य ? प्रभोः रामस्य, किं कृत्वा ? पूर्वं राज्यं लब्ध्वा प्राप्य, कथम्भूतं राज्यम् ? भीमोहतापरुद्धारि भयमोहतापैः रुद्धा अरयो यस्मात् तत्समिद्धकला [1]संतापनिरुद्धशत्रु इत्यर्थः, कस्मात् ? वैरतो वैरात्, कथम्भूतात् ? फल्गुनः तुच्छात् निःसारात् ।

भारतीयः—आसीत् संजातः, कः ? धर्मपुत्रो युधिष्ठिरः अथ समुच्चयार्थः तथा फल्गुनोऽर्जुनः तथा भीमो भीमसेनः, कथम्भूतः ? रतः आसक्तः प्रीत इत्यर्थः, कस्य ? प्रभोर्नारायणस्य, कथम्भूतः ? सरक्षः सह रक्षया वर्तते इति सरक्षः, किं कृत्वा ? पूर्वं लब्ध्वा किम् ? राज्यम्, कथम्भूतम् ? अवरजः अवगतं रजो यस्य [2]तत् मनोमलरहितमित्यर्थः, पुनः हतापरुद्धारि हता दुर्योधनादयो मारिताः केचिदपरुद्धाः जीवावशेषं धृता[3] अरयो यत्र तत् निष्कण्टकमित्यर्थः, कथम् ? वै स्फुटमिति शेषः ॥१०९॥

---

जिन लोगोंने रावणकी पापपूर्ण वृत्ति ( कौरवी ) को समाप्त करनेके लिए रामके साथ लड़नेमें युद्ध-कुशलता दिखायी थी वे मित्ररूपसे रामके द्वारा माने गये थे और उन्हें नारायणने जीती हुई भूमि दी थी [ दुर्योधनकी कुटिलतासे बढ़ी कौरवोंकी अनीतिको समाप्त करनेके लिए जिन्होंने मित्ररूपसे पाण्डवोंका पक्ष लिया था उन्हें कृष्णजीने राज्य दिये थे ] ॥ १०८ ॥

( अथ स रक्षोवरजः प्रभोः फल्गुनः वैरतः राज्यं लब्ध्वा भीमोहतापरुद्धारिः धर्मपुत्रः आसीत् । )

इस प्रकारसे रावणका वह छोटा भाई विभीषण, नारायणके निस्सार वैरके कारक, रावणके राज्यको प्राप्त करके भय, मोह और तापसे त्राण करनेवाला धर्मपुत्र हो गया था ।

( अथ हतापरुद्धारि सरक्षः स धर्मपुत्रः, फल्गुनः भीमः अवरजः राज्यं लब्ध्वा प्रभोः रतः वै आसीत् । )

इसके बाद शत्रुओंके मर जानेसे या वशमें हो जानेके कारण आत्मरक्षाको प्राप्त वह युधिष्ठिर, अर्जुन और भीम उत्पातों ( रज ) से रहित विशाल राज्यको प्राप्त करके निश्चय से कृष्णजीके भक्त हो गये थे ॥ १०९ ॥

---

१. रुद्ध विपक्षमित्यर्थः । प० द० अ० ।
२. तत् मनोमल—प० द० ।
३. –ता चोरवरटमशयनाद्को अ– ब० द० ।

ततो विभक्तुमन्येषां निश्चक्रामवसुं धराम् ।
आत्मीयां रक्षितुं चक्री निश्चक्राम वसुंधराम् ॥११०॥

( समपादयमकम् )

तत इति—ततो विभीषणाय धर्मराजेभ्यश्च राज्यसमर्पणानन्तरं निश्चक्राम निर्गतवान्, कोऽसौ ? चक्री लक्ष्मणो नारायणश्च, किं कर्तुम् ? अन्येषां शत्रूणां धरां पृथिवीम् अवसुं निर्द्रव्यां तथा निश्चक्रां [1]निर्घाटक-विषयां विभक्तुं कर्तुं तथा आत्मीयां स्वकीयां वसुंधरां पृथिवीं रक्षितुम् ॥११०॥

हरितो हरितो बिभ्युराभ्यो राभ्यो विनारयः ।
तेऽभ्यस्तेभ्यः स्वदेशेभ्यः केवलं केऽवलन्न वा ॥१११॥

( गतागतबन्धः )

हरित इति—बिभ्युः भीताः, का ? हरितो दिशः, कस्मात् ? हरितो विष्णोः केवलं परम्, के तेऽरयो नावलन्न व्यावृत्ताः अपि तु सर्वेऽपि, काभ्यः ? आभ्यो दिग्भ्यो वाऽथवा अवलन् तेभ्यो लोकविख्यातेभ्यः स्व-देशेभ्यः, कथम् ? विना, केभ्यः ? राभ्यो द्रव्येभ्यः, कथम्भूताः सन्तः ? अभ्यो निर्भयाः, अत्र भावो विभाव्यते स्वकीयस्वकीयद्रव्याणि परित्यज्य दिग्भ्यः स्वदेशेभ्यो वा [2]निवृत्य विष्णुभयभीताः यत्र स्वजीवरक्षा तत्र गताः शत्रवः, 'स देशो यत्र जीव्यते' इति वाक्यात् ॥१११॥

आशिश्रियन्नदीनाथो गङ्गा सिन्धुश्च केशवम् ।
आशि श्रियं न दीनाथो दिग्भीता तेन बिभ्रता ॥११२॥

( विषमपादयमकम् )

आशिश्रियदिति—आशिश्रियत् सेवते स्म कः ? नदीनाथो मागधो देवः वरतनुदेवः प्रह्लादनदेवश्च, कम् ? केशवं तथा अशिश्रियत्, का ? गङ्गा गङ्गादेवी तथा सिन्धुश्च सिन्धुदेवी च, कम् ? केशवं विष्णुम्, अथो शब्दो आनन्तर्यार्थवाची, न आशि न व्याप्ता अपि तु व्याप्तैव, का ? दिग्, केन ? तेन विष्णुना, कथम्भूतेन ? श्रियं बिभ्रता, कथम्भूता दिग् ? दीना, पुनः भीतेति ॥११२॥

---

विभीषण तथा धर्मराजको राज्य समर्पण करनेके बाद चक्रधारी नारायण ( लक्ष्मण एवं कृष्ण ) शत्रुओंकी शासन ( चक्र )-विहीन और सम्पत्ति रहित भूमिको अपनी सम्पन्न राज्यभूमि बनानेके लिए तथा उसकी व्यवस्था और रक्षा करनेके लिए निकल पड़े थे ॥ ११० ॥

( हरितः हरितः बिभ्युः, राभ्यः विना के ते अरयः न केवलं आभ्यः अवलत् । तेभ्यः स्वदेशेभ्यः अभ्यः के न अवलत् । )

नारायणसे समस्त दिशाएँ डर गयी थीं । और विषयभोग (रा) सम्पत्ति को छोड़कर शत्रु लोग केवल सब दिशाओंसे ही नहीं भागे थे अपितु अपने-अपने देशोंसे भी कौन नहीं भागा था, अर्थात् सब देश भी छोड़कर चले गये थे ॥ १११ ॥

शासन चक्रको स्थापित करनेके लिए निकले नारायण ( मागध वरतनु, प्रह्लादन देवों ) की नदीनाथने सेवा की थी तथा गंगा और सिन्धुकी अधिष्ठात्री देवियोंने भी उसका स्वागत किया था । लक्ष्मीके स्वामी नारायणके द्वारा दीन तथा भीत कौन-सी दिशा व्याप्त नहीं की गयी थी ? अर्थात् सभी दिशाएँ प्रणत हो गयी थीं ॥ ११२ ॥

---

१. निर्घाटकाविषयां –प० । निद्धाटकाविषयां –द० । निध्वाटकाविषयां –अ० । "ततः चक्री अन्येषां निश्चक्रां अवसुं धरां आत्मीयां वसुंधरां विभक्तुं ( धर्तुं ) रक्षितुं निश्चक्राम" इत्यन्वयानुसारी व्याख्या सुष्ठुतरेति । २. निवृत्य –प० द० ।

वाजीभविपिनेऽभ्येये जीनाराबे रजोमये।
भरादपेतै राजोने विवेपेऽरिशतैरपि ॥११३॥

( अर्धभ्रमः )

वाजीभेति—विवेपे कम्पितम्, कैः ? अरिशतैरपि, कथम्भूतैः ? अपेतैः भरात् रणतत्परतायाः अपेतैः अपगतैः, क्व ? वाजीभविपिने तुरङ्गमगजारण्ये, कथम्भूते ? अभ्येये अगम्ये, पुनः जीनाराबे क्षीणशब्दे, पुनः रजोमये धूलिनिर्मिते वा, पुनः राजोने शत्रुहीने। अस्य श्लोकस्य चतुरोऽपि पादान् अधोऽधो लिखित्वा पूर्वापरक्रमेण वाचनया अर्द्धभ्रमलक्षणो चित्रो जायते ॥११३॥ यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वा | जी | भ | वि | पि | ने | ऽभ्ये | ये |
| जी | ना | रा | बे | र | जो | म | ये |
| भ | रा | द | पे | तै | रा | जो | ने |
| वि | वे | पे | रि | श | तै | र | पि |

न नाम प्रतिसामन्तं त्रेसुः के संघवृत्तयः।
ननाम प्रतिसामं तं प्रकृत्या प्रातिकूलिकः ॥११४॥

( विषमपादयमकम् )

नेति—नामाहो संघवृत्तयः सङ्घे वृत्तिर्येषां ते सङ्घवृत्तयः सामवायिका:[1] क्षत्रियाः, के न त्रेसुः के नो त्रस्ताः अपितु सर्वेऽपि, कथम् ? प्रतिसामन्तं सामन्तं सामन्तं प्रति प्रतिसामन्तम् अतएव ननाम नमस्कृतवान् कोऽसौ? प्रातिकूलिकः प्रतिकूलं वर्त्तमानः, कम् ? तं विष्णुम्, कया ? प्रकृत्या स्वभावतः, कथं यथा भवति ? प्रतिसामं यथोपशममिति ॥११४॥

कमन्यं यः समुद्र तमकरोत्करदा मतः।
गम्भीरां वार्धिविततिमकरोत्करदामतः ॥११५॥

( समपादयमकम् )

कमिति—यः अकरोत् कृतवान्, काम् ? वार्धिविततिं समुद्रविस्तारम्, कथम्भूताम् ? करदां करं ददातीति करदा तां सिद्धायदाम्, कथम्भूताम् ? गम्भीराम् अतः कारणात् कमन्यं तं करदं नाकरोत् अपितु

---

नायक राजाके मर जानेसे अपने दायित्वसे मुक्त सैकड़ों शत्रु घोड़ों और हाथियोंके वनमें जाकर भी कांप रहे थे। यद्यपि जंगल दुर्गम था। उसमें आवाज भी नहीं पहुँचती थी और धूल उड़ रही थी ( अर्थात् छिपे व्यक्तिको देखा भी नहीं जा सकता था ) ॥ ११३ ॥

संघ बनाकर रहनेवालोंमें कौन ऐसा संघ था जिसका एक-एक सामन्त न डर गया हो ? स्वभावसे नारायणके विरुद्ध चलनेवाले भी सन्धि करनेकी इच्छासे इसके सामने झुक गये थे ॥ ११४ ॥

हर्षपूर्वक माने गये नारायणने समुद्र तक फैली वसुन्धराको कर देनेवाली बना दिया

---

1. सामुदायिका:—ऊ० द०।

कृतवानेव, कथम्भूतः सन् ? समुत्सहर्षः, पुनः करवा करदात्रा मतः इष्टः करवेत्यत्र तृतीया बोध्या क्विपि प्रत्यये आतो धातोरित्याकारलोपः ॥११५॥

**त्रस्तेऽराववरास्तेऽत्र केशवेन नवेऽशके ।**
**तेपे चारु रुचापेते नाधुते न नतेऽधुना ॥११६॥**

( गतप्रत्यागतम् )

त्रस्त इति—अधुना साम्प्रतं[1] न न तेपे न तप्तम् अपितु न तप्तमेव, केन ? केशवेन विष्णुना कथं यथा भवति ? चारु सर्वश्रेष्ठम्, क्व ? अत्र जगति, क्व ? अरौ शत्रौ, कथम्भूते ? त्रस्ते भीते, पुनः अवरास्ते अवराः अपराः शत्रवः आस्ताः क्षिप्ता येन तस्मिन्, अथवा अः विष्णुः अस्य वरो अवरः अज्येष्ठः बलभद्रः तेन अस्तः अवरास्तः तस्मिन्, पुनः नवे नूतने, पुनः नते नम्रे ॥११६॥

**समजन्यायतोऽन्यान्गोसमजन्यायतोऽवयन् ।**
**समजन्यत हीनारेः समजन्यतयायतिः ॥११७॥**

( पादगतप्रत्यागतबन्धः )

समजन्येति—समजनि सञ्जातः, कोऽसौ ? विष्णुः, किं कुर्वन् ? अवयन् जानन्, कान् ? अन्यान् शत्रून्, किं कुर्वतः ? आयतः आगच्छतः, केन ? गोसमजन्यायतः गोसमूहन्यायेन तथा समजन्यत संजनिता कृतेत्यर्थः, का ? आयतिः उत्तरं फलम्, कथम्भूता ? हीना क्षीणा, कस्य ? अरेः शत्रोः, कया कर्त्र्या ? समजन्यतया समानरणतया ॥११७॥

**लूनं खलीकृतं नैव कृष्टं न द्विगुणीकृतम् ॥**
**तथापि यानेशालेयक्षेत्राणि ददिरे फलम् ॥११८॥**

लूनमिति—तथापि ददिरे दत्तवन्ति, कानि ? यानेशालेयक्षेत्राणि यानानि हस्त्यश्वादीनि यानानाम् ईशाः यानेशाः यानेश्वराः आलिर्विद्यते येषां ते आलेयाः शत्रवः यानेशाश्च ते आलेयाश्च यानेशालेयाः तेषां क्षेत्राणि तानि तथोक्तानि, किम् ? फलं यद्यपि क्षेत्रं लूनं छिन्नं नैव खलीकृतं खलं धान्यमर्दनभूमिः अखलं

---

था। अतएव ऐसा कौन बचा था जो इसके सामने नत न हुआ हो या कर न देने लगा हो ? ॥ ११५ ॥

( अत्र त्रस्ते, अवरास्ते, नवे, अशके, चारुरुचापेते, नाधुते अरौ अधुना केशवेन न तेपे। )

लोकमें डरे हुए, स्वमेव हीन ( अवर ) बने, नूतन किन्तु असमर्थ शत्रुपर भी नारायणने अब क्रोध नहीं किया था क्योंकि उसकी सुन्दर कान्ति समाप्त हो चुकी थी और वह ललकारको भी नहीं सह सकता था ॥ ११६ ॥

( गोसमजन्यायतः आयतः अन्यान् अवयन्, समजन्यतया अरेः क्षीणा आयतिः समजन्यत । )

गायोंके समान झुण्ड बनाकर आते हुए शत्रुओंको जानकर ही नारायणने बराबरीके संघर्षकी तैयारी करके शत्रुके पुण्यको ही क्षीण कर दिया था ॥ ११७ ॥

यद्यपि झटक दिये गये थे किन्तु दुष्टोंके समान व्यवहार नहीं किया गया था, साम्राज्यमें खींच ( मिला ) लिये गये थे किन्तु दूसरा दण्ड नहीं दिया गया था अतएव

---

१. –तं न नपेतो न नतप्रासं अपितु न प्राप्तमेव, केन—द० । तं ननपेतो न नतप्रासं अपितु प्राप्तमेव, केन—अ० । अशके, रुचापेते, आधुते इत्यादि शब्दानां व्याख्या प० अ० द० पुस्तकेषु नास्त्येव ।

सखलं कृतं खलीकृतं तथा कृष्टं कर्षणीकृतं न द्विगुणीकृतं न द्विर्वाहितमिति सम्बन्धः। प्रकारान्तरमाह—तथापि ददिरे, कानि ? शालेयक्षेत्राणि, किम् ? फलम्, क्व ? याने प्रयाणे यद्यपि शालेयक्षेत्रं लूनं नैव खलीकृतं कृष्टं न [1]द्विगुणाकृतमिति सम्बन्धः ॥११८॥

अमरः खचरस्चक्रमत्रसत्समनद्ध तम् ।
कश्च पश्यञ्जगच्चक्रमत्र सत्समनद्धतम् ॥११९॥

( समपादयमकम् )

अमर इति—अमरो देवः खचरश्च विद्याधरो वा कः समनद्ध सन्नद्धवान् अपितु न कोऽपि, किं कुर्वन् ? तं प्रतिविष्णुम् अत्र लोके हतं व्यापादितं पश्यन् अवलोकमानः तथा जगच्चक्रं समनत् उच्छ्वसत् उल्लस-दित्यर्थः तथा चक्रम् अत्रसत् उद्वेगमगच्छत् पश्यन् सन्[2] ॥११९॥

येऽमी मायामयायामाः शार्ङ्गमारोप्य तैरयम् ।
शरैः शशार शूरोऽरीन्प्राप्य शैलमहागुहाः ॥१२०॥

य इति—अयं शूरो विष्णुः शशार हतवान्, कान् ? अरीन् शत्रून्, कैः कृत्वा ? तैः शरैः बाणैः, किं कृत्वा ? पूर्वं शार्ङ्गं धनुरारोप्य, किं कृत्वा ? पूर्वं शैलमहागुहाः विजयार्धपर्वतबृहत्कन्दराः प्राप्य येऽमी शराः मायामयायामा मायानिर्मितदैर्घ्याः अभूवन् ॥१२०॥

कन्याहेमपुरो लेभे मायी यायात्र कातरे ।
शुद्धध्यानपेतो यामायानयं यातो यमक्षत ॥१२१॥

( अर्धभ्रमगर्भश्लोकः )

कन्येति—लेभे प्राप्तवान्, कः ? स विष्णुः, काः ? कन्याहेमपुरस्तमयासुवर्णपुराणि, कथम्भूतः ? मायी मायावान्, पुनः याया अतिशयेन गमनशीलः, क्व ? अत्र रणे, पुनः कातरे भीरौ शुद्धध्यानपेतः अपरि-त्यक्तः यं कातरमक्षत हतवान् स विष्णुः, कथम्भूतः सन् ? यातः प्राप्तः, किम् ? अयं भाग्यम् । अयः शुभावहो

---

रथादिके स्वामी शत्रुओंके राज्योंने भी इसे उपायन आदि दिये थे [ फोड़ कर फिर दुबारा न जोता गया अथवा काटकर खलियान भी न किया गया था तो भी शालिके खेतों ने पहुँचने पर फल दिये थे । ] ॥ ११८ ॥

( अत्र तं हतं पश्यन् अमरः खचरः कः चक्रं अत्रसन् समनद्ध, जगत् चक्रं अत्रसत् समनत् । )

उस प्रतिनारायणको मरा देखकर, देवताओं या खेचरोंमें कौन ऐसा था जो नारायणके चक्रका भय न मानकर लड़नेको तैयार होता ? सारा संसार ही ( रावण-कंसके ) भयसे मुक्त होकर शान्तिकी साँस ले रहा था ॥ ११९ ॥

धनुष पर चढ़ाकर विजयार्ध पर्वतकी महागुफामें छोड़े गये, जो मायासे निर्मित विशालताको प्राप्त होते थे, उन बाणोंके द्वारा इस महाबली नारायणने शत्रुओंको भगा दिया था ॥ १२० ॥

( शुद्धध्यानपेतः, अनयंयातः, याया, मायी अत्र यं अक्षत कातरे कन्याहेमपुरः लेभे यां आयान् । ]

आचार-विचारकी शुद्धिसे युक्त, मांगलिक विधिका कर्ता और मायापति नारायण

---

१. सर्वस्मिन्नपि पुस्तके ( प० द० ज० ) द्विगुणाकृतमित्येवात्र पाठो दृश्यते ।
२. 'सन्' पदस्थाने प० द० ज० पुस्तकेषु नास्ति ।

विचिरित्यन्वयः, किं कुर्वन् ? आयान् आगच्छन्, काम् ? यां शुद्धिमिति, अस्य श्लोकस्य चतुरोऽपि पादानधोऽधो लिखित्वार्धभ्रमणवाचनयार्धभ्रमगर्भश्लोकः समुत्पद्यते ॥१२१॥

| क | न्या | हे | म | पु | रो | ले | भे |
|---|---|---|---|---|---|---|---|
| का | यी | या | या | न | का | त | रे |
| शु | द्धया | न | पे | तो | या | मा | था |
| न | यं | या | तो | य | म | अ | त |

इदानीं स एव अर्द्धभ्रमगर्भश्लोकोऽभिधीयते ।

**कमाशु न तयारेमे न्यायीद्धया यन्क्षमातले ।**
**हेयानयामयाकारोऽमयापेतो यतोऽत्रपु ॥१२२॥**

कमिति—आशु शीघ्रं कं रिपुं नारेमे आरब्धवान् अपितु सर्वमपि उत्सुकीकृतवान्, कोऽसौ ? विष्णुः, कया कृत्वा ? तया ताच्छब्देन लक्ष्मीरभिधीयते तया लक्ष्म्या, कथम्भूतः ? न्यायी नीतिमान्, किं कुर्वन् ? अयन् गच्छन् प्रवर्त्तमान इत्यर्थः, क्व ? क्षमातले पृथिवीतले, कया ? इद्धया दीप्त्या प्रतापेनेत्यर्थः, पुनः हेयानयामयाकारः हेयश्चासावनयश्च हेयानयः हेयानय एव आमयः हेयानयामयः हेयानयामयस्येवाकारो यस्य किं तर्हि तथाभासो गृहीतः तद्रत्तोद्रत्वादिति भावः, अथवा हेयाः यत्रवः आनाः प्राणाः याम ऊपरत-वृत्तिः हेयानाम् आनाः हेयानाः हेयानानां यामः हेयानयामः हेयानयामं याति प्राप्नोति, आत इत्यनेन सूत्रेण कः हेयानयामयः हेयानयामय इवाकारो यस्य सः तथोक्तः, अथवा हेयाः परित्याज्याः आनाः प्राणाः हेयाश्च ते आनाश्च हेयानाः हेयानैर्यायन्ते प्राप्यन्ते हेयानयाः विचि कृते रूपं सिद्धम्, आ कीर्त्तिः, हेयानया चासौ आ च हेयानया हेयानयया निर्वृत्तः हेयानयामयः हेयानयामय आकारो यस्य स तथोक्तः, उक्तं च 'मर्यादायां क्रियां कीर्त्यामाकारः कथ्यते बुधैः' पुनः अमयोपेतः न मा अमा तया अमया अलक्ष्म्या दारिद्र्येण अपेतः परित्यक्तः, पुनः यतः यत्नपरः उद्यमी, कथम् ? अत्रपु अलज्जं निःसङ्कम् ॥१२२॥

**श्रीधीनीतिस्थितिप्रीतेरुद्धेतिरुचितोदिति ।**
**एषोऽजैषीदिद्वोरोपैरुच्चैरिति रुचितोदिति ॥१२३॥**

( च्युतवोष्ठ्याहतिःकण्ठ्यः, समपदयमकम् )

---

इस दिग्विजयमें चलता हुआ जिस पर वार करता था वह भीरु होकर इसे कन्या, सोना और नगर भेंट करके शुद्धिको प्राप्त करता था ॥ १२१ ॥

( हेयानयामयाकारः, यतः, अत्रपुः, न्यायी, अ-मयापेतः क्षमातले अयन् इद्धया तया कं न आशु रेमे । )

त्याग करने योग्य, निकृष्ट नीतियों रूपी महामारीका रोधक अथवा शत्रु ( हेय ) के प्राणों ( आन ) की ऊर्ध्वगति ( यामया ) का कर्ता ( कारी ) । अथवा जिसका रूप ( आकार ) परित्याज्य ( हेय ) प्राणों ( आन ) से प्राप्त ( या ) कीर्ति ( आ ) मय है, सदैव प्रयत्नशील, लज्जालु, न्यायकर्ता और लक्ष्मीसे वेष्टित नारायणने दिग्विजयमें पृथ्वी की परिक्रमा करते समय अगमनाती लक्ष्मीके द्वारा किसको तुरन्त उत्सुक नहीं बनाया था ॥ १२२ ॥

---

१. अस्य साक्षाच्च हेयानयामया इवाकारो यस्य किं—च० द० ।

श्रीति—अजैषीत् जितवान्, कः ? एषः विष्णुः, कान् ? द्विषः शत्रून्, कथम् ? अदिति अखण्डम्, किं कृत्वा ? रुचितोदिति इद्धोदयं यथा भवति रोषं कोपैः रुद्ध्वा संवृत्य, कथम् ? इत्युक्तप्रकारापेक्षया श्रीधीनीतिस्थितिप्रीतेः श्रीप्रमुखानां प्रीतेः उचितो योग्यः, पुनः उद्धेतिः उत्खातशस्त्रः ॥ १२३ ॥

श्रीतः सुरकुलं हीनमत्रासीदक्षमोहितम् ।
क्षात्रं तु वृत्ततः क्षिप्तमत्रासीदक्षमोहितम् ॥१२४॥

( समपादयमकम् )

श्रीत इति—सुरकुलं देववृन्दम् अक्षमोहितं अक्षेषु[1] स्पर्शनादिष्विन्द्रियेषु मोहितं निर्विवेकं तथा श्रीतः श्रियः सकाशात् हीनम् अत्र लोके आसीत् संजातम् । अत्रायं भावः विष्णोर्विभूतिमालोक्य स्वां विभूतिं विनिन्द्य सुरकुलं सचिन्ततया लज्जितं बभूव इत्यर्थः । तु पुनः क्षात्रं क्षत्रियसमूहः वृत्ततः वृत्तात् क्षिप्तम् आचरणात् च्युतम्, पुनः अक्षमोहितं न विद्यते क्षमाया भूमेः ऊहितं वितर्कणं यस्य तत्, अत्रासीत् त्रस्तं स्वां मेदिनीं विहाय पलायनं चकारेत्यर्थः ॥ १२४ ॥

सर्वकर्मीणमूर्ध्वज्ञं दूतमुद्युक्तविक्रमम् ।
प्रहित्याश्वमपि म्लेच्छस्त्रीराज्यं तमशुश्रुवत् ॥१२५॥

सर्वेति—अशुश्रुवत् श्रावयति स्म, किं कर्तृ ? आश्वमपि अश्वबलमपि, किम् ? म्लेच्छस्त्रीराज्यं म्लेच्छाः क्षत्रियाः म्लेच्छा एव स्त्रियः म्लेच्छस्त्रियः म्लेच्छस्त्रीणां राज्यम्, कमशुश्रुवत् ? तं विष्णुम्, किं कृत्वा ? सर्वकर्मीणं सर्वकार्यसमर्थम्, ऊर्ध्वज्ञं भाविकार्यदर्शकम्, उद्युक्तविक्रमं प्रयुक्तपराक्रमं, दूतं प्रहित्य प्रेष्य, तथा आश्वमपि सर्वकर्मीणम् ऊर्ध्वज्ञम् ऊर्ध्वे जानुनी यस्य व्याघ्रीवादिति ज्ञः जानुशब्दस्य ज्ञादेशः तथा उद्युक्तविक्रमं[2] सर्वविशिष्टपादम् ॥ १२५ ॥

प्रजिघ्युः पार्वतीयाश्च चामरं दन्तमौषधिम् ।
चित्तेन कार्मणेनापि द्विषन्तो न तमद्विषुः ॥१२६॥

प्रजिघ्युरिति—प्रजिघ्युः प्रस्थापितवन्तः । के ? पार्वतीयाः पर्वतोद्भवा मल्लयनादयः, किम् ? चामरं दन्तं

---

सम्पत्ति ( श्री ) शिक्षा ( धी ) न्याय ( नीति ), स्थायित्व और प्रेमके लिए शस्त्र उठानेवाले एवं उचितकारी इस प्रकार तेजस्वी नारायणने समस्त ( अदिति ) शत्रुओंको अपने रोषसे ही कीलित कर दिया था और जीत लिया था ॥ १२३ ॥

( अत्र अक्षमोहितं, सुरकुलं श्रीतः हीनं आसीत्, अक्षमा ऊहितं वृत्ततः क्षिप्तं क्षात्रं अत्रासीत् । )

विश्वमें इन्द्रियोंके विषयभोगोंमें लीन देवकुल भी इसकी लक्ष्मीके कारण हीन हो गया था । हार जानेके कारण पृथ्वी या राज्यकी चिन्तासे मुक्त अतएव राजधर्मसे गिरा क्षत्रिय कुल इससे डर गया था ॥ १२४ ॥

म्लेच्छ रानियों द्वारा शासित राज्योंने सब प्रकारके वाहन ( कर्म ) योग्य, पुष्ट उन्नत जंघा ( ज्ञ ) युक्त प्रशिक्षित चाल ( विक्रम ) वाले घोड़ोंकी भेंटसे साथ, सब कार्य करनेमें समर्थ, आगेकी जाननेवाले तथा प्रसिद्ध पराक्रमी दूतोंको भेजकर नारायणको समर्पण का समाचार दिया था ॥ १२५ ॥

पहाड़ी राजाओंने नारायणकी सेवामें चामर, हस्ति-सिंह दन्त और विविध जड़ी-

---

1. –षु इन्द्रियेषु मोहितं स्पर्शनरसनघ्राणचक्षुःश्रोत्रव्यापारेषु निर्विवेकमित्यर्थः—प० द० ज० ।
2. –मं समर्थविशिष्ट—प० द० ज० ।

तपौषधि च तथा चित्तेन द्विषन्तोऽपि नाद्विषुः न द्विष्टवन्तः, कम् तं विष्णुं केन ? कार्मणेन कर्मभूतेन ? कर्मणा प्रयुक्तेनेत्यर्थः ॥ १२६ ॥

**समयाचक्रिरे खेयं केऽरिमूलं यदम्बुधीन् ।**
**समया चक्रिरेखेयमलङ्घ्या सामवायिकैः ॥१२७॥**

( विषमपादयमकम् )

समयेति—के शत्रवः समयाचक्रिरे कालयापनां कृतवन्तः अपितु न केऽपीत्यर्थः, यत् यस्मात् कारणात् खेयं खननीयं खनितव्यम्, किम् ? अरिमूलम्, शत्रुमूलम्, कथम् ? समया समीपे, कान् ? अम्बुधीन् समुद्रान्, युक्तमेतत्, इयं चक्रिरेखा चक्रवर्तिमर्यादा सामवायिकैः सैनिकैरलङ्घ्यया ॥ १२७ ॥

**समयासीदसौ जन्यं समयासीदसौजन्यम् ।**
**समयासीदसौ जन्यं समयासीदसौजन्यम् ॥१२८॥**

( सर्वपादयमकं गोमूत्रिकाकारम् )

समयेति—यदा समयासीत् सम्यक् प्रकारेण गतवान् कः ? असावयं विष्णुः, किम् ? जन्यं रणं तदा समयासीत् प्रयत्नविषयीकृतवान्, कोऽसौ ? विष्णुः, किम् ? असौजन्यम् अमैत्रीं तथा समयासीत् प्राप्तवान् कः ? असौ विष्णुः, किम् ? जन्यमपवादम्, क्व असौ खड्गे, कथम्भूतं जन्यम् ? जनादनपेतं जन्यम्, कथम्भूतो विष्णुः, समयासीदयं भाग्यवहो विधिः असिः खड्गः सङ्गतमयं यस्यासौ समयः समयश्चासावसिश्च समयासिः समयासिना इन्दतीति इदेः क्विपि कृते सति सिद्धं समयासीत् इति रूपम् । सङ्गतभाग्यवहविधिना खड्गेन प्रतापीत्यर्थः ॥ १२८ ॥

**व्यधादरीणां द्वीपेषु जयस्तम्भस्थितिं व्यधात् ।**
**व्यधाद्वेलावने धैर्याद्दण्डोऽस्य मधु भव्यधात् ॥१२९॥**

( आद्यन्तयमकम् )

व्यधादिति—दण्डः सैन्यं द्वीपेषु जयस्तम्भस्थितिं व्यधात् कृतवान्, कस्मात् ? अरीणां व्यधात् ताडनात् तथा व्यधात् आस्वादितवान् कः ? दण्डः, किम् ? मधु मधुरसम्, क्व ? वेलावने, कस्मात् ? धैर्यात्, कथम्भूतात् ? भव्यधात् कल्याणधारकात्, कस्य दण्डः ? अस्य विष्णोः ॥ १२९ ॥

---

बूटियाँ भेजी थीं । यद्यपि उनके मनमें द्वेष था तो भी आचरणसे उन्होंने नारायणके प्रति शत्रुता नहीं दिखायी थी ॥ १२६ ॥

कौन ऐसे राजा थे जो शरणागत होनेमें विलम्ब करते ? क्योंकि चारों समुद्रों तकके शत्रुओंकी जड़ें खोदकर फेंकनी थीं । चक्रवर्तीकी इस राज्यसीमा ( रेखा ) का कौन सैनिक उल्लंघन कर सकता था ? ॥ १२७ ॥

( असौ जन्यं समयासीत्, असौजन्यं समयासीत्, समयासीत् असौ, असौ जन्यं, जन्यं समयासीत् । )

इस नारायणने युद्धको सम्यक् प्रकारसे चलाया था । दुष्टता या आततायीपनका प्रयत्न करके प्रतिरोध किया था । और मंगलदायिनी ( समया ) तलवार ( असि ) से देदीप्यमान ( इदि ) इसने खड्गके विषयमें फैले जनापवाद ( जन्य ) को समाप्त कर दिया था ॥ १२८ ॥

वमन करके ( व्यधात् ) शत्रुओंके द्वीपोंपर इसकी सेनाने विजय-स्तम्भ बना दिये थे ( व्यधात् ) । तथा कल्याणकारी ( भव्य ) होनेके कारण इसके शासन ( दण्ड ) ने समुद्र तटके वनोंमें साहस और निश्चिन्तताके साथ मधुका स्वाद लिया था ॥ १२९ ॥

**इत्यादाय दिनैः कैश्चिद्दिशो दण्डघनं नृपः ।**
**सदयोध्यामतो रागाद्ययौ द्वारवतीं पुरीम् ॥१३०॥**

इतीति—द्विः । अतः अततीति अत् क्विपि कृते सति रूपं सिद्धं तस्मात् विजृम्भमाणात् रागात् प्रीतेः ययौ नृपो लक्ष्मणः काम् ? पुरीम् । किमाख्याम् ? अयोध्याम्, कथम्भूताम् ? द्वारवतीम्, किं कृत्वा ? दिशो दण्डघनम् आदाय गृहीत्वा कैः ? कैश्चिद्दिनैः, कथम् ? इत्युक्तप्रकारेण, कथम्भूतं दण्डघनम् ? सत् समीचीनम् अव्यभिचारीत्यर्थः ।

भारतीयः—नृपः कृष्णः, सदयोध्यां सती चासौ अयोध्या च सदयोध्या योद्धुमशक्या तां शत्रुभिरलङ्घ्याम् पुरीं अथवा द्वारवतीं रागात् ययौ, कथम्भूताद् रागात् ? अध्यामतः विशदात् कथम्भूतो नृपः सदयः सानुग्रहः । शेषं सुगमम् ॥१३०॥

**वियोगे लघुमुत्तुङ्गमानीताशार्थमात्मजम् ।**
**सा तं मातेव संवोढुं मुदामान्त्यपि नाशकत् ॥१३१॥**

वियोग इति—नाशकत् न शक्ता, का ? सा पुरी, किं कर्तुम् ? आनीताशार्थम् आनीतदिग्द्रव्यं तं विष्णुं संवोढुम्, कथम्भूतम् ? किं कुर्वती सत्यपि ? मुदा सन्तोषेण अमान्त्यपि क्वाप्यवकाशमलभमानेत्यर्थः । केव ? मातेव जननीव, किं कर्तुम् ? संवोढुं कम् ? आत्मजं पुत्रम्, कथम्भूतम् ? आनीताशार्थम्, आहृताभिलषितार्थम्, पुनः लघुम्, क्व ? वियोगे, पुनः कथम्भूतम् ? उत्तुङ्गम्; क्व ? संयोगे, किं कुर्वती सत्यपि ? मुदा हर्षेण अमान्त्यपि ॥१३१॥

**अवाष्टभञ्जनाश्चारुशेषाभिस्तं चमूः पुरम् ।**
**अवाष्ट भञ्जनाश्चारुराज्ञया न तृणान्यपि ॥१३२॥**

( विषमपादयमकम् )

अवाष्टभन्निति—जनाः चारुशेषाभिर्मनोहराशीर्वादैः तं विष्णुम् अवाष्टभन् अवष्टब्धवन्तः स्तुतवन्त इत्यर्थः तथा चमूः सेना पुरम् पुरीं अवाष्ट व्याप्तवती तथा च न आरुरुन्गतवन्ति कानि ? तृणान्यपि, काः ? भञ्जनाः आमर्दनक्रियाः, कया ? आज्ञया आदेशेन ॥१३२॥

---

इस प्रकारसे कुछ ही दिनोंमें समस्त दिशाओंकी समीचीन व्यवस्था करके तथा सम्पत्तिको लेकर प्रतिदिन बढ़ते ( अतः ) गृहप्रेमके कारण राजा ( राम ) अनेक तोरणोंसे सज्जित अयोध्यापुरीको लौटे थे [ इस प्रकारसे···प्रतिदिन बढ़ते रागके कारण राजा ( कृष्ण ) शत्रुओंके द्वारा अनाक्रमणीय शिष्टपुरी द्वारकाको लौटे थे । अथवा स्पष्ट ( अध्यामतः ) रागके कारण परम कारुणिक राजा ( कृष्ण ) द्वारकापुरीको लौट पड़े थे ] ॥ १३० ॥

बिछुड़नेके समय छोटे किन्तु लौटनेके समय लम्बे-चौड़े तथा समस्त दिशाओंकी सम्पत्तिके साथ लौटे पुत्रको हर्षसे प्रफुल्लित माता जिस प्रकार गोदमें नहीं उठा सकती है, उसी प्रकार आते समय हलके और लौटते समय दशों दिशाओंके विभवसे लदे सर्वोपरि ( उत्तुङ्ग ) चक्रवर्ती राजा ( राम-कृष्ण ) को सुविस्तृत किन्तु उत्सवमें मस्त अयोध्या या द्वारका भी नहीं सम्हाल सकी थी ॥ १३१ ॥

मनोहर स्वागत या आशिष वचनोंके द्वारा नागरिकोंने उस नारायणकी स्तुति की थी । विजयी सेनाएँ पूरी नगरीमें फैल गयी थीं । और राजाकी आज्ञा हो गयी थी कि तृणोंको भी न रौंदा ( भञ्जन ) जाय ( जावे ) ॥ १३२ ॥

प्रविश्य पुरमाराध्य चक्रमारुह्य विष्टरम्
परं मित्राणि देशाय नामुञ्चत्तदनुस्मृतिम् ॥१३३॥

प्रविश्येति—विष्णुः विष्टरमासनमारुह्य चक्रम् आराध्य प्रपूज्य पुरं प्रविश्य मित्राणि देशाय परं केवलं अमुञ्चत् मुक्तवान् तदनुस्मृतिं मित्रानुस्मरणं नामुञ्चत् ॥१३३॥

एकभुक्तिमलुब्धिं च कुलोपकरणं हितम् ।
सामाधिकमसाधुं च राज्यभारं बभार सः ॥१३४॥

एकभुक्तिरिति—स विष्णुः राज्यभारं बभार धृतवान् पुष्टिं निनाय, कथम्भूतम् ? अलुब्धिं न विद्यते लुब्धिर्यत्र सः तं निर्लोभं तथा च एकभुक्तिम् एकानुभवगोचरमिति विरोधः[1] परिह्रियते, अलुब्धिं विमोहहीनं तथा एकभुक्तिम् एकस्य भुक्तिः रक्षा यस्य तमेकच्छत्रमित्यर्थः,[2] पुनःहितं हितोपकरणं कुलोपकरणं भूमिच्छेदकरम् इति विरोधः परिह्रियते हितं सुखदं कुलोपकरणं वंशोपकारम्, पुनः सामाधिकं साम्ना अधिकम् असाधुं न चेतो रञ्जकमिति विरुद्धं परिह्रियते, सा लक्ष्मीः माज्ञानं पञ्चाङ्गमन्त्रः ताभ्यामधिकम्, असाधुम् अः विष्णुः तस्य साधुं मनोहरम् ॥१३४॥

नानेष्टसहितादोहि स्वयं गौर्वसु भूपतिः ।
नानेष्ट स हिताऽदो हि स्थानं तीर्थान्तरात्परम् ॥१३५॥

( विषमपादयमकम् )

नानेति—स्वयमात्मना अदोहि दुग्धा का ? गौर्मेदिनी, किम् ? वसु द्रव्यम्, कथम्भूता सती ? नानेष्टसहिता विविधाभिलषितयुक्ता, पुनः हिता हितदायिनी तथा नानेष्ट न प्रापितवान् कोऽसौ ? भूपतिर्विष्णुः, किम् ? अद एतद्वसु, किं नानेष्ट ? स्थानं कथम्भूतम् ? परमन्यत्, कस्मात् ? तीर्थान्तरात् धर्मसमवायिनः कार्यसमवायिनः पुरुषास्तीर्थम् एकस्मात्तीर्थादपरं तीर्थं तीर्थान्तरं तस्मात्तथोक्तात् कथम् हि ? स्फुटम् ॥१३५॥

---

राजधानीमें प्रवेश करके नारायणने चक्ररत्नकी पूजा की थी। और राजसिंहासन पर बैठकर केवल मित्र राजाओंको अपने-अपने देश जानेके लिए विदा किया था। तो भी उन ( मित्रों ) की स्मृतिको अपने पास ही रखा था ॥ १३३ ॥

नारायणने राजभारको ऐसे वहन किया था कि [ उसमें लोभ न था तो भी लोग एक बार खा पाते थे, सबके लिए हितकारी था तो भी भूमि या वंश बँटते जाते थे और समाधि द्वारा चलाया जा रहा था किन्तु दुर्जन बहुत थे ] एकच्छत्र ( भुक्ति ) होनेपर भी कोषादिके बढ़ानेका लोभ न था, सबके लिए सुखद था तथा वंशोंकी वृद्धि हो रही थी और लक्ष्मी ( सा ) तथा ज्ञान ( मा ) खूब बढ़नेसे नारायण ( अ ) के लिए वह प्रिय ( साधु ) था ॥ १३४ ॥

विविध प्रकारके अभिलषितोंसे भरी और मंगलमयी भूमि स्वयमेव विभव दे रही थी। वह राजा भी इस स्वयं प्राप्त सम्पत्तिके द्वारा ( सुव्रत या नेमि ) के धर्म ( तीर्थ ) को छोड़कर किसी दूसरे स्थानको नहीं चाहता था ॥ १३५ ॥

---

१. विरुद्धं प—प० द० ज० ।
२. –र्थः कथम्भूतं सन्तं ? हितं किंच कथम् ? कुलोप—प० द० ज० ।

स्वपुरग्रामतायत्तं वस्वदिक्षन्जनं जनम् ।
स्वपुरग्रा मता यत्तं भूपास्तस्याधिकारिणः ॥१३६॥

( विषमपादादि-यमकम् )

स्वपुरीति—भूपाः अदिक्षन् दिष्टवन्तः किम् ? स्वपुरग्रामतायसम् आत्मनगरग्रामसमूहाधीनं वसु द्रव्यम्, कस्य ? तस्य विष्णोः तथा यद्यस्मात् स्वपुः सुष्ठु यान्ति स्म यथोक्तन्यायेन रक्षितवन्त इत्यर्थः, के ? अधिकारिणो नियोगिनः, कम् ? तं जनं जनम्, कस्य ? तस्य विष्णोः, कथम्भूताधिकारिणः ? अग्राः उत्तमाः पुनः मताः इष्टाः ॥१३६॥

परस्परमपश्यन्तः सामन्ता ददृशुः प्रभुम् ।
नमन्तस्तं नवोत्थानं भानुं दूरस्थिता इव ॥१३७॥

परस्परमिति—सामन्ताः तं प्रभुं विष्णुं ददृशुः दृष्टवन्तः, कथम्भूताः ? दूरस्थिताः, कमिव ? भानुमिव सूर्यमिव, किं कुर्वन्तः ? नमन्तो नमस्कुर्वन्तः अपश्यन्तः अनिरीक्षमाणाः, कथम् ? परस्परमन्योन्यम्, कथम्भूतं प्रभुं भानुं च ? नवोत्थानं नूतनोदयमिति ॥१३७॥

निजतो हि धराराधी सदा नाम रवी रुचा ।
वेधसा जनितो भूयो योगे वेगनयेन सन् ॥१३८॥

निजत इति—हि स्फुटो नामाहो जनितः, कः कर्मतापन्नः ? सन् सज्जनः विष्णुः, केन ? वेधसा ब्रह्मणा, कथम् ? भूयः, पुनः केन कृत्वा ? वेगनयेन, क्व सति ? योगे समाधौ सति, कथम्भूतेन वेगनयेन ? निजतः स्वाधीनेन, कथम्भूतः ? रविः सूर्यः कया ? रुचा दीप्त्या, कथम्भूतः ? धराराधी धरां राध्यतीति इत्येवंशीलः भूमिविवर्द्धकः, अथवा धरां राध्नोतीत्येवं शीलः भूमिसंसिद्धिकारकः, कथम् सदा सर्वदा । प्रतिलोमानुलोमेन[1] द्वैतम् ॥१३८॥

समयेन गवे गेये यो भूतो निजसाधवे ।
चारुवीरमना दास धीराराधहितोऽजनि ॥१३९॥

---

यतः नारायणके प्रधान लोकप्रिय अधिकारी जनताकी भलीभाँति ( सु )से रक्षा करते थे ( अपुः ) फलतः उसके सामन्त राजा भी अपने अपने नगरों और ग्रामोंसे होनेवाली आयको जनता ( जनं ) का धन मानते थे और उनके विकासमें ही व्यय करते थे ॥१३६॥

नूतन अभ्युदयको प्राप्त चक्रवर्ती राजा नारायणके साथ सामन्त राजा लोग नवोदित सूर्यके समान दूरसे ही साक्षात्कार करते थे । नमस्कार करनेमें लीन सामन्त लोग आपसमें एक दूसरेकी ओर दृष्टि भी नहीं डालते थे ॥१३७॥

दैवरूपी प्रजापतिने अपने तेजके द्वारा सूर्यको बनाया था जो सदैव बिना नागाके पृथ्वीकी आराधना करता है । तथा योगमें स्थित उसने ही अपने नीति प्रवाहसे साधु राजाकी सृष्टि की थी जो अनादि कालसे जगत्की व्यवस्था करता आया है ॥१३८॥

---

१. लोम द्वैतम्-द० अ० ।

सदिति—यो विष्णुर्भूतः समुत्पन्नः, कथम्भूतः ? गेयः स्तुत्यः, कस्यै ? गवे भूमये, केन कृत्वा ? सन्नयेन समीचीननीत्या, कथम्भूतायै गवे ? निजसाधवे निजाः साधवो यस्याः सा तस्यै तथा अजनि सञ्जातः, कथम्भूतः ? चारुवीरमनाः चारवो अव्यभिचारिणो ये वीराः सुभटास्तेषु मनो यस्य सः, पुनः कथम्भूतः ? अदास-धीराराधहितः दो छेदन इत्यस्य प्रयोगः, अः विष्णुः अद्यतीति अदः, आदः कप् इत्यनेन सूत्रेण कः, विष्णुशत्रुः रामायणपक्षे रावणः भारतपक्षे जरासन्धः, अदमस्यति कर्मण्यणित्यनेन सूत्रेण, अदासः विष्णुशत्रुक्षेपक इत्यर्थः, धीराः निःक्षोभाः आराः शस्त्रविशेषसंज्ञकाः आरा दधतीति आराधाः, आतः क इत्यनेन सूत्रेण कः, आराधरा इत्यर्थः, अदासाश्च ते धीराश्च आराधाश्च ते अदासधीराराधा अदासधीराराधा हिता यस्य, तेषु तेभ्यो वा हितस्तथोक्तः ॥१३९॥

स्वपत्यं विधिनिग्राहं स्वपत्यन्तेऽकरोद्द्विषाम् ।
आजिजीवाधि कृत्वा तमाजिजीवारवाहतम् ॥१४०॥

( प्रथमपदयमकम् )

स्वेति—अकरोत् कृतवान्, कः ? विष्णुः स्वपत्यं शोभनमपत्यम्[1] आज्ञाविधायिनं पुत्रमित्यर्थः, कथम्भूतम् ? विधिनिग्राहं दैवविध्वंसकम्, क्व सति ? स्वपत्यन्ते स्वस्वामिविनाशे, केषाम् ? द्विषां शत्रूणां तथा आजिजीव प्राणानधारयत्, किम् ? अपत्यम्, किं कृत्वा ? पूर्वं कृत्वा, किम् ? तमधि तं विष्णुं स्वामिनं कृत्वेत्यर्थः, कथम्भूतं विष्णुम् ? आजिजीवारवाहतम् आजेर्जीवो यस्मात् स आजिजीवः आरवः सर्वव्यापी ध्वनिः आजिजीवश्चासावारवश्च आजिजीवारवः आजिजीवारवेण आहतः स तथोक्तः तं रणोल्लासगभीरध्वनि-जर्जरितमिति ॥१४०॥

अमा रणं महामात्रैर्महाब्रह्मैरमारणम् ।
अध्यायन्कविभिः काव्यमध्यायन्कर्म चाकरोत् ॥१४१॥

( पादयमकम् )

अमेति—अकरोत् कृतवान्, कः ? विष्णुः, किम् ? कर्म कार्यं किं कुर्वन् ? अध्यायन् अभिगच्छन्, कम् ? रणम्, कथम् ? महामात्रैः हस्तिसाधनकैः अमा सह, किं कुर्वन् ? अध्यायन् परामृशन्, किम् ? महाब्रह्मैः महाब्रह्म येषां ते महाब्रह्माः महाब्रह्मणोराष्ट्रेभ्य इत्यनेन सूत्रेण टस्तैस्तथोक्तैः जितेन्द्रियैः पुरुषैः अमा सार्द्धम् अमारणम् अहिंसां तथा चाध्यायन्, किम् ? कविभिरमा साकं काव्यम् ॥१४१॥

---

जो नारायण उत्कृष्ट नीतिका प्रवर्तक होनेके कारण समस्त उस लोकके लिए स्तुत्य है जिसके साधु ही सगे हैं, वही नारायण सदाचारी वीर पुरुषोंका स्नेही होनेके कारण विष्णुके (अ)विरोधियों ( रावण-जरासंध ) के मर्दक, धीरजशाली और चक्र ( आर ) के धारकोंका कल्याणकर्त्ता बन गया था ॥१३९॥

शत्रुओंके अपने-अपने प्रभुओंका अस्त हो जानेपर नारायणने इनके ऊपर अपनी प्रभुताको स्थापित किया था जो कि दैवका भी निग्रह कर सकती थी। युद्ध ( आजि ) में होनेवाले जीवोंके शोर (आराव) की समाप्ति करके शत्रु मण्डलपर अधिकार जमा कर वह सुखसे जी रहा था ॥१४०॥

नारायण प्रधान मन्त्रियोंके साथ युद्धका प्रतीकार सोचता था, बड़ी वय (महामात्र) के विद्वानोंके साथ अहिंसा तत्त्वकी विवेचना करता था, विपुल धन व्यय करनेपर सुलभ कवियोंके साथ काव्यचर्चा करता था तथा समस्त कार्योंको शास्त्रके अनुसार करता था ॥१४१॥

---

१. स्वस्य पत्यं प्रभुत्वं प्रासंगिकम् ।

अर्थानपेक्षानद्राक्षीत्काले करणमात्रिकान् ।
स पौरानङ्गहारांश्च नमत्क्रमकटीकरान् ॥१४२॥

अर्थानिति—स विष्णुः काले समये यथोचितावसरे अपेक्षान् अर्थान् अद्राक्षीदवलोकितवान् तथा करणमात्रिकान् अधिकारिणः अद्राक्षीत् तथा पौरान् नगरनिवासिन अद्राक्षीत् तथा अङ्गहारान् अद्राक्षीत् कथम्भूतान् ? नमत्क्रमकटीकरान् नम्रीभवच्चरणनितम्बहस्तान् ॥१४२॥

ततसारतमास्थासु सुभावानभितारधीः ।
धीरताभिनवाभासु सुस्थामा तरसातत ॥१४३॥

( सर्वगतप्रत्यागतम् )

ततसारेति—आतत विस्तृतवान्, कः ? स विष्णुः, कान् ? सुभावान् सुष्ठुपरिणामान् कासु ? ततसारतमास्थासु विस्तृतसारतमप्रतिज्ञासु, कथम्भूतासु ? धीरताभिनवाभासु धीरताभिनवा आभा यासां तासु तथोक्तासु निःक्षोभ[1]नवतरुणप्रतापासु, कथम्भूतः स विष्णुः ? सुस्थामा बलीयानिति कथम् ? तरसा शीघ्रम्, कथम्भूतः अभितारधीः अभिगता तारधीर्यस्य सः सकलशास्त्ररसास्वरसरसिकबुद्धिरित्यर्थः, पुनः ॥१४३॥

क्षयलोभविरागहेतवः प्रकृतीनामभवन्न यत्र यः ।
रिपुमध्यकृतास्य केवलं परवध्वः परकीयतां ययुः ॥१४४॥

क्षयेति—यत्र विष्णौ नाभवन्न सञ्जाताः क्षयलोभविरागहेतवः क्षयो बलाभावः, लोभः सर्वेषु पदार्थेषु व्यामोहः, विरागः अनुरागाभावः, क्षयश्च लोभश्च विरागश्च क्षयलोभविरागाः, क्षयलोभविरागाः, क्षयलोभविरागाश्च ते हेतवश्च ते तथोक्ताः, कासाम् ? प्रकृतीनां दुर्गाध्यक्षधनाध्यक्षसेनापतिपुरोधोमन्त्रिदैवज्ञलक्षणानाम् । आसां विपरीततया स्वरूपं निरूपयति क्षीणा हि प्रकृतिरकिञ्चित्करा जायते, लुब्धा खलु तमेव पतिं ग्रसते अहेरपत्यभक्षणवत्, लुब्धस्य विरक्ता सती राज्यभङ्गाय जायते इति, एतेन राजनि प्रकृतेः स्वाधीनता कथितेति, तथा यः अध्यकृत अधिकृतवान्, कम् ? रिपुं शत्रुं यः शत्रोः स्वामी बभूवेति भावः । एवं सति केवलं परं ययुर्गताः, काः ? परवध्वः अन्यकामिन्यः, काम् ? परकीयतां पराधीनत्वम्, कस्य ? अस्य विष्णोः अत्र विष्णोः परनारीसोदरत्वं प्रदर्शितमिति भावः[2] ॥१४४॥

---

वह उचित और निश्चित समयपर राजकाजको देखता था, याचकोंकी सुनता था, अधिकारियोंसे प्रतिवेदन लेता था, नागरिकोंसे मिलता था तथा शिक्षित और पादविन्यासमें पटु नर्तकोंका नृत्य देखता था जिसमें कमर और हाथोंका लोच दर्शनीय होता था ॥१४२॥

स्वयं आस्था ( सम्यग्दर्शन )में दृढ़ और विपुल ( तार ) बुद्धिको प्राप्त नारायणने स्थिरताकी नयी ज्योतिसे दैदीप्यमान मूल तत्त्व ( सारतम ) में श्रद्धाको बढ़ानेवाले लोगोंमें, पवित्र भावोंका बड़ी तेजीसे संचार कर दिया था ॥१४३॥

जिसके राज्यमें प्रजाको क्षय, लोभ, अप्रीतिके कारणोंका सामना नहीं करना पड़ता था, जिसने केवल शत्रुओंका दमन किया था और दूसरोंकी पत्नियाँ ही जिसके राज्यमें परकीया दूसरोंकी पत्नी थीं अर्थात् कोई परस्त्रीपर दृष्टि नहीं डालता था ॥१४४॥

---

१. नव तरुण प० द० ज० ।
२. वैतालीयं छन्दः ।

चम्वाजिस्थिरया धरानमननिश्चिन्तस्थितोऽनश्वरन्
प्रज्ञानस्थिति कर्मजातमवनिस्वामी सुखानां कृते ।
मत्वामा सचिवैरिहत्यमवसि स्थानं सतामर्चितौ
तौ जैनौ चरणौ प्रजाशमकृतौ रत्यास्तुवेन्द्रस्तुतौ ॥१४५॥

( षडरचक्रगर्भम् )

चम्वेति—अवनिस्वामी विष्णुः जैनौ चरणौ अस्तुत स्तुतवान्, कथम्भूतौ चरणौ ? प्रजाशमकृतौ प्रजानां शमं शान्ति कुरुत इति क्विप् एतौ तथोक्तौ, पुनः इन्द्रस्तुतौ, पुनः अर्चितौ पुनः सतां सत्पुरुषाणाम् अवसि अक्षयं स्थानम् आस्पदम्, किं कुर्वन्नस्तुत ? कर्मजातं कार्यसमूहं चरन्नभुवन्, कथं यथा भवति ? अनः सोल्लासम् अन प्राणन इत्यस्य धातोः असप्रत्ययान्तः प्रयोगः, किमर्थं सुखानां कृति शर्माप्तये कथम्भूतं कर्मजातम् ? इहत्यं इह लोकोद्भवम्, पुनः कथम्भूतम् ? प्रज्ञानस्थिति, किं कृत्वा ? पूर्वं मत्वा विचार्य्य, कथम् ? सचिवैः अमात्यैः अमा सार्द्धं कथम्भूतः सन् ? धरानमननिश्चिन्तस्थितः धरानमनेन पूर्वं निश्चिन्तः पश्चात् स्थितः मेदिनीप्रह्वीकरणनिश्चिन्त इत्यर्थः, कया ? आजिस्थिरया सङ्ग्रामस्थिरया चम्वा सेनया[1] षडरचक्रगर्भम् ॥१४५॥

नीत्या यो गुरुणा दिशो दशरथेनोपात्तवान्नन्दनः
श्रीदेव्या वसुदेवतः प्रतिजगन्न्यायस्य मार्गे स्थितः ।
तस्य स्थायिधनंजयस्य कृतितः प्रादुष्यदुच्चैर्यशो
गाम्भीर्यादिगुणापनोदविधिनेवाम्भोनिधींल्लङ्घते ॥१४६॥

नेत्येति—त्रिः । तस्य लक्ष्मणस्य यशः अम्भोधीन् समुद्रान् लङ्घते, केनेव ? गाम्भीर्यादिगुणापनोदविधिनेव, कथम् ? उच्चैरतिशयेन, किं कुर्वत् ? प्रादुष्यत् प्रचुरीभवत्, कस्याः सकाशात् कृतितो विधानात्, कस्य ? जयस्य, कथम्भूतम् ? स्थायिधनं यो नन्दनः पुत्रः स्थितः, क्व ? मार्गे, कस्य ? न्यायस्य, केन सह ? दशरथेन गुरुणा पित्रा, किं कुर्वतो न्यायस्य ? अवतो रक्षतः, कथम् ? प्रतिजगत् लोकं प्रति कथम्भूते मार्गे ? वसुदे कथम्भूतो नन्दनः ? नीत्या दिशः ककुभः उपात्तवान् गृहीतवान्, कथम्भूतया नीत्या ? श्रीदेव्या श्रिया दीव्यति विलसतीति श्रीदेवी तया ।

अथ भारतीयः—तस्य विष्णोर्यशः कर्तृ लङ्घते, कान् ? अम्भोनिधीन्, केनेव ? गाम्भीर्यादिगुणा-

---

युद्धमें डटनेवाली सेनाके द्वारा समस्त पृथ्वीको वशमें करके निश्चिन्त हुए और आसमुद्र धराके स्वामी नारायणने, भव्योंके द्वारा पूजनीय, इन्द्रके द्वारा स्तुति किये गये और प्रजामें सुख एवं शान्तिके कारण जिनेन्द्र देवके लोकमान्य चरणोंकी श्रद्धा और प्रेमके साथ स्तुति की थी। तथा अक्षय ( अवसि ) पदके भण्डार ( स्थानं ), सम्यग् ज्ञानके कारण लौकिक ( इहत्यं ) अनुष्ठानोंकी परम्पराको भी वह मन्त्रियोंके साथ विमर्ष करके अपने और प्रजाके सुखोंके लिए सहर्ष ( अनः ) करता रहता था ॥१४५॥

जिस नारायणने लक्ष्मीकी क्रीडाभूमि ( देव्या ) नीतिके द्वारा दशों दिशाओंपर अधिकार किया था, जो पिता दशरथके द्वारा आनन्दवर्द्धक, संसारके रक्षक और न्यायकी सम्पत्तिदाता मार्गपर लगाया गया था, जिसके विजयरूपी पुरुषार्थके कारण स्थिर सम्पत्ति बढ़ी थी और जिसका यश गाम्भीर्य, आदि शिष्ट गुणोंके साथ खेलता हुआ समान चारों समुद्रोंको लाँघ गया था ।

---

१. शार्दूलविक्रीडितं वृत्तम् ।

पनोदविधिनेव कथम्भूतं यशः ? स्थायि स्थिरतरम्, कथम् ? उच्चैरतिशयेन, किं कुर्वत् ? प्रादुष्यत्, कस्याः सकाशात् ? कृतितः विधानात्, कस्य ? धनंजयस्यार्जुनस्य यः स्थितः क्व ? मार्गे, कस्य ? अगन्न्यायस्य, कथम्भूतः ? वसुदेवतः प्रति वसुदेवस्य प्रतिनिधिः वसुदेवेन सदृश इत्यर्थः, पुनः कथम्भूतः ? नन्दनः समृद्धः, कया ? श्रीदेव्या पुनरपि कथम्भूतः ? उपात्तवान्, काः ? दिशः, कया ? नीत्या, कति संख्योपेता ? दश तथा रथेन स्यन्दनेन च, कथम्भूतेन ? गुरुणेति । अथ ग्रन्थकारपक्षोऽभिधीयते—तस्य धनंजयस्य कृतितः कृतेः प्रादुष्यत् स्थायि यशः कर्तृ लङ्घते, कान् ? अम्भोनिधीन्, केनेव ? गाम्भीर्यादिगुणापनोदविधिनेव । कथम् ? उच्चैः यः श्रीदेव्या मातुर्नन्दनः पुत्रः स्थितः, क्व ? अगन्न्याये कथम्भूतः ? वसुदेवतः प्रति वसुदेवस्य पितुः प्रतिनिधिः, पुनः कथम्भूतः ? दिशः उपदेशान् उपात्तवान्, कस्याः ? नीत्या नीतेः, केन ? गुरुणा, किमाख्येन ? दशरथेनेति ॥१४६॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां द्विसन्धानकवेर्धनंजयस्य राघवपाण्डवीयाभिधानस्य महाकाव्यस्य पदकौमुदीनामदधानायां टीकायां नायकाभ्युदयरावण जरासन्धवधव्यावर्णनं नामाष्टादशः सर्गः ॥१८॥

■

समाप्तोऽयं ग्रन्थः ।

---

श्री देवीके नन्दन और वसुदेवकी प्रतिमूर्ति जो नारायण ( कृष्ण ) संसारमें न्यायके ही मार्गपर आरूढ़ था, जिसने पवित्र राजनीति और विशाल रथके द्वारा दशों-दिशाओंके स्वामित्वको प्राप्त किया था, धनञ्जय अर्जुनके पराक्रमके हेतुसे उसका स्थायी यश फैला था तथा गम्भीरता आदि समस्त गुणोंकी क्रीडस्थली होनेके कारण उसकी कीर्ति समुद्रके पार चली गयी थी ।

श्री देवी ( माता ) और वसुदेव ( पिता ) के न्यायशास्त्र प्रेमी जिस पुत्रको दशरथ गुरुने नीतिपूर्वक साहित्यकी दिशा प्राप्त करायी थी । उस धनञ्जय कविकी कृति ( द्विसन्धान काव्य )के कारण स्थायी कीर्ति हुई है । गाम्भीर्य, माधुर्य, प्रसाद, आदि काव्यके गुणोंके द्वारा वह समुद्रोंकी गहराई, निर्मलता, आदि गुणोंकी भरपूर हँसी करती है ।

निर्दोषविद्या भूषण भूषित; पंडितमण्डलीपूज्य, षट्तर्कचक्रवर्ती श्रीमान्, पण्डित विनयचन्द्रगुरुके प्रशिष्य, देवनन्दिके शिष्य, सकलकला चातुरी-चन्द्रिका चकोर नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें नायकाभ्युदय वर्णन नामका अष्टादश सर्ग समाप्त ॥१८॥

■

# श्लोकानुक्रमणिका

[ आ ]



[ इ ]

[ क्ष ]



[ ग ]



[ घ ]



[ च ]

[ य ]



[ र ]



[ ल ]



[ व ]

[ श ]

[ ह ]

## BHĀRATĪYA JÑĀNAPĪṬHA

## MŪRTIDEVĪ JAINA GRANTHAMĀLĀ

*General Editors :*

Dr. H. L. JAIN, Jabalpur : Dr. A. N. UPADHYE, Kolhapur.

The Bhāratīya Jñānapīṭha, is an Academy of Letters for the advancement of Indological Learning. In pursuance of one of its objects to bring out the forgotten, rare unpublished works of knowledge, the following works are critically or authentically edited by learned scholars who have, in most of the cases, equipped them with learned Introductions etc. and published by the Jñānapīṭha.

**Mahābandha** or the **Mahādhavalā :**

This is the 6th Khaṇḍa of the great Siddhānta work *Ṣaṭkhaṇḍāgama* of Bhūtabali : The subject matter of this work is of a highly technical nature which could be interesting only to those adepts in Jaina Philosophy who desire to probe into the minutest details of the Karma Siddhānta. The entire work is published in 7 volumes. The Prākrit Text which is based on a single Ms. is edited along with the Hindī Translation. Vol. I is edited by Pt. S.C. DIWAKAR and Vols. 2 to 7 by Pt. PHOOLACHANDRA. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Prākrit Grantha Nos. 1, 4 to 9. Super Royal Vol. I : pp. 20+80+350 ; Vol. II : pp. 4+40+440 ; Vol. III : pp. 10+496 ; Vol. IV : pp. 16+428 ; Vol. V : pp. 4+460 ; Vol. VI : pp. 22+370 ; Vol. VII : pp. 8+320. Bhāratīya Jñānapīṭha Kashi, 1947 to 1958. Price Rs. 15/- for each vol.

**Karalakkhaṇa :**

This is a small Prākrit Grantha dealing with palmistry just in 61 gāthās. The Text is edited along with a Sanskrit Chāyā and Hindī Translation by Prof. P. K. MODI. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Prākrit Grantha No. 2. Third edition, Crown pp. 48 Bhāratīya Jñānapīṭha Kashi, 1964. Price Rs. 1/50/-.

**Madanaparājaya :**

An allegorical Sanskrit Campū by Nāgadeva (of the Saṁvat 14th century or so) depicting the subjugation of Cupid. Edited critically by Pt. RAJKUMAR JAIN with a Hindī Introduction, Translation etc., Jñānapīṭha Mūrtidevī Jaina Granthmālā, Sanskrit Grantha No. 1. Second edition. Super Royal pp. 14+58+144. Bhāratīya Jñānapīṭha Kashi, 1964. Price Rs. 8/-.

**Kannaḍa Prāntīya Tāḍapatrīya Grantha-sūcī :**

A descriptive catalogue of Palmleaf Mss. in the Jaina Bhaṇḍāras of Moodbidri, Karkal, Aliyoor etc. Edited with a Hindī Introduction etc. by Pt. K. BHUJABALI

SHASTRI. Jñānapiṭha Mūrtidevī Jaina Granthmālā, Sanskrit Grantha No. 2. Super Royal pp. 32+324. Bhāratīya Jñānapīṭha Kashi, 1948. Price Rs. 13/-.

***Tattvārtha-vṛtti :**

This is a critical edition of the exhaustive Sanskrit commentary of Śrutasāgara (c. 16th century Vikrama Saṁvat) on the Tattvārthasūtra of Umāsvāti which is a systematic exposition in Sūtras of the fundamentals of Jainism. The Sanskrit commentary is based on earlier commentaries and is quite elaborate and thorough. Edited by Pts. MAHENDRAKUMAR and UDAYACHANDRA JAIN. Prof. MAHENDRAKUMAR has added a learned Hindī Introduction on the exposition of the important topics of Jainism. The edition contains a Hindī Translation and important Appendices of referential value. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 4. Super Royal pp. 108+548. Bhāratīya Jñānapīṭha Kashi, 1949, Price Rs. 16/-.

**Ratna-Mañjūṣā with Bhāṣya :**

An anonymous treatise on Sanskrit prosody. Edited with a critical Introduction and Notes by Prof. H. D. VELANKAR. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 5. Super Royal pp. 8+4+72. Bhāratīya Jñānapīṭha Kashi, 1949. Price Rs. 3/-.

**Nyāyaviniścaya-vivaraṇa :**

The Nyāyaviniścaya of Akalaṅka (about 8th century A. D.) with an elaborate Sanskrit commentary of Vādirāja (c. 11th century A. D.) is a repository of traditional knowledge of Indian Nyāya in general and of Jaina Nyāya in particular. Edited with Appendices etc. by Pt. MAHENDRAKUMAR JAIN. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos. 3 and 12. Super Royal Vol. I : pp. 68+546 ; Vol. II : pp. 66+468. Bhāratīya Jñānapīṭha Kashi, 1949 and 1954. Price Rs. 18/- each.

**Kevalajñāna-praśna-cūḍāmaṇi :**

A treatise on astrology etc. Edited with Hindī Translation, Introduction, Appendices, Comparative Notes etc. by Pt. NEMICHANDRA JAIN. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 7. Super Royal pp. 16+128. Bhāratīya Jñānapīṭha Kashi, 1950. Price Rs. 5/-.

**Nāmamālā :**

This is an authentic edition of the Nāmamālā, a concise Sanskrit Lexicon of Dhanaṁjaya (c. 8th century A.D.) with an unpublished Sanskrit commentary of Amarkīrti (c. 15th century A. D.). The Editor has added almost a critical Sanskrit commentary in the form of his learned and intelligent foot-notes. Edited by Pt. SHAMBHUNATH TRIPATHI, with a Foreword by Dr. P. L. VAIDYA

* Books marked with asterisk are out of print.

and a Hindī Prastāvanā by Pt. MAHENDRAKUMAR. The Appendix gives Anekārtha nighaṇṭu and Ekākṣarī-kośa. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 6. Super Royal pp. 16+140. Bhāratīya Jñānapīṭha Kashi, 1950. Price Rs. 4.50.

**Samayasāra :**

An authoritative work of Kundakunda on Jaina spiritualism. Prākrit Text, Sanskrit Chāyā. Edited with an Introduction, Translation and Commentary in English by Prof. A. CHAKRAVARTI. The Introduction is a masterly dissertation and brings out the essential features of the Indian and Western thought on the all-important topic of the Self. Jñānapīṭha Mūrtidevī Jaina Granthamālā, English Grantha No. 1. Super Royal pp. 10+162+244. Bhāratīya Jñānapīṭha Kashi, 1950. Price Rs. 12/-.

**Jātakaṭṭhakathā :**

This is the first Devanāgarī edition of the Pāli Jātaka Tales which are a storehouse of information on the cultural and social aspects of ancient India. Edited by Bhikshu DHARMARAKSHITA. Jñānapīṭha Mūrtidevī Pāli Granthamālā No. 1, Vol. 1. Super Royal pp. 16+384. Bhāratīya Jñānapīṭha Kashi, 1951. Price Rs. 9/-.

**Kural** or **Thirukkural :**

An ancient Tamil Poem of Thevar. It preaches the principles of Truth and Non-violence. The Tamil Text and the commentary of Kavirājapaṇḍita. Edited by Prof. A. CHAKRAVARTI with a learned Introduction in English. Bhāratīya Jñānapīṭha Tamil Series No. 1. Demy pp. 8+36+440. Bhāratīya Jñānapīṭha Kashi, 1951. Price Rs. 12/-

**Mahāpurāṇa :**

It is an important Sanskrit work of Jinasena-Guṇabhadra, full of encyclopaedic information about the 63 great personalities of Jainism and about Jain lore in general and composed in a literary style. Jinasena (837 A. D.) is an outstanding scholar, poet and teacher ; and he occupies a unique place in Sanskrit Literature. This work was completed by his pupil Guṇabhadra. Critically edited with Hindī Translation, Introduction, Verse Index etc. by Pt. PANNALAL JAIN. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos. 8, 9 and 14. Super Royal : Second edition, Vol. I : pp. 8+68+746, Vol. II : pp. 8+556 ; Vol. III. : pp. 24+708 ; Bhāratīya Jñānapīṭha Kashi, 1951 to 1954. Price Rs. 20/- each.

**Vasunandi Śrāvakācāra :**

A Prākrit Text of Vasunandi (*c*. Saṁvat first half of 12th century) in 546 gāthās dealing with the duties of a householder, critically edited along with a Hindī

Translation by Pt. HIRALAL JAIN. The Introduction deals with a number of important topics about the author and the pattern and the sources of the contents of this Śrāvakācāra. There is a table of contents. There are some Appendices giving important explanations, extracts about Pratiṣṭhāvidhāna, Sallekhanā and Vratas. There are 2 Indices giving the Prākrit roots and words with their Sanskrit equivalents and an Index of the gāthās as well. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Prākrit Grantha No. 3. Super Royal pp. 230. Bhāratīya Jñānapīṭha Kashi, 1952. Price Rs. 6/-.

**Tattvārthavārttikam or Rājavārttikam :**

This is an important commentary composed by the great logician Akalaṅka on the Tattvārthasūtra of Umāsvāti. The text of the commentary is critically edited giving variant readings from different Mss. by Prof. MAHENDRAKUMAR JAIN. Jñānapīṭha Mūrtidevī Granthamālā, Sanskrit Grantha Nos. 10 and 20. Super Royal Vol. I : pp. 16+430 ; Vol. II : pp. 18+436. Bhāratīya Jñānapīṭha Kashi, 1953 and 1957. Price Rs. 12/- for each Vol.

**Jinasahasranāma :**

It has the Svopajña commentary of Paṇḍita Āśādhara (V. S. 13th century). In this edition brought out by Pt. HIRALAL a number of texts of the type of Jinasahasranāma composed by Āśādhara, Jinasena, Sakalakīrti and Hemacandra are given. Āśādhara's text is accompanied by Hindī Translation. Śrutasāgara's commentary of the same is also given here. There is a Hindī Introduction giving information about Āśādhara etc. There are some useful Indices. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 11. Super Royal pp. 288. Bhāratīya Jñānapīṭha Kashi, 1954. Price Rs. 6/-.

**Purāṇasāra-Saṁgraha :**

This is a Purāṇa in Sanskrit by Dāmanandi giving in a nutshell the lives of Tīrthaṁkaras and other great persons. The Sanskrit text is edited with a Hindī Translation and a short Introduction by Dr. G. C. JAIN. Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos. 15 and 16. Crown Part I : pp. 20+198; Part II : pp. 16+206. Bhāratīya Jñānapīṭha Kashi, 1954, 1955. Price Rs. 5/- each.

**Sarvārtha-Siddhi :**

The Sarvārtha-Siddhi of Pūjyapāda is a lucid commentary on the Tattvārthasūtra of Umāsvāti called here by the name Gṛdhrapiccha. It is edited here by Pt. PHOOLCHANDRA with a Hindī Translation, Introduction, a table of contents and three Appendices giving the Sūtraś, quotations in the commentary and a list of technical terms. Jñānpīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 13. Double Crown pp. 116+506. Bhāratīya Jñānapīṭha Kashi, 1955. Price Rs. 18/-.

